

यजुर्वेदीय

# काठक-संहिता ।

अनेकवैदिकानां साहाय्येन विविधप्राचीनलिखितपुस्तकपाठानुसारेण च

संशोध्य

भट्टाचार्येण श्रीपादशर्मणा दामोदरभट्टसूनुना सातवलेकरकुलजेन

संपादिता



सा च

औन्धराजधान्यां

भारतमुद्रणालये मुद्रयित्वा स्वाध्यायमण्डलद्वारा प्रकाशिता ।



विक्रमीयसंवत् १९९९; शालिवाहनशकः १८६४; ख्रिस्ताब्दः १९४३

मूल्य १०) रु०



# काठक-संहितायाः प्रस्तावः।

अग्निः प्राश्नातु प्रथमस्स हि वेद यथा हविः।
शिवा अस्मभ्यमोषधीः करोतु विश्वचर्षणिः॥

[ काठ० सं० १३।१५ ]

विश्वानि देव सवितर्दुरितानि परा सुव।
यद् भद्रं तन्नऽ आ सुव॥ [ वा० य० ३०। ३ ]

प्रारम्भे कुलदेवतामिह महालक्ष्मीयुतां रेणुकाम्।
भक्ताभीष्टकरीं मतिस्मृतियशोऽर्थायुःपरानन्ददाम॥
प्रत्यूहौघविदारणक्षममथो द्वैमातुरं शारदाम्।
सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥ १ ॥
अज्ञानवार्धिं परिशुष्य यन्मे ज्ञानं त्वदादाश्रुतितन्त्रयुग्मम्।
यत्क्षोणिवृन्दारकवृन्दवन्द्यं नित्यं नमामो गुरुमण्डलं तत् ॥ २ ॥
ॐ नमः श्रीमत्सद्गुरुहृदयानन्दसरस्वतीचरणकमलेभ्यः ॥ ३ ॥
पुराण इत्येव न सर्ववित्स्यान्नव्यो गुणी ज्ञः किमु नार्चनीयः।
चेदस्ति नव्येऽपि हि दोषलेशो नोपास्यते धूमयुतः किमग्निः ॥ ४ ॥
उद्दिश्य काठकीं शाखां कृष्णयजुर्विभूषणाम्।
समासतो ब्रुवे किञ्चित्तच्छाखाप्रतिपत्तये ॥ ५ ॥
तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति।
स केवलं मूढमतिर्ज्ञानभारवहः स्मृतः॥ [ म० भा० शां० मो० १४११५१ ]

अथ प्रस्तूयते किञ्चित्।

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते।

[ श्रीभगवद्गीता ४।३८ ]

न तिरोहितमेतद्वेदविद्याविपिने स्वच्छन्दं सञ्चरणप्रवीणानां विद्वत्पञ्चाननानां, तादृग्वैदुष्यमाकांक्षमाणानां विद्यार्थिसार्थानां च। यत्–भारते वैदिकधर्मीयानामभ्युपगमः किलायं महाभूमिस्तीर्थजलं वह्निर्ज्ञानं चेत्येते स्वयं सर्वदा पूताः सन्त इतरान्पावयन्तीति च। तत्र ज्ञानस्य पावित्र्यं पावयितृत्वं च दुःखासंस्पर्शिनिरुपाधिकसुखसम्पादकत्वात्। ज्ञानस्य सुखसम्पादकत्वं तु "ज्ञानमाप्नोति। तस्मात्कैवल्यं अश्नुते" [कैवल्योपनिषद् २४] "कैवल्यमुक्तिर्ज्ञानमात्रेणोक्ता" [मुक्ति० ख० १] 'ज्ञानान्मोक्षाधिगमः" "ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" [श्री० भ० गी० ४।३९]

❀

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" [ श्री० भ० गी० ४।३७ ] इत्याद्यनेकश्रुतिस्मृतिसिद्धमेव। अतएवोपरिनिक्षिप्तगीतासूक्तौ जेगीयते श्रीभगवता हि यत इह संसारे ज्ञानेन सदृशं तुल्यं पवित्रं वस्तु अन्यन्न विद्यत इति। अतएव च "आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम्। ज्ञानं हि तेषामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः" इत्येवं कवयो ज्ञानं प्रशशंसु:।

## सुखस्य द्वैरूप्यम्।

निरुक्तज्ञानजन्यं सुखञ्चेष्टानिष्टात्मानात्मविवेकलक्षणस्वाकारभेदेनाभ्युदयनिश्रेयसभेदाद् द्विरूपम्। कृषिवाणिज्यसमरादि-कर्मोपार्जितधनधान्यसत्तासमृद्धिमूलकपशुपुत्रस्रक्चन्दनवनिताराज्याद्यैहिकोपभोगो यागाद्यनेककर्मजन्यपुण्यराशिसमधिगत-सुधापानाप्सरोरमणादिपारत्रिकोपभोगश्चाभ्युदयवचनः। इहामुत्र प्राङ्निरूपितफलभोगविरागपूर्वकात्मानात्मविवेकज्ञान-लभ्यस्वानन्दो निश्रेयस इत्यभिधीयते। क्रमादिमौ स्वर्गापवर्गशब्दाभ्यां व्यवह्रियेते।

ननु- स्वर्गापवर्गयोर्भेदो दुर्निरूपकः। कुत इति चेत्-उच्यते "स्वर्गशब्दश्चोत्कृष्टसुखे रूढः" इति शबरस्वामिनः प्राहुः। उत्कृष्टसुखं तु निरतिशयालौकिकसुखविशेष एवेति सार्वजनीनम्। ततश्च स्वर्ग एवापवर्गो न तयोर्भेद इति चेन्न, तयोर्हि क्षयित्वाक्षयित्वसातिशयत्वनिरतिशयत्वाभ्यां भेदस्य प्रतीतिसिद्धत्वेनाभेदग्रहस्य भ्रान्तिरूपत्वात्। अतएव श्लोकवार्तिके सबन्धाक्षेपपरिहारप्रकरणे सांख्यमतनिराकरणप्रस्तावे भट्टपादैरभ्यधायि-

"सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते।<br>
स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः।<br>
न हि कारणवत्किञ्चिदक्षयित्वेन गम्यते"॥

इत्यादिना जन्यस्य स्वर्गसुखस्य क्षयित्वं प्रतिपाद्य कुतस्तर्हि मुक्तिः किं स्वरूपा चेति बुभुत्सायां "तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते" इति। तथा- "अन्यन्मोक्षाभिधं श्रेयः प्रेयोऽन्यत्सुखशब्दितम्" इत्यात्मपुराणे। [ ०।२४६ ] इति।

किञ्च- यद्यपि मोक्षप्रकरणे तत्त्वविल्लभ्यनिरतिशयात्मानंदलक्षणसुखविशेषे स्वर्गशब्दो रूढ इति कर्ममीमांसकानां प्रसिद्धिस्तथापि न सा सर्वेषां दार्शनिकानाम्। अतएव ते तादृशं सुखविशेषमपवर्गशब्देनाभिलपन्ति। अपगतो वर्गः स्रक्चन्दनवनितादिजन्यसातिशयसुखव्यक्तिसमुदायो यस्मात्तादृश इत्यपवर्गशब्दव्युत्पत्तिरप्येतदर्थानुगुणैव। कर्ममीमांसकानामपि मते निरतिशयालौकिकसुखविशेषवाचिनः स्वर्गपदस्य स्वर्गकामादिस्थले जहदजहल्लक्षणयाऽलौकिकसुखविशेषरूप-मर्थं पुरस्कृत्य प्रवृत्तिः। स्रक्चन्दनवनिताराज्यादौ चोत्कृष्टत्वमनोज्ञत्वसर्वकपत्वादिगुणं पुरस्कृत्य प्रवृत्तिः। तदुक्तमप्पय्या-दीक्षितैः परिमले (अ० ४। पा० ३। अ० ५।) इत्यत्र निरतिशयब्रह्मानंदवाचकस्य स्वर्गशब्दस्य स्वर्गकामादिवाक्येऽनेकमन्त्र-लिङ्गाद्यवगतनाकपृष्ठभोग्यसुखविशेषे लक्षणा, तत्प्रशंसार्थं तस्य लक्षणोपपत्तेः। चन्दनं स्वर्गः, सूक्ष्मवासांसि स्वर्गः, इत्यादिसुख-साधनेऽपि प्रशंसार्थं तत्प्रयोगदर्शनात्। ऐहिकसुखापेक्षया नाकलोकभोग्यसुखे नितान्तोत्कर्षमत्त्वेन निरतिशयसुखवाचिना तत्प्रशंसौचित्याच्चेति॥

तात्पर्यन्तु- स्वर्गापवर्गौ भिन्नौ नैकार्थाविति सर्वसम्मतम्।

## सुखस्य धर्माधीनत्वम्।

तदेतदुभयविधमपि सुखं धर्मानुष्ठानाधीनम्। "सुखार्थाः सर्वजन्तूनां मताः सर्वाः प्रवृत्तयः। सुखं च न विना धर्मा-त्तस्माद्धर्मपरो भवेत्" इति। "ऊर्ध्वबाहुर्विरोम्येष न च कश्चिच्छृणोति मे। धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इति। "इह सुखमर्थकारणं ह्यर्थो मतो मुनिभिर्धर्ममूलः। पारत्रिकं मोक्षमपि प्रभवन्ति धर्मसेवनादेव" इति। इत्याद्यने-कवचोनिकरेभ्यः स्पष्टम्। अतएव वैशेषिकैः प्रतिपादितं "यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः" इत्येतत् साध्यानुसारिधर्म-लक्षणं संगच्छते।

## यथार्थधर्मज्ञानस्य वेदाधीनत्वम् ।

तादृशधर्मानुष्ठानस्य यथार्थज्ञानाधीनत्वात् । यथार्थज्ञानं च वेदाधीनमेवेति सर्ववादिसिद्धम् । अतएव च जेगीयते मन्वादिभिः– ' धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ' इति [ मनु० २।१३ ] ' वेदोऽखिलो धर्ममूलम् ' [ मनु० २।६ ] ' श्रुतिप्रामाण्यतो विद्वान्स्वधर्मे निविशेत वै ' [ मनु० २।८ ] ' श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ' इति । [ मनु० २।९ ] व्याससमृतावपि– ' धर्ममूलं वेदमाहुर्ग्रन्थराशिमकृत्रिमम् । ' ' श्रुतिः स्मृतिः सदाचारः० धर्ममूलमिदं स्मृतम् । ' [ या० स्मृ० १।४ ] इति याज्ञवल्क्यः । मन्वादिभिर्निरुक्तं वेदस्य धर्मज्ञापकत्वं न लोकसिद्धार्थावबोधकत्वेन, नापि प्रमाणान्तरप्रमितार्थावबोधकत्वेन, न वा धर्मसाधनानां व्रीह्यादिपदार्थानां धर्मसाध्यानां पशुवृष्टिस्वर्गादिफलानां चावबोधनेन, किन्तु– तदन्यत अत्यन्ताबाधितार्थावबोधकत्वेन धर्मतत्साधनद्रव्यगुणक्रियादीनां साध्यभूतस्वर्गपशुवृष्ट्यादिफलानां चातीन्द्रियकार्यकारणभावज्ञापकतया चावबोध्यम् । तथा चोक्तं भट्टचरणैः– श्लोकवार्तिके प्रतिज्ञासूत्रे– ' द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता । श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते । ताद्रूप्येण तु धर्मत्वं तस्मान्नेन्द्रियगोचरः' इति । श्रुत्यापि ज्ञापितोऽयमर्थः- 'नेन्द्रियाणि, नानुमानं, वेदा एवैनं वेदयन्ति, तस्मादाहुर्वेदा इति ' । एवं नाम अतीन्द्रियं धर्मं तद्गतकार्यकारणभावं वा इति ।

एवञ्च— धर्मादीनां स्वरूपावेदने कारकत्वेन ज्ञापकत्वेन च प्रमाणप्रमेयभूतो वेद एव शरण्यो नान्य इति ।

## वेदविभागः ।

सोऽयं धर्मादिचतुर्वर्गहेतुः कर्मोपासनाज्ञानेतिस्कन्धत्रयवान्वेदो द्वापरान्ते कलेरादौ संधिसमये भगवता कृष्णद्वैपायनेनाल्पप्रज्ञलोकानुजिघृक्षया विव्यस्तः । तन्निदानभूतैव कृष्णद्वैपायनस्य वेदव्यास इतीयं संज्ञा । तथा चोक्तं महाभारते आदिपर्वणि चतुःषष्ट्यध्याये—

ब्रह्मणा ब्राह्मणानां च तथाऽनुग्रहकाङ्क्षया । विव्यास वेदान्यस्मात्स तस्माद्व्यास इति स्मृतः ॥ ३० ॥
वेदानध्यापयामास महाभारतपञ्चमान् । सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥ ३१ ॥
प्रभुर्वरिष्ठो वरदो वैशम्पायनमेव च । संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः ॥ ३२ ॥

स्पष्टमेभिर्वचोभिर्ज्ञाप्यन्ते यत्- ऋगादिभेदेन विभक्तेषु वेदेषु ऋग्वेदाध्येता पैलो, यजुर्वेदाध्येता वैशम्पायनः, सामवेदाध्येता जैमिनिरथर्वोऽध्येता सुमन्तुर्महाभारताध्येता शुकश्चेति मूलभूतास्तत्तद्वेदाचार्या इति ।

## काठक–शाखा ।

तत्रेयं प्रकृता काठकी शाखा- सकलयजुर्वेदाध्यापकमहर्षिवैशम्पायनप्रवर्तितस्य यजुर्वेदशाखाकदम्बकस्य प्रधानभूतासु सप्तविंशतिशाखासु कठमुनिप्रवर्तिताऽन्यतमैव । तथा च विष्णुपुराणे तृतीयेंऽशे पञ्चमेऽध्याये—

यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः । वैशम्पायननामाऽसौ व्यासशिष्यश्चकार वै ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् । इत्यादि [ १-२ ]

सप्तविंशत् । सप्तविंशतिः यजुषः प्रधानाः शाखा इति वैष्णवाकूतचंद्रिकाव्याख्यातारः । वैशम्पायनस्यैवापरं नाम चरकाचार्य इति । तथाच काशिकावृत्तौ ' कलापिवैशम्पायनान्तेवासिभ्यश्च कठचरकाल्लुक् ' इत्येतत्पाणिनीयसूत्रयोः– वैशम्पायनान्तेवासिनो नव । चरक इति वैशम्पायनस्याख्या । तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते । चरकशब्दनिर्वचनं च- वायुपुराणे पूर्वार्धे द्विषष्टितमेऽध्याये—

ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः । वैशम्पायनशिष्यास्ते चरकाः समुदाहृताः ॥ २३ ॥

तथा श्रीमद्भागवते द्वादशे षष्ठेऽध्यायेऽपि—

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥ इति ।

तथाऽन्यत्रापि वेदमुक्ताफलविमर्शे—

यदर्थं तैर्व्रतं चीर्णं ब्रह्महत्यापनोदकम् । आचार्यः सोऽपि तद्योगाच्चरकाख्यामवाप्तवान् । इति ।

यदर्थमिति । यस्याचार्यस्य कृते इत्यर्थः । तद्योगादिति । तेषां ब्रह्महत्यापनोदकव्रतचारकशिष्याणां संयोगादित्यर्थः । बृहदारण्यकभाष्ये तु शंकराचार्याः—

'अध्ययनार्थं व्रतचरणाच्चारका अध्वर्यवो वा' इति निरयोचन् । पातञ्जलमहाभाष्ये तत्त्वबोधिन्यां च [ ४।३।१०४ ] इत्यत्र– 'वैशम्पायनान्तेवासी कठः । कठान्तेवासी खाण्डायनः । वैशम्पायनान्तेवासी कलापी ।' इति । तत्रैव च पुनर्वैशम्पायनान्तेवासिनो नवेत्युक्तम् । ते च– १ आलम्बिः २ कलिङ्गः (महाभाष्ये तु– पलङ्ग इति नामान्तरम् ।) ३ कमलः ४ ऋचाभः ५ आरुणिः ६ ताण्ड्यः ७ श्यामायनः ८ कठः ९ कलापी इति ।

तत्र कठा द्वादश– १ चरकाः २ आह्वरकाः ३ प्राजिष्ठलकठाः ४ प्राच्यकठाः ५ कपिष्ठलकठाः ६ वारायणीयाः ७ वारायणीयाः ८ श्वेताः ९ श्वेताश्वतराः १० औपमन्यव ११ पाताण्डिनेया १२ मैत्रायणीयाः, इति चरणव्यूहे ।

तत्रापि मैत्रायणीया सप्त– १ मानवाः २ वाराहाः ३ दुन्दुभाः ४ ऐकेयाः ५ हारिद्रवीयाः ६ श्यामाः ७ श्यामायनीयाः, इति चरणव्यूहे ।

तत्रापि हारिद्रवीयाः पञ्च– १ आसुरिणः २ गार्ग्याः ३ शार्कराक्ष्याः ४ मार्गाः ५ वासवीयाः, इति चरणव्यूहे एव ।

तथा कालापाश्चत्वारः– १ हारिद्रवीयाः २ छागलिनः ३ तौम्बुरविनः ४ औलुपिनः, इत्युक्तपाणिनिसूत्रयोः पातञ्जलमहाभाष्ये तत्त्वबोधिन्यां च । यद्यप्यत्र हारिद्रवीयानां मैत्रायणीयेषु कालापेषु चोभयत्र पाठस्तथापि तेषां न पार्थक्येन गणना । अतश्च न सप्तविंशतिसंख्याया वृद्धिर्ह्रासो वा । आसु सप्तविंशतिशाखासु प्राच्योदीच्यमध्यदेश्येतिभेदत्रयेण नवकत्रितयं प्रतिपाद्यते । तथोक्तं ब्रह्माण्डपुराणे पूर्वदले पञ्चत्रिंशदध्याये—

षडशीतिस्तथा शिष्याः संहितानां विकल्पकाः । सर्वेषामेव तेषां वै त्रिधा भेदाः प्रकीर्तिताः ॥
त्रिधा भेदास्तु ते वेदभेदेऽस्मिन्नवके शुभे । उदीच्या मध्यदेश्याश्च प्राच्याश्चैव पृथग्विधाः ॥
श्यामायनिरुदीच्यानां प्रधानः सम्बभूव ह । मध्यदेश्यप्रतिष्ठाता चारुणिः प्रथमः स्मृतः ॥
आलम्बिरादिः प्राच्यानां त्रयो देश्यादयस्तु ते । इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः ॥ इति ॥

पातञ्जलमहाभाष्ये काशिकावृत्तौ च [४।२।१३८, ४।३।१०४] इत्यत्र तु– आलम्बिनः पलङ्गा कमलाश्चेति त्रयः प्राच्याः । ऋचाभाः आरुणिनस्ताण्ड्यकाश्चेति त्रय उदीच्याः । श्यामायनाः कठाः कलापाश्चेति त्रयो माध्यमाः, इत्येवं न्यरूपि । अन्येतरा एकोनषष्टिः शाखा अस्यैव सप्तविंशतिशाखाकदम्बस्यैव मूलाग्ररूपो विस्तरः । तेन 'षडशीतिस्तथा शिष्याः' इत्याद्युक्तिर्न विसंवादिनी जायते इति ।

पूर्वं कठानां 'चरका आह्वरकाः' इत्यादयो द्वादश भेदा ये उक्तास्ते शाखाभेदमूला इति प्रत्येतव्यम् । पुनरिदानीं कठानामवान्तरास्त्रयोदश भेदा उच्यन्ते । तेच – १ पिञ्जुलकठाः क्रौञ्चद्वीपे । २ औदलकठाः शाकद्वीपे । ३ सपिच्छलकठाः शाकद्वीपे । ४ मुद्गलकठाः काश्मीरदेशे । ५ श्रृङ्गलकठाः संजदेशे । ६ सौभरकठाः सिंहलदेशे । ७ मौरसकठाः कुशद्वीपे । ८ खुखुकठा यवनदेशे । ९ योगकठा यवनदेशे । १० हपिलकठा यवनदेशे । ११ दौसलकठाः सिंहलदेशे । १२ घोषकठाः क्रौञ्चद्वीपे । १३ जुम्भकठाः श्वेतद्वीपे । इत्येवं त्रयोदश । एते च त्रयोदश भेदा न शाखाभेदमूलाः किन्तु देशभेदमूला इत्यधिगन्तव्यम् ।

[ अग्र सप्तमपृष्ठतो यजुर्वेदवृक्षोऽप्यनुसन्धेयः ]

# सप्तविंशतिशाखात्मको यजुर्वेदवृक्षः ।




+ देशनिर्देशस्तु वेदवृक्ष-पट्टानुसारी ।

* कठानां शाखाभेदाद् द्वादशभेदाः ।
देशभेदात् त्रयोदश पुनरवान्तरभेदा जाता इति दृश्यते ।

अयं च शाखापट्टश्चरणव्यूह-ब्रह्माण्ड–पुराणानुसारीति ज्ञेयम् ।

× एतच्चिह्नाङ्किता एके एव न भिन्नाः ।
१२+७+५+४=२८–१
= २७

## काठकानां निवासस्थानम् ।

एतेन प्राक्प्रतिपादिताः शाखातो द्वादशभेदवन्तो देशतस्त्रयोदशभेदवन्तः सर्वेऽपीमे कठाः मध्यदेश्या माध्यमा इति व्यपदेश्या भवन्तीति प्रागुद्धृतमहाभाष्यब्रह्माण्डपुराणाभ्यां प्रतीयते । मध्यदेश्या माध्यमा वेति संज्ञा तेषां मध्यदेशनिवासित्वेनैव सम्भाव्यते मध्यदेशस्तु मनुना दर्शितः—

हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥ [ म॰ स्मृ. २।२१ ]

विनशनं नाम कुरुक्षेत्रमित्यर्थः । कातीयतृतीयप्रतिज्ञापरिशिष्टे तु मध्यदेशोऽन्यथा प्रदर्शितः । तथाच तत्सूत्रं—

प्राग्दशार्णात्प्रत्यक्काम्पिल्यादुदक्पारियात्राद्दक्षिणेन हिमवतः ॥५॥ गङ्गायमुनयोरन्तरमेके मध्यदेशमित्याचक्षते ॥६॥ इति ॥

दशार्णो नाम यो देशस्तस्मात्प्राग्वर्ती, ※ काम्पिल्यो नाम दक्षिणपाञ्चालस्तस्मात्प्रत्यग्वर्ती, पारियात्रो नाम पर्वतस्तस्मादुदग्वर्ती, हिमवन्नाम योऽतिप्रसिद्धस्तस्माद्दक्षिणवर्ती, चैतादृक्सीमाचतुष्टयोपेतो देशो मध्यदेशः । एकेषामाचार्याणां मतेन तु– गङ्गायमुनयोरन्तरालप्रदेशो ✥ मध्यदेशो भवति ।

सायणाचार्यमते त्वन्यदेशवासित्वं कठानां विद्यते । तथाचोक्तं– तैत्तिरीयब्राह्मणस्य [३।१०।११] वेदार्थप्रकाशव्याख्याने—

बार्हस्पत्यतनूजन्मा अङ्गिरसः पौत्रः परमधार्मिको भरद्वाजाख्यो महामुनिर्गौतमीतीरे × शुक्लतीर्थे बभूव । तस्य च परमसाध्वी पैठिनसी नाम्नी भार्या आसीत् । तस्य भरद्वाजस्य मुनेर्भगिनी रेवती नाम्नी, तस्या रेवत्याः पतिः कठो नाम ऋषिः ' इति । एतेन कठर्षिरयं + गोदादक्षिणदेशनिवासीति प्रतिपादितं भवति । एतत्सर्वं साधु समालोच्यात्र वयमेवं पश्यामो यदयं कठर्षिर्मूलतो गोदादक्षिणाग्नेयतटवर्तिदेशमलञ्चकार । अतएव च 'आन्ध्रादिदक्षिणाग्नेय्यां गोदायाः सागरावधि । यजुर्वेदस्तैत्तिरीय आपस्तम्बः प्रतिष्ठितः ' इति त्रिकाण्डमण्डनकृदुक्तिः सङ्गच्छते । कठादयस्तु तैत्तिरीयान्तर्गता इति तु सर्वविदितम् । ततो यदा च कठर्षेः शिष्यप्रशिष्यप्रवृध्या शाखाद्वादशकरूपो विस्तरः समभवत्तदा ते सर्वे चरकादिद्वादशशाखिनो मध्यदेशमुषितवन्तः । तन्मूलक एवायं ' मध्यदेश्या ' इति ' व्यपदेशः । अनन्तरं च पुनस्ते क्रौञ्चद्वीपाद्यनेकदेशं गत्वा तत्र तत्रावासं चक्रुरिति । ते देशास्तु प्राङ्निर्दिष्टा एवेति । इदानीमपि आन्ध्रसन्निहितगोदादक्षिणदेशे चरकादयो ग्रामज्योतिर्विरत्वेन वृत्तिमन्त उपलभ्यन्ते इति ।

## कठर्षेः परिचयः ।

तत्र कठशब्दव्युत्पत्तिस्तु-कठति कृच्छ्रेण कृच्छ्रमयशिलोञ्छादिवृत्त्या जीवतीति कठः । ' कठ कृच्छ्रजीवने ' इति धातोरयं निष्पन्नः कठशब्दः । अयं च श्रुतर्षिः– " तत्र ये साक्षात्कृतधर्माणस्तेभ्य उपदेशेन श्रुत्वा पश्चाद्ये ऋषयो बभूवुस्ते ऋषिभ्यः श्रुतधर्मत्वाच्छ्रुतर्षय इत्युच्यन्ते " ( १।६।५ ) इति नैरुक्तव्याख्यानात् । अथवा गुरोर्गृहीतस्वाध्यायस्य पुनरनेकशाखाप्रणेतृत्वात् । अनेन कठर्षिणा प्रोक्तमधीयन्ते विदन्ति वा ये ते सर्वेऽपि कठा एवेति । तथाच पाणिनिसूत्रं– " कठचरकाल्लुक् " (पा. सू. ४।३।१०७) ततोऽण् । ताभ्यां प्रोक्तप्रत्ययस्य लुक्, इति । अस्य च भरद्वाजो मुनिः शालकस्तद्भगिनी रेवती नाम्नी पत्नी चेत्यनुपदमेव विनिर्दिष्टम् । तथा कठर्षेर्विशेषेतिवृत्तं ब्रह्मपुराणान्तर्गतगोदामहात्म्ये पञ्चाशत्तमेऽध्याये समुपवर्णितं तदेवात्रोपस्थाप्यते । तथाहि—

---

※ ' काम्पिल्ये दक्षिणपाञ्चाले ' इति हरिवंशे ( २७।३२ ) नीलकण्ठव्याख्यानात् ।

✥ ' तास्विमे कुरुपाञ्चालाः शाल्वाश्चैव सजांगलाः । शूरसेनो भद्रकारोऽथान्ध्राः सहपाट्टराः ॥ ३७ ॥
मत्स्याः किराताः कुल्याश्च कौन्तेयाः काशिकोसलाः । आवन्ताश्चानुलिङ्गाश्च मूकाश्चैवान्धकैः सह ॥ ३८ ॥
मध्यदेशा जनपदाः प्रायशः परिकीर्तिताः ॥ ' इति मात्स्ये भुवनकोषवर्णने मध्यदेशाः प्रदर्शिताः ।
[ म॰ पु॰ अ॰ ११२ ]

× एतच्च शुक्लतीर्थं गोदावर्या दक्षिणे तटे अब्जक ( नांदेड ) क्षेत्रादनन्तरं वाणीसंगमतीर्थात्प्राक्प्रदेशे वर्तते इति ब्रह्मपुराणान्तर्गतगोदामाहात्म्यस्य द्विषष्ट्यध्यायतः प्रतीयते ।

+ किञ्च– उत्कलप्रांते जगन्नाथपुरीक्षेत्रासन्न–' कटक ' संज्ञस्य प्रदेशविशेषस्य कठस्य च न कोऽपि लेशतः सम्बन्धः । तस्य प्राच्यदेशान्तर्भूतत्वात्कटकशब्दस्य तादृशोपपत्तिविरहाच्चेति ध्येयम् ।

विदर्भासङ्गमं पुण्यं रेवतीसङ्गमं तथा । तत्र यद्वृत्तमाख्यास्ये यत्पुराणविदो विदुः ॥ १ ॥
भरद्वाज इति ख्यात ऋषिरासीत्तपोऽधिकः । तस्य स्वसा रेवती कुरूपा विकृतस्वना ॥ २ ॥
तां दृष्ट्वा विकृतां तात भरद्वाजः प्रतापवान् । चिन्तया परया युक्तो गङ्गाया दक्षिणे तटे ॥ ३ ॥
कस्मै देया मया कन्या स्वसारं भीषणाकृतिम् । न कश्चित्प्रतिगृह्णाति दातव्या च स्वसा तदा ॥ ४ ॥
अहो भूयान्न कस्यापि कन्या दुःखैककारणम् । मरणं जीवतोऽप्यस्य प्राणिनस्तु पदे पदे ॥ ५ ॥
एवं विमृश्यतस्तस्य स्वाश्रमे चातिशोभने । द्रष्टुं मुनिवरः प्रायाद्भरद्वाजं यतव्रतम् ॥ ६ ॥
अष्टवर्षः शुभवपुः शान्तो दान्तो गुणाकरः । नाम्ना कठ इति ख्यातो भरद्वाजं ननाम सः ॥ ७ ॥
विधिवत्पूज्य तं विप्रं भरद्वाजः कठं तदा । तस्यागमनकार्यं च पप्रच्छ पुरतः स्थितम् ॥ ८ ॥
कठोऽप्याह भरद्वाजं विद्यार्थ्यहमुपागतः । तथा त्वद्दर्शनाकांक्षी यद्युक्तं तद्विधीयताम् ॥ ९ ॥
भरद्वाजः कठं प्राह × अधीष्व यदभीप्सितम् । पुराणं स्मृतयो वेदा धर्मशास्त्राण्यनेकशः ॥ १० ॥
सर्वं वेद्मि महाप्राज्ञ रुचिरं वद मा चिरम् । कुलीनो धर्मनिरतो गुरुशुश्रूषणे रतः ॥ ११ ॥
अभिमानी + श्रुतधरः शिष्यः पुण्यैरवाप्यते । कठ उवाच— अध्यापयस्व भो ब्रह्मञ्छिष्यं मां वीतकल्मषम् ॥ १२ ॥
शुश्रूषणरतं भक्तं कुलीनं सत्यवादिनम् । तथेत्युक्त्वा भरद्वाजः प्रादाद्विद्यामशेषतः ॥ १३ ॥
प्राप्तविद्यः कठः प्रीतो भरद्वाजमथाब्रवीत् । इच्छेयं दक्षिणां दातुं गुरो तव मनःप्रियाम् ॥ १४ ॥
वदस्व दुर्लभं वापि गुरो तुभ्यं नमोऽस्तु ते । विद्यां प्राप्यापि ये मोहात्स्वगुरोः पारितोषिकम् ॥ १५ ॥
न प्रयच्छन्ति निरयं ते यान्त्याचन्द्रतारकम् । भरद्वाज उवाच— गृहाण कन्यां विधिवद्भार्यां कुरु मम स्वसाम् ॥ १६ ॥
अस्याः प्रीत्या वर्तितव्यं याचेयं दक्षिणामिमाम् । कठ उवाच— भ्रातृवत्पुत्रवच्चापि शिष्यवच्च गुरोः सदा ॥ १७ ॥
गुरुश्च पितृवच्च स्यात्सम्बन्धोऽस्याः कथं भवेत् । भरद्वाज उवाच— मद्वाक्यं कुरु सत्यं ते ममाज्ञा तव दक्षिणा ॥ १८ ॥
सर्वं स्मृत्वा कठाद्य त्वं रेवतीं भर तन्मनाः । तथेत्युक्त्वा गुरोर्वाक्यात्कठो जग्राह पाणिना ॥ १९ ॥
रेवतीं विधिवल्लब्ध्वा तां समीक्ष्य कठस्त्वथ । तत्रैव पूजयामास देवेशं शंकरं तदा ॥ २० ॥
रेवत्या रूपसम्पत्त्यै शिवप्रीत्यै च रेवती । सुरूपा चारु सर्वाङ्गी न रूपेणोपमीयते ॥ २१ ॥
अभिषेकोदकं तत्र रेवत्या यद्विनिसृतम् । साऽभवत्तत्र गङ्गायां तस्मात्तन्नामतो नदी ॥ २२ ॥
रेवतीति समाख्याता रूपसौभाग्यदायिनी । पुनर्दर्भैश्च विविधैरभिषेकं चकार सः ॥ २३ ॥
पुण्यरूपत्वसंसिध्यै विदर्भा तदभून्नदी । श्रद्धया संगमे स्नात्वा रेवतीगङ्गयोर्नरः ॥ २४ ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते । तथा विदर्भा गौतम्याः सङ्गमे श्रद्धया मुने ॥ २५ ॥
स्नानं करोत्यसौ याति भुक्तिमुक्ती क्षणात्ततः । उभयोस्तीरयोस्तत्र तीर्थानां शतमुत्तमम् ॥ २६ ॥
सर्वपापक्षयकरं सर्वसिद्धिप्रदायकम् ॥ २७ ॥ इति ॥

## काठकानां कृष्णयजुष्ट्वमेव ।

सर्वेऽपीमे काठकाः कृष्णयजुष एव । तथाच तत्र कारणं—योगीश्वरयाज्ञवल्क्येन महर्षिणा श्रीवैशम्पायनाचार्येणाध्यापितो यजुर्गणश्छर्दित्वा विसृष्टः । तं विसृष्टं यजुर्वेदं श्रीदेशिकवरवैशम्पायनमुनिनिदेशात्कठो वारायण उपमन्युश्चैते त्रयस्तच्छिष्यवर्याश्चरकाख्यतित्तिरिरूपमासाद्य जगृहुरिति । अतस्ते त्रयस्तैत्तिरीया अभवन् । तैत्तिरीयाः कृष्णयजुषश्चेति नार्थान्तरम् । स्पष्टमेतेनैतिह्येन कठानां कृष्णयजुष्ट्वं ज्ञापितं भवति । तथाचोक्तं विष्णुपुराणे— " यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज । जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः " इति । श्रीमद्भागवतेऽपि— " देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् । ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः । तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः " इति । ' ददृशुः, जगृहुः, आददुः ' इत्येते शब्दास्तात्पर्येण एकार्था एव मन्तव्याः । स चायमितिहासः स्पष्टमुक्त उपनिषद्रत्ने आत्मपुराणे दशमाध्याये—

× अत्रासन्धिरार्षः । + श्रवणमात्रेणाध्येत्राऽऽध्यापितार्थग्रहणपटुरित्यर्थः ॥

यदेनमुक्तवान्कोपान्मुञ्च विद्यां मयेरिताम् । याज्ञवल्क्यस्य गुरुः श्रीमान्वैशम्पायननामकः ॥ १६ ॥
अष्टाङ्गयोगवित्तस्य शिष्यो वाजसनेयकः । करिणीकर्ममार्गेण विद्यां चछर्द सोऽपि ताम् ॥ १७ ॥
भूमौ यजूंषि तान्यासन्सूर्यवर्चांसि सर्वतः । मुक्तानि याज्ञवल्क्येन वैशम्पायनवाक्यतः ॥ १८ ॥
सर्वतः स्थितमालोक्य दीप्तं तं यजुषां गणम् । वान्तं शिष्येण सम्प्राह वैशम्पायनदेशिकः ॥ १९ ॥
**शिष्यानन्यानिदं** वाक्यं विस्मयाविष्टचेतसः । यथाशास्त्रमधीतानि यजूंषि मुनिसत्तमाः ॥ २० ॥
याज्ञवल्क्येन मुनिना सूर्यवर्चांसि तान्यतः । गृह्णीध्वं सहसा विप्रास्त्वरितं ब्रह्मणः सभाम् ॥ २१ ॥
इत उत्प्लुत्य गच्छन्ति न्यैतान्यमङ्गलानि भोः । **वान्तानीति** विचारं मा कुरुत ब्राह्मणोत्तमाः ॥ २२ ॥
शरीरान्तरतो वान्तं भक्ष्यं भवति देहिनाम् । ततस्तित्तिरिरूपाणि कृत्वा झटिति योगतः ॥ २३ ॥
दिवि भूमौ प्रसर्पन्ति गृह्णन्तु मुनिसत्तमाः । एवमुक्ते मुनिगणास्तेन तित्तिरिरूपिणः ॥ २४ ॥
यजूंषि जगृहुः शीघ्रं सूर्यभानि समन्ततः । यथा तित्तिरयो लोके पतङ्गान्सर्वतः स्थितान् ॥ २५ ॥
भक्षयन्ति क्षुधाक्रान्ता भूमौ वा नभसि स्थितान् । **एवं मुनिगणः** सोऽयं तित्तिरिः परिकीर्तितः ॥२६॥
वान्त्या च भक्षणेनापि कृष्णान्यासन्यजूंष्यपि ॥ २७ ॥ इति ॥

**करिणीकर्म-** गजवत्पीतस्योद्धरण तद्रीत्येत्यर्थः । **सूर्यवर्चांसि सर्वतः-** अभिमानिदेवरूपेण सूर्यवद्भास्वरमूर्तयो भूमौ सर्वतोऽवकीर्णा यजुर्मन्त्रा इत्यर्थः । **वान्तानीति-** अत्र वान्तत्वमालोच्य विलम्बो न कार्यः । देहान्तरेण वान्तभक्षणे दोषाभावादिति भावः । **शिष्यानन्यान् मुनिगणाः** कठवारायणोपमन्युप्रभृतय इति यावत् । **एवं मुनिगणः-** एवं प्रकारेण स यजुर्वेदाध्ययनशीलो मुनिगणः कृष्णयजुष्ट्वं गत इत्यर्थः ।

## काठकसंहिताकालः ।

प्राचामर्वाचां च सर्वेषामैतिह्यविदां मतेन वेदाविर्भावकालो विद्यमान विश्वसर्गारम्भकाल एवेति विश्वसर्जनज्ञानस्य वेदाधीनत्वात्तेन तत्पूर्वतयैव वर्तितव्यमित्यर्थसिद्धम् । एवमभ्युपगमे हि- " धाता यथापूर्वमकल्पयत् " ( नारा० उप० ) इत्येवं श्रुतिमूलकः " यः कल्पः स कल्पपूर्वः " इति न्यायोऽप्यनुगृहीतो भवति ।

**ननु-** ऐतिहासिकैर्द्वापरान्तस्तिष्यादिसन्धिश्च वेदकालत्वेनाङ्गीकृतः । अन्यथा तैरुन्नीत इतः पूर्वः षट्सहस्र ( ६००० ) संवत्सरात्प्राग्भूतो वेदकालनिश्चयस्तद्गमकानि च व्याकुप्येरन् । अतः कथं भवता तद्विरुद्धमाभाष्यत इति चेत्तत्रोच्यते । ऐतिहासिकैर्निर्धारितो वेदकालो न वेदस्यापूर्वाविर्भावभावतया किन्तु ऋगादिवेदचतुष्टयीतत्तदवान्तराऽनेकशाखाप्रशाखालक्षणस्वावान्तरविभक्तिप्रभावकतयैव सम्मन्यतेऽतो नोक्तविरोधः सङ्गच्छते । नापि तद्गमकविरोधो भवति तेषामप्युक्तार्थाभिव्यञ्जकत्वस्यैव दर्शनात् ।

अतश्च काठकसंहिताया अपि शाखाभेदप्रवृत्तिनिमित्तकसंहितात्वाविशेषेण स एव च संस्करणकाल इति सिध्यति ।

किञ्चैतदुक्तकालनिश्चायकं प्रकृतकाठकसंहितान्तर्गतं लिङ्गमपि वरीवर्ति । तथाचोक्तं- " नैमिष्या वै सत्रमासत । त उत्थाय सप्तविंशतिं कुरुपाञ्चालेषु वत्सतरानवन्वत । तान्बको दाल्भिरब्रवीत्यूयमेवैतान्विभजध्वमिममहं धृतराष्ट्रं वैचित्र्यवीर्यं गमिष्यामि । " इति । [ काठकसंहिता १०।६ ] इयमेव कथा महाभारते शल्यपर्वणि स्पष्टमाम्नाता—

ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् । यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ॥ [ अ० ४१।३२ ]
तथा- ' यत्र दाल्भ्यो बको राजन्पश्वर्थं सुमहातपाः । जुहाव धृतराष्ट्रस्य राष्ट्रं कोपसमन्वितः ॥ इत्यादि
तानब्रवीद्बको दाल्भ्यो विभजध्वं पशूनिति । [ अ. ४२।१-५ ]

तथा महाभारते वनपर्वणि—

अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम् । सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ [ २६।१ ]

एतैः काठकसंहितावचसि स्थितैर्महाभारतवचःसु स्थितैश्च विचित्रवीर्यपुत्रेण धृतराष्ट्रेण सह बकदाल्भ्यस्योल्लेखो बलरामस्य बकाश्रमगमनं, बकयुधिष्ठिरयोः संवादः, इत्यादिज्ञापकैरेते सर्वे महाभारतकालिका इति ज्ञाप्यन्ते । तथाऽन्यत्रापि

काठकसंहितायां- " दिवोदासो भैमसेनिरारुणिमुवाच " इति । [ काठकसं० ७।८ ] एष दिवोदासः स एव यः पारिक्षिती यो भीमसेनस्तस्य पुत्रः उद्दालकेत्यपरनाम्ना ख्यातिमापन्नः । तदेतत्स्पष्टमाम्नायते शतपथे- "एते एव पूर्वेऽहनि० तेन भीमसेनं० तेनोग्रसेनं० तेन श्रुतसेनमित्येते पारिक्षितीयाः " इति । [ शत. ब्रा. १३।५।४३ ] उद्दालकश्च याज्ञवल्क्यसमकालवर्तीति बृहदारण्यकोपनिषद्गतश्रीमन्थवंशब्राह्मणतः सुविशदं भवति। महाभारतकालो याज्ञवल्क्यकालः शतपथकालो वेतः पूर्वः षट्सहस्रसंवत्सरात्पूर्वतन एवेति निर्विशङ्कं सर्वसम्मतम् ।

नच वाल्मिकीयरामायणस्थकाठकोल्लेखो विरुध्यते रामायणकालस्य महाभारतकालापेक्षयाऽत्यन्तप्राचीनत्रेतायुगकालत्वादिति वाच्यम् । कुत इति चेदुच्यते तथाच वाल्मिकीये रामायणेऽयोध्याकाण्डे वनं प्रविवक्षोः श्रीरामस्य धनस्य विभज्य दानप्रसङ्गेण द्वात्रिंशत्तमे सर्गे—

कौसल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति । आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥ इत्यादि

पशुकाभिश्च सर्वाभिर्गवां दशशतेन च । ये च मे कठकलापा बहवो दण्डमाणवाः ॥ १८ ॥ इति ॥

अयं च कठकलापानामुल्लेखो न तत्तन्नामकभूतपूर्वतत्कालवर्तिव्यक्तीरभिप्रैति । किन्तु तत्तच्छ्रुतिविभागानां भविष्यत्याः प्रवचनातिशयनिमित्तकशाखासंज्ञाया निदर्शनत्वमभिप्रैति । संज्ञाव्यवहारश्च बहुधा बहुत्र भाविनीं सिद्धिमादायैव भवति, ' १ अष्टवर्षं ब्राह्मणमुपनयीत ' ' २ भार्यामुपयेमे, ' ' ३ ओदनं पच, ' ' ४ अस्य सूत्रजालस्य शाटकं वय, ' ' ५ पुत्रमुत्पादय, ' इत्यादिवैदिकलौकिकव्यवहारादौ प्रायशस्तथा दर्शनात् । अतएव श्रीधराचार्याः श्रीमद्भागवतटीकायां तत्र तत्र " अवश्यं भावित्वात्सिद्धवन्निर्देशः " इति व्याचख्युः । नचैवं व्याख्याने विनिगमनाविरहः पौराणिकैः प्रत्यक्षादिप्रमाणषट्कातिरिक्तसाम्भविकैतिह्ययोः प्रमाणयोः प्रतिज्ञातत्वात्ताभ्यामृते बहूनां पुराणांशानामसङ्गत्यापत्तेश्च । अतएव चोक्तरामायणश्लोकयोष्टीकाऽपि टीकाकृता तादृशी कृता यथा न विरोधः सम्पत्स्यते । तथाच तदीयं तिलकव्याख्यानं— " तैत्तिरीयाणां तैत्तिरीयशाखाध्येतॄणामाचार्यो यो द्विज इति । कठकलापाः कठकलापनामकमुनिशाखाध्यायिनः । दण्डमाणवाः दण्डप्रधाना माणवा उपकुर्वाणब्रह्मचारिण." इति । स्पष्टमत्र व्याख्याने कठकलापशब्दाभ्यां तत्तन्नाम्नी शाखा निर्दिष्टा नतु तत्तन्नामवत्यो व्यक्तयः, कठादिशब्दानां शाखावाचकत्वं च— " कठः स्वरे ऋचां भेदे " इति विश्वकोषात्सुस्पष्टमेवेति । सर्वमनवद्यम् ।

## काठक—संहिता ।

सकलयजुर्वेदाचार्यश्रीवैशम्पायनमहामुनिशिष्यवर्येण कठनाम्ना श्रुतर्षिणा प्रवर्तिता शाखाविभागभूता संहिता काठकसंहितेति प्रसिद्धिमिता । अस्याः संहितायाः काठकेतिसंज्ञा कठेन प्रवचनविषयीकृता काठकेति तद्धितव्युत्पत्त्या प्रवचननिमित्ता विज्ञेया। तथाचावदच्छबरस्वामिनः " आख्या प्रवचनात् " इत्यस्मिन्मीमांसासूत्रे [ मी. सू. १।१।३० ] भाष्ये— "यदुक्तं कर्तृलक्षणा समाख्या काठकादीति । तदुच्यते । नेयमर्थापत्तिः । अकर्तृकामिरपि ह्येनामाचक्षीरन् । प्रकर्षेण वचनमनन्यसाधारणं कठादिभिरनुष्ठितं स्यात् । तथापि हि समाख्यातारो भवन्ति । स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी, कठ. पुनरिमां केवलां शाखामध्यापयाम्बभूवेति । स बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्यां शाखामनधीयानः । तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम् " इति ।

तथा " काठकादिसमाख्यानामप्यध्ययनसम्प्रदायप्रवर्तकत्वेनोपपत्तेश्चेत्याहुः । युक्तं चैतत् । " इत्यार्यविद्यासुधाकरकारा अप्येवमेव प्रोचुः ।

एषा च प्रकृता काठकसंहिता मैत्रायणीसंहितावत्तैत्तिरीयसंहितावच्च मध्ये मध्ये ब्राह्मणव्यामिश्रा कण्ठप्राप्तस्वरवती पञ्चग्रन्थात्मिका चेति । तथाऽस्याः परिसंख्यानमपि—

अष्टादश सहस्राणि मन्त्रब्राह्मणयोः सह । यजूंषि यत्र पठ्यन्ते स यजुर्वेद उच्यते ॥

इत्युक्त्या कृष्णयजुराम्नायत्वाविशेषादष्टादशसहस्रसम्मितमेवेति मन्तव्यम् ।

अवान्तरविभागपरिकल्पनं तु—

काठकेऽत्र विभागाः स्युरिठिमिमध्यमिके उभे । ओरिमिकेति नार्तीया याज्यापुरोऽनुवाक्यकः ॥

तन्मध्यगस्तुरीयोऽसावश्वमेधाद्यनूक्तयः । पञ्चमश्च समाख्यातो विद्ध्येवं ग्रन्थपञ्चकम् ॥
संख्यया खाब्धितुल्याणि स्थानकानि पुनस्तथा । त्र्युत्तरदशकं तद्वदानुवचनिकं ततः ॥
विभक्तिः पुनरेव स्यात्काठके ग्रन्थपञ्चके । एवंरूपा हि सा ज्ञेया काठकानां च संहिता ॥ इति ॥

इठिमिकोरिमिकाशब्दौ संस्कृतशब्दावुतान्यभाषाशब्दाविति निश्चेतुं दुःशकं तादृशप्रबलप्रमाणानुपलब्धेः । केवलं मध्यमिकाशब्दस्य सहप्रयोगादिमौ शब्दौ तत्प्राथम्यानन्तर्यवाचिनौ स्यातामित्यनुमिनुमः । **तन्मध्यगः**- इठिमिकामध्यमिकोरिमिकात्रयान्तर्भूतः । **अश्वमेधाद्यनूक्तयः**- अश्वमेधगतान्यनुवचनानि । **खाब्धितुल्याणि**- चत्वारिंशत्संख्यापरिमितानि । **त्र्युत्तरदशकं**- त्रयोदशकमित्यर्थः । अनुवाकास्त्रिचत्वारिंशदधिकान्यष्टौ शतानि । मन्त्राश्च त्रिनवत्यधिकत्रिसहस्रा भवन्ति । इति ॥

## तथाच- विभागप्रदर्शकं कोष्टकम् ।

| | ग्रन्थपञ्चकम् । | | उक्तग्रन्थपञ्चके । | |
|---|---|---|---|---|
| १ | इठिमिका. | ६ | स्थानकानि | ४० |
| २ | मध्यमिका. | ७ | अनुवचनानि | १३ |
| ३ | ओरिमिका. | ८ | अनुवाकाः | ८४३ |
| ४ | याज्यानुवाक्याकाण्डम् | ९ | मन्त्राः | ३०९३ |
| ५ | अश्वमेधीयानुवचनानि. | १० | मन्त्रब्राह्मणे मिलित्वा-यजूंषि | १८००० |

# काठक--संहितायां विषयाः ।

## इठिमिका नाम प्रथमो ग्रन्थः ।

| स्थानकानि । | विषयाः । | स्थानकानि । | विषयाः । |
|---|---|---|---|
| १ | पुरोडाशः | १० | आग्नावैष्णवम् |
| २ | अध्वरम् | ११ | मारुतम्. |
| ३ | ज्योतिरिकम् | १२ | पयस्स्थानकम् |
| ४ | ग्रहाः | १३ | पशुबन्धम् |
| ५ | यजमानम् | १४ | वाजपेयम् |
| ६ | अग्निहोत्र-ब्राह्मणम् | १५ | श्रीराजसूयम् |
| ७ | आलोभी | १६ | अग्निवीशिका |
| ८ | दिशस्स्थानकम् | १७ | ध्रुवक्षितिः |
| ९ | उत्सीदनम् | १८ | चमाः |

## मध्यमिका नाम द्वितीयो ग्रन्थः ।

| | | | |
|---|---|---|---|
| १९ | सावित्रा | २५ | इषुः |
| २० | अपेतवीतम् | २६ | धिष्ण्यम् |
| २१ | पञ्चचूडम् | २७ | वाचस्पतिः |
| २२ | स्वर्गम् | २८ | आयुष्यम् |
| २३ | दीक्षितम् | २९ | दीर्घजिह्वी |
| २४ | साक्षीतिः | ३० | पात्मीवतम् |

## ओरिमिका नाम तृतीयो ग्रन्थः ।

| | | | |
|---|---|---|---|
| ३१ | पुरोडाश-ब्राह्मणम् | ३६ | चातुर्मास्यानि |
| ३२ | यजमान-ब्राह्मणम् | ३७ | सत्राः |
| ३३ | सत्त्राणि | ३८ | सौत्रामणी |
| ३४ | एकादशिनी | ३९ | यद्स्कन्दः |
| ३५ | प्रायश्चित्तिः | ४० | हिरण्यगर्भः |

[ अस्मिन्नेव ग्रन्थत्रयमध्ये याज्यानुवाक्या नाम चतुर्थो ग्रन्थोऽन्तर्भूत इति ]

## अश्वमेधाद्यनुवचनानि नाम पञ्चमो ग्रन्थः ।

| अनुवचनानि । | | अनुवचनानि । | |
|---|---|---|---|
| १ | पन्थानुवचनम् | ७ | इन्द्रानुवचनम् |
| २ | गणानुवचनम् | ८ | पैत्वानुवचनम् |
| ३ | अनुवचनम् | ९ | रोहितानुवचनम् |
| ४ | मेघानुवचनम् | १० | सोमानुवचनम् |
| ५ | मितानुवचनम् | ११ | नमस्कारवचनम् |
| ६ | जीमूतानुवचनम् | १२ | अलिवन्दानुवचनम् |
| | | १३ | शादानुवचनम् |

## काठकसंहितायां स्वरविचारणा ।

काठकसंहितायां- उदात्तोऽनुदात्तः स्वरितः प्रचयश्चेति चातुःस्वर्यमेवाधीयतेऽध्येतृभिः । तत्र स्वरितः शुद्धो जात्यश्चेति द्विरूपः । उदात्तात्परः स्वरूपेणानुदात्तकः शुद्धः स्वरितः । अनुदात्तात्परः, पदादिर्वा, स्वरूपेणोभयरूपः, उदात्ततुल्यः, स्वयं स्वरितश्च जात्यः स्वरितः । कम्पो नास्त्येव । स्वरितात्पूर्व उदात्त· स्वरितात्परः प्रचयः । प्रचयश्चोदात्ते परेऽनुदात्तो भवति ।

१- काठके तूदात्त ऊर्ध्वं रेखाङ्कितः । यथा-

नि षसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ।

इति । [ काठक सं० ७।१४।८३ ]

२- अनुदात्तस्वरोऽरेखितः । ( पूर्वमेवोदाहरणम् । )

३- स्वरितोऽधो बिन्दुयुक्तः । यथा— इषे त्वोर्जे त्वा ।

४- जात्योऽनुदात्ते परेऽधोऽर्धवक्रितः । यथा— ' व्युख्यन्महिषो ' ।

उदात्ते परेऽधः कीलाङ्कितो जात्य. । यथा— ' पस्त्यास्वा ' ।

५- प्रचयाद्या शेषाः स्वरा रेखाङ्कनवर्जिताः स्युः ।

६- काठकानां ब्राह्मणस्य स्वरास्तु मन्त्रवदेव भवन्ति । नास्ति तेभ्यः कश्चिद्विशेषः । अत्र बीजं च मन्त्रब्राह्मणयोर्व्यामिश्रतया एकत्र पाठसन्निवेश एवेति । अतएव चोक्तं भगवता कात्यायनेन भाषिकसूत्रे- " मन्त्रस्वरवद्ब्राह्मणस्वरश्चरकाणाम् " इति । [ कात्या० भाषि० सू० ३।२६ ]

काठकाश्चरका एवेति नाविदितं विदुषामिति दिक् ।

केवलमेतत्स्वरवैलक्षण्यं विहाय चैषा काठकसंहिता मैत्रायणीसंहितावत्प्रकरणपरिष्कृता। यजुष्ट्वधर्माक्रान्ता सा नियतपादाक्षरावसानलक्षणाभिर्ऋग्भिरनियतपादाक्षरावसानलक्षणैर्यजुर्भिश्च मन्त्रैर्मध्ये मध्ये ब्राह्मणवाक्यकदम्बभागैश्च चातुर्होत्राद्यन्यतमाध्वर्यवं कर्म प्रतिपादयितुमन्यां संहितामनपेक्ष्य सुतरां क्षमेति तस्याः समालोचने कृते स्पष्टं प्रतीयेत।

अस्यां संहितायां वर्तमानानां मन्त्राणामन्यासु मैत्रायणीतैत्तिरीयाकपिष्ठलाकाण्वीमाध्यन्दिनीयादियजुःसंहितासु क्वचित्क्वचिदृगथर्वाद्यन्यवेदशाखासंहितासु चोपलब्धिरथवा तत्तत्संहितागतानां मन्त्राणामेतस्यां काठकसंहितायामुपलब्धिर्वा प्रतिपाद्यविषयैक्यसन्मूला। तत्रापि कदाचन मन्त्रपाठे प्राकरणिकमर्थैक्यं यथा न व्याहन्येत तथाऽक्षरस्वरपदाद्यवयवैः पाठानुपूर्वी विभिद्यत इति दृश्यते सा शाखाभेदमूलिकेति प्रत्येतव्यम्।

## काठकसंहितानिरूपितविषयाणामन्यत्रानुवादः।

किञ्च— शतपथब्राह्मणे काठकसंहिताभिहितान्विषयांस्तत्र तत्र पूर्वपक्षतयाऽनूद्य प्रत्याख्याय च स्वश्रुतिसम्मताः सिद्धान्ताः प्रतिपादिता दृश्यन्ते। तत्र कतिचित्स्थलानि प्रदर्श्यन्ते—

१ "तदु ह याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहार" इति। [शत. ३।८।२।२४]
२ "ताऽ उ ह चरकाः" इति। [शत. ४।१।२।१९]
३ "यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत" इति। [शत. ४।२।४।१]
४ "तदु ह चरकाध्वर्यवो विगृह्णन्ति" इति। [शत. ४।२।३।१५]
५ "प्राजापत्यं चरका आलभन्ते" इति। [शत. ६।२।२।१]
६ "इति ह स्माह माहित्थिर्य चरकाः प्राजापत्ये पशावाहुरिति" इति। [शत. ६।२।१।१०]
७ "तदु ह चरकाध्वर्यव" इति। [शत. ८।१।३।७]

एवं बहूनि स्थलानि सन्ति केवलं दिङ्मात्रमुदाहृतान्येतानि। इति।

## अन्यत्रोपलभ्यमानानि काठकसंहिताया उद्धरणानि।

१ चरकब्राह्मणं- तथाऽऽग्नीषोमीयब्राह्मणे चरकाणाम्। याज्ञवल्क्यस्मृतेर्विश्वरूपाचार्यकृतबालक्रीडाटीकायां प्रथमे भागे [४८।८] द्वितीये भागे [८७।]

२ ,, चरकब्राह्मण इतिहास आम्नायते। सायणीये ऋग्वेदभाष्ये [८।६६।१०]

३ ,, देवराजयज्वकृतायां टीकायां चरकब्राह्मणमेवात्र प्रमाणमिति।

४ ,, "अयज्ञोपवीति शौचनिष्ठः काममेकं वैणवं दण्डमाददीत"। इति काठकं ब्राह्मणम्। विश्वेश्वर्यां यतिधर्मसंग्रहे।

५ ,, "श्रीन्वणवान्दण्डान्दक्षिणे पाणौ धारयेदेकं वा यथेकं तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतं च त्रिपु वर्णेष्वेकागारं भैक्षमश्नीयान्माधुकरीं वा" इति काठकं ब्राह्मणम्। विश्वेश्वर्यां यतिधर्मसंग्रहे।

६ ,, "अथान्यः परिव्राडेकशाटीपरिहितो मुण्डी उदपाध्यरण्यनिष्ठो भिक्षार्थी ग्रामं प्रविशेत्। सायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्षचरणमभिशस्तवर्जम्" इति काठकं ब्राह्मणम्। विश्वेश्वर्यां यतिधर्मसंग्रहे।

७ काठकब्राह्मणं- शुद्धिकौमुद्यां प्रमाणत्वेनोद्धृतमस्ति।

८ ,, "अपि च काठके विज्ञायते। अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयीरन्निति स्त्रीणामिन्द्रदत्तो वर इति।" वासिष्ठधर्मसूत्रे [१२।२४]। तथा [३०।५]। तथा पातञ्जलमहाभाष्ये [७।१।१३]। तथा स्मृतिचन्द्रिकायामाह्निककाण्डे। तथा मनुस्मृतेर्मेधातिथिभाष्ये [५।१६६]। तथा गौतमधर्मसूत्रे मस्करिभाष्ये [२२।१, ५।१]। तथा याज्ञवल्क्यस्मृतेरपरार्कव्याख्याने। समयप्रकाशे चेति।

९ „ तथाच चरकाः पठन्ति “ श्वेतकेतुं हारुणेयं ब्रह्मचर्यं चरन्तं किलासो जग्राह तमश्विनावूचतुः। मधुमांसौ किल ते भैषज्यम् ” इति याज्ञवल्क्यस्मृतेर्बालक्रीडाटीकायां [१।३२]।

१० „ “ बैल्वः खादिरो वा यूपः स्यात्- इत्युच्यते ” इति काठकगृह्यसूत्रे देवपालभाष्ये [१।१।१]। अत्रैव भाष्येऽन्यत्रापि बहुत्र बहुवारं काठकश्रुतेरुद्धरणपूर्वकमुल्लेखः संविद्यते।

११ „ काठकेऽपि – अश्वमेधवदग्निष्टोमस्यापि “ भ्रूणहत्याया वा एषोऽतिमुच्यते योऽग्निष्टोमसंस्थं यजते ” इति याज्ञवल्क्यस्मृतेर्बालक्रीडाटीकायां [३।२२७]।

१२ „ “ मनुर्वै यत्किञ्चावदत्तद्भेषजमासीत् ” इति कुल्लूकादिमनुस्मृतिटीकासु। [का. सं. ११।५६-९]

चरकब्राह्मणं काठकब्राह्मणं चैकमेवेति प्रतिभाति। एषूद्धरणेषु कानिचित्प्रकृतकाठकसंहितायामुपलभ्यन्ते कानिचिन्नोपलभ्यन्ते। तत एवमनुमातुं शक्यं यत्काठकब्राह्मणं स्वतन्त्रतया पार्थक्येन संकलितं स्यात् तच्च यावद् दृष्टिपथं नायाति तावत्तत्सम्बन्धेन न किमप्यधिकं वक्तुं शक्यते। कदाचिदेवमपि संभाव्यते यत्तैत्तिरीयब्राह्मणस्य [ ।१०।११।१२ ] तृतीयाष्टकस्यान्ते “ एवमश्वमेधान्तानि तित्तिरिप्रोक्तानि काण्डानि व्याख्यातानि। अथ काठकाग्निकाण्डान्यष्टौ” इति भट्टभास्करीयतैत्तिरीयब्राह्मणभाष्यलेखतः दशमैकादशद्वादशेतिप्रपाठकत्रयं कठब्राह्मणं वा काठकब्राह्मणमिति व्यवहर्तुं वैदिका दृश्यन्तेऽतस्तदेव हि काठकब्राह्मणत्वेन सर्वत्र विवक्षितं स्यात्कठस्य तैत्तिरीयत्वाद्विशेषादिति।

## काठकानामितरद्वैदिकं वाङ्मयम्।

१ काठकब्राह्मणं- अनुपदमेवयत्सम्बन्धेन विवेचितम्।

२ काठकारण्यकम्- लाहोरदयानन्दअंग्लोइण्डियनकॉलेजमध्ये [ सं. १७५ ] एतदङ्काङ्कितमास्ते। तच्च मैत्र्युपनिषत्संवादीति प्रो. पं. भगवद्दत्तमहाशयाः “ वैदिकवाङ्मयकाइतिहास ” इत्यस्मिन्पुस्तके समालिखन्। एतदपि द्वादशप्रपाठकात्मकतैत्तिरीयारण्यकस्यान्तिमं प्रपाठकत्रयरूपमेवेति “ एतदतिरिक्तारण्यकभागोऽस्ति यत्र द्वादश प्रपाठकाः सन्ति तैत्तिरिशाखायां, अध्येतृपरम्परानुसारेण काठकपदाभिधेयं प्रपाठकत्रयमपि संयोज्य संख्येयमिति विभावनीयम्। ” इति ‘ स्वर्गत पं. श्रीविद्याधरप्रभुदत्तगौडवेदाचार्यकाशी ’ एषां कात्यायनश्रौतसूत्रस्य भूमिकास्थलेखात्प्रतिभाति।

३ कठोपनिषत्- एषा च प्रसिद्धदशोपनिषदन्तर्गता तृतीयोपनिषत्। अस्यां द्वावध्यायौ। एकैकस्मिन्नध्याये वल्लीत्रयमित्येवं षड् वल्ल्यः। प्रतिवल्लि मन्त्रसंख्या- २९, २४, १७, १५, १५, १८ मिलित्वा संपूर्णा मन्त्रसंख्या- ११८॥

यस्यां च यमधर्मेण नचिकेतसे ब्रह्मविद्या प्रतिपादितेति पुरावृत्तगर्भं ब्रह्मविद्यानिरूपणम्। यस्या आदावन्ते “ सहनाववतु ” इत्यादिः शान्तिः पापठ्यते तत्त्वविद्भिरिति॥

४ काठकश्रौतसूत्रं- श्रीमल्लौगाक्षिप्रणीतम्।

५ काठकगृह्यसूत्रं- श्रीमल्लौगाक्षिप्रणीतमेव।

उभयं मिलित्वा – एककर्तृकमेकमेव सूत्रमिति प्रतीयते। अन्यथा “ एकोनचत्वारिंशताध्यायैर्वैतानिकानि कर्माणि प्रतिपादितानि। साम्प्रतं गृह्याग्निसाध्यानि कथ्यन्ते। यद्यपि च गृह्यानुष्ठानपूर्वाणि वैतानिकानि तथापि प्रत्यक्षविधिमूलत्वात्सूत्रकृता पूर्वं प्रतिपादितानि ” इति। तथा “ पूर्वसूत्रभागेन श्रौतकर्माण्युपदिष्टानि। इदानीमनेनाध्यायेन स्मार्तान्युपदिश्यन्ते ” इति। काठकगृह्यस्य देवपालभाष्याद्यादित्यदर्शनविवरणस्थोपक्रमलेखयोरसङ्गतिः स्यात्। सूत्रद्वयं मिलित्वा चत्वारिंशदध्यायाः सन्ति। भेदेन व्यवहारस्तु विषयभेदनिमित्तक इति ध्येयम्।

“ चरकादिद्वादशानां भारद्वाज इति स्मृतः ” इति। कल्पकर्तेति पूर्वश्लोकादनुवृत्तिः। इति कातीये मन्त्रभ्रान्तिहरसूत्रे तु चरकाणां सूत्रकर्तृत्वं भारद्वाजस्य दर्शितम्। भारद्वाजो लौगाक्षिश्च भिन्नव्यक्ती उतैकैव व्यक्तिरिति निश्चेतव्यं वैदिकसंशोधनकर्तृभिरिति।

६ पदपाठः- काठकानां पदपाठोऽस्ति नवेति न ज्ञायते। अस्तिचेत्किमुपज्ञ इत्यादि सर्वमन्वेष्टव्यमेव।

७ भाष्याणि- काठकानां संहितायां ब्राह्मणस्यारण्यकस्य वा भाष्यमस्ति नवेति न ज्ञायते। तत्कर्तुरुल्लेखस्य तदुद्धरणस्य वा क्वाप्यनुपलम्भात्।
यदि काठकब्राह्मणं तैत्तिरीयब्राह्मणान्तर्गतं काठकारण्यकं च तैत्तिरीयारण्यकान्तर्गतं स्यात्तदा तु तयोरुपरि त्रयीभाष्यकृतां श्रीसायणाचार्यपादानां भाष्यमस्त्येवेति।
काठकश्रौतगृह्यसूत्रयोरुपरि श्रीहरिपालसुतदेवपालकृतं पञ्चिकाख्यं, माधवाध्वर्युतनयब्रह्मबलकृतं गृह्यपद्धतिर्मन्त्रसंहितासमाख्यं, आदित्यदर्शनविवरणाख्यं च भाष्यत्रयमस्तीति। तत्र काठकगृह्यं भाष्यद्वयसनाथीकृतं प्रो. पं. भगवद्दत्तमहाशयैः सम्पाद्य मुद्रापितमास्ते।

८ उपनिषद्भाष्याणि- कठोपनिषदि श्रीमज्जगद्गुरुशंकराचार्यपादानां भाष्यमस्तीति प्रथिततरम्। तथा तत्तत्सम्प्रदायिनां रामानुजाचार्यवल्लभाचार्यमध्वाचार्यप्रभृतिदेशिकवराणां च भाष्याणि सन्ति प्रायशस्तानि मुद्रितान्यपि च सन्तीति।

९- अन्ये ग्रन्थाः- शुल्बसूत्रं, धर्मसूत्रं, प्रातिशाख्यं, सर्वानुक्रमः, प्रावरिकाप्रभृतिपरिशिष्टानि, इत्येतेऽन्ये ग्रन्थाः सन्ति वा नवेति न किमपि जानीमहे।

## काठकसंहितागत-विशिष्टनाम्नामकाराद्यनुक्रमेण सूचनम्।

अगस्त्य. ( ऋषिः ) ३४।४।८
अङ्गिरसः १।७।२२
अनुम्लोचन्ती ( अप्सराः ) १७।९।२२
अररुः ( असुरः ) २५।४।९-१०; ३१।८।२१
अरुणः औपवेशिः ( ऋषिः ) २६।१०।२७
आयुः ( अग्निर्निर्मन्थ्यः ) २६।७।१८,२०
आर्वलः काहोडिः ( ऋषिः ) २५।७।१९
इषिरो विश्वव्यचाः गुणको वातः (गन्धर्वः) १८।१४।७२
उर्वशी ( अप्सराः ) ( अरणिः ) १७।२।२२; २६।७।२०
ऋताषाट् ऋतधामा गुणकः अग्निः (गन्धर्वः) १८।१४।७२
ककुभः ( राजपुत्रः ) १४।८।३३
कण्वः ( ऋषिः ) १८।४।२१
कद्रूः ( सर्पमाता ) २३।९।२३
कालकाञ्जाः ( असुराः ) ८।१।२
कुरुपाञ्चालाः ( देशाः ) १०।६।९
कृतस्थला ( अप्सराः ) १७।९।२२
केशी दाल्भ्यः (ऋषिः ) ३०।२।४
क्रतुजिज्जानकिः ( ऋषिः ) ११।१।१
घृताची ( अप्सराः ) १७।९।२२
जमदग्निः ( ऋषिः ) १६।१९।२२६
जम्भः ( असुरः ) २६।१।२
धृतराष्ट्रः वैचित्र्यवीर्यः ( राजविशेषः ) १०।६।९
नमुचिः ( असुरः ) १५।७।१७
नैमिष्याः ( नैमिषक्षेत्रवासिनो मुनिविशेषाः) १०।६।९
पुञ्जिगस्थला ( अप्सराः ) १७।९।२२
पुरूरवाः ( राजा-अरणिश्च ) २६।७।२०
पूर्वचित्तिः ( अप्सराः ) १७।९।२२
प्रजापतिः विश्वकर्मा गुणकः मनो (गन्धर्वः) १८।१४।७२
प्रम्लोचन्ती ( अप्सराः ) १७।९।२२
प्रतर्दनः ( ऋषिः ) २१।१०।३५
प्रैयमेधाः ( ऋषयः ) ६।६।१०
बको दाल्भिः ( ऋषिः ) १०।६।९
भरद्वाजः ( ऋषिः ) १६।१९।२२६; २१।१०।३५
भुज्युः सुपर्णः गुणको यज्ञः (गन्धर्वः) १८।१४।७२
भूपतिः, भुवनपतिः, भूतानां पतिः, भूतः ( चत्वारो देवहोतारः ) २५।७।१९; ३५।८।५०
भृगवः ( ऋषयः ) १।७।२२
मनुः (राजर्षिः) १।२।५; ११।२।४; ११।५।९; ३१।१।१
मेनका ( अप्सराः ) १७।९।२२
रजनः कौणेयः ( ऋषिः ) ११।१।१
लुशाकपिः खार्गलिः ( ऋषिः ) ३०।२।४
वसिष्ठः ( ऋषिः ) १६।१९।२२६; ३७।१७।४९
वातापिः ( असुरः ) ४०।८।६१-६२
वामदेवः ( ऋषिः ) १०।५।७।८,

वासिष्ठः ( वसिष्ठपुत्रः ) ( ऋषिः ) ३४।१७।२५
विश्वकर्मा ( ऋषिः ) १६।१९।२२६
विश्वरूपस्त्रिशीर्षा त्वष्टुः पुत्रः
( असुराणां स्वस्त्रियः ) १२।१०।२८
विश्वाची ( अप्सराः ) १७।९।२२
विश्वामित्रः ( ऋषिः ) १६।१९।२२६
विषादृ ( असुरः ) २५।४।१०
वृत्रः ( असुरः ) २५।४।९; २७।१०।३०; ३६।१।१
शण्डामर्कौ ( असुरपुरोहितौ ) २७।७।२०
सँहितो विश्वसामा गुणकः सूर्यः (गन्धर्वः) १८।१४।७२
सहजन्या ( अप्सराः ) १७।९।२२
साध्याः ( देवविशेषाः ) २६।७।१८
सुपर्णः ( ऋषिः ) ३९।७।४५
सुपर्णी ( गरुत्मन्माता ) २३।९।२३
सुषुम्णः सूर्यरश्मिः गुणकः चन्द्रमाः
( गन्धर्वः ) १८।१४।७२
स्वर्भानुः ( असुरः ) राहुरिति प्रसिद्धः
११।५।८; १२।१३।३५; २७।२।६

## काठकसंहितायां निरूपिताः प्रमुखप्रमुखा यागाः ।

१. दर्शपूर्णमासौ
२. ज्योतिष्टोमः
३. अग्निहोत्रहोमः
४. उपस्थानादि याजमानं कर्म
५. आधानम्
६. काम्या इष्टयः
७. विभिन्नाः पयस्यायागाः
८. निरूढपशुबन्धः
९. वाजपेयः
१०. राजसूयः
११. अग्निचयनम्
१२. पात्नीवतयागः
१३. गोसव्यतिरात्रादि सत्राणि
१४. एकादशिनी पशुगणः
१५. विभिन्नाः प्रायश्चित्तयः
१६. चातुर्मास्यानि
१७. गोसववरुणसवादि-सवयागाः
१८. सौत्रामणीयागः
१९. अश्वमेधयागः

## काठकानामध्ययनप्रचारः ।

" ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते " इति पातञ्जले व्याकरणमहाभाष्ये ( ४।३।१०१ ) इत्यस्मान्महाभाष्यलेखाज्ज्ञायते यत्पतञ्जलेः समये काठकशाखाया अध्ययनाध्यापनप्रवचनादिभिर्घनिष्ठतमः प्रचार आसीदिति । पतञ्जलिसमयस्तु कलेः सप्तविंशत्यां शताब्द्यां बुद्धमहामुनेः किञ्चित्पश्चादार्यचाणक्यकृपापात्राच्चन्द्रगुप्तात्पूर्वं तन्मध्यवर्ती काल इति श्रीसत्यव्रतसामाश्रमिभिरैतिहासिकपर्यालोचनविधया निरणायि । इदानीं नास्ति तादृशः प्रचारः किन्तु लुप्तप्रायैव समजन्येषा काठका शाखा । बहून्यत्र कारणानि स्युः । तेषु मुख्यतमं कारणमेतदेवालक्ष्यते यत् ब्राह्मणानां वेदाध्ययनादावुपेक्षावृत्तिरेव ।

साम्प्रतमेतत्काठकशाखावलम्बिनो महीसुरा अस्मिन्भारते सन्ति वा न वा ? सन्ति चेत्काम्रवनिमलङ्कुर्वन्ति स्वामिमां शाखामधीयाना अधीताश्चाथवा नाममात्रा वा किमपि विशेषमैतिवृत्तं न जानीमहे ।

## धन्यवादाः ।

अस्य ग्रन्थस्य मुद्रणावसरे शार्मण्यदेशोद्भवैः श्रीमद्भिर्लियोपोल्ड वान श्रोडरशर्मभिः पण्डितवरैर्लिप्सिकनगरे १९१० खिष्टाब्दे मुद्रिता काठक-संहिता प्रायशः शुद्धादर्शग्रन्थरूपेणावलम्बनाय प्राप्ता । अतस्ते धन्यवादानर्हन्ति ।

श्री औन्धसंस्थानमधितिष्ठद्भिः स्वाध्यायमण्डलसञ्चालकैः पण्डितप्रवरैः श्री० श्रीपाद-दामोदर-सातवलेकर शास्त्रिमहाभागैर्मित्रप्रेम्णा मैत्रायणीसंहितावदस्याः काठकसंहितायाः प्रास्ताविकलेखनकार्यभारः पुनर्मय्येवाहितः। तदीयैषोपकृतिर्न कदापि विस्मराम्यहम्।

प्रख्याते भुवि भारते युगरसव्यालेन्दुतुल्ये शके। (१८६४)
चित्रे भानुयुतेऽब्दके भृगुदिने मार्गे सितैकादशे।
प्रस्तावोऽभिनवो व्यलेखि समयैः श्रीकाठकीयश्रुतेः।
सन्तुष्येयुरनल्पसूक्ष्ममतयो निर्मत्सरा कोविदाः ॥ १ ॥
दूरमुत्सार्य मात्सर्यं मदसव्याक्तिकारणाः।
शास्तं गृह्णन्तु संशोध्य प्रार्थयामीति सादरम् ॥ २ ॥
श्रीगोदातटगार्च्यनासिकवसन्माध्यन्दिनाम्नायवित्।
श्रौतस्मार्तविधानकौशलमतिस्त्यार्षेयपाराशरः॥
वारे इत्युपनामसत्कुलजनिर्जैरामपौत्रसुधीः।
आत्याजीसुत आस्त वेदतिलकः श्रीश्रीमदण्णाभिधः ॥ ३ ॥
श्रौतस्मार्तविधौ कुशाग्रधिषणो धर्मागमे मर्मभित्।
मीमांसानयकोविदः श्रुतिकृती वेदार्थबद्धादरः॥
काश्ये तीर्थपदं दधद्द्विजवरः श्रीश्रीधरस्तत्सुतः।
सद्विद्याभरणेत्युपाधिसहितः प्रास्ताविकं व्यालिखत् ॥ ४ ॥

एवमेतादृग्भूरिपरिश्रमेण विलिखिते प्रास्ताविकेऽस्मिन्मितमतिमानुषस्वभावसुलभतया प्रमादादज्ञानाद्दृग्दोषाद्वा यत्स्खलितमन्यथाभूतं वा तन्निर्मत्सरा गुणग्रहणतत्पराः प्राज्ञप्रवराः संशोध्य सारग्रहणं करीष्यन्तीति तान्दयार्द्रदृष्टीन्विबुधगणान्पुनः साञ्जलिबन्धं सप्रश्रयं विज्ञाप्य विरामि।

| | |
|---|---|
| श्रीक्षेत्रनासिके | विद्वद्वशंवदः |
| मार्गशीर्षशुक्लैकादश्यां | श्रीमन्नासिकक्षेत्रनिवासी |
| भृगुवासरे प्रातः | वारे इत्युपाह्वः वैदिकतिलक- |
| शालिवाहनशकः १८६४ | श्रीमदण्णाशास्त्रिसूनुः |
| खिस्तदिनाङ्कः १८।१२।१९४२ | श्रीधरशर्मा. |





## अथ यजुर्वेदीय--

# काठक-संहिता।

अथ प्रथमं स्थानकम्।

### पुरोडाशः।

इषे त्वोर्जे त्वा वायवस्स्थोपायवस्स्थ देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ आप्याय-
ध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्माः ॥ मा वस्स्तेन ईशत माघशंसः परि वो रुद्रस्य
हेतिर्वृणक्तु ॥ ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि यजमानस्य पशुपा असि
॥ १ ॥ १-४

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे गोपदसि प्रत्युष्टं रक्षः प्रत्युष्टा-
रातिः प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा ॥ उर्वन्तरिक्षं व्रीहीन्द्रस्य परिपूतमसि
माधो मोपरि परुस्त ऋध्यासमाच्छेत्ता ते मा रिषत् ॥ देव बर्हिश्शतवल्शं विरोह सहस्रवल्शा वि
वयं रुहेम ॥ अदित्या रास्नासीन्द्राण्यास्संनहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य त्वा
बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्नाहरामि देवङ्गममसि ॥ तदाहरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह
बर्हिरासदे ॥ २ ॥ ५-९

वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम् ॥ १०
अयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः।
मधुमद् घृतवत् पिन्वमाना जीवा जीवन्तीरुप वस्सदेम ॥ ११

---

[१] मै. १,१,१। कपि. १,१। वा. १,१; १६,५०। काण्व. १,१-३; १७,५०। [ मा वस्स्तेन ईशत माघशंसः। ऋ. ६,२८,७; अथर्व. ४,२१,७। परि वो (णो) रुद्रस्य० (हेती)। ऋ. २,३३,१४ अथर्व ४,२१,७]

[२] मै. १,१,२(२-३,६)। कपि. १,२। वा. १,१०,२१,२४, २,११,५,२२,२६, ६,१,९,३०; ९,३०,३८ ११,९,२८, १८,३७;२०,३; २२,१; ३७,१; ३८,१,३; १,७,२९; ५,४३; १२,१००। काण्व १,१३,३६,४०; २,२२ ५,२८, ३३; ६,१,१०,४३; १०,३९, ११,४; १२,९,२८; २०,७; २१,९३; २४,१, ३७,१,३८,१,३; १,१०,४६; ५,५१। [ देवस्य त्वा सवितुः०। अथर्व. १९,५१,२, ऐ. आ. ८,७। शतवल्शं (०ल्शो) विरोह सहस्रवल्शा. . रुहेम। ऋ० ३,८,११; तै सं १,३,५,१ ]

[३] मै. १,१,३(७-१०)। कपि. १,३। वा. १,२-४। काण्व. १,४-५,७।

मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया: परेण धाम्नाहुतासि मा ह्वास्सा विश्वा-
युस्सा विश्वव्यचास्सा विश्वधाया हुतस्स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथि-
वीभ्याम् ॥ १२

संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । मन्द्रा धनस्य सातये ॥ १३

इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत ॥ ३ ॥ १४

कर्मणे वां वानस्पत्यमसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः ॥ उर्वन्तरिक्षं वीहि धूरसि धूर्व धूर्वन्तं यो-
ऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामस्तं च धूर्व ॥ देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं
देवहूतमं विष्णोः क्रमोऽस्यहुतमसि हविर्धानं दृंहस्व मा ह्वार्मित्रस्य त्वा चक्षुषा प्रेक्ष उरु त्वा वाताय
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि यच्छन्तु त्वा पञ्च
रक्षायै त्वा नारात्या इदं देवानामिदं नस्सह स्वरभिव्यख्यं ज्योतिर्वैश्वानरं दृंहन्तां दुर्यास्स्वाहा
पृथिव्यामुर्वन्तरिक्षं प्रेह्यग्ने हव्यं रक्षस्व ॥ ४ ॥ १५-१७

विष्णोर्मनसा पूते स्थः ॥ देवो वस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ देवस्य
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं प्रोक्षामि शुन्धन्तां पात्राणि देवयज्यायै
यदशुद्धः पराजघान तद्व एतेन शुन्धन्तामवधूतं रक्षोऽवधूतारातिरदित्यास्त्वगसि प्रति त्वा पृथिवी
वेत्त्वधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्तु पृथिवीं दृंहाग्नेस्तनूरसि वाचो विसर्जनं
देवताभ्यस्त्वा देववीतये गृह्णामि बृहद् ग्रावासि वानस्पत्यस्स इदं देवेभ्यो हव्यं शम्नीष्व सुशमि
शम्नीष्वाद्रिरसि श्लोककृदपहतं रक्षोऽपहतारातिर्वयं संघातं संघातं संजयेम वर्षवृद्धमसि प्रति त्वा
वर्षवृद्धं वेत्तु परापूतं रक्षः परापूतारातिर्निरस्तो अघशंसो वायुर्व इष ऊर्जे विविनक्तु । ५ ॥ १८-२०

अवधूतं रक्षोऽवधूतारातिरदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु धिषणासि पार्वती प्रति त्वादि-
त्यास्त्वग्वेत्तु पृथिवीं दृंह धिषणासि पार्वतेयी प्रति त्वा पार्वती वेत्तु दिवं दृंह दिवस्स्कम्भधान्यमसि
धिनुहि देवान् धिनुहि यज्ञं धिनुहि यज्ञपतिं धिनुहि मां यज्ञन्यं प्राणाय त्वा व्यानाय त्वापानाय
त्वा दीर्घामनु समृतिमायुषे त्वा देवो वस्सविता हिरण्यपाणिः प्रतिगृह्णात्वदब्धेन वश्चक्षुषावपश्यामि
रायस्पोषाय सुप्रजास्त्वाय ॥ ६ ॥ २१

[ ४ ] मै. १,१४-५ (११-१२) । कपि. १,४ । वा. १,६-११,२९ । काण्व. १,९-१५,४६ । [ देवस्य त्वा सवितुः० । अथर्व १९,५१,२, ऐ. ब्रा ८,७ ]

[ ५ ] मै. १,१,६-७ (१३-१५) । कपि. १,५ । वा. १,१२-१६,३१; ४,४; १०,६ । काण्व. १,१६,१८-२६,४८-४९; ४,५; ११,१३ ।

[ ६ ] मै. १,१,७,११ (१५,२७) । कपि. १,६ । वा. १,१६,१९-२० । काण्व. १,२६,३१-३४ ।

निर्दग्धं रक्षो निर्दग्धारातिरपाग्ने अग्निमामादं जहि निष्क्रव्यादँ सेधा देवयजनं वह ध्रुवमसि पृथिवीं दृँहायुर्देहि प्राणं देहि सजातानस्मै यजमानाय पर्यूह धरुणमस्यन्तरिक्षं दृँह चक्षुर्देहि श्रोत्रं देहि सजातानस्मै यजमानाय पर्यूह धर्त्रमसि दिवं दृँहौजो देहि बलं देहि सजातानस्मै यजमानाय पर्यूह धर्मासि दिशो दृँह रयिं देहि पोषं देहि सजातानस्मै यजमानाय पर्यूह यन्त्रमस्याशा दृँह रूपं देहि बलं देहि सजातानस्मै यजमानाय पर्यूह चितस्स्थ परिचितो यजमानस्य सजाता भृगूनामाङ्गिरसां तपसा तप्यध्वम् ॥ २२

यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ ७ ॥ २३

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं संवपामि समाप ओषधीभिस्समोषधयो रसेन मधुना मधुमतीः पृच्यन्तां यद्वो रेवती रेवत्यं यद्वो हविष्या हविष्यं यद्वो जगतीर्जगत्यं तेनास्मै यज्ञपतय आशासाना मधुना मधुमतीस्संपृच्यध्वं जनयत्यै त्वा मखस्य शिरोऽसि घर्मोऽसि विश्वायुरुरु प्रथस्वोरु ते यज्ञपतिः प्रथतां प्रत्युष्टं रक्षः प्रत्युष्टारातिर्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधिनाकेऽग्निस्ते तन्वं मा हिंसीदग्ने ब्रह्म गृह्णीष्वैकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा ॥ ८ ॥ २४

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इन्द्रस्य बाहुरसि दक्षिणस्सहस्रभृष्टिश्शततेजा वायुरसि तिग्मतेजाः पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषं व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याँ शतेन पाशैर्योऽस्मान् द्विष्यति यं वयं दिप्सामस्तमतो मा मौग्द्रप्सस्ते द्यां मा स्कान् व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याँ शतेन पाशैर्योऽस्मान् दिप्सति यं वयं दिप्सामस्तमतो मा मौगररुर्या मा पप्तद् व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याँ शतेन पाशैर्योऽस्मान् दिप्सति यं वयं दिप्सामस्तमतो मा मौगपाररुमदेवयजनं पृथिव्या देवयजनाज्जहि ॥ इमां नरः कृणुत वो देवेभ्यो जुष्टामदित्या उपस्थे ॥ इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्तु ॥ वसवस्त्वा परिगृह्णन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वा परिगृह्णन्तु जागतेन च्छन्दसाङ्गिरस्वद्ध्रुवा असि स्वधा असि ॥ २५-२८

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुम् ।
तामैरयँश्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्यायजन्त कवयः ॥ ९ ॥ २९

---

[ ७ ] मै. १,१,८ (१६-१७) । कपि. १,७ । वा १,१९-१८ । का० . १,२९-३० ।

[ ८ ] मै. १,१,९ (१८—२२) । कपि. १,८ । वा. १,२१—२३· ११,५७; ३७,८ । का० । १,३६-१९; १२,५९, ३७,८ ।

[ ९ ] मै. १,१,१० (२३—२४) । कपि. १,९ । वा. १,२४—२६,२८, ११,६०,६५; ४,१ । का० . १,४८—३३,५५; १२,६१,६६; ४,१ ।

पृश्न्याः पयोऽसि तस्य तेऽक्षीयमानस्य पिन्वमानस्य पिन्वमानं निर्वपामि ॥ ३०

आशासाना सौमनसं प्रजां सौभाग्यं रयिम् । अग्नेरनुव्रता भूत्वा संनह्य सुकृताय कम् ॥ ३१

अग्ने गृहपत उप मा ह्वयस्व देवानां पत्नीरुप मा ह्वयध्वमदितिरिव त्वा सुपुत्रोपनिषदेयमि-
न्द्राणीवाविधवेषे त्वादब्धेन त्वा चक्षुषावपश्यामि रायस्पोषाय सुप्रजास्त्वायोर्जे त्वाग्नेर्जिह्वासि
सुपूर्देवेभ्यो धाम्ने धाम्ने त्वा यजुषे यजुषे हविरसि वैश्वानरमुन्नीतशुष्मँ सत्यौजास्सहो नामासि
सहस्वारातिँ सहस्व पृतनायतस्सहस्रवीर्यमसि तन्माजिंत्वाज्यस्याज्यमसि हविषो हविस्सत्याभिघृ-
तमसि सत्येन त्वाभिघारयामि ॥ तेजोऽसि शुक्रमसि ज्योतिरसि धामासि प्रियं देवानामनाधृष्टं
देवयजनं देवताभ्यस्त्वा यज्ञियेभ्यो गृह्णामि प्रत्युष्टं रक्षः प्रत्युष्टारातिरनिशितास्स्थ सपत्नक्षयणी-
रायुः प्राणं मा निर्दक्षं वाजिनं त्वा वाजिन्वाजयत्यायै संमार्ज्मि चक्षुः श्रोत्रं मा निर्दक्षं वाजिनीं
त्वा वाजिनि वाजयत्यायै संमार्ज्मि प्रजां योनिं मा निर्दक्षं वाजिनीं त्वा वाजयत्यायै संमा-
र्ज्मि गोष्ठं यजमानस्य रायस्पोषं मा निर्दक्षं वाजिनीं त्वा वाजिनि वाजयत्यायै संमार्ज्मि ॥ १० ॥
३२-३३

देवीरापो अग्रेगुवः प्रेमं यज्ञं नयत प्र यज्ञपतिं तिरत युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रम-
वृणीध्वं वृत्रतूर्ये प्रोक्षितास्स्थ कृष्णोऽस्याखरेष्ठा अग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टं
प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि पितॄणां भागधेयीस्स्थोर्जा पृथिवीं गच्छत विष्णोस्स्तु-
पोऽस्यूर्णम्रदः प्रथस्व स्वासस्थं देवेभ्यो गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधि-
रिड ईडित इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितो मित्रावरुणौ त्वा परिधत्तां
ध्रुवेण धर्मणेड ईडितम् ॥ ३४

वीतिहोत्रं त्वा कवे द्युमन्तस्समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ३५

सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्याः । वर्षिष्ठेऽधि नाके ॥ ३६

सवितुर्बाहू स्थो देवजनानां विधरणिर्वसूनां रुद्राणामादित्यानां सदनमसि जुह्वेहि घृताची द्यौ-
र्जन्मनादितिरच्छिन्नपत्रा प्रिया देवानां प्रियेण धाम्ना प्रिये सदसि सीदोपभृदेहि घृताच्यन्तरिक्षं
जन्मनादितिरच्छिन्नपत्रा प्रिया देवानां प्रियेण धाम्ना प्रिये सदसि सीद ध्रुव एहि घृताची पृथिवी
जन्मनादिरतिच्छिन्नपत्रा प्रिया देवानां प्रियेण धाम्ना प्रिये सदसि सीदर्षभोऽसि शाक्करो वायु-

---

[१०] मै. १,१,११ (२५-२८) । कपि. १,१० । वा. १,२९-३१; १३,१ । काण्व. १,४६-४९; १४,१ । [आशासाना सौमनसं०...कम् । अथर्व. १४,१,४२ ]

[११] मै. १,१,११—१२ (२९—३५) । कपि. १,११ । वा. १,१२—१३; २,१—६ । काण्व १,१७—१८; २,१-९ । [ वीतिहोत्रं त्वा कवे० । । ऋ. ५,२६,३; सा. १५२३ ]

र्जन्मनादितिरच्छिन्नपत्रः प्रियो देवानां प्रियेण धाम्ना प्रिये सदसि सीद ध्रुवा असदन्नृतस्य योनौ
सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञन्यम् ॥ ११ ॥ ३७

भुवनमसि विप्रथस्वाग्निर्यष्टेदं नमो जुह्वेह्यग्निस्त्वाह्वयति देवयज्यायां उपभृदेहि देवस्त्वा सवि-
ताह्वयति देवयज्याया अङ्घ्रिणा विष्णू मा वामवक्रमिषं पाहि माग्ने दुश्चरितादा मा सुचरिते भज
विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृणुतं विष्णोस्स्थाम्न इत इन्द्रो वीर्यमकृणोत्॥ ऊर्ध्वो
अध्वरो दिविस्पृगह्रुतो यज्ञो यज्ञपतेः ॥ इन्द्रवान् बृहद्भास्स्वाहा ॥ सं ज्योतिषा ज्योतिर्वाजस्याहं
प्रसवेनाग्नीषोमाभ्यां देवतयोज्जयामि वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयासुं प्रतिनुदे ॥ ३८-४१

वाजस्य मा प्रसवेनोद्ग्राभेनोदजीग्रभम् । अथा सपत्नाँ इन्द्रो मे निग्राभेनाधराँ अकः॥ ४२

उद्ग्राभश्च निग्राभश्च ब्रह्म देवाँ अवीवृधत् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥ ४३

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वार्थं रिहाणा व्यन्तु वयः ॥ ४४

मरुतां पृषती वशा पृश्निर्भूत्वा दिवं गच्छ । ततो नो वृष्टिमेरय ॥ ४५

अहीनः प्राणश्चक्षुष्पा असि चक्षुर्मे पाहि ॥ ४६

यं परिधिं पर्यधत्था अग्ने देव पणिभिरिध्यमानः ।
तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयातै ॥ ४७

अग्नेः पाथ उपेहीन्द्रस्य पाथ उपेहि विश्वेषां देवानां पाथ उपेहि यजमानं प्रथत ॥ ४८

सँस्रावभागास्स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ।
यज्ञस्य गोपा उत रक्षितारस्स्वाहा देवा अमृता मादयन्ताम् ॥ ४९

अग्नेऽदब्धायोऽशीततनो पाहि विद्योत्पाहि प्रसित्याः पाहि दुरिष्ट्याः पाहि दुरद्मन्या अविषं नः
पितुं कृधि सुधीन्योनीन् सुषदां पृथिवीँ स्वाहा देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत
इमं देवयज्ञँ स्वाहा वाचि स्वाहा वाते धाः ॥ १२ ॥ ५०

[ ५० ]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां पुरोडाशो नाम प्रथमं स्थानकं संपूर्णम् ॥ १ ॥



[१२] मै. १,१,१३ (३६-४३) । कपि. १,१२ । वा. २,८—९,१५—१८,२०—२१ । काण्व. २,११—१२,१४ – ३०, ३६,३९; १७,६३—६४ ।

अथ द्वितीयं स्थानकम्।

## अध्वरम्।

आर्द्रदानवस्स्थ जीवदानवस्स्थोन्दतीरिह मावताप उन्दन्तु जीवसे दीर्घायुत्वाय वचसे ओषधे त्रायस्वैनं स्वधिते मैनँ हिँसीर्देवायुरिमान् प्रवपे स्वस्त्युत्तराँ अशीय ॥ १

शं न आपो धन्वन्याश्शं नस्सन्त्वनूप्याः। शं नस्समुद्रिया आपश्शमु नस्सन्तु कूप्याः॥ २

आपो अस्मान् मातरस्सूदयन्तु घृतेन मा घृतप्वः पुनन्तु।

विश्वँ ह रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ ३

सोमस्य दात्रमसि तनूरसि तन्वं मे पाहि महीनां पयोऽस्यपामोषधीनां रसो वर्चोधा असि वर्चो मे धेहि मित्रस्यासि कनीनिकान्तरहं त्वया द्वेषमन्तरराती र्दधे चक्षुर्धा असि चक्षुर्मे धेहि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिस्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् ॥ १ ॥ ४

आकूत्यै प्रयुजे अग्नये स्वाहा मेधायै मनसे अग्नये स्वाहा दीक्षायै तपसे अग्नये स्वाहा सरस्वत्यै पूष्णे अग्नये स्वाहापो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष बृहस्पतये हविषा विधेम स्वाहा ॥ ५

विश्वो देवस्य नेतुर्मर्तो वरेत सख्यम्। विश्वो राय इषुध्यति द्युम्नं वरेत पुष्यतु ॥ ६

स्वाहेन्द्राग्नी द्यावापृथिवी आप ओषधय उरो अन्तरिक्षानु मे दीक्षां दीक्षापतयो मन्यध्वमनु तपस्तपस्पतयोऽग्निश्च देव सूर्येपमूर्जं दधातन देव सवितस्त्वं दीक्षाणां दीक्षापतिरसीत्थं मा सन्तं पाह्या मोद्चः पाहि ॥ २ ॥ ७

ऋक्सामयोश्शिल्पे स्थस्ते वामारभ आ मोद्चः पातँ शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिँसीः ॥ ८

इमां धियँ शिक्षमानस्य देव क्रतुं दक्षं वरुणँ सँशिशाधि।

ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेयम् ॥ ९

---

[ १ ] मै १,२,१ (२—३,५—१०)। कपि. १,१३। वा २,१६,२६; ३,१७, ४,१—४, ५,४२; ६,१५। काण्व. २, ३३,४८; ३,२३; ४.२—५, ५,५४, ६,२०। [ आपो अस्मान् मातरः०...एमि। ऋ. १०,१७,१०; अथर्व. ६,५१,२; तै. सं. १,२,१,१। चक्षुर्धा असि०। अथर्व. २,१७,६]

[ २ ] मै. १,२,२ (११—१४,१६—१७)। कपि. १,१४। वा. ४,७-८, ५,६,४०; ११,६७; २२,२१। काण्व. ४,८-९; ५,८,५०; १२,६८; २४,२९। [ विश्वो देवस्य नेतुः०। ऋ ५,५०,१, तै. सं. १,२,२,१; ४,१,९,१। अग्नये स्वाहा। अथर्व. १९,४३,१]

[ ३ ] मै. १,२,२ (१४-१५,१७—१९,२१)। कपि. १,१५। वा. ४,६,९—१०; २१,६। काण्व. ४,७,१०—१३; २३, ६। [ इमां धियँ शिक्षमान (०ण) स्य०। ऋ. ८,४२.३. तै. सं १,२,२,२ ]

इमाँ सु नावमारुहमरिष्टां पारयिष्णुम् । शतारित्राँ स्वस्तये ॥ १०

सुत्रामाणं पृथिवीं द्यामनेहसँ सुशर्माणमदितिँ सुप्रणीतिम् ।

दैवीं नावँ स्वरित्रामनागसमस्रवन्तीमारुहेम स्वस्तये ॥ ११

ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि मा मा हिँसीस्सोमस्य नीविरसि मा मा हिँसीरि-
न्द्रस्य योनिरसि मा मा हिँसीः कृष्यै त्वा सुमनस्यायै कृपिं सुसस्यामुत्कृधि विष्णोश्शर्मासि
शर्म यजमानस्य शर्म मे यच्छ नमस्ते अस्तु मा मा हिँसीर्नक्षत्राणां मातीकाशात् पाहि सूपस्था-
वा वनस्पत ऊर्ध्वो मा पाह्योदृचस्स्वाहा यज्ञमनसस्स्वाहा दिवस्स्वाहा पृथिव्यास्स्वाहोरोरन्तरिक्षात्
स्वाहा वातात् प्रतिगृह्णामि यज्ञम् ॥ ३ ॥ १२

व्रतं कृणुत तच्छकेयम् ॥ १३

दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधां विश्वधायसँ सुतीर्था नो असद्वशे ॥ १४

ये देवा मनुजाता मनुयुजस्सुदक्षा दक्षपितरः । ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ॥ १५

अग्ने त्वँ सु जागृहि वयँ सु मन्दिषामहे । गोपाय नो अप्रयुच्छन् प्रबुधे नः पुरस्कृधि॥१६

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥ १७

पूषा सनीनाँ सोमो राधसां रास्वेयत्सोमा भूयो भर देवस्सविता वसोर्वसुदावा मा पृणन् पूर्त्या
विराधिष्ट माहमायुषा वर्चसा विराधिषि ॥ देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावाँस्तं वो मा
क्रमिषँ सक्षेमहि या ते यज्ञिया तनूस्तयारोह ॥ १८-१९

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।

तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ २०

एदमगन्म देवयजनं पृथिव्या यत्र देवा अजुषन्त विश्वे ।

ऋक्सामाभ्याँ संतरन्तो यजुर्भी रायस्पोषे समिषा मदेम ॥ ४ ॥ २१

इयँ ते शुक्र तनूरिदं वर्चस्तया संभव भ्राजं गच्छ ॥ जूरसि धृता मनसा जुष्टा विष्णवे तस्या-
स्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ॥ शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवँ हविरसि

---

[ सुत्रामाणं पृथिवीं द्यां० । ऋ. १०,६३,१०; अथर्व. ७,६,३; तै सं. १,५,११,५ ]

[ ४ ] मै. १,२,३ (२२-२४,२६,२८-२९) । कपि. १,१६ । वा ४,१,११,१४,१६; ६,२७, ३,१४, १२,५२; १५,५६। काण्व. ४,१,१४-१६,१९,२२; ६,३९; ३,२०, १३,५३; १६,७८ । [ त्वमग्ने व्रतपा असि० । ऋ. ८,११,१. अथर्व. १९,५९,१; तै. सं. १,१,१४,४; १,२,३,१ । अयं ते योनिर्ऋत्वियो० । ऋ. ३,२९,१०; अथर्व. ३,२०, १; तै. सं. १,५,५,२; ४,२,४,३; ४,७,१३,५; तै. ब्रा. १,२,१,१६; २,५,८,८]

[ ५ ] मै. १,२,४ (३०) । कपि. १,१७-१८ । वा. ४,१७-२३; ६,९ । काण्व. ४,२३-३१; ६,१० ।

चिदसि मना असि धीरासि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतश्शीर्ष्णी सा मा सुप्राची सुप्रतीची भव मित्रस्त्वा पदि बध्नातु पूषाध्वनस्पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पिता-नु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ॥ सा देवि देवमच्छेहीन्द्राय सोमं रुद्रस्त्वावर्तयतु स्वस्ति सोमसखा पुनरेहि वस्व्यसि रुद्रास्यदितिरस्यादित्यासि चन्द्रासि रुद्रासि बृहस्पतिस्त्वा सुम्ने रम्णातु रुद्रो वसुभिराचके पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायास्पदे घृतवति स्वाहेदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्ताम्यस्मे रम-स्वास्मे ते रायो मे रायस्तव तव रायो माहं रायस्पोषेण वियोषं सं देवी देव्योर्वश्याख्यत सुरेता रेतो दधानास्त्वष्टृमन्तस्त्वा सपेम मा म आयुः प्रमोषीर्मो अहं तव वीरं विदेय तव संदृशि ॥५॥ २२-२५

देव सूर्य सोमं क्रेष्यामस्तं ते प्रब्रूमस्तं त्वं विश्वेभ्यो देवेभ्य ऋतून् कल्पय दक्षिणाः कल्पय यथर्षि यथादेवतमास्माकोऽसि शुक्रस्ते ग्रहः ॥ २६

अभि त्यं देवं सवितारमोण्योः कविक्रतुम् । अर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ॥ २७

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि । हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ २८

प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनु प्राणिहि सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्या-वन्तं वर्द्धधं शोभमानम् ॥ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन शक्म यत्ते गोर-स्मे ते चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णस्सहस्रपोषं पुष्यन्ती परमेण पशुना क्रीयसेऽस्मे ते बन्धु-र्मित्रो न एहि सुमित्रधा इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तं स्योनस्स्योनम् ॥ स्वान्भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशान एते वस्सोमक्रयणास्तान् रक्षध्वं मा वो दभन् ॥ २९-३१

उदायुषा स्वायुषोद्रसेनौषधीनाम् । उत्पर्जन्यस्य वृष्ट्योदस्थाममृताँ अनु ॥ ३२

उर्वन्तरिक्षं वीहि ॥ ३३

अपि पन्थामगन्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ ३४

अदित्यास्त्वगस्यदित्यास्सदने सीद ॥ ३५

---

[६] मै. १,२,५-६ (३१-४०)। कपि. १,१९। वा. ४,२४-३१। काण्व. ४,३२-४४। [अभि त्यं देवं०। श्रौ. पू. षट्क. अ. ४ खं. ६; अथर्व. ७,१४,१। ऊर्ध्वा यस्यामतिर्भा०। श्रौ. पू. अ. ४ खं. ६; अथर्व. ७,१४,२। उदायुषा स्वायुषो०। श्रौ. पू. अ. १ खं. ३। अपि पन्थामगन्महि०। ऋ. ६,५१,१६; तै. सं. १,२,९,१]

अस्तभ्नाद् द्यामृषभो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥ ३६
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ३७
सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकाम् । यदेतशेभिरीयसे भ्राजमानो विपश्चिता॥६॥ ३८

उस्रा एतं धूर्वाधा अवीरहणा अनश्रू ब्रह्मचोदनौ यज्ञस्यायुः प्रतिरन्तौ स्वस्ति गृहान् गच्छतं
धूरसि धूर्व धूर्वन्तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामस्तं च धूर्व वारुणमसि वरुणस्य स्कम्भ-
न्यसि प्रच्यवस्व भुवनस्पते विश्वान्यभि धामानि मा त्वा परिपरिणो विदन्मा परिपन्थिनो मा त्वा
वृका अघायवो विदन् ॥ श्येनो भूत्वा परापत यजमानस्य नो गृहं सँस्कृतम् ॥ ३९--४०

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतँ सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शँसत ॥ ४१

वारुणमसि वरुणस्त्वोत्तभ्नातु वरुणस्य स्कम्भसर्जन्यसि प्रमुक्तो वरुणस्य पाशो वरुणोऽसि
धृतव्रतोऽच्छिन्नपत्रः प्रजा उपावरोह वरुणस्यर्तसदनमस्यदित्यास्त्वगस्यदित्यास्सदने सीद ॥ ४२

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ ४३

वारुणमसि वरुणाय त्वा ॥ ७ ॥ ४४

अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वातिथेरातिथ्यमसि विष्णवे त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वापतये त्वा परिपतये गृह्णामि तनूनप्त्रे शक्मने शाक्कराय शक्मन्नोजिष्ठायानाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपागाँ सुविते मा धा अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपाः पुनर्व्रतपा व्रतिना व्रतानि याग्ने मम तनूरेषा सा त्वयि या तव तनूरियँ सा मयि सह नौ व्रतपा व्रतिना व्रतानि ॥ या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यै ते स्वाहाँशुरँशुस्ते देव सोमाप्यायतामिन्द्रायैकधनञ । तुभ्य-मिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्यायय सखीन् सन्या मेधया स्वस्ति ते देव सोम सुत्या-

---

[अस्तभ्नाद् द्यामृषभो० (०मसुरो०) । ऋ ८,४२,१; ३,३०,९; तै. सं. १,२,८,१ । वनेषु व्यन्तरिक्षं० । ऋ. ५,८५,२; तै. सं. १,२,८,१]

[७] मै. १,२,६ (४१-४७) । कपि. २,१ । वा. ४,३०,३३—३६; १०,२७; २०,२ । काण्व. ४,४२,४५–४८. ११. ३७; २१,९३ । [नमो मित्रस्य वरुणस्य० । ऋ. १०,३७,१; तै. सं. १,२,९,१ । निषसाद धृतव्रतो० । ऋ. १,२५,१०; तै. सं. १,८,१६,१, तै. ब्रा. १,७,१०,२; २,६,५,१]

[८] मै. १,२,६-७ (४७-५७) । कपि. २,२-३ । वा. ५,१,४-८ । काण्व. ५,१,५-१२ ।

मशीय स्वस्त्युद्दचमेष्टा राय एष्टा वामानि प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै या ते
अग्नेऽयाशया तनूर्वर्षिष्ठा गह्नेष्ठा वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत् त्वेषं वचोऽपावधीत् स्वाहा
या ते अग्ने रजाशया हराशया तनूर्वर्षिष्ठा गह्नेष्ठा वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत् त्वेषं
वचोऽपावधीत् स्वाहा ॥ ८ ॥ ४५--४६

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसीदमहं रक्षसो ग्रीवा
अपिकृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि तप्तायन्यसि
वित्तायन्यस्यवतान्मा नाथितमवताद् व्यथितमग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुना नाम्नेहि
यत्तेऽनाधृष्टं नामानाधृष्यं तेन त्वादधेऽग्ने अङ्गिरो यो द्वितीयस्यां यस्तृतीयस्यां पृथिव्यामस्यायुना
नाम्नेहि यत्तेऽनाधृष्टं नामानाधृष्यं तेन त्वादधे विदेदग्निर्नभो नाम सिंह्यसि महिष्यसि देवेभ्यः
प्रथस्व देवेभ्यः कल्पस्व देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व ॥ ४७

विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजति ॥ ४८

इन्द्रघोषास्त्वा वसवः पुरस्तात् पान्तु मनोजवास्त्वा पितरो दक्षिणतः पान्तु प्रचेतास्त्वा रुद्रः
पश्चात् पातु विश्वकर्मा त्वादित्यैरुत्तरात् पातु त्वष्टा त्वा रूपैरुपरिष्टात् पातु सिंह्यसि सपत्नसाही
स्वाहा सिंह्यसि रायस्पोषवनिस्स्वाहा सिंह्यसि सुप्रजावनिस्स्वाहा सिंह्यस्यादित्यवनिस्स्वाहा सिंह्यस्या-
वह देवान् देवायते यजमानाय स्वाहा भूतेभ्यस्त्वा विश्वायुरसि पृथिवीं स्कभानाच्युतक्षिदस्यन्तरिक्षं
स्कभान ध्रुवक्षिदसि दिवं स्कभानाग्नेः कुलायमस्यग्नेः पुरीषमसि यज्ञः प्रत्यष्ठात् ॥ ४९

मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान् देवयते यज॥९॥५०
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ५१

देवश्रुतौ देवेष्वाघोषेथाम् ॥ ५२

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाँसुरे ॥ ५३

---

[९] मै. १,२,८ (५८-५९) । कपि. २,३ । वा. ५,९-१३,२२,२६, ६,१, ३३,३० । काण्व. ५,१३—१८,२८,३३; ६.१, ३२,३० । [देवस्य त्वा सवितुः० अथर्व. १९,५१,२. ऐ ब्रा. ८,७ । विभ्राड् बृहत्पिबतु० ऋ. १०, १७०,१; सा. ६२८,१४५३ । मनुष्वत्त्वा निधीमहि० । ऋ. ५,२१,१, तै. ब्रा. ३,११,६,३ ]

[१०] मै. १,२,९ (६०-६१,६३-६४.६७-७१) । कपि. २,४ । वा. ५,१४-२१, ११,४; ३७,१ । काण्व. ५,१९-२२, २४-२७; १२,४; ३७,१ । [युञ्जते मन उत०। ऋ. ५,८१,१; तै. सं. १,२,१३,१; ४,१,१,१; तै. आ. ४,२,१। इदं विष्णुर्वि चक्रमे०। ऋ. १,२२,१७; सा. २२२,१६६९; अथर्व. ७,२६,४; तै.सं. १,२,१३,१; नि. १२,१९]

इडावती धेनुमती हिं भूतँ सूयवसिनी मानुषे यशस्ये ।
व्युष्टभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः ॥ ५४
वैष्णवमसि विष्णुस्त्वोत्तभ्नातु ॥ ५५
दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् ।
हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात् ॥ ५६
विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसि ।
यो अस्कभायदुत्तरँ सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ५७

विष्णोः पृष्ठमसि विष्णो रराटमसि विष्णोश्श्नप्त्रे स्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णव-
मसि विष्णवे त्वा ॥ ५८
प्र तद्विष्णुस्स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वाधिक्षियन्ति भुवनानि विश्वा ॥ १० ५९

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इदमहं रक्षसो ग्रीवा अपिकृ-
न्तामिदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि बृहन्नसि बृहद्ग्रावा
बृहतीमिन्द्राय वाचं वद रक्षोहणं वलगहनं वैष्णवीमिदमहं तान् वलगानुद्वपामि यास्समानो यानम-
मानो निचखानेदमहं तान् वलगानुद्वपामि यान्नस्सबन्धुर्यानसबन्धुर्निचखानेदमहं तान् वलगानुद्व-
पामि यान्नस्सनाभिर्यानसनाभिर्निचखानेदमहं तान् वलगानुद्वपामि यान्नस्स्वो यानरणो निचखान
राडसि विराडसि सम्राडसि स्वराडसि गायत्रेण च्छन्दसावबाढो यँ द्विष्मस्त्रैष्टुभेन जागतेनानुष्टुभेन
पाङ्क्तेन च्छन्दसावबाढो यँ द्विष्मः ॥ किमत्र भद्रं तन्नौ सह निरस्तो वलगोऽवबाढो दुरस्य रक्षो-
घ्नो वलगघ्नः प्रोक्षामि वैष्णवान् रक्षोघ्नो वलगघ्नोऽवसिञ्चामि वैष्णवान् रक्षोघ्नो वलगघ्नोऽवस्तृणामि
वैष्णवान् रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी रक्षोहणौ वलगहना उपदधामि वैष्णवी रक्षोहणौ
वलगहनौ पर्यूहामि वैष्णवी रक्षोहा त्वा वलगहा प्रोक्षामि वैष्णवं रक्षोहा त्वा वलगहा स्तृणामि
वैष्णवं रक्षोघ्नो वलगघ्नस्सँसादयामि वैष्णवान् ॥ ११ ॥ ६०-६१

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इदमहं रक्षसो ग्रीवा अपि-

[इडा (रा)वती धेनुमती० । ऋ ७,९९,३ तै सं १,२,१३,१; तै. आ १,८,१ । दिवो वा विष्ण उत० । अथर्व. ७,२६,८ । विष्णोर्नु कं वीर्याणि० । ऋ १,१५४,१, अथर्व. ७,२६,१ तै सं १,२,१३,२ । प्र तद्विष्णुः स्स्तवते वीर्येण० । ऋ १,१५४,२; अथर्व. ७,२६,२-३ । तै ब्रा २,४,३,४ नि. १,२०]

[११] मै. १,२,१०-११ (७२,८०) । कपि. २,५ । वा ५ २२-२५ । काण्व ५,२८-३२ ।

[१२] मै. १,२,११ (७५—८०) । कपि. २,६ । वा ५,२६—३० । काण्व ५,३३-३८ । [देवस्य त्वा सवितु० । अथर्व १९,५१,२ नि. ब्रा. ८,७]

❀

कृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्तां लोकाः पितृषदना यवोऽसि यावयास्मद् द्वेषं यावयारातिं पितृषदनं त्वा लोकमास्तृणाम्युद् द्याँ स्तभानान्तरिक्षं पृण दृँहस्व पृथिव्यां नितानस्त्वा मारुतो निहन्तु मित्रावरुणयोर्ध्रुवेण धर्मणा ॥ ब्रह्मवनिं त्वा क्षत्रवनिं देववनिँ सजातवनिं रायस्पोषवनिं पर्यूहामि ब्रह्म दृँह क्षत्रं दृँह प्रजां दृँह रायस्पोषं दृँह घृतेन द्यावापृथिवी आपृणेथां विश्वजनस्य च्छायासीन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽस्यैन्द्रमसीन्द्राय त्वा ॥ ६२--६३

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ १२ ॥ ६४

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनश्श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्युरसि दुवस्वाञ्छुन्ध्युरसि मार्जालीयस्सम्राडसि कृशानुः परिषद्योऽस्यास्तव्यो नभोऽसि प्रतक्वासंमृष्टोऽसि हव्यसूदन ऋतधामासि स्वर्ज्योतिस्समुद्रोऽसि विश्वव्यचा अजोस्यैकपादहिरसि बुध्न्यः कव्योऽसि कव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिपृहि माग्ने नमस्ते अस्तु मा मा हिंसीः ॥ १३ ॥ ६५

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धश्शुक्र आहुतः ॥ ६६
त्वँ सोमासि सत्पतिस्त्वँ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः ॥ ६७
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति ॥ ६८
त्वं नस्सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतस्सखा ॥ ६९
स त्वं विप्राय दाशुषे रयिं देहि सहस्रिणम् । अग्ने वीरवतीमिषम् ॥ ७०
वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे ॥ ७१
आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥ ७२

---

[ परि त्वा गिर्वणो० । ऋ १,१०,१२, तै. स १,३,१,२]

[१३] मै. १,२,१२ (८१) । कपि. २,७ । वा. ५,३१—३४; ३,६३. १८,५३; २०,१. ३७,२०. ३८,१६ । काण्व. ५, ३९—४३, ४,११; २०,२३: २१,०.३; ३७,१९; ३८,१६ ।

[१४] वा. ३३,९, ३,२९; १२,३६: २६,१३ । काण्व. ३२,९. ३,३७; १३,३७ । [ अग्निर्वृत्राणि जङ्घनद्० । ऋ. ६, १६.३४, सा. ४,१३९६, तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१ । त्वं सोमासि सत्पतिः० । ऋ. १,९१,५; तै. सं ४,३,१३,१, तै. ब्रा. ३,५,६,१ । अग्ने यं यज्ञमध्वरं० । ऋ. १,१,४. तै. सं. ४,१,११,१ । त्वं नस्सोम विश्वतो रक्षा० । ऋ. १,९८,८, तै सं. २,३,१४,१ । स त्वं विप्राय दाशुषे० । ऋ. ८,४३,१५ । वृषा सोम द्युमाँ० । ऋ ९,६४,१ सा. ५०४,७८१, तै. सं. ४,२,११,३. ४,३,१३,३ । आ नो अग्ने सुचेतु(त)ना० । ऋ. १,७९,९; सा. १५२६. तै. ब्रा. २,४,५,३ ]

गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः। सुमित्रस्सोम नो भव ॥ ७३
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते ॥ ७४
त्वँ सोम महे भगं त्वं यून ऋतायते। दक्षं ददासि जीवसे ॥ ७५
अग्ने रक्षा णो अँहसः प्रति ष्म देव रीषतः। तपिष्ठैरजरो दह ॥ ७६
अग्ने नक्षत्रमजरमा सूर्यँ रोहयो दिवि। दधज्ज्योतिर्जनेभ्यः ॥ ७७
आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम्। परो यदिध्यते दिवा ॥ ७८
अग्निः प्रत्नेन मन्मना स्तम्भानस्तनुँ स्वाम्। कविर्विप्रेण वावृधे ॥ ७९
सोम यास्ते मयोभुव ऊतयस्सन्ति दाशुषे। ताभिर्नोऽविता भव ॥ ८०

अप्स्वग्ने ॥ ८१

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवम् ॥ ८२
अग्नी रक्षाँसि सेधति शुक्रशोचिरमर्त्यः। शुचिष्पावक ईड्यः ॥ ८३
एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्धास इन्दुभिः ॥ ८४
इमं यज्ञमिदं वचो जुजुषाणं उपागहि। सोम त्वं नो वृधे भव ॥ ८५

उदग्ने शुचयस्तव ॥ ८६

न्युग्निं जातवेदसँ होत्रवाहं यविष्ठ्यम्। दधाता देवमृत्विजम् ॥ ८७
अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् ॥ ८८
सोम गीर्भिष्ट्वा वयँ वर्धयामो वचोविदः। सुमृडीको नः आविश ॥ १४ ॥ ८९

---

[ गयस्फानो अमीवहा० । ऋ. १,९१,१२; तै. सं. ४,३,१३,५ । त्वमग्ने सप्रथा असि० । ऋ. ५,१३,४; सा. १४०७; तै. ब्रा. २,४,१,६; नि. ६,७ । त्वं सोम महे भगं० । ऋ १,९१,७; तै. ब्रा. १,४,५,३ । अग्ने रक्षा णो० । ऋ. ७,१५,१३; सा. २४; तै. ब्रा. २,४,१,६ । अग्ने नक्षत्रमजरमा० । ऋ. १०,१५६,४; सा. १५३० । आदित् प्रत्नस्य रेतसो० । ऋ. ८,६,३०; सा. २० । अग्निः प्रत्नेन मन्मना० । ऋ. ८,४४,१२; सा. १७११; तै. ब्रा. ३,५,६,१ । सोम यास्ते मयोभुव० । ऋ १,९१,९; तै. सं. ४,१,११,१ । अप्स्वग्ने सधिष्टव० । ऋ. ८,४३,९; तै. सं. ४,२,३,२; ४,२,११,३ । अप्सु मे सोमो० । ऋ. १,२३,२०; १०,९,६; अथर्व. १,६,२; तै. ब्रा. २,५,८,६, । अग्नी रक्षाँसि सेधति० । ऋ. ७,१५,१०, अथर्व. ८,३,२६; तै. ब्रा. २,४,१,६ । एह्यू षु ब्रवाणि० । ऋ. ६.१६,१६ सा. ७,७०५ । इमं यज्ञमिदं वचो० । ऋ. १,९१,१०. १०,१५०,२। उदग्ने शुचयस्तव०। ऋ ८,४४,१७; सा. १५३४; तै. सं. १,३,१४,८; १,५,५,३; २,४,१४,४। न्यग्निं जातवेदसं होत्रवाहं० । ऋ. ५,२६,७ । अग्निमीडे (०ळे) पुरोहितं० । ऋ. १,१,१. तै. सं. ४,३, १३,३. नि. ७,१५ । सोम गीर्भिष्ट्वा वयं० । ऋ १,९१,११. तै ब्रा. ३,५,६,१. ताण्ड्य ब्रा. १, ५,७ ]

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥ ९०
अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यँ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाँसि ॥ ९१
सँ समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्याभर ॥ ९२
सखायस्सं वस्सम्यञ्चमिषँ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ ९३
अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तँ श्रावयत् पतिं पुत्रं ददाति दाशुषे ॥ ९४
अग्निर्ददाति सत्पतिँ सासाह यो युधा नृभिः ।
अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥ ९५
प्रेद्धो अग्न इमो अग्ने ॥ ९६
उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥ ९७
नू नो रास्व सहस्रवत् तोकवत् पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ ९८
त्वां चित्रश्रवस्तम त्वामग्ने हविष्मन्तो वि पाजसा ॥ ९९
भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।
रास्वा च नस्सुमहो हव्यदातिं त्रास्वोत नस्तन्वो अप्रयुच्छन् ॥ १००
हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् ।
ज्योतिष्मन्तं दीद्यतं पुरंधिमग्निँ स्विष्टकृतमाहुवेम ॥ १०१
स्विष्टमग्ने अभि तद्गृणीहि विश्वाश्च देव पृतना अभिष्याः ।
सुगं नु पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरं न आयुः ॥ १०२
सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।
देवाँ अच्छा दीद्यद्युञ्जे अद्रिँ शमाये अग्ने तन्वं जुषस्व ॥ १०३

[१५] वा. ३३,१२; १५,२९—३१, १७,७३; १२,२२, २२,१७ । काण्व. ३२,१२; १६,५०—५३ १८,७६; १३,२३; २४,२२ । [ जुष्टो दमूना अतिथिः० । ऋ ५,४,५, अथर्व. ७,७३,९, तै. ब्रा. २,४,१,१, नि. ४,५ । अग्ने शर्ध महते० । ऋ. ५,२८,३; अथर्व. ७,७३,१०, तै. ब्रा. २,४,१,१; २,५,२,४ । सँ समिद्युवसे० । ऋ. १०, १९१,१; अथर्व. ६,६३,४; तै. सं २,६,११,४, ४,४,४,४ । सखायस्सं वः० । ऋ. ५,७,१; तै. सं. २,६,११,४; ४,४,४,३ । अग्निस्तुविश्रवस्तमं० । ऋ. ५,२५,५ । अग्निर्ददाति सत्पतिं० । ऋ. ५,२५,६ । प्रेद्धो अग्ने० । ऋ ७,१,३; सा. १३७५. तै. सं. ४,६,५,४ । इमो अग्ने० । ऋ. ७,१,१८; तै. सं ४,३,१३,६ । उत नो ब्रह्मन्नविष० । ऋ. ३,१३,६ । नू नो रास्व सहस्रवत्० । ऋ ३,१३,७ । त्वां चित्रश्रवस्तम० । ऋ १,४५,६ तै सं ४,४,४,३ । त्वामग्ने हविष्मन्तो० । ऋ ५,९,१ तै. ब्रा २,४,१,४ । भवा नो अग्नेऽवितोत० । ऋ १०,७७ । सोमस्य मा तवसं० । ऋ ३,१,१ ]

श्रीणामुदारः ॥ १०४

यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।
कृधी ष्वस्माँ अदितेरनागान्व्येनाँसि शिश्रथो विष्वगग्ने ॥ १०५
महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत मर्त्यानाम् ।
मा ते सखायस्सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥ १०६

यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यस्समीधे ।
विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमन्तम् ॥ १०७
अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षाँसि सेध ।
अस्मात् समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नस्सृजेह ॥ १०८

यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः ।
एवो ष्वस्मन्मुञ्चता व्यँहः प्र तार्यग्ने प्रतरं न आयुः ॥ १०९
त्रीण्यायूँषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥ ११०

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वँ होतॄणामस्यायजिष्ठः ॥ १११
आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् ।
अग्निर्विद्वान् स यजात्सेदु होता सो अध्वरान् स ऋतून् कल्पयाति ॥ ११२

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायास्सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ ११३
साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ॥ ११४

---

[ श्रीणामुदारो० । ऋ. १०, ४५,५; तै. सं. ४,२,२,३ । यच्चिद्धि ते पुरुषत्रा० । ऋ. ४,१२,४; तै. सं. ४,७, १५,६ । महश्चिदग्न एनसो० । ऋ ४,१२,५ । यं त्वा देवापिः शुशुचानो० । ऋ. १०,९८,८ । अग्ने बाधस्व वि मृधो० । ऋ. १०,९८,१२; तै. ब्रा. २,५,८,११ । यथा ह त्यद्वसवो० । ऋ. ४,१२,६; १०, १२६,८; तै. सं ४,७,१५,७ । त्रीण्यायूँषि तव० । ऋ. ३,१७,३, तै. सं. ३,२,११,२ । पिप्रीहि देवाँ उशतो० । ऋ. १०,२,१; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,५; ३,६,११,४ । आ देवानामपि पन्थां० । ऋ. १०,२,३; अथर्व. १९,५९,३; तै. सं. १,१,१४,३ । वि ज्योतिषा बृहता० । ऋ. ५,२,९; अथर्व. ८,३,२४, तै. सं. १,२,१४,७, नि. ४,१८ । साध्वीमकर्देवहूतिं०(०वीतिं) । ऋ. १०,५३,३; तै. सं. १,३,१४,१ ]

अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुस्सुरभा उ लोके ।
युवा कविः पुरुनिष्ठा ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥ ११५
अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह ॥ ११६
अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः । स वेद यज्ञमानुषक् ॥ १५ ॥ ११७

[ १६७ ]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामध्वरं नाम द्वितीयं स्थानकं संपूर्णम् ॥ २ ॥

---

अथ तृतीयं स्थानकम् ।

## ज्योतिरिकम् ।

ज्योतिरसि विश्वरूपं मरुतां पृषती देवेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ १
त्वँ सोम तनूकृद्भ्यो द्वेषेभ्योऽन्यकृतेभ्यः । उरु यन्तासि वरूथम् ॥ २
स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ ३
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ ४
उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥ ५

स्वाहोर्वन्तरिक्षं वीह्यदित्यास्त्वगस्यदित्यास्सदने सीद ॥ देव सवितरेष ते सोमस्तं रक्षस्व मा
त्वा दभन्नेतत्त्वं देव सोम देवानुपागा इदमहं मनुष्यान् सह प्रजया सह रायस्पोषेण नमो देवे-
भ्यस्स्वधा पितृभ्यो निर्द्रुहो निर्वरुणस्य पाशान्मुक्षीय स्वरभिव्यख्यं ज्योतिर्वैश्वानरमग्ने व्रतपा
अस्मे व्रतपास्त्वे व्रतपा व्रतिनां व्रतानि याग्ने मम तनूस्त्वय्यभूदियँ सा मयि या तव तनूर्मय्यभू-
देषा सा त्वयि यथायथं नो व्रतपा व्रतिनां व्रतानि स्वाहा यज्ञं मनसि स्वाहा दिवि स्वाहा पृथि-
व्याँ स्वाहोरा अन्तरिक्षे स्वाहा वाते वाचि विसृजे ॥ १ ॥ ६--७

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर ॥ ८

---

[**अग्निर्होता न्यसीदद्**० । ऋ. ५,१,६; तै ब्रा. १,२,१४,१ । **अग्निं दूतं पुरोदधे**० । ऋ. ८,४४,३ । **अग्नि-होता पुरोहितो**० । ऋ. ३,११,१]

[ १ ] मै. १,२,१३ (८२-८७)। कपि. २,८ । वा. ५,३५-३६,३८-४१· ७,४३; ४०,१६ । काण्व. ५,४४-४५,४७-५१; ९,८; ४०,१८ । [ **त्वँ सोम तनूकृद्भ्यो**० । ऋ. ८,७९,३; तै. सं. १,३,४,१ । **अग्ने नय सुपथा**० । ऋ. १,१८९,१: ( अथर्व. ४,३९,१० ), तै. सं. १,१,१४,३; १,४,४३.१; तै. ब्रा. २,८,२,३; तै. आ. १,८,८, शत. ब्रा. १४,८,३,१; **उरु विष्णो विक्रमस्व**० । अथर्व, ७,२६,३. श्रौ. सू. पू. अ. ५, खं. १९ ]

[ २ ] मै. १,२,१४ (८८—९१) । कपि. २,९ । वा. ४,१; ५,३८,४१—४३; ६,१५ । काण्व. ४,१; ५,४७,५१—५५; ६,२० । [ **उरु विष्णो विक्रमस्व**० । अथर्व. ७,२६,३; श्रौ. सू. पू अ. ५, खं. १९ ]

स्वाहात्यन्यानगां नान्यानुपागां यान्नाजुजोषं परि तानवृजमवीक्त्वा परेभ्योऽविदं परोऽवरेभ्य-
स्तं त्वा जुषामहे वनस्पते देवयज्यायै जुष्टं विष्णवे विष्णवे त्वा देवस्त्वा सविता मध्वानक्त्वोषधे
त्रायस्वैनँ स्वधिते मैनँ हिँसीर्द्यां मा लेखीरन्तरिक्षं मा हिँसीः पृथिव्या संभव ॥ ९

वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयँ रुहेम ॥ १०

यं त्वायँ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ।
अच्छिन्नरायँ सुवीरः ॥ २ ॥ ११

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इदमहं रक्षसो ग्रीवा अपिकृ-
न्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि पृथिव्यै त्वान्तरिक्षाय
त्वा दिवे त्वा शुन्धन्तां लोकाः पितृषदना यवोऽसि यावयास्मद्द्वेषं यावयारातिं पितृषदनं त्वा
लोकमास्तृणामि स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिस्त्वाधिष्ठास्यति तस्य वित्ताद् घृतेन द्यावापृथिवी
आपृणेथां देवस्त्वा सविता मध्वानक्तु सुपिप्पला ओषधीस्कृधि द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येना-
प्राः पृथिवीमुपरेणादृँहीः ॥ १२

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरि ॥ १३

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ १४

ब्रह्मवनिं त्वा क्षत्रवनिं देववनिँ सजातवनिं रायस्पोषवनिं पर्यूहामि ब्रह्म दृँह क्षत्रं दृँह प्रजां दृँह
रायस्पोषं दृँह ॥ १५

तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ १६

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं रायो मनुष्युमन्तरिक्षस्य सानूपेप द्यां ते धूमो
गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म स्वाहा ॥ ३ ॥ १७

---

[ ओषधे त्रायस्वैनँ स्वधिते० । गृह्य. सू. अ. १ खं १७ । वनस्पते शतवल्शो० सौभगाय । ऋ. ३, ८,११; तै. सं. १,३,५,१]

[ ३ ] मै. १,२,१४ (९२—१००) । कपि. २,१० । वा. ६,१-६; १०,३१, १३,३३. १९,३ । काण्व. ६,१-७; ११,४४; १४,३५; २१,२३ । [ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२; ऐ. ब्रा. ८.७ । ता वां वास्तून्युश्मसि० । ऋ. १,१५४,६; तै. सं. १,३,६,१; नि. २,७ । विष्णोः कर्माणि पश्यत० । ऋ १,२२,१९; सा. १६७१, अथर्व. ७,२६,६; तै. सं. १,३,६,२ । तद्विष्णोः परमं पदं० । ऋ. १,२२,२०; सा. १६७२; अथर्व. ७,२६,७, तै. सं. १,३,६,२; ४,२,९,३ ]

इषे त्वोपावीरस्युप देवान्दैवीर्विशः प्रागुर्वह्नय उशिजो बृहस्पते धारया वसूनि हव्या ते अस्वदन्
देव त्वष्टर्वसु रण रेवती रमध्वमग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा असि गायत्रं
छन्दोऽनुप्रजायस्व त्रैष्टुभं छन्दोऽनुप्रजायस्व जागतं छन्दोऽनुप्रजायस्व ॥ १८

भवतं नस्समनसौ समोकसा अरेपसौ ।
मा हिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः ॥ १९

अग्ना अग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ४ ॥ २०

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ऋतस्य त्वा देवहविः पाशेन
प्रतिमुञ्चाम्यमुष्मै जुष्टं धर्षा मानुषँ अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पितानु भ्राता
सगर्भ्योऽनु सखा सयूथ्य आवह देवान् देवयते यजमानायापां पेरुरसि स्वात्तँ हव्यं देवेभ्यो घृत-
वत् सं ते वायुः प्राणेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा ॥ ५ ॥ २१

घृतेनाक्तौ पशुं त्रायेथां रेवति प्रेधा यज्ञपतिमाविशोरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविष-
स्त्मना यज समस्य तन्वा भव वर्षीयो वर्षीयसो यज्ञं यज्ञपतौ धा नमस्त आतानानर्वा प्रेहि घृतस्य
कुल्यामनु सह प्रजया सह रायस्पोषेण देवीरापश्शुद्धा यूयं देवान् यूढ्वँ शुद्धा वयं परिविष्टाः परि-
वेष्टारो वो भूयास्म प्राणं ते मा हिँसिषं चक्षुस्ते मा हिँसिषँ श्रोत्रं ते मा हिँसिषं वाचं ते मा हिँसि-
षं यत्ते क्रूरतरं यदास्थितं तत्त एतेन कल्पतां तत्ते मा हिँसिषं चरित्राँस्ते मा हिँसिषं नाभिं ते मा
हिँसिषं मेढ्रं ते मा हिँसिषं पायुं ते मा हिँसिषं देवेभ्यश्शुन्धस्व समङ्ग्ध्य ओषधे त्रायस्वैनँ स्वधिते
मैनँ हिँसी रक्षसां भागोऽसीदमहं रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामीषे त्वोर्जे घृतेन द्यावा-
पृथिवी प्रोर्णुवाथां देवेभ्यश्शुन्धस्व देवेभ्यश्शुम्भस्वामुष्मै त्वा जुष्टामुर्वन्तरिक्षं वीहि वायो वेष्टो-
कानां प्रत्युष्टं रक्षः प्रत्यष्टारातिर्देवेभ्यस्स्वाहा स्वाहा देवेभ्यः प्रयुता द्वेषाँसि स्वाहोर्ध्वनभसं मारुतं
गच्छतम् ॥ ६ ॥ २२

---

[ ४ ] मै. १,२,१५ ( १०१ ) । कपि. २,११ । वा. ५,३—४, ६,७—८; १३,३४; ३५,१९ । काण्व. ५,३—४; ६, ८-९; १४,३६; ३५,५२। [अग्ना अ(०व)ग्निश्चरति प्रविष्ट०। अथर्व. ४,३९,९ (पूर्वार्धः)। देवेभ्यो हव्यं वहतु प्रजानन् । ऋ. १०,१६,९; अथर्व. १२,२,८ ]

[ ५ ] मै. १,२,१५ ( १०१ ) कपि. २,१२ । वा. ६,९-१०; ४,२० । काण्व. ६.१०—१२; ४,२६ । [ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२; ऐ. ब्रा. ८,७ । अनु त्वा माता०...सयूथ्यः । ऐ. ब्रा. २,६ ]

[ ६ ] मै. १,२,१५—१६ ( १०१,१०३—४; १०९—१३ ) । कपि. २,१३ । वा. ६,११—१६ । काण्व. ६,१३-२१ [ ओषधे त्रायस्वैनँ स्वधिते० । गृह्य सू. अ. १ खं. १७ ]

रेडस्यग्निस्त्वा श्रीणात्वापस्समारिणन् वातस्य त्वा ध्राज्यै पूष्णो रँह्या ऊष्मणोऽव्यथिष्या अपा-
मोषधीनां रोहिष्या ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्रो व्यानो अङ्गे अङ्गे निदीध्यदैन्द्रोऽपानो
अङ्गे अङ्गे निदीध्यत् ॥ २३

देव त्वष्टर्भूरि ते सँ समेतु सलक्ष्म यद्विषुरूपं बभूव ।
देवत्रा यन्तमवसे सखायमनु त्वा माता पितरो मदन्तु ॥ २४

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वा वाताय दिशः
प्रदिश आदिशो विदिश उद्दिशो दिशस्स्वाहा दिग्भ्यो नमो दिग्भ्यः ॥ ७ ॥ २५

समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवँ सवितारं गच्छ स्वाहाहोरात्रे गच्छ स्वाहा मित्रा-
वरुणौ गच्छ स्वाहा द्यावापृथिवीं गच्छ स्वाहा छन्दो गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ
स्वाहा नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा मनो मे हार्दि यच्छ पुत्रं नप्तारमशीयौषधी-
भ्यस्स्वाहा ॥ धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ततो
वरुण नो मुञ्च ॥ २६-२७

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ २८

सुमित्रा ण आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः॥ २९

द्वीपे राज्ञो वरुणस्य गृहो हिरण्ययो मितः ।
ततो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु ॥ ८ ॥ ३०

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरः ।
हविष्मां आविवासति हविष्मानस्तु सूर्यः ॥ ३१

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नायवस्सुम्न्याय सुम्न्यं धत्तेन्द्राग्न्योर्भागधेयीस्थ मि-
त्रावरुणयोर्भागधेयीस्थ विश्वेषां देवानां भागधेयीस्थ सोमस्य वसतीवरीर्हृदे त्वा मनसे त्वा दिवे
त्वा सूर्याय त्वोर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ सोम राजन् विश्वाः प्रजा उपावरोह विश्वा-

---

[ ७ ] मै. १,२,१७ ( ११४—१५ ) कपि. २,१४ । वा. ६ १८—२० । काण्व ६,२३—२७ ।

[ ८ ] मै. १,२,१८ ( ११६-१९ ) । कपि. २,१८ । वा. १,२५—२६; ६,२१-२२, १२,१२; २०,१९;३५,१२; ३६,२३; ३८,२३ । काण्व. ६,२८—३१; १३,१३; २२.४; ३५,४५, ३६,२३; ३८,२३ । [ **धाम्नो धाम्ना राजन्नितो०** । अथर्व. ७,८३,२; श्रौ पू. अ. ३, सं. ६ । **उदुत्तमं वरुण पाशं०** । ऋ. १,२४,१५; सा ५८९; अथर्व. ७,८३,३; १८,४,६९; तै. सं. १,५,११,३; ४,२,१,३· नि. २,१३ । **सुमित्रा ण आप०** । श्रौ. पू. अ. ३, खं ६ । **योऽस्मान् द्वेष्टि०…द्विष्मः** । अथर्व. ३,२७,१—६, ७,८१,५ । **द्वीपे ( अप्सु मे ) राज्ञो ( राजन् ) वरुणस्य०** । अथर्व. ७,८३,१ ]

[ ९ ] मै. १,३,१, ( १—६ ) । कपि २,१६ । वा. ६,२३-२९; ८,१७ । काण्व. ६,३३—४२; ९,१७ ।

स्त्वा प्रजा उपावरोहन्तु ॥ ३२

श‍ृणोत्वग्निस्समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
शृणोतु ग्रावाणो विदुषो नु यज्ञँ शृणोतु देवस्सविता हवं मे ॥ ३३

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यो देवत्रा दात शुक्रपेभ्यो
येषां भागस्थ स्वाहा कार्ष्यसि समुद्रस्य वोऽक्षित्या उन्नये ॥ ३४

सं वो दधातु वरुणो मित्रो अग्निस्समिन्द्रस्सं बृहस्पतिः ।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधातु ॥ ३५

यथाधूरन्धूरो धूर्भिः कल्पन्ताम् ॥ ३६

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥ ३७

स्वाहा वसूनां रुद्राणामादित्यानां पन्नेजनीस्थ ॥ वसवो रुद्रा आदित्या एता वः पन्नेजनीस्स-
मुद्रं गन्धर्वेष्ठामन्वातिष्ठथ वातस्य पत्मन्नीडिता वामी ते संदृशि विश्वं रेतो धिषीय तव वाम्यनु सं-
दृशि ॥ ९ ॥ ३८-३९

निग्राभ्यास्स्थ देवश्रुतश्शुक्राश्शुक्रभृत आयुर्मे तर्पयत प्राणं मे तर्पयत व्यानं मे तर्पयतापानं मे
तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत वाचं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत गृहान्
मे तर्पयत पशून् मे तर्पयत गणान् मे तर्पयत तृप्ता मा तर्पयत प्रीता मा प्रीणीत ते मे मा वितृ-
पन् देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद ग्रावाध्वरकृद्देवेभ्य ऊर्ध्वमिम-
मध्वरं कृध्युत्तमेन पवित्रेणेन्द्राय सुषुत्तमं मधुमन्तं पयस्वन्तमिन्द्राय त्वाभिमातिघ्न इन्द्राय त्वा सहोद
इन्द्राय त्वा वसुमत इन्द्राय त्वा रुद्रवत इन्द्राय त्वादित्यवतेऽग्नये त्वा रायस्पोषदे विष्णवे त्वा
श्येनाय त्वा सोमभृते विष्णवे त्वा यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरा अन्तरिक्षे तेनास्मै
यज्ञपतय उरु राये कृध्यधि धात्रे वोचश्श्वात्रास्स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं
यज्ञं कृत्वोपहूतास्सोमस्य पिबत मा भैर्मा संविक्था धिषणे वीते वीडयेथामूर्जं दधथामूर्जमस्मासु
धत्तं मा वाँ हिँसिषं मा युवमस्मान् हिँसिष्टं प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निस्वर
समरिर्विदः ॥ १० ॥ ४०[२०७]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां ज्योतिरिकं नाम तृतीयं स्थानकं संपूर्णम् ॥३॥



[ त्वष्टा विष्णुः प्रजया० । अथर्व. ७,१७,४ ( उत्तरार्धः ) । यमग्ने पृत्सु मर्त्यं० । ऋ. १,२७,७; सा. १४१५; तै. सं. १,३,१३,२ ]

[१०] मै. १,३,२-३ (८--१३,१६)। कपि. २,१७। वा. ६,३०--३६। काण्व. ६,४३--४९। [प्रागपागुदगधराक्०। अथर्व. २०,१३४,१--६]

अथ चतुर्थं स्थानकम् ।

## ग्रहाः ।

वाचस्पतये पवस्व ॥ वाजिन् वृष्णो अँशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागो-
ऽसि मधुमतीर्न इषस्कृधि स्वंकृतोऽस्युर्वन्तरिक्षं वीहि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो
मनस्त्वाष्टु स्वाहा त्वा सुभो सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यः प्राणाय त्वा व्यानाय त्वोपयामगृही-
तोऽसि ॥ १-२

अन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायस्समिषो यजस्व ।
अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ।
सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ॥ ३

मधुमतीर्न इषस्कृधि स्वंकृतोऽस्युर्वन्तरिक्षं वीहि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो
मनस्त्वाष्टु स्वाहा त्वा सुभो सूर्याय देवेभ्यस्त्वा मरीचिपेभ्योऽपानाय त्वा ॥ १ ॥ ४

आ वायो भूष शुचिपा उप नस्सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यतो देव दधिषे पूर्वपेयम् ॥ ५

उपयामगृहीतोऽसि वायवे त्वा ॥ ६

इन्द्रवायू इमे सुता उप प्रयोभिरागतम् ॥ ७

इन्दवो वामुशन्ति हि ॥ ८

उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिस्सजोषोभ्यां त्वा ॥ ९

अयं वां मित्रावरुणा सुतस्सोम ऋतावृधा । ममेदिह श्रुतँ हवम् ॥ १०

उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा ॥ ११

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ १२

उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वोपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां

---

[ १ ] मै. १,३,४-५ (१४-१९) । कपि ३,१ । वा. ७,१-६,८-१२,१६,२०,२५,३०-४०; ८,१,७—९,११,३३-३५; ३८—४१,४४—४७; ९,२—४; १०,३२, १९,६,८, २०,३३; २३,२,४, २६,३—१०; ३३,५६ । काण्व. ७, १—५,७—८,१०-११,१५,२१,२४,२७,३०—४०; ८,६—८,१२,१४—१६,१९-२९; १०,१—५,११,४५; ११,५,७; २२,१८; २५,२,४, २८,४—११; ३२,५६ ।

[ २ ] मै. १,३,६-९ ( २०-२८,३० ) । कपि. ३,२ । वा. ७,७—९, ५,३९; ८,१ । काण्व. ७,६—१०; ५,४८ । [ **आ वायो भूष शुचिपा०** । ऋ. ७,९२,१; तै. सं. १,४,४,१; ३,४,२,१ । **इन्द्रवायू इमे सुता०** । ऋ. १, २,४; तै. सं. १,४,४,१ । **अयं वां मित्रावरुणा०** । ऋ. २,४१,४; ( १,१३७,३; १,४७,१ ); सा. ९१०; तै. सं. १,४,५,१ । **या वां कशा मधुमति०** । ऋ १,२२,३, तै सं १,४,६,१ ]

त्वैषं ते योनिर्विष्णोरुरुक्रमं उपयामगृतोऽसि मित्रावरुणाभ्यां त्वैषं ते योनिर्विष्णोरुरुक्रमं उपयाम-
गृहीतोऽस्यश्विभ्यां त्वैषं ते योनिर्विष्णोरुरुक्रमे तं रक्षस्व मा त्वा दभन् दुश्चक्षास्ते मावक्षत् ॥ २ ॥
१३

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमानः ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ १४

उपयामगृहीतोऽसि शण्डायेन्द्राय त्वा जुष्टं गृह्णाम्येषं ते योनिर्वीरतायै त्वा ॥ १५

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिरा या संजयन्तमधि यासु वर्धसे ॥ १६

उपयामगृहीतोऽसि मर्काय सूर्याय त्वा जुष्टं गृह्णाम्येषं ते योनिः प्रजाभ्यस्त्वा ॥ ३ ॥ १७

अपनुत्ता शण्डामर्कौ सह तेन यं द्विष्मस्तुथोऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्तु तुथो-
ऽसि जनधाया देवास्त्वा मन्थिपाः प्रणयन्त्वायुस्संधत्तं प्राणं संधत्तं चक्षुस्संधत्तं श्रोत्रं संधत्तं वाचं
संधत्तमनाधृष्टासि जिन्वेथां स्वपत्या मध्वा वीतं सुवीराः प्रजाः प्रजनयन् परीहि सुप्रजाः प्रजाः
प्रजनयन् परीहि ॥ १८

इन्द्रेण मन्युना युजा सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ १९

संजग्माना दिवा पृथिव्या शुक्रश्शुक्रशोचिषा मन्थी मन्थिशोचिषा शुक्रोऽसि शुक्रशोचिर्मन्थ्यु-
सि मन्थिशोचिरच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारस्स्याम निरस्ता शण्डामर्कौ
सह तेन यं द्विष्मश्शुक्रस्याधिष्ठानमसि मन्थिनोऽधिष्ठानमसि ॥ २०

या संस्कृतिः प्रथमा विश्वकर्मा यो मध्यमो बृहस्पतिश्चिकित्वान् ।
यः परमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय सुतमाजुहोत ॥ २१

स्वाहा त्वा सुभो सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यः ॥ ४ ॥ २२

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुषदो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ २३

उपयामगृहीतोऽस्याग्रायणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवनानि पाहि विष्णुस्त्वां पातु

---

[ ३ ] मै. १,३,१० – ११ (३१-३४)। कपि. ३,३ । वा. ७,१२,१६ । काण्व. ७,११,१५। [अयं वेनश्चोदयत्०। ऋ. १०,१२३,१; तै सं. १,४,८,१; नि. १०,३९। तं प्रत्नथा पूर्वथा०। ऋ. ५,४४,१; तै. सं. १,४,९,१; नि.३,१६]

[ ४ ] मै. १,३,१२ ( ३५—३९ ) । कपि. ३, ३ । ७,१२-१५ । काण्व. ७,१२-१५,१७—१९ ]

[ ५ ] मै. १,३,१३—१५ ( ४०—४३,४५-४७ ) । कपि. ३,४-५ । वा. ७,१९-२२,२४—२५; ३३,८ । काण्व. ७, २१–२४,२६—२७; ३२,८ । [ ये देवा (०सो) दिव्येकादश० ।-ऋ. १,१३९,११, अथर्व. १९,२७,११-१३; तै. सं. १,४,१०,१ ]

विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वय-
स्वत उक्थाव्युं यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वा ॥ २४--२५

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविँ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्तु देवाः ॥ २६

उपयामगृहीतोऽसि वैश्वानरो ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते
योनिर्वैश्वानराय त्वा ॥ ५ ॥ २७

उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वोक्थेभ्यस्त्वोक्थाव्युं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां
त्वा पुनर्हविरसि देवेभ्यस्त्वा देवाव्युं पृणच्मि यज्ञस्यायुष उपयामगृहीतोऽसीन्द्राय त्वोक्थेभ्यस्त्वो-
क्थाव्युं गृह्णाम्येष ते योनिरिन्द्राय त्वा पुनर्हविरसि देवेभ्यस्त्वा देवाव्युं पृणच्मि यज्ञस्यायुष उप-
यामगृहीतोऽसीन्द्राग्निभ्यां त्वोक्थेभ्यस्त्वोक्थाव्युं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वा देवेभ्यस्त्वा
देवाव्युं पृणच्मि यज्ञस्यायुष उपयामगृहीतोऽसीन्द्राय त्वेन्द्राय त्वोक्थेभ्यस्त्वोक्थाव्युं गृह्णाम्येष ते
योनिरिन्द्राय त्वा देवेभ्यस्त्वा देवाव्युं पृणच्मि यज्ञस्यायुष उपयामगृहीतोऽसीन्द्रावरुणाभ्यां त्वो-
क्थेभ्यस्त्वोक्थाव्युं गृह्णाम्येष ते योनिरिन्द्रावरुणाभ्यां त्वा पुनर्हविरसि देवेभ्यस्त्वा देवाव्युं पृणच्मि
यज्ञस्यायुष उपयामगृहीतोऽसीन्द्राबृहस्पतिभ्यां त्वोक्थेभ्यस्त्वोक्थाव्युं गृह्णाम्येष ते योनिरिन्द्राबृह-
स्पतिभ्यां त्वा पुनर्हविरसि देवेभ्यस्त्वा देवाव्युं पृणच्मि यज्ञस्यायुष उपयामगृहीतोऽसीन्द्राविष्णु-
भ्यां त्वोक्थेभ्यस्त्वोक्थाव्युं गृह्णाम्येष ते योनिरिन्द्राविष्णुभ्यां त्वा पुनर्हविरसि देवेभ्यस्त्वा देवाव्युं
पृणच्मि यज्ञस्यायुषे ॥ ६ ॥ २८

उपयामगृहीतोऽसि मधवे त्वोपयामगृहीतोऽसि माधवाय त्वोपयामगृहीतोऽसि शुक्राय त्वोप-
यामगृहीतोऽसि शुचये त्वोपयामगृहीतोऽसि नभसे त्वोपयामगृहीतोऽसि नभस्याय त्वोपयामगृही-
तोऽसीषाय त्वोपयामगृहीतोऽस्यूर्जाय त्वोपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय
त्वोपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वा ॥ २९

इन्द्राग्नी आगतँ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ ३०

उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा ॥ ३१

---

[ **मूर्धानं दिवो अरतिं०** । ऋ. ६,७,१; सा. ६७,११४०; तै. सं. १,४,१३,१ ]

[ ६ ] मै. १,३,१४ (४४) । कपि. ३,४ । वा ७,२२--२३ । काण्व. ७,१५ ।

[ ७ ] मै. १,३,१६--१८ (५०-५४) । कपि. ३,५ । वा. ७,३०--३१,३३ । काण्व. ७,३०--३१.३३ । [ **इन्द्राग्नी आगतँ सुतं०** । ऋ. ३,१२,१; सा. ६६९; तै. सं. १,४,१५,१ ]

ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वाँसो दाशुषस्सुतम् ॥ ३२
उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ७ ॥ ३३
जनिष्ठा उग्रस्सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ ३४
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३५
इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबस्सुतस्य ।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयस्सुयज्ञाः ॥ ३६
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३७
मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवस्सुतानाम् ॥ ३८
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३९
मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यँ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रँ सहोदामिह तँ हुवेम ॥ ४०
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ४१
महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे ॥ ४२
उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ४३
महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनस्सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुस्सुकृतः कर्तृभिर्भूत् ॥ ४४
उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ८ ॥ ४५
उदु त्यँ जातवेदसं देवँ वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ ४६

---

[ ओमासश्चर्षणीधृतो० । ऋ. १,३,७; ऐ. आ. १,४; तै. सं. १,४,१६,१; नि. १२,४० ]

[८] मै. १,३,१९--२२,२४--२५ (५५--६२,६४--६८)। कपि. ३,६ । वा. ३३,६४; ७,३५--४० । काण्व. ३२,६४; ७,३५--४० । [ जनिष्ठा उग्रस्सहसे तुराय० । ऋ. १०,७३,१; तै. ब्रा. २,८,३,४ । इन्द्र मरुत्व इह पाहि० । ऋ. ३,५१,७; तै. सं. १,४,१८,१ । मरुत्वाँ इन्द्र वृषभो० । ऋ. ३,४७,१; तै. सं. १,४,१९,१; नि. ४,९ । मरुत्वन्तं वृषभं० । ऋ. ३,४७,५; ६,१९,११; तै. सं. १,४,१७,१; तै. ब्रा. २,८,३,४ । महाँ इन्द्रो य ओजसा० । ऋ. ८,६,१; सा. १३०७; अथर्व. २०,१३८,१; तै. सं. १,४,२०,१; तै. ब्रा. ३,५,७,४ । महाँ इन्द्रो नृवदा० । ऋ. ६,१९,१; तै. सं. १,४,२१,१; तै. ब्रा. ३,५,७,४; नि. ६,१६--१७]

[९] मै. १,२,६; १,३,३७ (४०,१००--१०६)। कपि. ३,७ । वा. ७,४१-४२,४४--४६; ८,४१; ३३,३१, १३,४६; ५,३७; ४,३१। काण्व. ८,२३--२४, ९,६--७,९--१२; ३२,३१; १४,४८; ५,४६; ४,४३। उदु त्यं जातवेदसं०। ऋ. १,५०,१ सा. ३१; अथर्व. १३,२,१६; २०,४७,१३; तै. सं. १,२,८,२; १,४,४३,१; नि. १२,१५ ]

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥ ४७

द्यां गच्छ स्वर्गच्छ रूपं वो रूपेणाभ्यागां वयसा वयस्तुथो वो विश्ववेदा विभजतु वर्षिष्ठेऽधि
नाक एतत्ते अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा ब्राह्मण-
मद्यर्ध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयँ सुधातुदक्षिणम् ॥ ४८

अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुरएतु प्रभिन्दन् ।
अयँ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ ॥ ४९
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ५०

वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैरस्मद्दाता मधुमती देवत्रा गच्छ प्रदातारमाविशानवहा-
यास्मान् देवि दक्षिणे देवयानेन पथा यती सुकृतां लोके सीद तन्नौ सँस्कृतम् ॥ ९ ॥ ५१

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥ ५२

उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥ ५३

कदा चन प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनं त इन्द्रियमातस्था अमृतं दिवि ॥ ५४

उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥ ५५

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वोऽर्वाची सुमतिर्ववृत्यादँहोश्चिद्या वरिवोवित्तरासत् ॥ ५६

उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥ विवस्व आदित्यैष ते सोमपीथस्तस्मिन् मन्दस्व ॥ या
दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ ५७-५९

---

[ **चित्रं देवानामुदगाद०** । ऋ. १,११५,१; ऐ आ. ३,१; अथर्व. १३,२,३५; २०,१०७,१४; तै. सं १,४, ४३,१; २,४,१४,४; तै. ब्रा. २,८,७,३, तै. आ १,७,६; २,१३,१; नि. १२,१६ । **अयं नो अग्निर्वरिवः०** । श्रौ. उ. षट्क. अ. २, खं. १४ । **वनेषु व्यन्तरिक्षं ततान०** । ऋ. ५,८५.२; तै. सं. १,२,८,१]

[ १० ] मै. १,३,२६—२८ (६९-७३,७६-७९) । कपि. ३,८ । वा. ८, १—५,७—८; ३३,६८-६९,८४, २,१६; ३,३४। काण्व. ८,१-३,६-७; ३२,६८—६९,८४; २,३१; ३,४२ । [**कदा चन स्तरीरसि०**। ऋ. ८,५१,७; सा. ३००; तै. सं. १,४,२२,१ १,५,६,४ । **कदा चन प्रयुच्छस्युभे०** । ऋ. ८,५२,७; तै. सं. १,४,२२,१ । **यज्ञो देवानां प्रत्येति०** । ऋ. १,१०७,१; तै. सं. १,४,२२,१; २,१,११,४ ]

अदब्धेभिस्सवितः पायुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम् ।
हिरण्यजिह्वस्सुविताय नव्यसे रक्षा माकिर्नो अघशँस ईशत ॥ ६०

उपयामगृहीतोऽसि देवाय त्वा सवित्रे उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १० ॥ ६१

उपयामगृहीतोऽसि बृहस्पतिसुतस्य इन्द इन्द्रियावतः पत्नीवतो ग्रहमृध्यासमग्ना३ इ पत्नीवा३-न्सजूस्त्वष्ट्रा सोमं पिबोपयामगृहीतोऽसि हरिरसि हारियोजनो हर्योस्स्थाता हरिभ्यां त्वा स्तुतस्तो-मस्य ते देव सोम शस्तोक्थस्येष्टयजुषो हरिवतो ग्रहमृध्यासँ हर्योस्स्थ हरिवतो धानास्सहसोमा इन्द्रस्य ॥ ६२

अग्न आयूँषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ६३

उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते ॥ ६४

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥ ६५

उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ ६६

अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ ६७

उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिस्सूर्याय त्वा भ्राजस्वते ॥ ६८

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥ ६९

उपयामगृहीतोऽसीन्द्राय त्वा हरिवत एष ते योनिरिन्द्राव त्वा हरिवते ॥ ११ ॥ ७०

धाता रातिस्सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधातु ॥ ७१

समिन्द्र नो मनसा नेषि गोभिस्सँ सूरिभिर्हरिवस्सँ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाँ सुमत्या यज्ञियानाम् ॥ ७२

---

[ अदब्धेभिस्सवितः० । ऋ. ६, ७१,३. तै सं. १,४,२४,१; तै. ब्रा. २,४,४,७ ]

[ ११ ] मै. १ ३,२९—३४ ( ८०--९३ ) । कपि. ३,९ । वा. ८,९--१२,३५,३८--४१, १९,३८; ३५,१६ । काण्व. ८, ८,१०,१२--१३,१६.१९--२४, २१,४०; २९,३७; ३५,४८ । [ अग्न आयूँषि पवस० । ऋ. ९,६६,१९; सा. ६२७,१४६४,१५१८; तै. सं. १,३,१४,७. १,४,२९,१; १,५,५.१; १.६,६,२; तै. ब्रा. २,६,३,४; तै. आ. २,५,१ । ओजस्तदस्य तित्विषे० । ऋ ८,६,५, सा. १८२,१६५३; अथर्व. २०,१०७,२ । अदृशन्न (म)-स्य केतवो० । ऋ. १,५०,३, अथर्व. १३,२,१८; २०,४७,१५ । इन्द्रमिद्धरी वहतो० । ऋ. १,८४,२; सा. १०३० तै. सं. १,४,३८,१ ]

[ १२ ] मै. १,३,३८ ( १०७--११३ ) कपि. ३,९ । वा. २,२१,२४; ८,१४--२२ । काण्व. २,३९,४४; ९,१५--२२ । [ धाता रातिस्सवितेदं० । अथर्व. ७,१७,४ । समिन्द्र नो ( णो ) मनसा० । ऋ. ५,४२,४; अथर्व. ७, ९७,२. तै सं. १,४,४४,१; तै. ब्रा.. २,८,२,६ ]

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सँ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥ ७३
सुगा वो देवास्सदनेदमस्तु य आजग्म सवनेदं जुषाणाः ।
जक्षिवाँसः पपिवाँसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥ ७४
यानावह उशतो देव देवाँस्तान् प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवीँष्यसुं घर्मं दिवमातिष्ठतानु ॥ ७५
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाड्ऋधगुताशमिष्ट विद्वान् प्रजानन्नुपयाहि यज्ञम् ॥ ७६

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैष ते यज्ञो यज्ञपते सहसूक्तवाकस्सुवीं-
रस्स्वाहा देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं देवयज्ञँ स्वाहा वाचि स्वाहा वाते
धाः ॥ १२ ॥ ७७

उरुँ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ७८
शतं ते राजन् भिषजस्सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
आरे बाधस्व निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मात् ॥ ७९
अग्नेरनीकमप आविवेशापां नपात् प्रतिरक्षन्नसुर्यम् ।
दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् ॥ ८०
समुद्रे ते हृदयमप्स्वन्तस्सं त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य त्वा यज्ञपते सह सूक्तवाके नमोवाके विधेम ॥ ८१

स्वाहावभृथ निचुङ्कुण निचेरुरसि निचुङ्कुणोऽव नो देवैर्देवकृतमेनो यक्ष्यव मर्त्यैर्मर्त्यकृत-
मुरोरा नो देव रिषस्पाहि देवीराप एष वो गर्भस्तं वस्सुप्रीतँ सुभृतमभार्ष देवेषु नस्सुकृतो ब्रूताभि-

---

[सं वर्चसा पयसा० । अथर्व. ६,५३,३ । त्वष्टा सुदत्रो वि दधातु रायः । ऋ ७,३४,२२ (च. पा ); नि. ६,१४ । सुगा वो देवास्सदना० । अथर्व. ७,९७,४; नि. ६ ४२ । यानावह उशतो० । अथर्व ७,९७,३ । यदद्य त्वा प्रयति यज्ञे० । ऋ. ३,२९,१६; अथर्व. ७,९७,१. तै. सं. १,४,४४,२ । यज्ञ यज्ञ गच्छ...वात धाः ( धां )० । अथर्व. ७,९७,५-८ ]

[ १३ ] मै. १,३,३९ (११४--११९,१२१--१२३) । कपि. ३,११ । वा. ८,१२,२३--२७; ३,४८; २०,१८--१९.२२--२३; ३८,२५ । काण्व. ८,१३,२३--२६; ३,५६; २२,७; ३८,२४ । [ उरु हि राजा वरुणश्चकार० । ऋ १,२४,८. तै. सं. १,४,४५,१ । शतं ते राजन् भिषजः० । ऋ. १,२४,९; तै. सं. १,४,४५,१ । अग्नेरनीकमप आवि-वेश० । श्रौ. पू. अ. २, खं ८ । अवभृथ निचुङ्कुण० । नि. ५,१८ ]

ष्ठितो वरुणस्य पाशोऽवहतो वरुणस्य पाशोऽप्सु धौतस्य ते देव सोम नृभिस्स्तुतस्य यो भक्षो गोसनिर्योऽश्वसनिस्तस्य त उपहूत उपहूतस्य भक्षं कृणोमि प्रत्यस्तो वरुणस्य पाशो नमो वरुणस्य पाशाय ॥ ८२

उदेत प्रजामायुर्वर्चो दधाना अध स्याम सुरभयो गृहेषु ।
गायत्रीं छन्दाँस्यनु सँरभन्तामस्मान् राय उत यज्ञस्सचन्ताम् ॥ ८३

सुप्रीतश्शिशुरपं आविवेश ॥ उन्नेतर्वस्योऽभ्युन्नया नः ॥ एधोऽस्येधिषीमहि समिदसि समेधिषीमहि तेजोऽसि तेजो मयि धेहि ॥ ८४-८६

अपो अद्यान्वचारिषं रसेन समगन्महि । पयस्वानग्न आगमं तं मा सँसृज वर्चसा ॥ ८७
सं माग्ने वर्चसा सृज प्रजया च धनेन च ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात् सहर्षिभिः ॥ १३ ॥ ८८
ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ ८९

अग्ने व्रतपते व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् ॥ ९०

अग्निर्होतोप तं हुवे देवान् यज्ञियानिह यान् यजामहे ।
आ देवा यन्तु सुमनस्यमाना व्यन्तु देवा हविषो मे अस्य ॥ ९१
युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवै जातवेदः ।
इन्धानास्त्वा सुप्रजसस्सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥ ९२

अङ्गिरसो मास्य यज्ञस्य प्रथमानुवाकैरवन्तु ॥ समिद्धो अग्निराहुतस्स्वाहाकृतः पिपर्तु नः ॥ मनोऽसि प्राजापत्यं मनसा मा भूतेनाविश वागस्यैन्द्री सपत्नक्षयणी वाचामिन्द्रियेणाविश देवाः पितरः पितरो देवा योऽस्मि स सन्यजे तद्वः प्रब्रवीमि तस्य मे वित्त स्वं म इष्टमस्तु शुनँ शान्तँ स्वँ कृतं वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु वसन्तस्याहं देवयज्ययौजस्वान् पयस्वान् भूयासं ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्मस्याहं देवयज्ययौजस्वाँस्तेजस्वान् भूयासं वर्षा

---

[यो भक्षो गोसनिर्यो० । श्रौ. पू. अ. ६, खं. १३ । एधोऽस्येधिषी(य)महि० । अथर्व. ७,८९,४; १९,३१, १२; श्रौ. पू. अ. ३, खं. ६ । अपो(आपो) अद्यान्वचारिषं० । ऋ. १,२३,२३; १०,९,९; अथर्व. ७,८९,१; ९,१,१४; १०,५,४६; तै. सं. १,४,४५,३; १,४,४६,२; तै. ब्रा. २,६,६,५ । सं माग्ने वर्चसा० । ऋ. १,२३, २४; अथर्व. ७,८९,२; ९,१,१५; तै. सं. १०,५,४७ ]

[ १४ ] मै. १,४,१, ( १-४,१० ) । वा. १,५; २,२८ । काण्व. १,८; २,५३ । [ममाग्ने वर्चो विहवेष्वस्तु० । ऋ. १०,१२८,१; अथर्व. ५,३,१; तै. सं. ४,७,१४,१ ]

ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु वर्षाणामहं देवयज्यया पुष्टिमान् पशुमान् भूयासँ शरदमृ-
तूनां प्रीणामि सा मा प्रीता प्रीणातु शरदोऽहं देवयज्ययान्नवान् वर्चस्वान् भूयासँ हेमन्तमृतूनां
प्रीणामि स मा प्रीतः प्रीणातु हेमन्तस्याहं देवयज्यया सहस्वान् वीर्यावान् भूयासम् ॥ १४ ॥

९३--९५

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥ ९६

श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।
इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता ॥ ९७

या वाँ सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरागतम् ॥ ९८

ता योधिष्टमभि गा इन्द्र नूनमपः स्वरुषसो अग्न ऊढाः ।
दिशः स्वरुषस इन्द्र चित्रा अपो गा अग्ने युवसे नियुत्वान् ॥ ९९

ता वामेषे रथानामिन्द्राग्नी हवामहे । पती तुरस्य राधसो विद्वाँसा गिर्वणस्तमा ॥ १००

अश्रवँ हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥ १०१

इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥ १०२

आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक् ।
युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभिः ॥ १०३

उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृडात ईदृशे ॥ १०४

प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ॥ १०५

गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे । इन्द्राग्नी तद्वनेमहि ॥ १०६

---

[ १५ ] वा. ३३,६१ । काण्व. ३२,६१ । [ इन्द्राग्नी रोचना दिवः० । ऋ. ३,१२,९; सा. १६९३; तै. सं. ४,२,११, १; तै. ब्रा. ३,५,७,३ । श्नथद् वृत्रमुत सनोति० । ऋ. ६,६०,१; तै. स. ४,२,११,१; तै. ब्रा. ३,५,७,३ । या वाँ सन्ति पुरुस्पृहो० । ऋ. ६,६०,८; सा. ९१२ । ता योधिष्टमभि गा० । ऋ. ६,६०,२ । ता वामेषे रथानाम्० । ऋ. ५,८६,४ । अश्रवँ हि भूरि० । ऋ. १,१०९,२; तै. सं. १,१,१४,१; नि. ६,९ । इन्द्राग्नी नवतिं पुरो० । ऋ. ३,१२,६; सा. १५७६,१७०४; तै. सं. १,१,१४,१ । आ वृत्रहणा वृत्रहभिः० । ऋ. ६,६०,३; तै. ब्रा. ३,६,८,१ । उग्रा विघनिना मृध० । ऋ. ६,६०,५; सा. ८५४ । प्र चर्षणिभ्यः पृतना० । ऋ. १,१०९,६; तै. सं ४,२,११,१ । गोमद्धिरण्यवद्वसु० । ऋ. ७,९४,९ ]

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥ १०७
पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजँ सनोतु नः ॥ १०८
शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १०९
क्षेत्रस्य पतिना वयँ हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृडातीदृशे ॥ ११०
क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्च्युतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥ १५ ॥ १११
अग्नाविष्णू महि तद्वां महित्वं पाथो घृतस्य गुह्यानि नाम ।
दमे दमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमुच्चरण्यत् ॥ ११२
अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा ।
दमे दमे सुष्टुत्या वावृधानानु वां जिह्वा घृतमाचरण्यत् ॥ ११३
अग्निर्मुखं प्रथमो देवतानाँ संगतानामुत्तमो विष्णुरासीत् ।
यजमानाय परिगृह्य देवान् दीक्षयेदँ हविरागच्छतं नः ॥ ११४
इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ ११५
इयँ शुष्मेभिर्बिसखा इवारुजत् सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिस्सरस्वतीमाविवासेम धीतिभिः ॥ ११६
जनाय चिद्य ईवत उ लोकं बृहस्पतिर्देवहूतौ चकार ।
घ्नन् वृत्राणि वि पुरो दर्दरीति जयञ्छत्रूँरमित्रान् पृत्सु साहन् ॥ ११७

---

[गीर्भिर्विप्रः प्रमति० । ऋ ७,९३,४, तै. ब्रा ३,६,९,१ । पूषा गा अन्वेतु नः० । ऋ. ६,५४,५; तै. सं. ४, १,११,२; तै. ब्रा २,४,१,५ । शुक्रं ते अन्यद्यजतं० । ऋ. ६,५८,१; सा. ७५, तै. सं. ४,१,११,१; तै. आ. १,२,४; १,१०,१: ४,५,६; नि १२,१७ । क्षेत्रस्य पतिना वयँ० । ऋ. ४.५७,१, तै. सं. १,१,१४,२, नि. १०,१५ । क्षेत्रस्य पते मधुमन्तं० । ऋ. ४,५७,२; तै सं. १,१,१४,३; नि. १०,१६ ]

[ १६ ] वा. २०,८४;२६,३,६--८·२१,१-२,८--९; ३२,३; १३,४; २३,१,३; २५,१०-११; १८,४९,७२--७३। काण्व. २२,६९; २८,४,६,८--९· २३,१--२,८-९; २९,३३; १४ ४; २५,१.३; २७,१४--१५; २०,१९,४१--४२ । [अग्नाविष्णू महि तद्वां(--धाम)। अथर्व. ७,२९,१--२ । इयमददाद्रभस०। ऋ. ६,६१,१। इयँ शुष्मेभिर्बिसखा० ऋ. ६,६१,२. तै.ब्रा. २,८,२,८· नि. २,२४। जनाय चिद्य ईवत०। ऋ. ६,७३,२; अथर्व २०,९०,२]

बृहस्पतिस्समजयद्वसूनि महो व्रजान् गोमतो देव एषः ।
अपः सिषासन् स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ११८

पावका नस्सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥ ११९

इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व ।
तव शर्मन् प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम् ॥ १२०

आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ १२१

वृषभं चर्षणीनां विश्वरूपमदाभ्यम् । बृहस्पतिं वरेण्यम् ॥ १२२

अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति ।
बृहस्पते मा प्रणक्तस्य नो वधो निकर्म मन्युं दुरेवस्य शर्धतः ॥ १२३

बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥ १२४

बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ १२५

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतू ॥ १२६

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥ १२७

हिरण्यगर्भः ॥ १२८

यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १२९

अग्नीषोमा इमं सु मे शृणुतं वृषणा हवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ १३०

---

[**बृहस्पतिस्समजयद्वसूनि०।** ऋ. ६,७३,३; अथर्व. २०,९०,३, तै. ब्रा. २,८,२,८। **पावका नस्सरस्वती०।** ऋ. १,३,१०; सा. १८९; तै. ब्रा. २,४,३,१; नि. ११,२६ । **इमा जुह्वाना युष्मदा०** । ऋ. ७,९५,५; तै. ब्रा. २,४,६,१ । **आ नो दिवो बृहतः०** । ऋ. ५,४३,११. तै. सं. १,८,२२,१ । **वृषभं चर्षणीनां०** । ऋ. ३,६२,६ । **अदेवेन मनसा यो०।** ऋ. २,२३,१२। **बृहस्पते जुषस्व नो०।** ऋ. ३,६२,४, तै. सं. १,८,२२,२। **बृहस्पते अति यदर्यो०** । ऋ. २,२३,१५; तै. सं. १,८,२२,२ । **आ नो मित्रावरुणा घृतैः०** । ऋ ३,६२,१६; सा. २२०, ६६३; तै. सं १,८,२२,३। **प्र बाहवा सिसृतं०।** ऋ. ७,६२,५; तै. सं. १,८,२२,३; तै. ब्रा. २,७,१५,६; २,८,६,७ । **हिरण्यगर्भः०** । ऋ. १०,१२१,१; अथर्व. ४,२,७; तै. सं. ४,१,८,३; ४,२,८,२; ताण्ड्य ब्रा. ९,९,१२; नि. १०,२३ । **यः प्राणतो निमिषतश्च०(०तो)।** ऋ. १०,१२१,३; अथर्व. ४,२,२; तै. सं. ४,१,८,४; ७,५,१६,१ । **अग्नीषोमा इमं ( ०विमं ) सु मे०** । ऋ. १,९३,१; तै. सं. २,३,१४,२ ]

अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ १३१

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमा अमुञ्चतं गृभीतान् ॥ १३२

आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥ १३३

वैश्वानरो न ऊतय आ प्रयातु परावतः । अग्निरुक्थेन वाहसा ॥ १३४

त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो अभिमातिषाहः ।
वैश्वानर त्वमस्मासु धेहि वसूनि राजन् स्पृहयाय्याणि ॥ १३५

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ॥ १३६

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ॥ १३७

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा स रिषः पातु नक्तम् ॥ १३८

अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरँ सुवीरम् ।
वयं जयेम शतिनँ सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥ १३९

इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ १४०

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशँस मा न आयुः प्रमोषीः ॥ १४१

शतेन पाशैर्वरुणाभिधेहि मा ते मोच्यनृतवाङ् नृचक्षः ।
आस्तां जल्म उदरँ स्रँसयित्वा कोश इवाबन्धः परिकृत्यमानः ॥ १४२

---

[अग्नीषोमा सवेदसा०। ऋ. १,९३,९; तै. सं. २,३,१४,१; तै. ब्रा. ३,५,७,२ । युवमेतानि दिवि०। ऋ. १, ९३,५; तै. सं. २,३,१४,१; तै. ब्रा. ३,५,७,२ । आन्यं दिवो मातरिश्वा०। ऋ. १,९३,६; तै. सं. २,३,१४,२। वैश्वानरो न ऊतय०। अथर्व. ६,३५,१; आ. श्रौ. सू. २,११ । त्वद्विप्रो जायते वाज्यग्ने०। ऋ. ६,७,३ । ऋतावानं वैश्वानर०। अथर्व. ६,३६,१; आ. श्रौ. सू. ३,८ । वैश्वानरस्य सुमतौ स्याम० । ऋ. १,९८,१; तै. सं. १,५,११,३; नि. ७,२१ । पृष्टो दिवि पृष्टो अग्निः० । ऋ. १,९८,२; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६, ४। अस्माकमग्ने मघवत्सु० । ऋ. ६,८,६; तै. सं. १,५,११,२ । इमं मे वरुण श्रुधी० । ऋ. १,२५,१९; सा. १५८५; तै. सं. २,१,११,६ । तत्त्वा यामि ब्रह्मणा० । ऋ. १,२४,११; तै. सं. २,१,११,६ ]

धीरा त्वस्य महिना जनूंषि वि यस्तस्तंभ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥ १६ ॥ १४३
[३५०]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां ग्रहो नाम चतुर्थं स्थानकं संपूर्णम् ॥ ४ ॥

अथ पञ्चमं स्थानकम् ।

## यजमानम् ।

अग्नीषोमाभ्यां यज्ञश्चक्षुष्माँस्तयोरहं देवयज्यया चक्षुषा चक्षुष्मान् भूयासमग्निरन्नस्यान्नपतिस्त-
स्याहं देवयज्ययान्नस्यान्नपतिर्भूयासं दब्धिरस्यदब्धो भूयासममुं दभेयमग्नीषोमौ वृत्रहणौ तयोरहं
देवयज्यया वृत्रहा भूयासमिन्द्राग्न्योरहं देवयज्ययौजस्वान् वीर्यावान् भूयासमिन्द्रस्याहं देवयज्यये-
न्द्रियावान् भूयासं महेन्द्रस्याहं देवयज्यया जेहमानं भूमानं गमेयमिन्द्रस्याहं विमृधस्य देवयज्य-
यासपत्नो भूयासमिन्द्रस्याहमिन्द्रियावतो देवयज्यया पशुमान् भूयासम्॥ सरस्वत्या अहं देवयज्य-
या वाचमन्नाद्यं पुषेयं पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासमदित्या अहं देवयज्यया
प्रतिष्ठां गमेयं विश्वेषामहं देवानां देवयज्यया प्राणानाँ सायुज्यं गमेयं द्यावापृथिव्योरहं देवयज्यया
प्रजनिषेयं प्रजया पशुभिरग्नेरहँ स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां गमेयम् ॥ १-२

अतीतपद्यज्ञे यज्ञमयाड् देवाँ अरंकृतः । सोमस्ते मित्रो अर्यमा रायस्पोषं दधातन ॥१॥ ३

बृहतो मा वाजेन वाजय वामदेवस्य मा वाजेन वाजय रथन्तरस्य मा वाजेय वाजय जुष्टे जुष्टिं
ते गमेयमुपहूत उपहवं तेऽशीय सुहवामेहि सह प्रजया सह रायस्पोषेण ॥ ४

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानस्सचन्ताम् ।
अस्माकँ सन्त्वाशिषः ॥ ५

आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणँ सवर्चसम् ।
संजयन् क्षेत्राणि सहसाहमिन्द्र कृण्वाणो अन्याँ अधरान् सपत्नान् ॥ ६

ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व प्रजां वृष्टिं मे पिन्वस्व पशून् विशं मे पिन्वस्वे-
षमूर्जं मे पिन्वस्व ॥ ७

मयि त्यदिन्द्रियं महन्मयि द्युम्न उत क्रतुः ।
त्रिशुग्घर्मस्सदमिन्मे विभाति विराड् ज्योतिषा सह ॥ ८

---

[ धीरा त्वस्य महिना० । ऋ. ७.८६,१ ]

[ १ ] मै. १,४,१ (५,११) । वा. २,१०; ३८,१४,२७-२८ । क.ण्व. २,१८; ३८,१४,२६ ।

तस्य दोहमशीय अश्न पिन्वस्व कल्पन्तां दिशो यजमानस्यायुषे ददतो मे मा क्षायि कुर्वतो मे मोपदसञ्जतां भागी माभागो भक्त ये ब्राह्मणास्सोम्यास्तेषामिदं हविर्नासोम्यस्यास्त्यस्ति निर्भक्तो यं द्विष्मः ॥ २ ॥ ९

देवस्याहं बर्हिषो देवयज्यया प्रजावान् भूयासं देवस्याहं नराशँसस्य देवयज्यया पशुमान् भूयासं देवस्याहमग्नेस्स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां गमेयम् ॥ १०

ʼआ माशिषो दोहकामा इन्द्रवन्तो हवामहे । धुक्षीमहि प्रजामिषम् ॥ ११

सा मे सत्याशीर्देवान् गम्याज्जुष्टाज्जुष्टतरा पन्यात् पन्यतराहेडता मनसा देवान् गच्छ यो देवयानः पन्थास्तेन देवान् गच्छ यज्ञो देवान् गच्छतु यज्ञो देवान् गम्याददो मा गच्छतु ॥ रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयतु यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ यज्ञस्यायुरसि यज्ञो म आयुर्दधातु ॥ १२-१३

वि ते मुञ्चामि रशनां वि रश्मीन् वि योक्त्राणि परिचर्तनानि ।

दत्त्वायास्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भविर्दा देवताभ्यः ॥ १४

विष्णोश्च यज्ञस्यान्तस्तयोरहं देवयज्ययायुः प्रतिष्ठां गमेयम् ॥ ३ ॥ १५

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्वाँ अथर्वभिः॥ तस्य यज्ञस्येष्टस्य स्विष्टस्य द्रविणमागच्छत्वङ्गिरसो मेऽस्य यज्ञस्य प्रातरनुवाकैरहौषुर्वसुर्यज्ञो वसुमान् यज्ञो वसु वसीय वसुमन्तो भूयास्म तस्य यज्ञस्य वसोर्वसुमतो वसु मागच्छतु सोमो रेतोधास्तस्याहं देवयज्यया सुरेतोधा रेतो धिषीय त्वष्टा रूपाणां विकर्ता तस्याहं देवयज्यया विश्वरूपं प्रियं पुषेयं देवानां पत्नीरग्निर्गृहपतिर्मिथुनं यजमानस्य तयोरहं देवयज्यया मिथुनेन प्रजनिषीयायुषे वर्चसे रायस्पोषाय सुप्रजास्त्वाय॥१६--१७

सं पत्नी पत्या सुकृतेषु गच्छतां यज्ञस्य युक्तौ धुर्या अभूताम् ।

आप्रीणानौ विजहता अरातिं दिवे ज्योतिरुत्तममारभेथाम् ॥ १८

स्वाहा स्वाहेष्टिभ्यो वषडनिष्टेभ्यो भिषजौ स्विष्टयै स्वाहा निष्कृतिर्दुरिष्टयै स्वाहा ॥ देवेभ्यस्तनूभ्यस्स्वाहा ॥ १९--२०

अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।

अयास्सन्मनसा कृतोऽयास्सन्हव्यमूहिषेऽया नो धेहि भेषजम् ॥ २१

स्वाहा सरस्वत्यै वेशभगिन्यै स्वाहा ॥ या सरस्वती वेशभगिनी तस्या नो रास्व तस्यास्ते

---

[ ३ ] मै. १४,१ (९-९,११) । वा. ८,२१ । काण्व. ९,२१ । [ वि ते मुञ्चामि रशनां० । अथर्व. ७,७८,१-२ ]
[ ४ ] मै. १,४,१,३( १०,२३,२७-३० ) । वा. २,२० । काण्व. २,३६-३७ । [ अयाश्चाग्नेऽस्यनभि० । श्रौ. सू. पू. अ. १, खं. ११ ]

भक्तिवानो भूयास्म यज्ञस्य त्वा प्रमयाभिमयोन्मया प्रतिमया परिगृह्णामि वेदोऽसि वित्तिरसि वेदसे त्वा वेदो मे विन्द विदेय ॥ २२--२३

घृतवन्तं कुलायिनं रायस्पोषँ सहस्रिणम् । वेदो वाजं ददातु मे वेदो वीरं ददातु मे ॥ २४

वृषा वृषण्वतीभ्यो वेदपत्नीभ्यो भव ॥ ४ ॥ २५

प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वानक्षितोऽस्यक्षित्यै त्वाक्षितो नामासि मा मे क्षेष्ठाः प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मयि धेह्या मा गम्याः पूर्णमसि पूर्णं मे भूयास्स दसि सन्मे भूयास्सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठाः प्राच्या दिशा देवा ऋत्विजो मार्जयन्तां दक्षिणया दिशा मासाः पितरो मार्जयन्तां प्रतीच्या दिशा गृहाः पशवो मार्जयन्तामुदीच्या दिशाप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वया दिशा यज्ञस्संवत्सरो मार्जयन्ताम् ॥ पृथिवीं विष्णुर्व्यक्रँस्त गायत्रेण च्छन्दसा निर्भक्तो यं द्विष्मोऽन्तरिक्षं विष्णुर्व्यक्रँस्त त्रैष्टुभेन च्छन्दसा निर्भक्तो यं द्विष्मो दिवं विष्णुर्व्यक्रँस्त जागतेन च्छन्दसा निर्भक्तो यं द्विष्मो दिशो विष्णुर्व्यक्रँस्तानुष्टुभेन च्छन्दसा निर्भक्तो यं द्विष्मोऽगन्म स्वस्सं ज्योतिषाभूम सूर्यस्यावृतमन्वावर्त इदमहं योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणं निवेष्टयामि तेजोऽसि तेजो मयि धेहि समहं प्रजया सं मया प्रजा समहं रायस्पोषेण सं मया रायस्पोषोऽग्नेस्तेजसा तेजस्वी भूयासं वायोरायुषायुष्मान् भूयासँ सूर्यस्य वर्चसा वर्चस्वी भूयासमिन्द्रस्येन्द्रियेणेन्द्रियावान् भूयासं धाता मे धाम्ना सुधां दधातु प्रजापतेः प्रजया प्रजावान् भूयासमग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासँ सुगृहपतिर्मया त्वं गृहपतिना भूया अस्थूरि णौ गार्हपत्यं दीदायच्छतँ हिमाद्वाय ॥५॥ २६-२७

देवाञ्जनमगन् यज्ञस्ततो मा यज्ञस्याशीरागच्छतु पितॄन् सर्पान् गन्धर्वानप ओषधीः पञ्च जनाञ्जनमगन् यज्ञस्ततो मा यज्ञस्याशीरागच्छतु पञ्चानां त्वा वातानां धर्त्रायागृह्णामि पञ्चानां त्वा सलिलानां धर्त्रायागृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्रायागृह्णामि पञ्चानां त्वा दिशां धर्त्रायागृह्णामि पञ्चानां त्वा पञ्चजनानां धर्त्रायागृह्णामि भूरस्माकँ हव्यं देवानामाशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्रायागृह्णामि धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभिस्त्वा देवताभ्यो गृह्णामि ॥ २८

---

[ घृतवन्तं कुलायिनं० । श्रौ. सू. पू. अ. १, खं. ११ ]

[ ५ ] मै. १,४,२ (१२) । वा. २,२५-२७; ३,३१; १५,८; १९,९; २०,२३; ३८,२५ । काण्व. २,४६-५० ६,४९; १६,१३; २१,८; २२,८; ३८,२४ । [ योऽस्मान् द्वेष्टि...द्विष्मः अथर्व. ३,२७,१-६; ७,८१,५ । तेजोऽसि तेजो मयि धेहि । अथर्व. ७,८९,४; १९,३१,१२ ]

[ ६ ] मै. १,४,१,३-४ (१,१३-११,१५) । वा. ८,६०; १,५,३१ १५,५०; २,१८ । काण्व ९,४६ १,८४९ १६, ७२; २,५३ ।

ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते ।
अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ २९
यास्ते रात्रयस्सवितर्देवयानीस्सहस्रयज्ञमभिसंबभूवुः ।
गृहैश्च सर्वैः प्रजया न्वग्ने स्वो रुहाणास्तरता रजाँसि ॥ ३०
ये देवा यज्ञहनो यज्ञमुषोऽन्तरिक्षेऽध्यासते ।
वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ ३१
आगन्म मित्रावरुणा वरेण्यं रात्रीणां भागो युवयोर्यो अस्ति ।
नाकं गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥ ३२
ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते ।
सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥ ३३
येनेन्द्राय समभरन् पयाँस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धयेमँ सुजातानाँ श्रैष्ठ्य आधेह्येनम् ॥ ३४
गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इडावाँ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नस्सभावान् ॥ ३५
अग्ने व्रतपते व्रतमचारिषं तदशकं तत्ते प्राब्रमस्तन्नो गोपाय ॥ ६ ॥ ३६
[ ३८६ ]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां यजमानं नाम पञ्चमं स्थानकं संपूर्णम् ॥ ५ ॥

---

अथ षष्ठं स्थानकम् ।

## अग्निहोत्र-ब्राह्मणम् ।

प्रजापतिर्वा इदमासीत् तस्मादग्निरध्यसृज्यत सोऽस्य मूर्ध्न ऊर्ध्व उदद्रवत् तस्य यल्लोहितमासीत् तदपामृष्ट तद्भूम्यां न्यमार्ट् तत उदुम्बरोऽजायत तस्मात् स लोहितं पच्यते स प्राङ् प्राद्रवत् तँ स्वा वागैट्ट जुहुधीति स इतः पर्यमृष्ट तत् स्वाहेत्यजुहोत् तस्मादेषैवमाहुतिस्स्वा ह्येनं वागैट्ट तस्मान्नं ललाटे लोमास्ति न पाण्योस्तस्मादरत्निमात्री स्रुग्भवति चक्षुर्वाव स तत् स्वमजुहोदमुमेवादित्यमग्नौ ज्योतिर्ज्योतिरग्ना इति ज्योतिरेव ज्योतिष्यजुहोद्ब्रह्माजुहोत् सत्यमजुहोदमुमेव तदादित्यम-

---

[ तृतीये पृष्ठे अधि रोचने दिवः० । ऋ. ९,८६,२७ । गोमाँ अग्नेऽविमाँ० । ऋ. ४,२,५; तै. सं. १,६,६,४; ३,१,११,१ ]

[ १ ] मै. १,८,१ (१-४) । कपि. ३,११ । वा. ३,९ । काण्व. ३,९ ।

जुहोदेषं ह्येवाग्निहोत्रं श्वश्श्वो वसीयान् भवति यस्यैवमग्निहोत्रं हूयते ॥ न वै पुराहोरात्रे आस्तां ते एतयाहुत्योर्भे सहासृज्येतां यत् सायं जुहोति तेन भ्रातृव्याय पराचीं विवासयति यत् प्रातस्तेना-त्मने प्रतीचीमग्नेर्वै गुप्त्या अग्निहोत्रं हूयते यत् सायं जुहोति तेनैनं रात्र्यै रमयति यत् प्रातस्तेनाह्न एषा वा अग्रा आहुतिः प्रथमा हुता यदग्निहोत्रं तस्मादग्रा सर्वा आहुतयो हूयन्तेऽथैवैवाग्निहोत्रमुच्य-तेऽग्निहोत्रं ह वै नाम नास्मादन्यस्समानेषु वसीयान् भवति यस्यैवमग्निहोत्रं हूयते ॥ १ ॥ १-२

स नारमत स प्राद्रवत् तस्मिन्नजुहोत् तस्या आहुत्याः पुरुषोऽजायत स नारमत स प्राद्रवत् तस्मिन्नजुहोत् तस्या आहुत्या अश्वोऽजायत तस्मात् पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ न सु विज्ञायेते इव स नारमत स प्राद्रवत् तस्मिन्नजुहोत् तस्या आहुत्या गौरजायताविरजायताजोजायत यवोऽजायत व्रीहिरजायतैताभ्यो वै सप्तभ्य आहुतिभ्यस्सप्तेमे ग्राम्याः पशवोऽसृज्यन्त स नारमत स प्राद्रवत् तस्मिन्नजुहोत् तस्या आहुत्या वसन्तोऽजायत ग्रीष्मोऽजायत वर्षा अजायन्त शरदजायत हेमन्तो-ऽजायत स त्रयोदश्यामाहुत्यामुद्यतायामबिभेत् तं प्रत्यङ्ङुपापद्यत तं पाणितः प्राविशत् तस्मात् पाण्योर्लोम नास्त्यग्निधानं ह्येतत् तस्माद्धस्ताभ्यामग्निर्मथ्यमानो जायते ॥ तस्माद्धन्यमानौ हस्तौ प्रतिगृह्णात्यग्ना एवं तत् त्राणमिच्छतेऽग्निं वै पशवोऽनूपतिष्ठन्ते पशूनग्निः प्रैनं पशवो विशन्ति प्र पशून् विशति य एवं वेद तामाहुतिमप्सु प्रासिञ्चत् ततश्शिंशिरमजायत तस्मात् तत् क्रूरतमं नहिं तद्धुतान्नाहुतादजायत साहुतिरपो दग्धुमुपाक्रामत तत आपोऽग्नये वज्रोऽभवंस्तस्मात् प्रो-क्षन्नग्निं न प्रापयेद्यत् प्रापयेद्धतेन यजेत तामाहुतिमोषधीषु न्यदधात् तस्मादोषधयोऽनभ्यक्ता रेभन्त ओषधिभ्योऽधि पशवः पशुभ्योऽधि प्रजास्तदेतच्छिंशिर आज्यं श्यायत्यग्नये तस्माच्छिं-शिरे कक्ष उपादुत्यः प्रियमेव धामाग्नये प्रादात् सोऽस्मा अन्नाद्यं प्रयच्छत्यन्नादो भवति य एवं वेद ॥ २ ॥ ३-४

समाने वै योना आस्तां सूर्यश्चाग्निश्च ततस्सूर्य ऊर्ध्व उदद्रवत् तस्य रेतः परापतत् तदग्निर्योनि-नोपागृह्णादयसा तदक्रूडयत् तत् क्रूड्यमानं गवि न्यदधात् तदिदं पयस्तस्मादत्रप्वयः पात्रं प्रतिधुक् क्रूडयति तत् पयसाग्निहोत्रं जुहोत्यमुमेव तदादित्यं जुहोत्येष ह्येवाग्निहोत्रमनडुहो वै पयस्तण्डुला असा आदित्योऽनड्वान् यद्यवाग्वाग्निहोत्रं जुहोत्यमुमेव तदादित्यं जुहोत्येष ह्येवाग्निहोत्रं चक्रवृत्तमन्य-दचक्रवृत्तमन्यद्यच्चक्रवृत्तं तदसुर्यं यदचक्रवृत्तं तद्देवमात्रं तस्मादचक्रवृत्तामग्निहोत्रतपनीं कुर्वीत ॥ न क्षीरेण प्रतिषिञ्चेन्नोदकेन यत् क्षीरेण प्रतिषिञ्चेदप्रतिषिक्तं स्याद्यदुदकेन शमयेद्दोहने संस्रावमुच्छिष्येत नोदकमिश्रेण प्रतिषिञ्चेत् तन्न क्षीरेण प्रतिषिक्तं भवति नोदकेन स्कन्नं वाव तत् परि चेदाकरोति

[ २ ] मै. १,८,१-२ (५-७)। कपि. ४,१।
[ ३ ] मै. १,८,२ ३ (७-८)। कपि. ४,१।

या स्थाल्यग्निहोत्रतपनी तया दुह्यादियं वै मानवा इमामिह नेहातिस्कन्दत्यनयैवोपसीदति तदस्या-स्कन्नं भवत्यद्भिः प्रतिषिञ्चत्यापो हि प्रतिषेचनाय तस्थिरे तच्छान्तं मिथुनमापश्च पयश्च यदि दुह्यमानावभिद्यादन्यया स्थाल्या दुह्यात् सैव तत्र प्रायश्चित्तिर्यद्यधिश्रीयमाणं यद्यधिश्रितँ स्कन्देदन्याम-भिदुह्याधिश्रित्योन्नीय जुहुयात् सैव तत्र प्रायश्चित्तिर्यद्युन्नीयमानं यद्युन्नीतं यदि पुर उपसन्नमहुते स्कन्देत् पुनरवनीयान्याममभिदुह्याधिश्रित्योन्नीय जुहुयात् सैव तत्र प्रायश्चित्तिर्यत्र स्कन्देत् तदपो निनयेदापो वै यज्ञस्य निष्कृतिरद्भिरेवैनं निष्करोति प्रतिषिक्तमन्यदप्रतिषिक्तमन्यत् प्रतिषिक्तं पशुकामस्याप्रतिषिक्तं ब्रह्मवर्चसकामस्य घर्मो वा एष प्रवृज्यते यदग्निहोत्रं यदप्रतिषिक्तं न जुहोति ब्रह्मवर्चसी भवति यदि पयो न विन्देदाज्येन जुहुयात् तद्ध्यप्रतिषेक्यमपशव्यमीश्वरमस्याशान्तँ शुचा पशून्निर्दहः प्रतिषिक्तं पशुकामस्य तच्छान्तं मिथुनमापश्च मयश्च यदि पयो न विन्देद्यवाग्वा जुहुयात् ताद्धि प्रतिषेक्यँ शान्तं मिथुनं पशव्यमापश्च तण्डुलाश्च ॥ ३ ॥ ५–६

अग्निहोत्रे वै जायम्पती व्यभिचरेते यत् प्राचीनमुद्वासयेत् पतिः पूर्वः प्रमीयेत यत् प्राची-नमुद्वासयेज्जाया पूर्वा प्रमीयेत संप्रत्युदीचीनमुद्वासयेत् समेवं जीर्यतः पूर्णमग्र उन्नयेदथ संमि-तमथ संमितमथ संमिततममुत्तममनुज्येष्ठमेवास्य पुत्रा ऋध्नुवन्ति संमितमग्र उन्नयेदथ भूयो-ऽथ भूयोऽथ पूर्णमुत्तमं भूयो भूय एवान्नाद्यमभ्युत्क्रामति कनिष्ठस्त्वस्य पुत्राणामर्धुको भवति सर्वान् समावदुन्नयेद्यः कामयेत सर्वे मे पुत्रास्समावदृध्नुयुरिति सर्वेषां वै पिता पुत्राणामृद्धिं कामयते सर्व एव समावदृध्नुवन्ति ॥ नान्योऽन्यमतिक्रामति चतुरुन्नयति चतुष्पद एवास्मै पशून ………… द्विपद एवास्मै पशून् यच्छति पशून् मे यच्छेति पश्चादुपसादयेत् पशवो वै गार्हपत्यः पशवः पयः पशूनामेवैषा यतिर्न पश्चादुपसादयेद्धविर्वा एतद्यदग्निहोत्रं यजमानो हविर्हविर्भूतमेव यजमानमपनुदत उत्तरादुपसादयेदपूतं वा एतद्यदग्निहोत्रमग्निः पवित्रं यत् समयाग्निँ हरति तेनैवैनत् पुनात्यनु वा एष एतद्ध्यायति यत् पश्चाधिश्रित्य पुरो जुहोति यत् समयाग्निँ हरति तेनैवैनं प्रीणात्यनुध्यायिनं करोत्यस्माद्वै गार्हपत्यादसौ पूर्वोऽग्निरसृज्यतायं वाव प्रजापतिरसौ पूर्वोऽग्निस्तदयमित आदाय प्राङनूद्द्रुत्याजुहोत् तस्मादग्निहोत्रं पश्चाधिश्रित्य पुरो जुह्वति पुर एवान्यानि हवीँषि भृतानि कुर्वन्ति पुरो जुह्वति ॥ ४ ॥ ७–८

इध्मो वा एषोऽग्निहोत्रस्य यत् समिद्यत् समिधमादधातीध्ममेवैतमग्निहोत्रस्य करोति रुद्र ओष-धीर्विषेणालिम्पत्ताः पशवो नालिशन्त ताभ्यो देवाः प्रायश्चित्तिमैच्छन् स प्रजापतिरब्रवीद्वार्यं वृणा अहं व एतास्स्वदयिष्यामीति स एताँ समिधमवृणीत तस्मादेकैको हि प्रजापतिस्ता अग्निनोपासृजत्ता

[ ४ ] मै. १,८,४ (९-१७)। कपि. ४,३।

[ ५ ] मै १,८,४-५ (९-१७)। कपि. ४,४। वा ३,९। काण्व. ३,१०।

अग्निरस्वदयदेतस्यां वा आहितायामग्निहोत्रिणे वीरुधस्स्वदन्ति स्वदितमस्यान्नं भवति य एवं वेद बहुर्द्वीकरोत्युभे आहुती समिद्धे जुहवानीत्येकैव कार्या सकृद्ध्येव सर्वस्मै यज्ञाय समिध्यत आयुर्मे यच्छ वर्चो मे यच्छ प्रजां मे यच्छेति पुर उपसादयेत् सृष्टिर्वा एतद्यदग्निहोत्रं यन्नोपसादयेत् पराचीः प्रजा इयुर्यदुपसादयति तस्मादिदं प्रजा यतास्तस्मादुपतिष्ठन्तेऽग्नौ ज्योतिर्ज्योतिरग्ना इति सायमग्निहोत्रं जुहुयाद्गर्भिण्या वाचा गर्भं दधाति मिथुनया वाचा गर्भं दधाति सूर्यो ज्योतिर्ज्योतिस्सूर्य इति प्रातस्तं गर्भिण्या वाचा मिथुनया प्रजनयति यन्निरुक्तं चानिरुक्तं च तन्मिथुनं यद्यजुषा च मनसा च तन्मिथुनं तदजाम्याहुत्योराग्नेयी सायमाहुतिस्सौरी प्रातरग्निः प्रवापयिता सूर्यः प्रजनयिताऽस्तसूर्ये निम्रुक्ते सायमग्निहोत्रं जुहुयादुपोदयँ सूर्यस्य प्रातरग्निरेव प्रवापयित्वा सूर्य रात्र्यै गर्भं दधाति तं गर्भिण्या वाचा मिथुनया प्रातः प्रजनयत्येतं वै प्रजायमानं प्रजा अनुप्रजायन्ते प्र प्रजया प्र पशुभिर्जायते यस्यैवमग्निहोत्रँ हूयत एषा वा अग्निहोत्रस्य स्थाणुर्या पूर्वाहुतिस्तामतिहाय जुहुयात् तमेव परिवृणक्त्यभिक्रामँ सायँ होतव्यं गर्भमेव दधाति प्रतिक्रामं प्रातः प्रैव जनयति तदाहुरभिक्राममेव होतव्यमभिक्रान्तेन हि यज्ञस्यर्ध्नोति यज्जुहोति तद्देवानां यदुद्दिशति तेन रुद्रँ शमयति यन्निमार्ष्टि तत् पितॄणां यत् प्राश्नाति तन्मनुष्याणां तस्मादग्निहोत्रं वैश्वदेवमुच्यते ॥५॥ ९

त्रैयमेधा वै नाम ब्राह्मणा आसँस्ते सर्वमविदुस्तत् सहैवाविदुस्तेऽग्निहोत्र एव न समराधयँस्तेषाँ सकृदेकोऽग्निहोत्रमजुहोद् द्विरेकस्त्रिरेकस्तेषां यस्सकृदजुहोत् तमितरा अपृच्छतां कस्मै त्वं जुहोषीत्येकधैवेदमित्यब्रवीत् प्रजापतिः प्रजापतय एवाहं जुहोमीति तेषां यो द्विरजुहोत् तमितरा अपृच्छतां कस्मै त्वं जुहोषीत्यग्नये चैव सायं प्रजापतये चेत्यब्रवीत् सूर्याय च प्रातः प्रजापतये चेति तेषां यस्त्रिरजुहोत् तमितरा अपृच्छतां कस्मै त्वं जुहोषीत्यग्नये सूर्याय प्रजापतय इत्यब्रवीत् तेभ्य एव सायं जुहोमि तेभ्यः प्रातरिति तेषां यो द्विरजुहोत् स आर्ध्नोत् स भूयिष्ठोऽभवत् प्रजयातीतरौ श्रियाक्रामत् तस्य प्रजामितरयोः प्रजे सजातत्वमुपैतां तस्माद् द्वे होतव्ये यजुषा च मनसा च यामेव स ऋद्धिमार्ध्नोत् तामृध्नोति यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदग्निहोत्रमधिश्रित्योन्नीयाग्निना पूर्वेणोद्द्रुत्याग्निहोत्रेणानूद्द्रवेदाहुत्यैवैनं च्यावयति यो ब्राह्मणो बहुवित्स्यात् स उद्धरेत् सर्वेणैवैनं ब्रह्मणोद्धरति यत् पुरा धनमदायी स्यात् तद्द्याच्युतेनैवैनं च्यावयति यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेदनुगमयित्वा पूर्वं मथित्वापरमुद्धृत्य जुहुयात् सैव तत्र प्रायश्चित्तिर्यदि त्वरेत ॥ पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य जुहुयात् सैव तत्र प्रायश्चित्तिर्जामि नु तद्योऽस्य पूर्वोऽग्निस्तमपरं करोत्यन्यत्रैवावसायाग्निं मथित्वोद्धृत्य जुहुयात् सैव तत्र प्रायश्चित्तिस्ततश्श्वोऽग्नये तपस्वते जनद्वते पावकवत इष्टिं निर्वपेद्यदा वा अग्निस्संतप्यतेऽथ जायत ओषधयः पावका

[६] मै. १,८,७ (३६-४४)। कपि. ४,५।

ओषधीरेवास्मै पावका भागधेयमपिदधाति न गार्हमनुबुध्यते यदा ह्येवास्मै नापिदधत्यथैषोऽनुगच्छति यौ पन्थाना अभितस्थौ दर्शपूर्णमासौ या मध्ये सृतिस्तदग्निहोत्रमेवं वा अग्निहोत्रिणे दर्शपूर्णमासिने स्वर्गो लोकोऽनुभाति ॥ मनसा वा इमां प्रजापतिर्वेदिं पर्यगृह्णादग्निहोत्रिणे तत्र यत् किंच ददाति तद्बर्हिष्यं यथासन्नेषु नाराशँसेषु ददात्येवमेष ददाति यत्किंच ददाति मध्य एव यज्ञस्य द्यावापृथिवी एतस्य सदोहविर्धाने अहोरात्राणीध्मो दिशः परिधयः प्रुष्वाः प्रोक्षणीरोषधयो न हिं यजमानो यूपो न संभवन् वदेत् पशुरेव भूत्वा संभवत्यहरहर्वै पशवस्संभवन्तोऽथ मेध्या न राजन्यस्याग्निहोत्रमस्त्यव्रत्यो हि स हन्ति व्रतं न विच्छिन्द्यात् पौर्णमासीं च रात्रीममावस्यां च जुहुयात् ते हि व्रतं गोपायति यान्यहानि न जुहुयात् तान्यस्य ब्राह्मणायाग्रे गृह उपहरेयुरग्निर्वै ब्राह्मणोऽग्ना एव तज्जुहोति तदस्य स्वदितमेष्टं भवति ॥ ६ ॥ १०-१२

वाचा वै सह मनुष्या अजायन्त ते वाचो देवाश्चासुराश्च ते यन्मनुष्या अवदँस्तदेवाभवन्ते देवाश्चासुराश्च प्रजापतिमब्रुवन्निमे वावेदमभूवन्निति स वाचस्सत्यं निरमिमीत भूर्भुवस्स्वरिति यत्तुरीयमनृतं तन्मनुष्येषु न्यदधादेतद्वै वाचोऽनृतं यन्मनुष्या वदन्ति भूरितीमामसृजताग्निं रथंतरं त्रिवृतं गायत्रीं भुवरित्यन्तरिक्षं वातं वामदेव्यं त्रिष्टुभं पञ्चदश स्वरिति दिवँ सूर्यं बृहदेकविँशं जगतीं भूर्भुवस्स्वरग्नौ ज्योतिर्ज्योतिरग्ना इत्यग्निहोत्रं जुहुयादेतद्वै वाचस्सत्यमेतन्मिथुनमेतद्ब्रह्म तेनैव जुहोतीमा एवैतादिष्टका उपधत्त इमा एवैतदिष्टका उपधायोत्तमं नाकं रोहत्युत्तमस्समानानां भवति यस्यैवमग्निहोत्रँ हूयते ॥ वाचं यच्छेदग्निहोत्र उन्नीयमाने तपसा वै प्रजापतिः प्रजा असृजत यन्न व्याहरत् तदेवातप्यत सृष्टिर्वा एतद्यदग्निहोत्रँ सृष्टिरेतद्व्रतं ता उद्भवस्थेत्युदभावयद्यर्हिं बिन्दव इव स्युस्तर्ह्यवेक्षेतोद्भवस्थोदहं प्रजया प्र पशुभिर्भूयासमित्युद्भूतिर्वा एतत् प्रभूतिर्यदग्निहोत्रमुत्प्रजया प्र पशुभिर्भवति यस्यैवमग्निहोत्रँ हूयतेऽग्निनावेक्षते प्रजननं वा एतद्यदग्निहोत्रमग्निः प्रजनयिता प्रैव जनयति॥ रेतो वा एतद्यदग्निहोत्रं न सुशृतं कुर्याद् रेतः स्कन्दयेन्नो अशृतमन्तरेणैव स्याद्रुद्र मृडानार्भव मृड धूर्त नमस्तेऽस्त्विति हुत्वोदङ्ङुद्दिशेदेतानि वै रुद्रस्य क्रूराणि नामानि तैरेष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानस्तान्येवास्य प्रतिनुदति तानि शमयति यर्ह्ययं देवाः प्रजा अभिमन्येत सजूर्जातवेदो दिवा पृथिव्या हविषो वीहि स्वाहेति द्वादश रात्रीरग्निहोत्रं जुहुयाद्या वा अग्नेर्जातवेदास्तनूस्तयैष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानस्तामेवास्य प्रीणाति तस्यैतज्जुहोति॥ तदजाम्याहुत्योराग्नेय्येषाग्नेयीतरा संवत्सरं वा एतमिन्धतेऽग्निं वैश्वानरं न वा एतस्य संवत्सरेऽप्यस्ति न वैश्वानरे योऽनाहिताग्निर्यानि दारूणि ते मासा ये स्थूला अङ्गारास्ते ऋतवो येऽणीयाँसस्तेऽर्धमासा मुर्मुरा अहोरात्राणि यत् सुवर्णं ज्योतिस्तद्बार्हस्पत्यं यन्न सुवर्णं न लोहितं तन्मैत्रं यल्लोहितं तद्वारुणं यत्सधूमं

[७] मै. १,८,६ (२८-३५)। कपि. ४,६।

तद्वैश्वदेवं यत्राङ्गारेष्वग्निर्लेलायेव तदस्यास्यमाविर्नाम तद्ब्रह्म तस्मिन् होतव्यं मुखेन वा अश्नात्यङ्गा-
न्यवत्याविः प्रजासु भवति श्वश्श्वो वसीयान् भवति यस्यैवमग्निहोत्रँ हूयते ॥ ७ ॥ १३--१६

ओदनपचनो गार्हपत्य आहवनीयो मध्याधिदेवनमामन्त्रणमेषा वै विराट् पञ्चपदा तामेवाप्नोति तामवरुन्द्धे यस्य ह्येषावरुद्धा स मनुष्याणाँ श्रेष्ठो भवति यदि सायमग्निहोत्रस्य कालोऽतिपद्येत दोषा वस्तोस्स्वाहेति जुहुयात् सैव तत्राहुतिस्तेनास्य तदनतिपन्नं भवति यदि प्रातरग्निहोत्रस्य कालोऽतिपद्येत दिवा वस्तोस्स्वाहेति जुहुयात् सैव तत्राहुतिस्तेनास्य तदनतिपन्नं भवति न स्वाहा-कारो वा अग्निहोत्रस्याहुतिं युवते यर्हि वाव प्रवदेत् तर्हि जुहुयात् स ह्यग्निहोत्रस्य वषट्कारस्सजूर-ग्निर्दिवा पृथिव्येति द्यावापृथिवी अग्निं तानेव प्रीणाति तानवरुन्द्धे सजूर्देवेन सवित्रेति न हि सवि-तुर्ऋत आहुतिरस्ति सजूः पूष्णान्तरिक्षेणेति पशवो वै पूषा पशवोऽन्तरिक्षं पशूनेवावरुन्द्धे सजू रात्र्येन्द्रवत्या स्वाहेति रात्रीमेवैतदभिजुहोति न हीन्द्रादृत आहुतिरस्ति देवा वै पुराग्निहोत्रमहौपु-स्तस्मात् पुरा बृहन्महानजनि सजूरह्नेन्द्रवता स्वाहेति बार्हतं वा अहर्बार्हतस्सूर्योऽहश्चैवास्यैतत् सूर्य-श्चाभिजिता अभिहुतौ भवत आनुष्टुभी वै रात्री त्रैष्टुभमहो रात्रीं चैवैतदहश्चाभिजुहोत्यग्नेऽदाभ्य जुष-स्व स्वाहेत्युत्तरामाहुतिं जुहोति यथाग्नये समवद्यत्येवमेव तदपिप्रेरग्ने स्वां तन्वमयान् द्यावापृथिवी ऊर्जमस्मासु धेहीति तृणमक्त्वानुप्रहरति सँस्थितिरेवैषा स्वगाकृतिरग्निहोत्रस्य वा एषोऽशान्तमनु प्रजा हिनास्ति यत्तृणमक्त्वानु प्रहरति तेनैवैनच्छमयत्यग्ने गृहपते जुषस्व स्वाहेति स्रुवेण गार्हपत्ये जुहोति यथा पत्नीस्संयाजयत्येवमेव तदनु वा एष एतद्ध्यायति यत् पश्चाधिश्रित्य पुरा जुहोति यत् स्रुवेण गार्हपत्ये जुहोति तेनैवैनं प्रीणात्यननुध्यायिनं करोत्यस्याग्निहोत्री प्रजायां जायते श्वश्श्वो वसीयान्
भवति यस्यैवमग्निहोत्रँ हूयते ॥ ८ ॥ १७

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ १८

अस्य प्रत्नामनु द्युतँ शुक्रं दुदुह्रे अह्रयः । पयस्सहस्रसामृषिम् ॥ १९

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेतांसि जिन्वति ॥ २०

---

[ ८ ] मै. १,८,७ ( ३६—४४ ) । कपि. ४,७ । वा. ३,१० । काण्व.३,११--१२।

[ ९ ] मै. १,५,१—२ ( १-११ ) । कपि. ४,८ । वा. ३,११-१९, १३,१४, १५,१९.२० २६,५६ ३३,६ १२,५२; २३,३२; १,२५—१६; २,१५; ६,२२, ३५,१२; ३६,२३, ३८,२३ । काण्व ३,१७-२७: १४,१४ १६,४१, ४७,७८, ३१,६; १३,५३; २५,३४; १,४२-४३; २.३०, ६,३१; २२,४. ३५,४५; ३६,२३ ३८,२३ । [उप-प्रयन्तो अध्वरं० । ऋ. १.७४,१; सा. १३७९; तै. सं. १,५,५.१ । अस्य प्रत्नामनु द्युतं० । ऋ. ९,५४,१ सा. ७५५; तै. सं. १,५,५,१ । अग्निर्मूर्धा दिव.० । ऋ. ८,४४,१६; सा. २७,१५३२, तै. सं १,५,५,१; ४, ४,१,१; तै ब्रा. ३,५,७,१ ]

उभा वामिन्द्राग्नी आहुवध्या उभा राधसस्सह मादयध्यै ।
उभा दातारा इषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ २१
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥ २२
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ २३
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥ २४

त्वमग्ने सूर्यवर्चास्सं मामायुषा वर्चसा सृज सं त्वमग्ने सूर्यस्य ज्योतिषागथास्समृषीणां स्तुतेन सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मीय ॥ २५

इन्धानास्त्वा शतं हिमा द्युमन्तस्समिधीमहि ।
वयस्वन्तो वयस्विनं यशस्वन्तो यशस्विनम् ।
सुवीरासो अदाभ्यमग्ने सपत्नदम्भनम् ॥ २६

आयुर्धा अग्नेऽस्यायुर्मे धेहि वयोधा अग्नेऽसि वयो मे धेहि तनूपा अग्नेऽसि तन्वं मे पाहि ॥ यन्मे अग्न ऊनं तन्वस्तन्म आपृणाग्नेस्समिदस्यभिशस्त्या मा पाहि सोमस्य समिदसि परस्पा म एधि यमस्य समिदसि मृत्योर्मा पाह्यग्ने यत्ते तपस्तेन तं प्रतितप योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते शोचिस्तेन तं प्रतिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते तेजस्तेन तं प्रतितितिग्धि योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते हरस्तेन तं प्रतिहर योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने रुचां पते नमस्ते रुचे मयि रुचं धेहि चित्रावसो स्वस्ति ते पारमशीयावाग्वसो स्वस्ति ते पारमशीय ॥ ९ ॥ २७--२८

वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो ॥ २९

---

[उभा वामिन्द्राग्नी० । ऋ. ६,६०,१३, तै. सं. १,१,१४,१; १,५,५,१ । अयमिह प्रथमो० । ऋ. ४,७,१; तै. सं. १,५,५,१ । अयं ते योनिर्ऋत्वियो० । ऋ. ३,२९,१०; अथर्व. ३,२०,१; तै. सं. १,५,५,२; ४,२,४,३; ४,७,१३,५; तै. ब्रा. १,२,१,१६, २,५,८,८। दधिक्राव्णो अकारिषं०। ऋ. ४,३९,६, सा. ३५८; अथर्व. २०,१३७,३; तै. सं. १,५,११,४; ७,४,१९,४, ताण्ड्य ब्रा. १,६,१७ । योऽस्मान्द्वेष्टि०...द्विष्मः । अथर्व. १०,५,१५-२१,२५-३५; १६,७,५, श्रौ. पू. अ. ३ खं. ६ ]

[ १० ] वा. ५,३६—३७; ७,४३—४४; ४०,१६,; ३३,६५; १९,६—७; २०,५४; २७,१८; ३४,४०; ४,१६।काण्व. ५,४५-४६; ९,८--९; ४०,१८; ३२,६५; २८,६,९; २२,३९; २९.३१, ४,२१ । [ वेत्था हि वेधो० । ऋ. ६,१६,३ सा. १४७६ ]

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ ३०
आ तू न इन्द्र वृत्रहन्नस्माकमर्धमागहि । महान्महीभिरूतिभिः ॥ ३१
त्वं महाँ इन्द्र तुभ्यँ ह क्षा अनु क्षत्रं मँहना मन्यत द्यौः ।
त्वं वृत्रँ शवसा जघन्वान् सृजस्सिन्धूँरहिना जग्रसानान् ॥ ३२
ऋतावानं वैश्वानरम् ॥ वैश्वानरस्य सुमतौ स्याम ॥ ३३--३४
अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नस्सूनुमतः ॥ ३५
त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्तूतयो वि वाजाः ।
त्वं देहि सहस्रिणं रयिं नोऽद्रोघेन वचसा सत्यमग्ने ॥ ३६
दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयच्छसि । यजमानाय सुन्वते ॥ ३७
आ तू भर माकिरेतत् परिष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम् ।
इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व प्रयन्धि ॥ ३८
प्र तत्ते अद्य शिपिविष्ट नामार्यश्शँसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥ ३९
वषट् ते विष्ण आस आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिस्सदा नः ॥ ४०
त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥ ४१
अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजं जयतु वाजसाता अयँ शत्रूञ्जयतु जर्हृषाणः ॥ ४२
त्वमग्ने व्रतपा असि ॥ यद्वो वयम् ॥ १० ॥ ४३--४४

[अग्ने नय सुपथा०। ऋ. १,१८९,१; तै सं. १,१, १४,४. १,४,४३,१; तै ब्रा. २ ८,२,३· तै. आ १,८,८; शत. ब्रा. १४,८,३,१ । आ तू न इन्द्र वृत्रहन्०। ऋ. ४,३२,१: सा. १८१ । त्वं महाँ इन्द्र तुभ्यं० । ऋ. ४, १७,१ । ऋतावानं वैश्वानरम् । अथर्व. ६,३६,१; आ. गृ. अ. ८ । वैश्वानरस्य सुमतौ० । ऋ १,९८,१; तै. सं. १,५,११,३; नि. ७,२२ । अग्ने दा दाशुषे०। ऋ. ३,२४,५: तै. सं. २,१२,६ । त्वद्धि पुत्र सहसो०। ऋ. ३,१४,६ । दीर्घस्ते अस्त्वङ्कुशो० । ऋ. ८,१७,१० । अथर्व. २०,५,४, । आ तू भर माकिरेत्० । ऋ. ३,३६,९, तै. सं. १,७,१३,३ । प्र तत्ते अद्य शिपिविष्ट०। ऋ ७,१००,५; सा. १६२६; तै. सं २,२,१२,५; नि. ५,९ । वषट् ते विष्ण आस ( ०वास ) आ० । ऋ ७,९९,७; ७,१००,७, सा. १६२७; तै सं. २,२, १२,५ । त्वामग्ने वाजसातमं० । ऋ. ५,१३,५; तै. सं. १,४,४६,३ । त्वमग्ने व्रतपा असि० । ऋ. ८,११, १; अथर्व. १९,५९.१; तै. सं. १,१,१४,४; १,१,३,१ । यद्वो वयम्० । ऋ. १०,२,४: अथर्व. १९,५९,२ तै. सं. १,१,१४,४ ]

कृणुष्व पाजः ॥ ४५
स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभिद्यौत् ॥ ४६
सेदग्ने अस्तु सुभगस्सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ ४७
अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मार्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ ४८
इह त्वा भूर्याचरेदुप त्मन् दोषावस्तर्दीदिवाँसमनु द्यून् ।
क्रीडन्तस्त्वा सुमनसस्सपेमाभि द्युम्ना तस्थिवाँसो जनानाम् ॥ ४९
यस्त्वा स्वश्वस्सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग् जुजोषत् ॥ ५०
महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ ५१
अस्वप्नजस्तरणयस्सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।
ते पायवस्सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ ५२
ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान् सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ ५३
त्वया वयँ सधन्य२स्त्वोतास्तव प्रणीत्यश्याम वाजान् ।
उभा शँसा सूदय सत्यतातेऽनष्टुया कृणुह्यह्रयाण ॥ ५४
अया ते अग्ने समिधा विधेम प्रति स्तोमँ शस्यमानं गृभाय ।
देहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात् ॥ ११ ॥ ५५ [४४१]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामग्निहोत्र-ब्राह्मणं नाम षष्ठं स्थानकं संपूर्णम् ॥६॥



[ ११ ] वा. १३, ९ । काण्व. १४,९ । [ कृणुष्व पाजः० । ऋ. ४,४,१; तै. सं. १,२,१४,१: नि. ६,१२ । [ स ते जानाति सुमतिं० । ऋ. ४,४,६; तै. सं. १,२,१४,२ । सेदग्ने अस्तु सुभग० । ऋ. ४,४,७; तै. सं. १,२,१४,३ । अर्चामि ते सुमतिं० । ऋ ४,४,८, तै. सं. १,२,१४,३ । इह त्वा भूर्याचरेदुप० । ऋ. ४,४,९; तै. स. १,२,१४,४ । यस्त्वा स्वश्वस्सुहिरण्यो०। ऋ. ४,४,१०; तै. सं. १,२,१४,४ । महो रुजामि बन्धुता० ऋ ४,४,११, तै. सं. १,२,१४,४ । अस्वप्नजस्तरणयस्सुशेवा० । ऋ. ४,४,१२; तै. सं. १,२,१४,५ । ये पायवो मामतेयं०। ऋ. १,१४७,३; ४,४,१३; तै. सं. १,२,१४,५ । त्वया वयँ सधन्य२स्त्वोता०। ऋ. ४,४,१४ तै.सं. १,२,१४,६ नि ५,१५। अया ते अग्ने समिधा०। ऋ ४,४,१५. तै. सं. १,२,१४,६;नि ३,२१.

अथ सप्तमं स्थानकम् ।

## आलाभी ।

अम्भस्थाम्भो वो भक्षीय महस्स्थ महो वो भक्षीयोर्जस्थोर्जं वो भक्षीय रायस्पोषस्स्थ रायस्पोषं
वो भक्षीय रेवती रमध्वमस्मिन्योना अस्मिन् गोष्ठेऽयँ वो बन्धुरितो मापगात मा मा हासिष्ट बह्वीर्मे
भवत सँहितासि विश्वरूपा मोर्जा विशा गौपत्येना प्रजया रायस्पोषेण मयि वो रायश्श्रयन्ताँ सहस्र-
पोषं वः पुषेयम् ॥ १

संपश्यामि प्रजा अहमिडाप्रजसो मानवीः । बह्वीर्भवन्तु नो गृहे ॥ २

उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ ३

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानँ स्वे दमे ॥ ४

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नस्स्वस्तये ॥ ५

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
तं त्वा शोचिष्ठ दीदिवस्सुम्नाय नूनमीमहे सखिभ्यः ॥ ६

वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ।
स नो बोधि श्रुधी हवमुरुष्या णो अघायतस्समस्मात् ॥ ७

ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडास्थ मधुकृत-
स्स्योना माविशतेरंमदो मयि वो रायश्श्रयन्ताँ सहस्रपोषं वः पुषेयम् ॥ १ ॥ ८

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ ९

नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशँसः ॥ १०

यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ११

सोमानँ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ १२

---

[ १ ] मै. १,५,२—३ (२१--३३) । कपि. ५,१ । वा. ३,२०--२६; १५,४८; २५,४७; ४,२६ । काण्व. ३,२७-३४; १६, ७०; २७,४५; ४,३९ । [उप त्वाग्ने दिवे दिवे० । ऋ. १,१,७. सा. १४; तै.सं. १,५,६,२ । **राजन्तमध्वराणां०** । ऋ. १,१,८, तै सं. १,५,६,२ । **स नः पितेव सूनवे०** । ऋ. १,१,९. तै. सं. १,५,६,२; नि. ३,२१ । **अग्ने त्वं नो अन्तम०** । ऋ. ५,२४,१; सा. ४४८,११०७; तै. सं १,५,६,२; ४,४,४,८ । **तं त्वा शोचिष्ठ०** । ऋ. ५, २४,४; सा. ११०९; तै. सं. १,५,६,३; ४,४,४,८ । **वसुरग्निर्वसुश्रवा०** । ऋ. ५,२४,२; सा. ११०८; तै. सं. १,५,६,३; ४,४,४,८ ]

[ २ ] मै. १,५,४ (३५--३९,४१--३४) । कपि ५,२ । वा. ३,२८--३४,३६; ८,२ । काण्व. ३,३६--४२; ८,१ । [ **महि त्रीणामवोऽस्तु०** । ऋ. १०,१८५,१; सा. १९२ । **नहि तेषाममा चन०** । ऋ. १०,१८५,२ । **यस्मै (ते हि) पुत्रासो अदितेः०** । ऋ. ८,१८,५ । **सोमानँ स्वरण०** । ऋ. १,१८,१; सा. १३९,१४६३; तै सं १,५,६,४, तै. आ १०,१,११; नि. ६,१० ]

यो रे॒वान्यो अ॑मीव॒हा व॑सु॒वित् पु॑ष्टि॒वर्ध॑नः । स न॑स्सिषक्तु॒ यस्तु॒रः ॥ १३

मा नः॒ शँसो॒ अर॑रुषो धू॒र्तिः प्रण॒ङ् मर्त्य॑स्य । रक्षा॑ णो ब्रह्मणस्पते ॥ १४

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥ १५

परि ते दूडभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ १६

अच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि निम्रदोऽसीदमहं तं निम्रृणामि योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विभूरस्यभ्यहं तं भूयासं योऽस्मान् द्वेष्टि यं च वयं द्विष्मः प्रभूरसि प्राहं तमतिभूयासं योऽस्मान् द्वेष्टि यं च वयं द्विष्मः पूषा मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पातु प्राची दिगग्निर्देवताग्निँ स ऋच्छतु यो मैतस्या दिशोऽभिदासति दक्षिणा दिगिन्द्रो देवतेन्द्रँ स ऋच्छतु यो मैतस्या दिशोऽभिदासति प्रतीची दिक्सोमो देवता सोमँ स ऋच्छतु यो मैतस्या दिशोऽभिदासत्युदीची दिङ् मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्या दिशोऽभिदासत्यूर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिँ स ऋच्छतु यो मैतस्या दिशोऽभिदासतीयं दिगदितिर्देवतादितिँ स ऋच्छतु यो मैतस्या दिशोऽभिदासति ज्योतिषे तन्तव आशिषमाशास्तेऽसा अनु मा तनु ॥ २ ॥ १७

धनं मे शँस्य पाहि तन्मे गोपाय ॥ १८

मम नाम प्रथमं जातवेदो माता पिता च दधतुर्न्वग्रे ।
तत्त्वं गोपाया पुनर्ददे ते वयं बिभराम तव नाम ॥ १९

प्रजां मे नर्य पाहि तां मे गोपाय ॥ २०

इमान् मे मित्रावरुणौ गृहान् गोपायतं युवम् ।
अविनष्टानविहुतान् पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥ २१

अन्नं मे पुरीष्य पाहि तन्मे गोपाय धनं मे शँस्याजुगुपस्तन्मे पुनर्देहि ॥ अग्ने सहस्राक्ष शतमूर्धञ्छततेजश्शतं ते प्राणास्सहस्रं व्यानाः ॥ त्वँ साहस्रस्य राय ईशिषे तस्य नो रास्व तस्य ते भक्तिवानो भूयास्म ॥ २२-२४

---

[यो रेवान्यो अमीवहा० । ऋ. १,१८,२; नि. ३,२१ । मा नश्शँसो अररुषो० । ऋ. १,१८,३ । कदा चन स्तरीरसि० । ऋ. ८,५१,७; सा. ३००; तै. सं. १,४,२२,१; १,५,६,४ । परि ते दूड (ळ) भो० । ऋ.४,९,८ । योऽस्मान् द्वेष्टि० । अथर्व, १०,५,१५--२१,२५-३५, १६,७,५; श्रौ. पू. अ. ३, खं. ६ ]

[ ३ ] मै. १,४,२; १,५,१४ ( १२,५९--७७ ) । कपि. ५,१ । वा २,१७; ३,३७,३९; १७,७१ । काण्व. १,४९.--५०; ३, ४६--४८, १८,७१ ।

मम च नाम तव जातवेदो वाससी इव विवसानौ चरावः।
ते विभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेदः॥ २५

प्रजां मे नर्याजुगुपस्तां मे पुनर्देह्यग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासँ सुगृहपतिर्मया त्वं गृहपतिना भूया अस्थूरि णौ गार्हपत्यं दीदायच्छतँ हिमाद्वायू अन्नं मे पुरीष्याजुगुपस्तन्मे पुनर्देहि॥ ३॥ २६

अग्निहोत्रे स्तोमो योक्तव्यो यस्य वा अग्निहोत्रे स्तोमो युज्यते वसीयान् भवत्युपप्रयन्तो अध्वरमिति प्रजा वा इमा उप तास्सत्सत्स्तोमस्ता एवोपयुनक्त्यस्य प्रत्नामनु द्युतमिति देवा वै प्रत्नं ते सत्सत्स्तोमस्तानेव प्रायुङ्क्त स्वर्गायोपोपेन्नु मघवन् भूय इन्नु त इतीयं वा उप स्वर्गमेवेत्वास्यां प्रतितिष्ठति या वै प्रजा आभविष्यन्तीस्ता उप ता एवोपयुनक्ति परि ते दूडभो रथ इति स्तोममेवैतया युक्तं परिगृह्णात्यग्निर्मूर्धा दिवः ककुदित्येषा मिथुना रेतस्वती पशव्या यामौ धुरां गायत्री प्रथमा सैषा गायत्र्योपास्थितोभा वामिन्द्राग्नी आहुवध्या इति सूर्यो वा इन्द्रस्सोऽग्निं नक्तं प्राविशत्युभा एवैनौ सहेट्टे यासौ धुरां त्रिष्टुप्प्रथमा सैषा त्रिष्टुभोपास्थितायमिह प्रथमो धायि धातृभिरित्यग्निर्ह्येवास्मिंल्लोक इह प्रथमोऽधीयत यासौ धुरां जगती प्रथमा सैषा जगत्योपास्थितायं ते योनिर्ऋत्विय इतीयँ ह्यग्नेर्योनिराग्निस्सूर्यस्य यासौ धुरामनुष्टुप्प्रथमा सैषानुष्टुभोपास्थित॥ दधिक्राव्णो अकारिषमित्येषा वा अग्नेः पशव्या तनूर्या दधिक्रावती तामेवास्य गृह्णात्युपस्थायुका एनं पशवो भवन्ति पशुर्वा अग्निर्यथा वै गौर्जीर्यति यथाश्वो यथा पुरुष एवमेष आहितो जीर्यत्यग्न्याधेयस्यर्ग्भिरुपस्थेयस्तन्वो वा अस्यैतास्ताभिरेवैनं पुनर्णवं करोति यच्छन्दोभिरुपतिष्ठते तैरेवैनं पुनर्णवं करोति यथाग्र आहित एवमस्य भवत्युपतिष्ठते योग एवास्यैष दम एवास्यैष याच्ञ एवास्यैष यथा श्रेयस आहृत्य नमस्यत्येवमेव तत्॥ ४॥ २७-२८

---

[ ४ ] मै. १,५,५-६(४५—४६)। कपि. ५,३। वा. ३,११--१६,३४,३६; २३,३२; ८,२,१३,१४ १५,२०,२६,५६; १२,५२; ३३,६। काण्व. ३,१७--२२,४१,४४; २५,३४, १४,१४; १६,४१,४७,७८; ३२,६ १३,५३; ८,१। [ उपप्रयन्तो अध्वरं०। ऋ. १,७४,१. सा. १३७९; तै. सं. १,५,५,१। अस्य प्रत्नामनु द्युतम्०। ऋ. ९,५४,१; सा. ७५५; तै. सं. १,५,५,१। उपोपेन्नु मघवन् भूय०। ऋ. ८.५१,७, सा. ३००; तै. सं. १,४, २२,१; १,५,६,४। परि ते दूड(ळ) भो०। ऋ. ४,९,८। अग्निर्मूर्धा दिवः ककुद्०। ऋ. ८,४४,१६; सा. २७,१५३२; तै. सं. १,५,५,१; ४,४,१,१; तै. ब्रा. ३,५,७,१। उभा वामिन्द्राग्नी०। ऋ. ६,६०,१३; तै. सं. १,१,१४,१; १,५,५,१। अयमिह प्रथमो०। ऋ. ४,७,१. तै. सं. १,५,५,१। अयं ते योनिर्ऋत्विय०। ऋ. ३,२९,१०; अथर्व. ३,२०,१; तै. सं. १,५,५,२; ४,२,४,३: ४,७,१३,५; तै. ब्रा. १,२,१,१६; २,५,८,८। दधिक्राव्णो अकारिषं०। ऋ. ४,३९,६; सा. ३५८; अथर्व. २०,१३७,३; तै. सं १,५,११,४; ७,४,१९,४; ताण्ड्य ब्रा. १,६,१७ ]

अग्नीषोमीयया पूर्वपक्ष उपतिष्ठेताग्नीषोमयोर्वा एतद्भागधेयं यत् पौर्णमासं ताभ्यामेवैनं परिददा ति ता एनमनपक्रामन्तौ गोपायत ऐन्द्राग्न्यापरपक्ष इन्द्राग्न्योर्वा एतद्भागधेयं यदमावस्या ताभ्या मेवैनं परिददाति ता एनमनपक्रामन्तौ गोपायतोऽग्नीषोमा एवैनं पूर्वपक्षाय परिदत्त इन्द्राग्नी अपरप क्षाय संप्रदायँ ह वा एनं देवा अनपक्रामन्तो गोपायन्ति य एवं विद्वानग्निमुपतिष्ठते कस्मै कमग्नि रुपस्थीयत इत्याहुरशित्रं वा एतदग्नेर्यदग्निमुपतिष्ठतेऽग्नय एवैतदशित्रं क्रियते सायमुपतिष्ठते न प्रातस्त स्मात् सायमतिथये प्रत्येनसो नोत तथा प्रातर्यज्ञस्य यज्ञस्य वा आशीरस्ति यदग्निमुपतिष्ठतेऽग्निहोत्र स्यैवैतामाशिषमाशास्ते प्रजापतिः प्रजा असृजत सोऽग्निमेवाग्रेऽसृजत तस्मा एतद्भागधेयमकल्पय द्यदग्न्युपस्थानं यदग्निमुपतिष्ठते स्वेनैवैनं भागधेयेन समर्धयत्यग्निर्वै प्रयुक्तिमभ्यकामयत यथाश्वं रथकाम्यति यदग्निमुपतिष्ठते प्रैवैनं युङ्क्ते काममस्यर्ध्नोति मनुष्यस्येन्नु यः काममृध्नोति स वसीयान् भवत्यृध्नोति वसीयान् भवति य एवं विद्वानग्निमुपतिष्ठत उपेति संभवत्येवैतयाग्निर्मूर्धेति रे एवैतया प्रसिञ्चत्युभा वामिन्द्राग्नी इति प्राणापानौ वा इन्द्राग्नी प्राणापाना एवैतया दधात्ययमि प्रथमो धायीति गर्भमेवैतया दधात्यस्य प्रत्नामनु द्युतमित्यूध एवैतया करोत्ययं ते योनिर्ऋत्विय इति जनयति चैवैतया वर्धयति च क्लृप्ता ह वा अस्य प्रजा जायते य एवं विद्वानग्निमुपतिष्ठते॥५॥

२९

अहर्वै देवानामासीद्रात्र्यसुराणां ते देवास्तमसोऽन्धसो मृत्यो रात्र्या अभ्याप्लवमानादबिभ युस्ते छन्दोभिरग्निमन्वारभन्त गायत्र्या वसवस्त्रिष्टुभा रुद्रा जगत्यादित्या अम्भस्स्थेति पशव इन्धा ना इति मनुष्यास्ते देवास्तमसोऽन्धसो मृत्यो रात्र्याः पारमतरन्यच्छन्दोभिरग्निमुपतिष्ठते तमस एवै षान्धसो मृत्यो रात्र्याः पारतीर्तिस्त्वमग्ने सूर्यवर्चा इत्यग्नय एवैतामाशिषमाशास्ते सं मामायुष वर्चसा सृजेत्यात्मन एवैतामाशिषमाशास्ते सं त्वमग्ने सूर्यस्य ज्योतिषागथा इत्यग्नय एवैतामाशि षमाशास्ते ॥ समृषीणाँ स्तुतेनेति च्छन्दाँसि वा ऋषीणाँ स्तुतं छन्दोभिरेवैनँ समर्धयति सं प्रियेण धाम्नेति पशवो वा अग्नेः प्रियं धाम पशुभिरेवैनँ समर्धयति समहमायुषा सं वर्चसा सं प्रजया र रायस्पोषेण ग्मीयेत्यात्मन एवैतामाशिषमाशास्त इन्धानास्त्वा शतं हिमा इत्येतद्ध वै दाशर्म आरु णिमुवाचाग्निमादधिवाँसमुद्दातः केनाग्निरुपस्थेय इति तस्मै हैतदग्न्युपस्थानमुवाच स होवाचानयो पस्थेय इन्धानास्त्वा शतँ हिमा इति यो वा एतयोपतिष्ठते पापीयानस्माद् भ्रातृव्यो भवति पापी यान् सपत्नस्सर्वमायुरेत्या जीवितोरन्नमत्त्यायुर्धा अग्नेऽस्यायुर्मे धेहीत्यात्मन एवैतामाशिषमाशास्ते

[ ५ ] मै. १,५,७ (४८)। कपि. ५,४। वा. ३,१२-१६; १३,१४; १५,२०,२६,५६; ३३,२; १२,५१। काण्व. ३ १८-२२; १४,१४. १६,४१,४७,७८; ३२,६; १३,५३।

[ ६ ] मै. १,५,८-९ (४९-५०)। कपि. ५,५। वा. ३,१७-२०। काण्व. ३,२३-२७। [योऽस्मान् द्वेष्टि०...द्विष्मः अथर्व. १०,५,१५-२१,२५-३५; १६,७,५; श्रौ. पू. अ. ३, खं. ६ ]

वयोधा अग्नेऽसि वयो मे धेहीत्यात्मन एवैतामाशिषमाशास्ते तनूपा अग्नेऽसि तन्वं मे पाहीत्यात्मन एवैतामाशिषमाशास्ते यन्मे अग्न ऊनं तन्वस्तन्म आपृणेति यदेवास्योनमात्मनस्तदापूरयतेऽग्नेस्समिदस्यभिशस्त्या मा पाहि सोमस्य यमस्येति सर्वस्मादेवैनमेताः पान्त्यग्ने यत् ते तपस्तेन तं प्रतितप योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति तेनैवैनं प्रतितपति प्रतिशोचति प्रतितित्यक्ति प्रत्यर्चति प्रतिहरत्येतद्ध वा आरुणिरुवाचैतेनाहँ सर्वान् सपत्नान् सर्वान् भ्रातृव्यानभ्यभवमिति श्रेयाञ्छ्रेयानात्मना भवति पापीयान् पापीयान् य एनं द्वेष्टि योऽस्मा अरातीयति य एवं विद्वानग्निमुपतिष्ठतेऽग्ने रुचां पते नमस्ते रुचे मयि रुचं धेहीति सर्वा एव शुचश्शमयित्वा रुचमात्मन् धत्ते चित्रावसो स्वस्ति ते पारमशीयावाग्वसो स्वस्ति ते पारमशीयेति रात्री वै चित्रावसुरहर्वाग्वसुरहोरात्रयोरेवैषा परीतिर्न नक्तं न दिवार्तिमार्च्छति य एवं वेद भङ्गे वा एते यज्ञस्याग्नी रात्र्यसा आदित्योऽहरेते एव भङ्गे ईड्ट ईश्वरो भूतं च भविष्यच्चाज्ञातोर्य एवं वेद ॥ ६ ॥          ३०—३१

अम्भस्स्थेत्यम्भो ह्येता महस्स्थेति महो ह्येता ऊर्जस्स्थेत्यूर्जो ह्येता रायस्पोषस्स्थेति रायस्पोषो ह्येता रेवती रमध्वमिति पशवो वै रेवतीः पशव एतद्यदन्तराग्नी स्व एवैना गोष्ठे रमयामकरस्मिन् योना इत्येष ह्यासां योनिरस्मिन् गोष्ठ इत्येष ह्यासां गोष्ठोऽयं वो बन्धुरितो मापगातेत्युपोपैवैनं पशवो यान्ति नापक्रामन्ति य एवं विद्वानग्निमुपातिष्ठत एति वा एषोऽस्माल्लोकाद्योऽग्निमुपतिष्ठतेऽम्भस्स्थेति पशवो वा अम्भः पशवोऽन्तरिक्षं पशुष्वेव प्रतितिष्ठति बिभ्यति वै देवेभ्यः पशवो देवानामेष एको योऽग्निमुपतिष्ठते ॥ तेऽस्मादीश्वराः प्रत्रसस्सँहितासि विश्वरूपेत्येतानि वै गोर्नामानि सँहिता विश्वरूपा गौस्तान्येवास्य गृह्णात्यप्रत्रासाय सँहितासि विश्वरूपेति रूपेण रूपेण ह्येषा सँहिता मोर्जा विशा गौपत्येना प्रजया रायस्पोषेणेत्येतैर्ह्येषा विशन्त्याविशति मयि वो रायश्श्रयन्तां सहस्रपोषं वः पुषेयमिति साहस्रीमेव पुष्टिं न्यङ्क्ते वत्सं पराहन्ति वत्सनिकान्ताः पशवः पशूनामनुकशातया अभिका एनं पशवो भवन्ति सप्त वै बन्धुमतीरिष्टका अग्नौ चित्य उपधीयन्ते तास्ता अमुष्मै लोकाय सप्त ग्राम्यास्ता अत्रोपधेया गौश्चाश्वश्चाविश्चाजा चाश्वतरश्च गर्दभश्च पुरुषो यद्गां पराहन्ति ता एवैतदुपधत्तेऽथो गवैवैनं चिनुते ॥ ७ ॥          ३२—३३

सं पश्यामि प्रजा अहमिति सर्वा एव प्रजा अवरुन्द्ध इडप्रजसो मानवीरित्येडीर्हि प्रजा मानवीर्ये च वै ग्राम्याः पशवो ये चारण्यास्त उभये नक्तँ सँसृज्यन्ते तस्मादपि येऽल्पाः पशवस्ते नक्तं बहव इव दृश्यन्ते त ईश्वरा अमुं लोकमनुपदो यदेतद्यजुर्वदत्यस्मिन्नेवैनांल्लोके यच्छत्यग्निर्वा एतस्यास्मिंल्लोकेऽग्रे जायते य आहिताग्निस्सोऽस्य पशूनुपजायमानान् हिनस्त्युप त्वाग्ने दिवे दिव इत्यु-

---

[ ७ ] मै. १,५,९-१० (५०-५१)। कपि. ५,५ । वा. ३,२०-२२ । काण्व. ३,२७-२९ ।
[ ८ ] मै. १,५,१० (५०-५३)। कपि. ५,५ । वा. ३,२२—२५ । काण्व. ३,३०—३३ ।

पैवैनं जायमानेभ्यश्शमयति दोषावस्तर्धिया वयं नमो भरन्त एमसीति नमस्वत्योपास्थित राजन्त-
मध्वराणां गोपामृतस्य दीदिविम् । वर्धमानँ स्वे दम इति वृधद्वत्या स नः पितेव सूनवेऽग्ने सूपा-
यनो भव सचस्वा नस्स्वस्तय इति स्वस्तिमत्याग्ने त्वं नो अन्तम इत्येतद्ध वै दिवोदासो भैमसे-
निरारुणिमुवाचाग्निमादधिवाँसमुद्दातः केन गार्हपत्य उपस्थेय इति तस्मै हैता उवाच स होवाचा-
भिरुपस्थेयोऽग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्य इत्येषा वा अग्नेः प्रिया तनूर्
वरूथ्या प्रिययैवैनं तन्वोपास्थित द्विपदाभिर्द्विपात् पुरुषो गृहा गार्हपत्यो गृहेष्वेव प्रतितिष्ठति तिस्र
पूर्वाश्चतस्र एतास्तास्सप्त सप्त ग्राम्याः पशवस्तानेवावरुन्द्ध ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्यूर्ज
मेव गृहेषु पशुष्वात्मन् धत्तेऽथो या अमूरिष्टका उपधत्ते ता एवैतत् कल्पयतीडास्स्थ मधुकृत इतीड
ह्येता मधुकृतस्स्योना माविशतेरंमद इति स्योना ह्येता इरया सहाविशन्ति मयि वो रायश्श्रयन्तां
सहस्रपोषं वः पुषेयमिति साहस्रीमेव पुष्टिं न्यङ्क्ते वत्सं पराहन्ति वत्सनिकान्ताः पशवः पशूना
मनुक्शात्या अभिका एनं पशवो भवन्त्यथो इष्टकामेवैतां गार्हपत्य उपाधत्ते ॥ ८ ॥ ३१
महि त्रीणामवोऽस्त्वित्येष प्राजापत्यास्त्रिचः प्राजापत्या इमाः प्रजास्सर्वा एव प्रजा अवरुन्द्धे
प्रजापतिर्वा एताः प्रजापतिमेवैतदुपेत्य सर्वमाप्त्वा सर्वमवरुध्य सोमानँ स्वरणं कृणुहि ब्रह्मणस्पत
इति ब्राह्मणस्पत्या ब्रह्मवर्चसमेवैतयात्मन् धत्ते वैश्वदेवीर्वा एता वैश्वदेवीरिमाः प्रजा ब्रह्मणो योने
प्रजाः प्रजायन्ते यदेषा ब्राह्मणस्पत्या ब्रह्मण एवैना योनेः प्रजनयत्येताभिर्वा अदितिः पुत्रान
न्वैक्षत यत् सोममाहरन्नमुष्माल्लोकात् स्वस्ति पुनरागच्छन् सह सोमेन यमेव कामं कामयते
तँ स्पृणोति यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत स्वस्त्येव पुनरागच्छति ।
कदा चन स्तरीरसि परि ते दूडभो रथ इति स्तोमस्यैवैतद्योगः कदा चन स्तरीरसीत्ये
तद्ध वा आरुणिरुवाच न तावद्रात्रीँ स्तर्यमुवस यावदेतामृचमशृणवमिति न रात्रीँ स्तर्यं
वसति य एवं वेद गायत्रो वा अग्निर्गायत्रच्छन्दास्तं छन्दसा व्यर्धयति यद्विच्छन्दोभिरुपतिष्ठते
यदेषा गायत्र्युत्तमा स्वेनैवैनं छन्दसा समर्धयति सर्वं वा एष आप्त्वा सर्वमवरुध्य स्वर्गं लोकमेति
योऽग्निमुपतिष्ठते व्यस्य प्रजा छिद्यते यत् पुत्रं ह्वयति प्रजामेवानुसंतनोति मानुषमिव वा एतदुपा
वर्तत यत् पुत्रं ह्वयत्यच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदीति देवलोकं चैव मनुष्यलोकं च संतनो
त्युभौ लोका आजयति ॥ निम्रदोऽसीत्यत्र तं गृह्णाति योऽस्य पश्चाद् भ्रातृव्योऽभिभूरसीत्यभि र
भवति य एनेन सदृङ् प्रभूरसि प्राहं तमतिभूयासमित्यति तं क्रामति य एवैनं पूर्वोऽतिक्रान्तं
भ्रातृव्यः पूषा मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पात्वितीयं वै पूषा प्रपथेऽन्तरिक्ष

[ ९ ] मं. १,५,११(५४)। कपि. ५,५। वा. ३,२८,३१,३४,३६। काण्व. ३,३६,३९,४२,४४। [ महि त्रीणामवोऽस्तु०
ऋ. १०,१८५,१: सा. १९२। सोमानँ स्वरणं०। ऋ. १,१८,१; सा. १३९,१४६३; तै. सं. १,५,६,४; तै. अ
१०,१,११; नि ६,१० । कदा चन स्तरीरसि०। ऋ. ८,५१,७; सा. ३००; तै. सं. १,४,२२,१; १,५,६,४

पशुपा द्यौरधिपतिरिम एवैनं लोकाः पान्त्यग्निं समिन्धेऽनुसंतत्यै प्राची दिगग्निर्देवतेत्येता एव स देवता ऋत्वा पराभवति य एनमेताभ्यो दिग्भ्योऽभिदासति ज्योतिषे तन्तव आशिषमाशास इत्याशिषमेवाशास्ते योऽस्य प्रियः पुत्रस्स्यात् तस्य नाम गृह्णीयात् तस्मिन्नेव ता आशिषो दधाति ॥ ९ ॥ ३५--३७

अहर्वावासीन्न रात्री सा यमी भ्रातरं मृतं नामृष्यत तां यदपृच्छन्यमि कर्हि ते भ्रातामृतेत्यद्येत्येवाब्रवीत् ते देवा अब्रुवन्नन्तर्दधामेदं रात्रीं करवामेति ते रात्रीमकुर्वँस्ते रात्र्यां भूतायां पशून्नापश्यन् सावेन्न वै पश्यन्तीति सा न व्यौच्छदरेत्कलस्यत पशुषु तान् देवा इच्छन्तः पल्यायन्त ताँश्छन्दोभिरन्वपश्यँस्तस्माच्छन्दोभिर्नक्तमग्निरुपस्थेयः पशूनामनुख्यात्यै नास्मात् पशवस्तिरोभवन्ति य एवं वेद सावेदनु वा अख्यन्निति सा व्यौच्छत् ते देवा अब्रुवन्नमा वै नो वस्वभूदिति सामावस्यामा ह वा अस्य वसु भवति विन्दतेऽन्यस्य वसु नास्यान्यो वसु विन्दते य एवं विद्वानग्निमुपतिष्ठते॥ देवा वा अह्नो रक्षाँसि निरघ्नँस्तानि रात्रीं प्राविशँस्तां देवा न व्येतुमधृष्णुवँस्त इन्द्रमब्रुवँस्त्वं वै न ओजिष्ठोऽसि त्वामिमां वीहीति स्तुत मेत्यब्रवीन्नास्तुतो वीर्यं कर्तुमर्हामीति तेऽब्रुवन्नेष तेऽग्निर्नेदिष्ठँ स त्वा स्तौत्विति तमग्निरस्तौत् स स्तुतस्सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षाँस्यतरदिन्द्रो यजमानो यदग्निमुपतिष्ठते सर्वा एव मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षाँसि तरति नास्य नक्तं रक्षाँसीशते य एवं वेद त्वष्टा वै भूत्वा प्रजापतिः प्रजा असृजत त्वष्टा यजमानस्स यद्वाचावदत् तदभवद्यद्वै वाचा वदति तद्भवति यद्यदेव वाचा वदति तत् तद्भवति तत् तत् सृजते ॥१०॥ ३८-३९

धनं मे शँस्य पाहि तन्मे गोपायेति प्रवत्स्यन्नाहवनीयमुपतिष्ठेत धनस्य वा एष गोप्ता तदेवास्मै परिददाति मम नाम प्रथमं जातवेद इत्यग्निर्नैवैतत्तन्वं विपरिधत्ते यथान्ते मतोऽग्निहोत्रं हुतं यथेष्टमेवमस्यापि प्रवसतो भवति प्रजां मे नर्य पाहि तां मे गोपायेति प्रजाया वा एष गोप्ता तामेवास्मै परिददातीमान्मे मित्रावरुणौ गृहान् गोपायतं युवमिति मित्रेण च वा इमाः प्रजा गुप्ताः क्रूरेण च मित्रं मित्रः क्रूरं वरुण इयं पूषैताभ्य एव देवताभ्यो गृहान् परिददात्यन्नं मे पुरीष्य पाहि तन्मे गोपायेत्यन्नस्य वा एष गोप्ता तदेवास्मै परिददाति धनं मे शँस्याजुगुपस्तन्मे पुनर्देहीति धनमेव गुप्तं पुनरात्मन् धत्तेऽग्ने सहस्राक्ष शतमूर्धञ्छततेज इत्येतैर्वा एतौ व्यृध्येते विप्रवसन्तौ प्राणेरपानैस्तेजोभिर्वीर्यैर्यदेतैरुपतिष्ठते तैरेव समृध्येते मम च नाम तव च जातवेद इत्यग्निर्नैवैतत् तन्वं यथायथं कुरुते प्रजां मे नर्याजुगुपस्तां मे पुनर्देहीति प्रजामेव गुप्तां पुनरात्मन् धत्तेऽग्ने गृहपत इति

---

[१०] मै. १,५,१२ (५५)। कपि. ५,६।

[११] मै. १,५,१४ (६३--६४, ६६-७१)। कपि. ६,१। ता. ३,३७, १७,७६। काण्व. ३,४६. १८,७१।

नार्तिमार्च्छतोऽग्निश्च यजमानश्च न श्रेषं नीतोऽन्नं मे पुरीष्याजुगुपस्तन्मे पुनर्देहीत्यन्नमेव गुप्तं
पुनरात्मन् धत्ते ॥ ११ ॥ ४०

प्र वेधसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे ।
यतो भयमभयं तन्नो अस्त्वव देवानां यजेहीड्यानि ॥ ४१
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥ ४२
उदग्ने तव तद् घृतादर्ची रोचत आहुतम् । निँसानं जुह्वो मुखे ॥ ४३
उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः ॥ ४४
प्रजा अग्ने संवासयाशाश्च पशुभिस्सह । राष्ट्राण्यस्मा आधेहि यान्यासन् सवितुस्सवे ॥ ४५
सँ वस्सृजामि हृदयँ सँसृष्टं मनो अस्तु वः ।
सँसृष्टास्तन्वस्सन्तु वस्सँसृष्टः प्राणो अस्तु वः ॥ ४६
सं या वः प्रियास्तन्वस्संप्रिया हृदयानि वः ।
आत्मा वो अस्तु संप्रियस्संप्रियास्तन्वो मम ॥ ४७
यो अश्वत्थश्शमीगर्भ आरुरोह त्वय्यपि । तं ते गृह्णामि यज्ञियैः केतुभिस्सह ॥ ४८
मयि गृह्णाम्यहमग्रे अग्निं रायस्पोषेण सह वर्चसेह देवाः ।
मयि प्रजां मयि पुष्टिं दधामि मदेम शतहिमास्सुवीराः ॥ ४९
यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याँ आविवेश ।
तमात्मनि परिगृह्णीमहे वयं मैषो अस्मानवहाय परागान्मा वयमेतमवहाय परागाम ॥ ५०
मही विश्पत्नी सदनी ऋतस्यार्वाची एतं धरुणे रयीणाम् ।
अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम् ॥ ५१
उत् समुद्रान्मधुमाँ ऊर्मिरागात् साम्राज्याय प्रतरं दधानः ।
अमी च ये मघवानो वयं चैषमूर्जं मधुमत् संभरेम ॥ ५२
इयत्यग्र आसीरदो देवि प्रथमाना पृथग्यत् ।
देवैर्नुत्ता व्यसर्पो महित्वा अदँहथाश्शर्कराभिस्त्रिविष्टपि ।
अजयो लोकान् प्रदिशश्चतस्रः ॥ ५३

[ १२ ] मै. १,६,१ ( २—४,१०,१२ ) । कपि. ६,२ । वा० ३,१,४; १२,३०; १३,१ । काण्व ३,१,४; १३,३१; १४,१ । [ प्र वेधसे कवये० । ऋ. ५,१५,१; तै. ब्रा. १,२,१,९ । समिधाग्निं दुवस्यत० । ऋ. ८,४४,१; तै. सं. ४,१,३,१; तै. ब्रा. १,२,१,९ । उदग्ने तव तद् घृता० । ऋ. ८,४३,१० । उप त्वा जुह्वो मम० । ऋ. ८,४४,५; सा. १५४२ । मयि गृह्णाम्यहमग्रे अग्निं० । अथर्व. ७,८२,२ । यो नो अग्निः पितरो० । अथर्व. १२,२,३३ ]

उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतस्सधस्थात् ।
आशुं त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥ ५४
यदीदं दिवो यदि वा पृथिव्यास्संबभूव सुकृतो रराणयोः ।
तयोः पृष्ठे सीदतु जातवेदाः प्रजामस्मभ्यं जनयन् रयिं च ॥ ५५
चन्द्रमग्निं चन्द्ररथँ हरिव्रतं वैश्वानरमप्सुषदँ स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥ ५६
यत् पृथिव्या अनामृतँ संबभूव त्वे सचा । तदग्निरग्नये ददत् तस्मिन्नाधीयतामयम् ॥ ५७
यदन्तरिक्षस्य यद्दिवो अनामृतँ संबभूव त्वे सचा ।
तदग्निरग्नये ददत् तस्मिन्नाधीयतामयम् ॥ १२ ॥ ५८
इत एव प्रथमं जज्ञे अग्निरेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ५९
सहाग्ने अग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह ब्रह्मवर्चसेनाजन्यग्निर्होता पूर्वः
पूर्वेभ्यः पवमानः पावकश्शुचिरीड्योऽसुरसि प्रथमजा असुर्नामासुरुच्यसेऽसुरहमसुस्त्वं क्रिमद्यासुरसुं
करदसोरसुं प्रतीतन संजानीध्वं भूर्भुवरङ्गिरसां त्वा देवानां व्रतेनादध आदित्यानां त्वा देवानां
व्रतेनादधे द्यौर्महिम्नासि भूमिर्भूम्ना तस्यास्ते देव्यदित उपस्थेऽन्नादमन्नाद्यायान्नपत्यायादधे ॥ ६०
आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्स्वः ॥ ६१
अग्ने गृहपतेऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्या
मूर्धन् सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥
६२
यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् ।
ताभिस्संभूय संगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥ ६३
सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन वैश्वानर्या समिधा दीदिही न ऊर्ज-
स्वत्या वर्चस्वत्या भास्वत्या रश्मिवत्या ज्योतिष्मत्या ॥ या वाजिन्नग्नेः प्रिया तनूः पशुषु पवमाना
तामावह तया मा जिन्व या वाजिन्नग्नेः प्रिया तनूरप्सु पावका तामावह तया मा जिन्व या

---

[चन्द्रमाग्निं चन्द्ररथँ० । ऋ. ३,३,५]
[१३] मै. १,६,१-२ (६-९,१३—१४,१६,१९,२१—२२)। कपि. ६,२—३ । वा. १३,३४; ३,५—८; ५,२३; १७,६६। काण्व. १४,३६; ३,५—८; ५,२९; १८,६६ । [स गायत्र्या त्रिष्टुभा०...प्रजानन्। ऋ. १०,१६,९; अथर्व. १२,२,८ । आयं गौः पृश्नि० । ऋ. १०,१८९,१; सा. ६३०,१३७६; अथर्व. ६,३१,१; २०,४८,४; तै. सं. १,५,३,१ । यास्ते शिवास्तन्वो० । अथर्व. ९,१,२५]

वाजिन्नग्नेः प्रिया तनूस्सूर्ये शुक्रा शुचिमती तामावह तया मा जिन्वौजसे बलाय त्वोद्यच्छे वृष्णे
शुष्मायायाशस्तितूरसि वृत्रतूरस्मान् पथो ज्यैष्ठ्यान्मा योषम् ॥ ६४-६५

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्ने भवेह ।
विश्वा आशा दीद्यद्विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ ६६

भुवरङ्गिरसां त्वा देवानां व्रतेनादध आदित्यानां त्वा देवानां व्रतेनादधे द्यौर्महासि भूमिर्भूम्ना
तस्यास्ते देव्यदित उपस्थेऽन्नादमन्नाद्यायान्नपत्यायादधे ॥ ६७

अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषो दिवम् ॥ ६८

अग्ने नय मयोभो सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्या
मूर्धन् सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥
६९

यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् ।
ताभिस्संभूय संगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥ ७०

सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन वैश्वानर्या समिधा दीदिही न
ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मिवत्या ज्योतिष्मत्या नाकोऽसि ब्रध्नः प्रतिष्ठा संक्रमणं
भूर्भुवस्स्वरङ्गिरसां त्वा देवानां व्रतेनादध आदित्यानां त्वा देवानां व्रतेनादधे द्यौर्महासि भूमिर्भूम्ना
तस्यास्ते देव्यदित उपस्थेऽन्नादमन्नाद्यायान्नपत्यायादधे ॥ ७१

त्रिंशद्धाम विराजति वाक्पतङ्गा अशिश्रयुः । प्रति वस्तोरह द्युभिः ॥ ७२

अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्या मूर्धन्
सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥ ७३

यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि या पृथिव्याम् ।
ताभिस्संभूय संगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥ ७४

सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन वैश्वानर्या समिधा दीदिही न
ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मिवत्या ज्योतिष्मत्या ॥ ७५

यस्ते अप्सु महिमा यो वनेषु य ओषधीषु पशुष्वाविवेश ।
यत्र यत्र बिभ्रतो जातवेदा अग्ने ततो द्रविणोदा न एहि ॥ ७६

---

[ अस्य प्राणा० ( अन्तश्चरति ) रोचना० । ऋ. १०,१८९,२; सा. १३७७; अथर्व. ६,३१,२; २०,४८,५; तै. सं. १,५,३,१ । त्रिंशद्धाम विराजति० । ऋ. १०,१८९,३; सा. ६३२,१३७८; अथर्व. ६,३१,३; २०,४८,६; तै. सं. १,५,३,१ । यस्ते अप्सु महिमा० । अथर्व. १९,३,२ ( पूर्वार्धः ) । यत्र यत्र बि ( वि ) भृतो० । अथर्व. १९,३,१ ( उत्तरार्धः ) ]

मनुष्वत् त्वा निधीमहि मनुष्वत् समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान् देवयते यज ॥ १३ ॥ ७७

सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि सप्त होत्रा अनुविद्वान् सप्त योनीँरापृणस्वा घृतेन या ते अग्ने पवमाना तनूः पृथिवीमन्वाविवेश याग्नौ या रथन्तरे या गायत्रे छन्दसि या त्रिवृति स्तोमे यान्ने तां त एतदवरुन्धे तस्यै स्वाहा या ते अग्ने पावका तनूरन्तरिक्षमन्वाविवेश या वाते या वामदेव्ये या त्रैष्टुभे छन्दसि या पञ्चदशे स्तोमे या पशुषु तां त एतदवरुन्धे तस्यै स्वाहा या ते अग्ने शुचिस्तनूर्दिवमन्वाविवेश या सूर्ये या बृहति या जागते छन्दसि या सप्तदशे स्तोमे याप्सु तां त एतदवरुन्धे तस्यै स्वाहा ॥ वातः प्राणस्तदयमात्मा पुरीषमसि संप्रियः पशुभिर्यच्छा तोकाय तनयाय शं योः प्रजां मे यच्छ घर्मश्शिरस्तदयमग्निः पुरीषमसि संप्रियः पशुभिस्स्वदितं नः पितुं पच पशून् मे यच्छार्कश्चक्षुस्तदसौ सूर्यः पुरीषमसि संप्रियः पशुभिर्यत् ते शुक्र शुक्रं धाम शुक्रा तनूश्शुक्रं ज्योतिरजस्रं यत् तेऽनाधृष्टं नामानाधृष्यं तेन त्वादधे वर्चो मे यच्छ येऽग्नयो दिवो येऽन्तरिक्षाद्ये पृथिव्यास्समाजग्मुरिषमूर्जं वसानास्तेऽस्मा अग्नये द्रविणानि दत्त्वा तृप्ताः प्रीताः पुनरस्तं परेत ॥ ७८-७९

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥ ८०
येऽग्नयस्समनसस्सचेतस ओषधीष्वप्सु प्रविष्टाः ।
ते सम्राजमभिसंयन्तु सर्व ऊर्जं नो धत्त द्विपदे चतुष्पदे ॥ ८१
अयमग्निश्श्रेष्ठतमोऽयमस्तु यशस्तमः ।
अयँ सहस्रसातमस्सुकृतं योनिमासदत् ततो वरान् वृणीमहे ॥ ८२
निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ ८३
प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाँसि चक्रिरे ॥ १४ ॥ ८४

अदितिर्वै प्रजाकामौदनमपचत् तस्योच्छिष्टमाश्नात् सा गर्भमधत्त तत आदित्या अजायन्त य एष

---

[ मनुष्वत्त्वा निधीमहि० । ऋ. ९,८६,२०; सा. ८२२ ]

[१४] मै. १,६,१,७ ( १९,२४,२९-३२,३४-३८,४४ ) । कपि. ६,३-४ । वा. १७,७९, १३,२५; १४,६,१५-१६, २७; १५,५७; १०,२७; २०,२; ३४,५७ । काण्व. १८,७९; १४,२६; १५,५,१६,३१,७९; [ निषसाद धृतव्रतो० । ऋ. १,२५,१०; तै. सं. १,८,१६,१; तै. ब्रा. १,७,१०,२, २,६,५,१ । प्र नूनं ब्रह्मणस्पति० । ऋ. १,४०,५ ]

ओदनः पच्यत आरम्भणमेवैतत् क्रियत आक्रमणमेव प्रादेशमात्रीस्समिधो भवन्त्येतावान् ह्यात्मा प्रजापतिना संमितोऽग्नेर्वै या यज्ञिया तनूरश्वत्थे तया समगच्छतैषास्य घृत्या तनूर्यद् घृतं यद् घृतेन समिधोऽनक्ति ताभ्यामेवैनं तनूभ्याँ संगमयति निर्मार्गस्यादधात्यपगूर्त्यो वै वीर्यं क्रियते यन्नि-र्मार्गस्यादधात्यपगूर्त्या एव संवत्सरो वै प्रजननमग्निः प्रजनयिता तत् प्रजननं यत् पुरा संवत्सरा-दग्नौ समिध आदधाति प्रजननादेवैनं प्रजनयिता प्रजनयत्यभक्तर्तुर्वै पुरुषो न हि तद्वेद यमृतुम-भिजायते यन्नक्षत्रं यत् समिध आदधाति य एवास्यर्तुर्यन्नक्षत्रं तदाप्नोति य एष ओदनः पच्यते योनिरेवैष क्रियते यत् समिध आधीयन्ते रेतस्तद्धीयते संवत्सरे वै रेतो हितं प्रजायते यत् संवत्सरे पर्येतेऽग्निमाधत्ते प्रजातमेवैनमाधत्ते द्वादशसु रात्रीषु पुराधेयास्ता हि संवत्सरस्य प्रतिमाथो तिसृ-ष्वथो द्वयोरथो पूर्वेद्युराधेयास्त एवाग्निमादधानेनादित्या वा इत उत्तमा अमुं लोकमायँस्ते पथिर-क्षयस्त इयक्षमाणं प्रतिनुदन्त तच्छ्रेषणभागा वा आदित्या यदुच्छिष्टेन समिधोऽनक्ति तेभ्य एव प्रावोचत तेभ्य एव प्रोच्य स्वर्गं लोकमारोहति ।। १५ ।। ८५

आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ।। ८६
कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ।। ८७

अग्निर्होता साध्वीमकरग्न आयूँषि पवसे ।। ८८

अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधद्रयिं मयि पोषम् ।। ८९
यो अश्वस्य दधिक्राव्णो अकारीत् समिद्धे अग्ना उषसो व्युष्टौ ।
अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ।। ९०
महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।
यं पूरुभ्यो दीदिवाँसं नाग्निं ददथुर्मित्रावरुणा ततुरिम् ।। ९१

---

[१६] वा. १९,३८; ३५,१६; ८,३८; २६,६-७; १३,५२; १८,७७ । काण्व. ८,१९-२०; २१,४०; २९,३७-३८; ३५,४८, २८,६,९, १४,५४; २०,४६ । [ आ वो राजानमध्वरस्य० । ऋ. ४,३,१; सा. ६९; तै. सं. १,३, १४,१ । कद्धिष्ण्यासु वृधसानो० । ऋ. ४,३,६ । अग्निर्होता० । ऋ. १,१,५; ३,११,१; ४,१५,१; ५,१,६; ५,९,२; ६,१५,१३; तै. ब्रा. १,३,१४,१; ३,५,१२.१; ३,६,४,१ । साध्वीमक० । ऋ. १०,५३,३; तै. सं. १,३,१४,२ । अग्न आयूँषि पवसे० । ऋ. ९,६६,१९; सा. ६२७, १४६४, १५१८; तै. सं. १,३,१४,७; ४,२९,१; ५,५,१; ६,६,२; तै. ब्रा. २,६,३,४; तै. आ. २,५,१ । अग्ने पवस्व स्वपा० । ऋ. ९,६६,२१ सा. १५२०; तै. सं. १,३,१४,८; ५,५,२; ६,६,२; तै. ब्रा. २,६,३,४; तै. आ. २,५,१ । यो अश्वस्य दधिक्राव्णो० । ऋ. ४,३९,३ । महश्चर्कर्म्यर्वतः क्रतुप्रा० । ऋ. ४,३९,२ ]

ऋतावानं वैश्वानरं वैश्वानरस्य सुमतौ स्याम ॥ ९२
उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये ॥ ९३
तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः ।
वातस्य मेडिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे अर्वा ॥ ९४
अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य । तान्यस्मभ्यं रासते ॥ ९५
त्वामग्ने वसुपतिं वसूनामभि प्रमन्दे अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभिष्याम पृत्सुतीर्मर्त्यानाम् ॥ ९६
त्वं यविष्ठ दाशुषो नॄः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ९७
तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत दूरात् ।
आ भन्दिष्ठस्य सुमतिं चिकिद्धि बृहत् ते अग्ने महि शर्म भद्रम् ॥ ९८
कृष्णा रजाँसि पत्सुतः प्रयाणे जातवेदसः । अग्निर्यद्रोधति क्षमि ॥ ९९
त्वे वसूनि पूर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन् सँ सौभगानि दधिरे पावके ॥ १००
प्र वस्सखायो अग्नये स्तोमं यज्ञं च धृष्णुया । अर्च गाय च वेधसे ॥ १०१
प्र वश्शुक्राय भानवे भरध्वँ हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनूँष्यन्तर्विश्वानि विद्मना जिगाति ॥ १०२
वि ज्योतिषा वि पाजसा ॥ १०३
स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः । उरुक्षयेषु दीद्यत् ॥ १०४
तँ सुप्रतीकँ सुदृशँ स्वञ्चमविद्वाँसो विदुष्टरँ सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान् प्र हव्यमग्निरमृतेषु वोचत् ॥१६॥ १०५

---

[ ऋतावानं वैश्वानरं० । अथर्व. ६,३६,१; आ. मृ. अ. ८ । वैश्वानरस्य सुमतौ० । ऋ. १,९८,१, तै. स. १,५,११,३; नि. ७,२२ । उक्षान्नाय वशान्नाय० । ऋ. ८,४३,११; अथर्व. ३,२१,६, २०,१,३, तै. सं १, ३,१४,७ । तृषु यदन्ना तृषुणा० । ऋ. ४,७,११ । अग्निरीशे वसव्यस्य० । ऋ. ४,५५,८ । त्वामग्ने वसुपतिं० । ऋ. ५,४,१; तै. सं. १.४ ४६,२ । त्वं यविष्ठ दाशुषो० । ऋ. ८,८४,३, सा. ११४६ । तुभ्यं भरन्ति क्षितयो० । ऋ. ५,१,१०, तै. ब्रा. २,४,७,९ । कृष्णा रजाँसि पत्सुतः० । ऋ. ८,४३ ६ । त्वे वसूनि पू(पु०)र्वणीक० । ऋ. ६,५,२; तै. स. १,३,१४,२ । प्र वस्सखायो अग्नये० । ऋ. ६,१६,२२ । प्र वश्शुक्राय भानवे० । ऋ. ७,४,१; तै. ब्रा २,८,२.३ । वि ज्योतिषा० । ऋ. ५,२,९; अथर्व. ८,३,२४ तै. सं. १,२,१४,७; नि. ४,१८ । वि पाजसा० । ऋ. ३,१५,१; तै. सं. ४,१,५,१ । स त्वमग्ने प्रतीकेन० । ऋ. १०,११८,८; तै. सं. २,५,१२,५ । तँ सुप्रतीकँ सुदृशँ० । ऋ. ६,१५,१०, तै. सं. २,५,१२,५ ]

युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यस्सदः । १०६
उत नो देव देवाँ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥ १०७
त्वँ ह यद्यविष्ठ्य सहसस्सून आहुत । ऋतावा यज्ञियो भुवः ॥ १०८
अयमग्निस्सहस्रिणः ॥ १०९
तं नेमिमृभवो यथा नमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिरः ॥ ११०
कस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ॥ १११
कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ॥ ११२
मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्न्याः ॥ ११३
मा नस्समस्य दूढ्यः परिद्वेषसो अँहतिः । ऊर्मिर्न नावमा वधीत् ॥ ११४
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दय ॥ ११५
कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥ ११६
मा नो अस्मिन् महाधने परावर्ग्भारभृद्यथा । संवर्गँ सं रयिं जय ॥ ११७
परस्या अधि संवत एह्यू षु ब्रवाणि ते ॥ १७ ॥ ११८
[५५९

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामालोम्भी नाम सप्तमं स्थानकं संपूर्णम् ॥ ७ ॥



अथाष्टमं स्थानकम् ।

## दिशस्थानकम् ।

दिशो वै नाकल्पन्त न प्राजायन्त तत एतामग्नये प्राचीं दिशमरोचयन्यत् कृत्तिका यत् कृत्तिका स्वग्निमाधत्ते प्राच्यामेवैनं दिश्याधत्त एष वावैकः प्राङवस्यति य आहिताग्निः प्रत्यङ्ङ्क्षोऽन्य आग्नेय

[१७] वा. १३,३७; ३३.४; १५,२१, ११,७१; २६,१३ । काण्व. १४,३९; ३२,४; १६,४२; १२,७१ । [ युक्ष्वा हि देवहूतमाँ० । ऋ. ८,७५,१; तै सं. २,६,११,१ । उत नो देव देवाँ० । ऋ ८ ७५,२; तै. सं. २,६,११,१ त्वँ ह यद्यविष्ठ्य० । ऋ. ८,७५,३; तै. सं. २,६,११,१ । अयमग्निस्सहस्रिणः० । ऋ. ८,७५,४; तै. सं २,६,११,१; ४,४,४,१ । तं नेमिमृभवो यथा० । ऋ. ८ ७५.५; तै. सं. २,६,११,१ । क(त) स्मै नूनमभिद्यवे० । ऋ. ८.७५ ६; तै. सं. २,६,११,२ । कमु ष्विदस्य सेनयाग्ने० । ऋ. ८,७५,७; तै. सं. २,६ ११,२ । मा नो देवानां विशः० । ऋ. ८,७५,८; तै. सं. २,६,११,२ । मा नस्समस्य दूढ्यः० । ऋ. ८ ७५,९; तै. सं. २,६,११,२; नि. ५.२३ । नमस्ते अग्न ओजसे० । ऋ. ८,७५,१०; सा. ११,१६४८; तै. सं २,६,११,२ । कुवित्सु नो गइ ( गवि० ) ष्टये० । ऋ. ८,७५,११; सा. १६४९; तै. सं. २ ६.११,३ । मा नो अस्मिन् महाधने० । ऋ ८,७५,१२; सा. १६५०; तै. सं. २,६,११,३ । परस्या अधि संवत० । ऋ. ८ ७५,१५; तै- सं. २,६,११,३; ४,१,९,२ । एह्यू षु ब्रवाणि ते० । ऋ. ६,१६.१६; सा. ७,७०५ ]

[ १ ] मै. १.६,९ ( ४९ )। कपि. ६,६ । तै. ब्रा. १,१,२ । मा. श्रौ. १,५,१ ।

मेतन्नक्षत्रं यत् कृत्तिका यत् कृत्तिकास्वग्निमाधत्ते स्व एवैनं नक्षत्र आधत्ते प्रजापतेर्वा एतच्छिरो यत् कृत्तिका यत् कृत्तिकास्वग्निमाधत्ते शीर्षण्यो मुख्यो भवति सप्त वै कृत्तिकास्सप्त शीर्षण्याः प्राणाः प्राणा इन्द्रियाणि प्राणानेवेन्द्रियाण्याप्नोति पुष्टिमावद्भूयिष्ठमेकं नक्षत्रं पुष्टिमेव प्रजायाः पशूनां गच्छति ।। रोहिण्यामाधेयो रोहिण्यां वा एतं देवा आदधत तया रोहमरोहँस्तद्रोहिण्या रोहिणीत्वं रोहिण्यां वा एतं प्रजापतिराधत्त तया रोहमरोहत् तद्रोहिण्या रोहिणीत्वमेष वै मनुष्यस्य स्वर्गो लोको यदस्मिंल्लोके वसीयान् भवत्यृद्ध्या एव रोहिण्यामाधेयः कालकाञ्जा वै नामासुरा आसँस्त इष्टका अचिन्वत तदिन्द्र इष्टकामप्युपाधत्त तेषां मिथुनौ दिवमाक्रमेतां ततस्तामावृहत् ते ऽवाकीर्यन्त ता एतौ दिव्यौ श्वानौ यो व्यवृह्यत सोऽयमूर्णवाभिस्स्वैरान्त्रैस्संततिँसत्योजो वात्रैषां तद्वीर्यमाधत्तौजो वीर्यं भ्रातृव्यस्याधत्ते यच्चित्रायामग्निमाधत्ते तदेतदैन्द्रं नक्षत्रमभिभूतिमत् पूर्वासु फल्गुनीष्वादधीत यः कामयेत भगी स्यामिति भगस्य वा एतन्नक्षत्रं भगी भवत्युत्तरास्वादधीत यः कामयेत दानकामा मे प्रजास्स्युरित्यर्यम्णो वा एतन्नक्षत्रमेषोऽर्यमा यो ददाति दानमिमाः प्रजा उपजीवन्ति दानकामा अस्मै भवन्ति राजन्यस्यादध्यात् स हि दानमुपजीवति वसन्ता ब्राह्मणेनाधेयो वसन्तो वै ब्राह्मणस्यर्तुस्स्व एवैनमृता आधत्ते तेजो ब्रह्मवर्चसमुपाधत्ते ग्रीष्मे राजन्येनाधेयो ग्रीष्मो वै राजन्यस्यर्तुस्स्व एवैनमृता आधत्त ओजो वीर्यमुपाधत्ते शरदि वैश्येनाधेयश्शरद्वै वैश्यस्यर्तुस्स्व एवैनमृता आधत्त ऊर्जं पशूनुपाधत्ते ।। सोमेन यजा इति वा अग्निमाधत्ते यस्मिन्नेव कस्मिंश्चर्ता आदधीत सोमेन यक्ष्यमाण एतद्व्यवर्धयत् सोमेन यजते फल्गुनीपूर्णमास आधेय एतद्वा ऋतूनां मुखमृतुमुख एवैनमाधत्ते शिशिर आधेयश्शिशिरं वा अग्नेर्जन्म प्रजातमेवैनमाधत्ते सर्वासु दिक्ष्वृध्नवानीति वा अग्निमाधत्ते सर्वासु दिक्ष्वग्निश्शिशिरे सर्वास्वेव दिक्ष्वृध्नोति यश्शिशिरेऽग्निमाधत्ते पूर्णमासे वामावस्यायां वादधीतैतद्वै पुण्याहं पुण्याह एवैनमाधत्ते तस्मादिष्टया वाग्रायणेन वा पशुना वा सोमेन वा पूर्णमासे वामावस्यायां वा यजेतैष वै यज्ञो यज्ञमेवैतत् प्रति यज्ञमालभते ।।१।। १-२

यद्वा इमे व्यैतां यदमुष्यायज्ञियमासीत् तदिमामभ्युसृज्यतोषा यदूषा भवन्त्यनयोरेवैनं यज्ञिय आधत्ते प्राजापत्या वा ऊषाश्श्वश्वो भूयाँसो भवन्ति प्रजननायैवैते पशूनां वा एतत् प्रियं धाम यदूषा यदूषा भवन्ति पशूनामेव प्रियं धामोपाप्नोत्यलेलेद्वा इयं पृथिवी सान्निभेदग्निर्मातिधक्ष्यतीत्यबिभेदग्निर्हरो मे विनेष्यतीत्यार्द्रेव हीयमासीत् तां देवाश्शर्कराभिरदृँहँस्तेजोऽग्ना अदधुर्यच्छर्करा भवन्तीमामेव दृँहति तेजोऽग्नौ दधात्यभिमृता वा इयं वृत्रेण वम्रियस्त्वै तद्विदुर्यत्रास्या जीवं यज्ञियं यद्वल्मीकवपा भवन्त्यस्या एवैनं जीवे यज्ञिय आधत्त आपो वा इदमासन् सलिलमेव स प्रजापति-

---

[ २ ] मै. १,६,३, (३९) । कपि. ६,७।

वराहो भूत्वोपन्युमज्जत् तस्य यावन्मुखमासीत् तावतीं मृदमुदहरत् सेयमभवद्यद्वराहविहतं भवत्य-
स्यामेवैनं प्रत्यक्षमाधत्ते वराहो वा अस्यामन्नं पश्यति तस्मा इयं विजिहीते यद्वराहविहतं भवति तदे-
वान्नमवरुन्द्धे यत् तदादत्त तददितियदप्रथत तत् पृथिवी यदभवत् तद्भूमिर्यद्वराहविहतं भवति प्रथत
एवं प्रजया पशुभिर्नाना वै पशूनामन्नान्यन्यद्गोरन्नमन्यदश्वस्यान्यदव्या अन्यदजाया अन्यत् पुरुष
स्यापोऽन्नं यदप उपसृजति यावदेवान्नं तदवरुन्द्धे पञ्चैते संभाराः पञ्च वै पुरुषे वीर्याणि करोत्य-
नया वीर्यं करोत्यनया करोत्यनेन यावदेव वीर्यं तदाप्नोति तत् स्पृणोति पञ्चैते संभाराः पाङ्क्तो
यज्ञो यज्ञमेवावरुन्द्धे ॥ न वा ऋते ऊर्जोऽन्नं धिनोत्यूर्गुदुम्बरो यदौदुम्बराणि भवन्त्यन्न एवोर्जं
दधाति शमीमयानि भवन्ति मिथुनत्वायाग्निं वै सृष्टं प्रजापतिस्तं शम्याग्रे समैन्द्ध यच्छमीमयानि
भवन्ति स्वयैवैनं समिधा समिन्द्धेऽश्वो वै भूत्वाग्निर्देवेभ्योऽपाक्रामत् स यत्रातिष्ठत् तदश्वत्थस्सम
भवत् तदश्वत्थस्याश्वत्थत्वं यदाश्वत्थानि भवन्ति यदेवास्य तत्र न्युक्तं तत् तैस्संभरत्यग्निर्वै मनुष्येर्दे-
वेभ्योऽपाक्रामत् तं देवा अमन्यन्तायं वावेदं भविष्यतीति तस्य मरुतस्स्तनयित्नुना हृदयमाच्छिन्दन
सा दिव्याशनिरभवद्यद्वृक्षस्याशनिहतस्य भवति यदेवास्य तत्र न्युक्तं तत् तैस्संभरति पर्णमयानि
पञ्चथानि भवन्ति पाङ्क्तत्वाय ॥ २ ॥ ४-५

अष्टासु प्रक्रमेषु ब्राह्मणेनाधेयोऽष्टाक्षरा गायत्री गायत्रच्छन्दा ब्राह्मणस्स्वस्यैवैनं छन्दसः प्रात्ये
नस्य आधत्ते यथा पिता पुत्रं जिन्वत्येवमेवैनं स्वं छन्दो जिन्वत्येकादशसु प्रक्रमेषु राजन्येनाधेय
एकादशाक्षरा त्रिष्टुप् त्रिष्टुप् छन्दा राजन्यस्स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते यथा पिता पुत्रं
जिन्वत्येवमेनं स्वं छन्दो जिन्वति द्वादशसु प्रक्रमेषु वैश्येनाधेयो द्वादशाक्षरा जगती जगच्छन्दा
वैश्यस्स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते यथा पिता पुत्रं जिन्वत्येवमेनं स्वं छन्दो जिन्वत्यपरि-
मितमवरुणधा इति वा अग्निमाधत्तेऽपरिमित आधेयोऽपरिमितस्यावरुद्ध्यै यावति चक्षुषा मन्येत
तावत्यादधीत सत्यं वै चक्षुस्सत्य एवैनमाधत्ते पूर्वाह्ण आधेय एतद्वै पुण्याहं पुण्याह एवैनमाधत्ते
व्युष्टायां पुरा सूर्यस्योदेतोराधेय एतस्मिन् वै लोके प्रजापतिः प्रजा असृजत ताः प्राजायन्त प्रजनना
यैवमाधेय आग्नेयी वै रात्र्यैन्द्रमहर्यदुदिते सूर्य आदधीताग्नेयाद्वर्णादियाद्यदनुदित ऐन्द्रादनुदितेऽप
आधेय उदिते पूर्व उभा एवेन्द्राग्न्योर्वर्गा आप्नोत्यसुर्या वै रात्री वर्णेन शुक्रियमहश्शुक्रिय आधत्ते
य उदिते सूर्य आधत्ते नक्तं वा अनुदितेन दिवोदितेन दिवाधत्ते य उदिते सूर्य आधत्ते ॥ न वै
विदुरिव मनुष्या नक्षत्रं मीमांसन्त इव ह्युदितेन वाव पुण्याहं पुण्याह आधत्ते य उदिते सूर्य आधत्ते
सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि सप्त होत्रा अनु विद्वान् सप्त योनीँरा
पृणस्वा घृतेनेति यावतीर्वा अग्नेस्तन्वो यो वा अस्य ता आदधानो वितर्षयति वि ह तृष्यत्येतावतीव

[ ३ ] मै. १,६,१० (५०-५५)। कपि. ६,८। वा. ३,९। काण्व. ३,९-१०।

अग्नेस्तन्वः षोढा सप्त सप्त ता एवास्य प्रीणाति न वितृष्यति पूर्णया स्रुचा मनसा प्रजापतये जुहोति पूर्णः प्रजापतिः प्रजापतिमेवाप्नोति ॥ ३ ॥  ६—७

आङ्गिरसां त्वा देवानां व्रतेनादध इति ब्राह्मणेनाधेयो ये वै देवानामङ्गिरसस्ते ब्राह्मणस्य प्रत्येनसोऽग्निर्वायुर्वाग्बृहस्पतिस्ततो बन्धुरस्य यज्ञस्तत आयनो यतो बन्धुरेवास्य यज्ञो यत आयनस्तत एनं प्रतीच्छतीन्द्रस्य त्वा मरुत्वतो व्रतेनादध इति राजन्येनाधेयो ये वै देवानां राजानस्ते राजन्यस्य प्रत्येनस इन्द्रो वरुणो धाता त्वष्टा ततो बन्धुरस्य यज्ञस्तत आयनो यतो बन्धुरेवास्य यज्ञो यत आयनस्तत एनं प्रतीच्छति मनोस्त्वा ग्रामण्यो व्रतेनादध इति वैश्येनाधेयो मरुतो वै देवानां विशस्ते वैश्यस्य प्रत्येनसस्ततो बन्धुरस्य यज्ञस्तत आयनो यतो बन्धुरेवास्य यज्ञो यत आयनस्तत एनं प्रतीच्छतीडा वै मना आसीत् सासुरानग्निमादधानानगच्छत् त आहवनीयमग्र आदधताथ गार्हपत्यमथौदनपचनं तानब्रवीदाप्त्वा श्रियं प्रत्यवारुक्षन् पुण्या भविष्यन्ति परा तु भविष्यन्तीति सा देवानग्निमादधानानगच्छत् त ओदनपचनमग्र आदधताथ गार्हपत्यमथाहवनीयं तानब्रवीदापञ्छ्रियं वीमं लोकमच्छिन्दन् पुण्या भविष्यन्ति प्रजा त्वेषां न भविष्यतीति सैऽव मनोरादधात् साब्रवीत् तथा तेऽग्निमाधास्यामि यथा मनुष्या देवानुप प्रजनिष्यन्त इति सा गार्हपत्यमग्र आदधादथौदनपचनमथाहवनीयमनयोर्लोकयोर्व्यवगृहीत्यै ॥ ततो मनुष्या देवानुप प्राजायन्त प्रजननायैवमाधेयोऽथो अनयोरेव लोकयोर्व्यवगृहीत्यै प्रजापतिर्वै यदग्रे व्याहरत् स सत्यमेव व्याहरदेतद्वाव स त्रिर्व्याहरद्भूर्भुवस्स्वरित्येतद्वै वाचस्सत्यं यदेव वाचस्सत्यं तेनाधत्ते भूष्णु वै सत्यं य एवं विद्वानेतेनाधत्ते भवत्येवायं वा अपरो भूरसौ पूर्वो भुवो भूर्भुवरित्यपर आधेयस्सत्यस्यानुगत्यै भूर्भुवस्स्वरिति पूर्वस्तत् पुरस्सर्वमाप्यते वाग्वै देवतां निरवदत निरुदितदेवता हि वै वागथ तत् सर्वं न सत्यं यद्वाचा शपते यत् प्राशूर्भवति यां वै तां वाग्देवतां निरवदतैषा वाव सा यदेता व्याहृतय एतद्वै वाचस्सदेवं यदेव वाचस्सदेवं तेनाधत्तेऽयं वा अपरो भूरसौ पूर्वो भुवो भूर्भुवरित्यपर आधेय उभा एवैनौ सहाधत्त एष ह्येतस्य योनिरेतस्माद्ध्येषोऽधिसृज्यतेऽयं वावाग्निर्योऽयमन्तरग्नि योऽसौ पूर्वोऽसा आदित्य एष योऽसा अमुष्मादधिसृज्यते यद् द्वितीयं ज्योतिस्तदेव तद्भूर्भुवस्स्वरिति पूर्व आधेय उभा एवैनौ सहाधत्त एष ह्येतस्य योनिरेतस्माद्ध्येषोऽधि प्राह्रियते योऽसा अमुष्मादधि प्राह्रियते यत् तृतीयं ज्योतिस्तदेव तेनाप्यतेऽसौ वावैष आदित्यः प्रत्यङ्ङाधीयते तस्मादेष सर्वाः प्रजाः प्रत्यङ्ङग्निना वै देवा अन्नमदन्ति प्रत्यग्वा अन्नमद्यते यत् प्रत्यङ्ङाधीयतेऽन्नाद्याय प्राचो वै देवान् प्रजापतिरसृजतापाचोऽसुरान् सोऽसुरान् ब्रह्मणापानुदताग्निर्ब्रह्म यत् प्रत्यङ्ङाधीयते भ्रातृव्यस्यापनुत्त्या इममर्धमग्निना परियन्तीममर्धमुपचरन्ति देवानामेवार्धं परियन्ति देवानामर्धमुपचरन्तीमां

[४] मै. १,३,१३ (५८)। कपि ६,९। तै. बा १,१४।

दिशमभ्यावृत्य जुहोत्येतस्यां वै देवा दिशि यस्यामेव देवा दिशि तां दिशमभ्यावृत्य जुहोति ॥ ४ ॥ ८-९

अग्निर्वै प्राङुदेतुं नाकामयत तमश्वेनोदवहन्यत् पूर्वमुदवहँस्तत् पूर्ववाहः पूर्ववाट्त्वमग्निर्वै प्रजापतिस्तस्याश्वश्चक्षुर्यदश्वं पुरो नयन्ति स्वमेव तच्चक्षुः पश्यन्ननूदेति स्तोमपुरोगा वै देवा एभ्यो लोकेभ्योऽसुरान् प्राणुदन्त स्तोमादश्वस्संभूतो यदश्वं पुरो नयन्ति स्तोमपुरोगा एवैभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदतेऽग्निं वै जातं रक्षाँस्यघ्नँ स्तान्येनमभिसमलभन्त तान्यश्वेनापाहत यदश्वं पुरो नयन्ति रक्षसामपहत्या अश्वो वै भूत्वा यज्ञो मनुष्यानत्यक्रामत् तमेतदतिक्रामन्तं मन्यन्ते यदश्वमभ्यावर्तयन्ति यज्ञमेवैतद्यजमानमभ्यावर्तयन्त्यग्निर्वा अश्वं प्राविशत् कृष्णो भूत्वा सोऽत्रागच्छद्यत्रैष मृगशफ इव तस्मादाक्रम्यो यदश्वमाक्रमयति तमेवावरुन्द्धे वास्तु वा एतदथो अन्तर्हितमिव तस्मान्नाक्रम्य इन्द्रो वै यतीन् सालावृकेयेभ्यः प्रायच्छत् तेषामद्यमानानाँ स्यूमरश्मिर्ऋषिरश्वं प्राविशत् तस्मादश्वस्त्वँ शकृदुपजिघ्रति कश्चिदृषिं चाग्निं च न निरास्था३मित्यग्निं वै विभाजं नाशक्नुवँस्तमश्वेन व्यभजन्यदश्वं पुरो नयन्त्यग्नेरेव विभक्त्यै॥ यौ वाव ता ऋषिश्चाग्निश्च ते एवैनं तद्देवते विभजतोऽश्वो देयः प्राजापत्यो वा अश्वो यदश्वं ददाति सर्वा एवास्य तेन देवता अभीष्टाः प्रीता भवन्ति परमा वा एषा दक्षिणा यदश्वो यदश्वं ददाति पर्याप्त्यै वही देयो वहिनो वै पशवो भुञ्जन्ति यज्ञोऽग्नेर्वही भुनक्त्येनमग्निराहितो हिरण्यं देयँ सतेजस्त्वाय शतमानं वीरं वा एष जनयति योऽग्निमाधत्ते शतदायो वीरस्त्रिँशन्माने पूर्वयोर्हविषोर्देये चत्वारिँशन्मानमुत्तमेऽभिक्रान्त्या अभिक्रान्तेन हि यज्ञस्यर्ध्नोत्यात्मा वै हविः पवित्रँ हिरण्यँ सर्वेष्वेवैनँ हविष्षु पुनात्यग्निर्वै वरुणानीरभ्यकामयत तस्य तेजः परापतत्ताद्धिरण्यमभवद्यद्धिरण्यमुपास्यति स्वेनैवैनं तेजसा समर्धयति नोपास्य पुनरादधीत ग्रसितमस्य निष्खिदति क्षोधुको भवत्यग्निं वै वरुणानीरभ्यकामयन्त तास्समभवदापो वरुणानीर्यदग्ने रेतोऽसिच्यत तद्धरितमभवद्यदपां तद्रजतं तस्माद्धरितरजताभ्यामुभयाहिरण्यो यद्गर्भस्य शमलं तद्दुर्वर्णं तस्माद्ब्राह्मणेन दुर्वर्णं न भर्तव्यँ शमलँ हि तद्धिरण्यमुपास्यति स्वेनैवैनं रेतसा समर्धयति ॥ ५ ॥ १०--११

सह वा इमा अग्नेस्तन्व इयमोदनपचनोऽन्तरिक्षं गार्हपत्यो द्यौराहवनीयो यो वा अस्यैता अव्याकृत्याधत्ते न पाप्मना व्यावर्तते घातकोऽस्य रुद्रः पशून् भवति यदेतैरुपतिष्ठते ता एवास्यैतद्व्याकृत्य यथायोनि प्रतिष्ठाप्याधत्ते वि पाप्मना वर्ततेऽघातकोऽस्य रुद्रः पशून् भवति द्यौर्मह्नासीति महानग्निमाधाय भवति भूमिर्भूम्नेति श्वश्वो भूयान् भवति तस्यास्ते देव्यदित उपस्थेऽन्नादमन्नाद्यायान्नपत्यायादध इत्यन्नादमेवैनमन्नाद्यायान्नपत्यायाधत्तेऽन्नाद्यायाग्निमाधत्तेऽत्त्यन्नं य एवं विद्वानग्निमाधत्ते॥

---

[ ५ ] मै. १,६,४ (४०)। कपि ७,१। तै. ब्रा. १,१,५।

[ ६ ] कपि ७,२।

अथैतास्सर्पराज्ञ्या ऋच इयं वै सर्पराज्ञ्यन्नँ सार्पराज्ञमन्नाद्यायाग्निमाधत्तेऽत्त्यन्नं य एवं विद्वानग्निमाधत्ते वसन्तो वा इमाः प्रजा ग्रीष्मायोपरुणाद्धि ग्रीष्मो वर्षाभ्यो वर्षाश्शरदे शरद्धेमन्ताय हेमन्तश्शिशिराय शिशिरमग्नयेऽग्निर्यजमानायान्नाद्यायाग्निमाधत्तेऽत्त्यन्नं य एवं विद्वानग्निमाधत्ते ॥ ६ ॥ १२-१३

निरुप्तँ हविरुपसन्नमप्रोक्षितं भवत्यथ मध्याधिदेवनमवोक्ष्याक्षान्न्युप्य जुहोति निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुरिति त्रिर्वै विराड् व्यक्रमत गार्हपत्यमाहवनीयं मध्याधिदेवनं विराज एवैनं विक्रान्तमनुविक्रमयति प्रत्येव तिष्ठति गच्छति प्रतिष्ठां धर्मधृत्या जुहोति धर्मधृतमेवैनं करोति सवितारं धारयितारं गां घ्नन्ति तां विदीव्यन्ते तां सभासद्भ्य उपहरन्ति तेनास्य सोऽभीष्टः प्रीतो भवति प्र नूनं ब्रह्मणस्पतिरित्यामन्त्रणे जुहोति मन्त्रवत्या वैश्वदेव्या मन्त्रमेवास्मै गृह्णाति तमभिसमेत्य मन्त्रयन्ते ॥ सह वै देवाश्च मनुष्याश्चौदनपचन आसँस्ते मनुष्या देवानत्यचरँस्तेभ्यो देवा अन्नं प्रत्युह्य गार्हपत्यमभ्युदक्रामँस्ताँस्तस्मिन्नन्वागच्छँस्ते मनुष्या एव देवानत्यचरँस्तेभ्यो देवाः पशून् प्रत्युह्याहवनीयमभ्युदक्रामँस्ताँस्तस्मिन्नन्वागच्छँस्ते मनुष्या एव देवानत्यचरँस्तेभ्यो देवा यज्ञं प्रत्युह्य सभामभ्युदक्रामँस्ताँस्तस्यामन्वागच्छँस्ते मनुष्या एव देवानत्यचरँस्तेभ्यो देवा विराजं प्रत्युह्यामन्त्रणमभ्युदक्रामँस्ताँस्ततो नानुप्राच्यवन्तैते वै देवानाँ संक्रमाश्श्रेयाँसँ श्रेयाँसं लोकमभ्युत्क्रामति य एवं वेदैतद्वै देवानाँ सत्यमनभिजितं यदामन्त्रणं तस्मादामन्त्रणँ सु प्रातर्गच्छेत् सत्यमेव गच्छति तस्मादामन्त्रणं नाहुत एयात्तस्मादामन्त्रणे नानृतं वदेद्वह्विर्वै नामौदनपचन आस वाह्निर्जायते य एवं वेद गृहा गार्हपत्यो गृहवान् भवति य एवं वेद धिष्ण्या आहवनीय उपैनं यज्ञो नमति य एवं वेद सप्रथा मध्याधिदेवनं प्रथते प्रजया पशुभिर्य एवं वेदानाप्त आमन्त्रणं नैनमाप्नोति य ईप्सति य एवं वेद ॥ ७ ॥ १४-१५

अजो देयस्सयोनित्वाय वासो देयँ सर्वदेवत्यं वासो देवतानामभीष्ट्यै वर्धमाना दक्षिणा देया दक्षिणाया वै वृद्धिं यजमानोऽनुवर्धत उपाहरन्ती दक्षिणा देया धेनुर्वा उपाहरन्त्युप ह्येषा पय आहरति नास्याग्निमादधानस्य कनीयो भवति धेनुर्होत्रे देयाशिषामवरुद्ध्या अनड्वानध्वर्यवे वह्नयेव यज्ञस्यावरुन्द्धे रथो देयो देवरथो वा एष प्रयुज्यते यद्यज्ञो मनुष्यरथेनैव देवरथमभ्यातिष्ठति मिथुनौ गावौ देयौ मिथुनस्यावरुद्ध्यै षड् देयाः षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति

---

[ ७ ] मै. १,६,११ ( ५६ )। कपि. ७,४। वा. १०,२७; २०,२. ३४,५७। काण्व. ११,३७; २१,९३; ३३,४५। [ निषसाद धृतव्रतो० । ऋ. १,२५,१०, तै सं. १,८,१६,१, तै. ब्रा. १,७,१०,२; २,६,५,१, । प्र नूनं ब्रह्मणस्पतिः० । ऋ. १,४०,५ ]

[ ८ ] कपि. ७,२—३ ।

द्वादश देया द्वादश मासास्संवत्सरस्संवत्सरस्याप्त्यै यदि द्वादशातिप्रच्यवेत चतुर्विँशतिं दद्याच्चतु-र्विँशत्यक्षरा गायत्री गायत्री यज्ञमुखं गायत्रीमेव यज्ञमुखं नातिक्रामति त्रीणि हवीँषि भवन्ति त्रय इमे लोका इमानेव लोकानाप्नोति त्रिर्विराड् व्यक्रमत विराज एवैनं विक्रान्तमनु विक्रमयति यत् पवमानं पुनात्येवैनं तेन यत् पावकमन्नं वै पावकमन्नमेवास्मै तेन प्रयच्छति यच्छुचये शुचिमेवैनं मेध्यं यज्ञियं तेन करोति पशुमानसानि प्रजावानसानि तेजस्व्यसानीति वा अग्निमाधत्ते प्राणो वै पवमानः प्राणादधि पशवः प्रजायन्ते यदग्नये पवमानाय पशूनेवास्मै तेन प्रजनयत्यापो वै पावका अद्भ्यः प्रजाः प्रजायन्ते यदग्नये पावकाय प्रजामेवास्मै तेन प्रजनयत्यसौ वा आदित्यश्शुचिरेष तेजसः प्रदाता यदग्नये शुचयेऽसा एवास्मा आदित्यस्तेजः प्रयच्छति देवाश्च वा असुराश्च संयत्ता आसन् सोऽग्निर्विजयमुपयत्सु त्रेधा तन्वो विन्यधत्त पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयं यदेतानि हवीँषि निरुप्यन्ते ता एवास्यैतत् तन्वस्संभरति सतनूरेवैतत् सतेजा आधीयत इमे वै लोका एतानि हवीँषि नानाबर्हीँषि भवन्तीमानेव लोकानापृणाति यन्नानाबर्हीँषि स्युर्लोकं प्रजननाय नोच्छिँषेदूनं वै प्रजा उपप्रजायन्ते समानबर्हिषी उत्तरे कार्ये लोकमेव प्रजननायाक्रस्तमुपप्रजायते विम्र वा इमं लोकं विम्रेमं नामुं पश्यामो वा तु न वा तस्मात् समानबर्हिषी उत्तरे कार्ये पशवो वा एतानि हवीँषि घृतं पुरोडाशा रुद्रोऽग्निर्यदग्नोऽनुनिर्वपेद्रुद्राय पशूनपिदध्यादपशुस्स्यात् संवत्सरेऽनुनि-रुप्यँ संवत्सरेणैवैनँ शमयति शिथिलं वा एतद्यज्ञस्य क्रियतेऽसयोनि यत् संवत्सरेऽनुनिर्वपत्यग्न एवानुनिरुप्यमशिथिलत्वाय सयोनित्वाय ॥ ८ ॥ १६

अग्निर्वा इमं लोकं नोपाकामयत यदस्मिन्नामं माँसं पचन्ति यत् पुरुषं दहन्ति यत् स्तेयं पचन्ति तदभीमं लोकं नोपाकामयत स यदिमं लोकमुपावर्तत या अस्य यज्ञियास्तन्व आसँस्ताभिरुदक्रा-मत् ता एताः पवमाना पावका शुचिस्तस्य या पवमाना तनूरासीत् पशूँस्तया प्राविशद्या पावकाप-स्तया या शुचिरमुमादित्यं तया प्राणो वै पवमानः प्राणेन पशवो यता यदग्नये पवमानाय पशूने-वास्मै तेन यच्छत्येषा वा अस्य सा तनूर्यया पशून् प्राविशद्यदिदं घृते हुते प्रतीवार्चिरुज्ज्वलत्येषा वा अस्य सा तनूर्ययापः प्राविशद्यदिदमप्सु परीव ददृशे यद्धस्ता अवनिज्य स्नात्वा श्रदिव धत्ते य एवाप्स्वग्निस्स एवैनं तत् पावयति स स्वदयति यदग्नये पावकाय सपशुमेवैनं पावयत्येषा वा अस्य सा तनूर्ययापः प्राविशद्यदिदं घृते हुते शोणमिवार्चिरुज्ज्वलत्येषा वा अस्य सा तनूर्ययामुमादित्यं प्राविशद्यदिदमुपरिष्टाद्दीव भाति यज्ज्योतिरिव यदग्नये शुचय आविर्भूत्या एव घोषायैव श्लोकायैव रुच एवैषा वा अस्य सा तनूर्ययामुमादित्यं प्राविशद्यदिदं घृते हुते सुवर्णमिवार्चिरुज्ज्वलति यदेतानि हवीँषि निरुप्यन्ते ता एवास्यैतत् तन्वस्संभरति सतनूरेवैतत् सतेजा आधीयत इमे वै लोका एतानि

[ ९ ] कपि. ७,५।

हवीँषि नानाबर्हीँषि भवन्ति नाना हीमे लोकाः प्रतिष्ठिताः ॥ ९ ॥ १७

गायत्रीस्संयाज्या भवन्ति गायत्रो वा अग्निर्गायत्रच्छन्दा आग्नेयमेतत् क्रियते यदग्न्याधेयमग्ना
एवैतदग्निः प्रतितिष्ठन्नेति यदाग्नेयानि हवीँष्यग्निनाग्निस्समिध्यत इत्युत्तरयोर्हविषोरनुवाक्यां कुर्यात्
तेजस आयतनायोर्वशी वै पुरूरवस्यासीत् सान्तर्वती देवान् पुनः परैत् सोऽदो देवेष्वायुरजायत
तामन्वागच्छत् तां पुनरयाचत तामस्मै न पुनरददुस्तस्मा आयुं प्रायच्छन्नेष आयुरित्यग्निं चोख्यमुखायाँ
समुप्यैतमाधत्स्व तेन प्रजनिष्यस इति स वृक्षस्य शाखायामग्निमासज्यायुना ग्राममभ्यवैत् स पुन-
रैमीत्यैद्वृक्षस्याग्रेऽग्निं ज्वलन्तँ सोऽचिकेदयं वाव सोऽग्निरिति तस्यारणी आदायाग्निं मथित्वाधत्त तेन
प्राजायत यदारोहस्यारणी भवतः प्रजननायादित्यै घृते चरुममावस्यायां पशुकामोऽनुनिर्वपेदियम-
दितिरस्यामधि पशवः प्रजायन्ते यज्ञमुखमग्न्याधेयं यज्ञमुखमेवालभ्य पशूनवरुन्द्धे चातुष्प्राश्यो
भवत्याचतुरँ हीमे पशवो द्वन्द्वं मिथुनास्ते वीर्यकृतोऽग्नीषोमीयमेकादशकपालं पूर्णमासेऽनुनिर्वपेदा-
ग्नेयो वै ब्राह्मणो देवतया सोमराजा यज्ञमुखमग्न्याधेयं यज्ञमुखमेवाक्रम्य स्वाराज्यमुपैति ॥ देवान्
वै यज्ञो नाभ्यनमत्तेऽश्राम्यन्यज्ञो नो नाभिनमतीति तेषामग्नीषोमा एवाग्रे यज्ञोऽभ्यनमत्तेऽविदुरग्नी-
षोमौ वै नोऽग्रे यज्ञोऽभ्यनाँस्तयोर्यज्ञस्याभिनातिमिच्छामहा इति तेऽब्रुवन् युवां वै नोऽग्रे यज्ञोऽभ्य-
नान्युवयोर्नोऽधि यज्ञोऽभिनमत्विति ता अब्रुवतां वार्यं वृणावहा आवामेवाग्र आज्यभागौ यजा-
निति तस्मादग्नीषोमा एवाग्र आज्यभागौ यजन्ति वार्यवृतँ ह्येनयोर्यदग्नीषोमीयमनुनिर्वपति यज्ञस्या-
भिनत्या अतो हि देवानग्रे यज्ञोऽभ्यनमद्यदन्यदनुनिर्वपेद्देवतया यज्ञमन्तर्दध्यान्मिथुनं वा अग्निश्च
सोमश्च सोमो रेतोधा अग्निः प्रजनयिताग्निर्वावेदँ सर्वमाप ओषधयो वनस्पतयस्तदेव सोम एतौ वै
नो देवानां नेदिष्ठमेतौ हि पश्यामो यथा वा इदं मनुष्या उपासत एवमेतं देवा उपासत तेऽचिक-
युरुद्धृतेन त्वा अनेनाभिजयेमेति तमुदहरन्त तेनाभ्यजयन्नभिजित्या एवैष उद्ध्रियतेऽग्निर्वै निराधा-
नादबिभेन्नातिदूर आधेयो निराधानाय ॥ १० ॥ १८–१९

अग्निं वै सृष्टमग्निहोत्रमन्वसृज्यत तस्मादग्निमाहितमग्निहोत्रेणानूद्द्रवन्त्याग्नेयी सायमाहुतिस्सौरी
प्रातर्यदाग्नेय्या प्रातर्जुहुयात् प्रजननं पुरस्तात् परिहरेदयथापूर्वं कुर्यात् पूर्णया स्रुचा मनसा
प्रजापतये जुहोति पूर्णः प्रजापतिः प्रजापतिमेवाप्नोति पूर्णो वै प्रजापतिस्समृद्धिभिरूनो व्यृद्धिभिः
पूर्णः पुरुषः कामैरूनस्समृद्धिभिः पूर्णयैव पूर्णास्समृद्धीरवरुन्द्ध आनीता वा अन्येषां देवानाँ स्मो-
ऽनानीता अन्येषाँ सँस्पर्शेनान्येषां जीवामस्सकाशेनान्येषां पृथिव्या वातस्यापां तेषामानीतास्स्मस्तेषाँ

[ १० ] कपि. ७,६।
[ ११ ] कपि. ७,८।

सँस्पर्शेन जीवामोऽग्नेस्सूर्यस्य दिवस्तेषामनानीतास्स्मस्तेषाँ सकाशेन जीवामस्तानेवालब्ध त एन-
मानेषन श्रेयसो व्रातस्य भवति नास्य मनुष्याः पापवसीयसस्येशते य एवं वेद ॥ यदात्मनालभेत
प्रमायुकस्स्यादाज्येन चौषधीभिश्चालभतेऽप्रमायुको भवत्यानीतो वा एष देवानां य आहिता-
ग्निरदन्त्यस्यान्नं पूर्णया स्रुचा जुहोति पूर्णयाग्नयेऽलगकरलमस्मै भवत्योषधयश्च वै वनस्पतयश्च
दिवा समदधुस्त इतोऽन्यत्सर्वमबाधन्त स प्रजापतिरमन्यतेमे वावेदमभूवन्निति सोऽग्निँ सृष्ट्वा
तमाधत्त तेनैनान्न्यभावयद्भ्रातृव्यसहनो वावैष आधीयते हुताद्यायैष वा अहुताद्योऽलमग्न्याधेयाय
सन्नाहिताग्निर्हुतमेवैतेन स्वादितमात्ति ॥ ११ ॥ २०-२१

आधेयोऽग्नी३र्नाधेया३ इति मीमाँसन्ते श्वोऽग्निमाधास्यमानेना३ इत्याधेय एवायज्ञो ह्येष
योऽनग्निरजो बद्धस्तां रात्रीं वसेदाग्नितेजसं वा अजस्तदेव तमग्निमाधत्ते कल्माषस्स्यात् स हि सर्व-
देवत्यो यस्तँ श्वोऽग्निमाधास्यन् स्यात् स तां रात्रीं व्रतं चरेन्न माँसमश्नीयान्न स्त्रियमुपेयात् सर्वो वै
पुरुषोऽग्निमाननग्निरस्मादपक्रामेदेष ह्येतस्य योनिरेतस्माद्ध्येषोऽधि सृज्यते यस्तमुद्धरति यो दक्षिणो
ब्रह्मवर्चसायैवैष मथ्यतेऽथो अग्निभ्यामेवैनँ संयोनिं करोति दुर्गोपस्त्वेहरहरस्य मन्थेयुर्यत एवं कुत-
श्चाहरेदेषा वा अस्यानवरुद्धा तनूस्तामेवावरुन्द्धे यत्र दीप्यमानं परापश्येत् तत आहरेद्देवता वा
एता आविर्भवन्ति ता एवावरुन्द्धे भृज्जनादाहरेदन्नकामस्यैषा वा अस्यान्नादी तनूस्तामेवावरुन्द्धे ॥
यो ब्राह्मणो वा वैश्यो वा पुष्टोऽसुर इव स्यात् तस्य गृहादाहरेद्ध्येव सा पुष्टिर्यदन्नं तदवरुन्द्धे गृहे
त्वस्य ततो नाश्नीयात् त्रिरुद्यच्छते त्रय इमे लोका इमानेव लोकानाप्नोति यदुद्यच्छत इमं तेन लोक-
माप्नोति यत् प्राङुदद्रवत्यन्तरिक्षं तेन यदादधात्यमुं तेन नाधाय पुनरुद्गृह्णीयादपक्रमंस्स पापीयान्
भवति प्राणेभ्यो वै प्रजापतिः प्रजा असृजत ताः प्राजायन्त तया मात्रयोद्गृह्णीयात् प्रजननाय
नात्युद्गृह्णीयादग्निरस्य प्राणाननुदहेत् प्रमीयेत नाधो दध्नुयादपक्रमंस्स पापीयान् भवति ॥ १२ ॥
२२-२३

अहुतादो वा एतस्य पुरा देवा अथैतद्धुताद उपावर्तते तेऽस्योर्जापक्रामन्त्यूर्जमेवावरुन्द्धे तानेव
भागिनः करोति यजन्त्यमुष्मिञ्जुह्वत्यस्मिन् पचन्त्यमुष्मिन्ननन्तरयायैतस्याथो वैश्वानरतायामेवैनमु-
पातिष्ठिपद्ये वै यज्ञेनायजन्तार्ध्नुवँस्ते न वै सु विदुरिव मनुष्या यज्ञं तस्मान्न सर्व इवर्ध्नोति दक्षिणावद्ध्यर्याँ
ह स्म वै पुरा दर्शपूर्णमासाभ्यां यजन्ते य एष ओदनः पच्यते दक्षिणामेवैतां ददाति यज्ञस्यर्द्ध्यै
इष्टी वा एतेन यद्यजते य एष ओदनः पच्यते तेन पूर्त्येष वावेष्टापूर्ती य एतं पचति ॥ प्रजापतिर्वै
देवेभ्यो भागधेयानि व्यादिशद्यज्ञमेव सोऽमन्यतात्मानमन्तरगामिति स एतमोदनमपश्यत्तमात्मने

[ ११ ] मै. १,६,११ (५६)। कपि. ७,७।
[ १३ ] कपि. ८,१।

भागमकल्पयत् प्रजापतेर्वा एष भागो महान्तमपरिमितं पचेदपरिमितः प्रजापतिः प्रजापतिमेवाप्नोति
देवाश्च वा असुराश्चास्पर्धन्त ते देवाः प्रजापतिमेवाभ्ययजन्तान्योऽन्यस्यासन्नसुरा अजुहवुस्ते देवा
एतमोदनमपचँस्तं प्रजापतये भागमनुनिरवपँस्तं भागं पश्यन् प्रजापतिर्देवानुपावर्तत ततो देवा
अभवन् परासुरा अभवन् य एवं विद्वानन्वाहार्यमाहरति भवत्यात्मना परास्य भ्रातृव्यो भवतीड्या
वा अन्ये देवास्सपर्येण्या अन्ये देवा ईड्या ब्राह्मणास्सपर्येण्या यज्ञेनैवेडयान् प्रीणात्यन्वाहार्येण सप-
र्येण्याँस्तस्योभये प्रीता यज्ञे भवन्ति प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वानाक्षितोऽस्यक्षित्यै त्वाक्षितो
नामासि मा मे क्षेष्ठाः प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मयि
धेह्या मा गम्या इति प्रजापतिमेव समक्षमृध्नोति ॥ १३ ॥ २४-२५

पुनराधेय आधीयते देवानां ज्योतिषा सह । अग्ने सहस्रमाभर रूपं रूपं वयो वयः ॥ २६

यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे । आदित्या विश्वे तद्देवा वसवः पुनराभरन् ॥ २७

यत्ते क्रुद्धः परोवप मन्युना यदवर्त्या । सुकल्पमग्ने तत् तव पुनस्त्वोद्दीपयामसि ॥ २८

पुनस्त्वादित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुधीतमग्ने ।
इहैव धेह्याधि दक्षमुग्रमश्वावद्गोमद्यवमत् सुवीर्यम् ॥ २९

पुनस्त्वा मित्रावरुणौ पुनरिन्द्रः पुनर्भगः ।
पुनस्त्वा विश्वे देवा ब्राह्मणा उददीदिपन् ॥ ३०

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यँहसः ॥ ३१

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ ३२

केतस्सुकेतस्सकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा सलिलस्सलिगस्सगरस्ते
न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा दिवो ज्योते विवस्व आदित्य ते नो देवा देवेषु
सत्यां देवहूतिमासुवध्वमादित्येभ्यस्स्वाहा ॥ १४ ॥ ३३

अग्नेर्वै भागः पुनराधेयं तं भागं प्रेप्सन् व्यर्धयति यद्याधाय मन्येत व्यृध्यतेऽस्या इति पुनरा-
दधीत यं भागं प्रेप्सन् व्यर्धयति तं प्राप्याधयत्येव सर्वमाग्नेयं क्रियते यत् किंच सर्वमग्नये भागं प्रादात्
सर्वामृद्धिमृध्नोति न संभृत्यास्संभारा इत्याहुर्न यजुष्कार्यमिति संभृतसंभारो ह्येष कृतयजुस्तत् तन्न
सूक्ष्यँ संभृत्या एव संभाराः कार्यं यजुः पुनरुत्स्यूतं वासो देयं पुनरुत्सृष्टोऽनड्वान् पुनर्निष्कृतो रथ

---

[ १४ ] मै. १,७,१ ( १-२,४,१०—१२ ) । कपि ८,२ । वा. १२,९—१०,४०—४१,४४ । काण्व. १२,८५, १३,
१०-११,४१—४२,४५ । [ रूपं रूपं वयो वयः [ प्र. पा. ] । अथर्व. १९,१,३ । यत्ते ( ०त्वा ) क्रुद्धः
( ०द्धाः )० । अथर्व. १२,२,५ । पुनस्त्वादित्या० । अथर्व. १२,२,६ ।

[ १५ ] मै. १,७,२ ( १३ ) । कपि. ८,३ । तै. सं. १,५,१—२ । मा. श्रौ. १,६,५ ।

एतानि वै पुनराधेयस्य रूपाणि रूपैरेवैनत् समर्धयत्यग्निर्वा उत्सीदन्नप ओषधीरनूत्सीदत्याप एता ओषधयो यद्दर्भा यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोषधीभ्योऽध्यवरुन्द्धे ॥ देवाश्च वा असुराश्च संयत्ता आसँस्ते देवा विजयमुपयन्तोऽग्नौ प्रियास्तन्वस्संन्यदधत यदि जयेमेमा उपावर्तेमहि यदि नो जयेयुरिमा अभ्युपधावेमेति तेऽभिजित्यान्वैच्छन् सर्वेषां नस्सहेति सोऽग्निरब्रवीद्यो मा मद्देवत्यमादधातै स एताभिस्तनूभिस्संभवादिति तं देवा आदधत त एताभिस्तनूभिस्समभवन्नेताभिरेव तनूभिस्संभवति य एवं विद्वानेतमाधत्ते त्वष्टा पशुकाम आधत्त त इमे त्वाष्ट्राः पशवस्तेनर्द्धो मनुः पुष्टिकाम आधत्त स इमान् पोषानपुष्यत्तेनर्द्धः प्रजापतिः प्रजाकाम आधत्त ता इमाः प्राजापत्याः प्रजाः प्राजायन्त तेनर्द्धो यो वै तमाधत्त स तेन वसुना समभवत् तस्मात् पुनर्वसुस्तस्मात् पुनर्वसा आधेय आर्ध्नोद्धि स यस्तमाधत्त तस्मादनूराधास्तस्मादनूराधेष्वाधेयः ॥ १५ ॥ ३४—३५

घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ।
आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ॥ ३६
आ यस्मिन् सप्त वासवा रोहन्ति पूर्व्यारुहः ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥ ३७
इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आवृणे ॥ ३८
अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजतेन्द्र देवेभिरनु ते नृषह्ये ॥ ३९
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ ४०
एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स नस्स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिस्सदा नः ॥ ४१
सं यत्त इन्द्र मन्यवस्सं चक्राणि दधन्विरे । अध त्वे अध सूर्ये ॥ ४२
आ ते मह इन्द्रोत्युग्र समन्यवो यत् समरन्त सेनाः ।
पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्यग्विचारीत् ॥ ४३

[ १६ ] वा. २०,५४,५१—५२; १२,४४; ११,३४; १८,७१ । काण्व. २२,३९,३६-३७; १२,८५; १३,४५; १२,३४; २०,४० । [ आमासु पक्वमैरय० । ऋ. ८,८९,७; सा. १४३१; तै. सं. १,६.१२,१; नि. ६,१४ । इन्द्रियाणि शतक्रतो० । ऋ. ७,१०४.१; अथर्व. ८,४,१; नि. ६,११ । अनु ते दायि० । ऋ. ६,२५,८; तै. सं.१, ६,१२,१; तै आ. २,८,५,७ । इन्द्रमिद्गाथिनो० । ऋ. १,७,१; सा. १९८,७९६; अथर्व. २०,३८,४; ४७,४; ७०,७; तै. सं. १,६,१२,२; तै. आ. १,५,८,१; ७,२ । एवेदिन्द्रं वृषणं० । ऋ. ७,२३,६; अथर्व. २०,१२,६। सं यत्त इन्द्र० । ऋ ४,३१,६ । आ ते मह० । ऋ. ७,२५,१; तै. सं. १,७,१३,१ ]

स्थिरं मनश्चकृषे जात इन्द्र वेषीदेको युधये भूयसश्चित् ।
अश्मानं चिच्छवसा दिद्युतो वि विदो गवामूर्वमुस्रियाणाम् ॥ ४४
यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ ४५
इन्द्रस्सुत्रामा स्ववाँ अवोभिस्सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयस्स्याम ॥ ४६
तस्य वयँ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषस्सनुतर्युयोतु ॥ ४७
अँहोमुचे प्रभरेमा मनीषां भूयिष्ठदाव्ने सुमतिमावृणानाः ।
इदमिन्द्र प्रति हव्यं जुषस्व सत्यास्सन्तु यजमानस्य कामाः ॥ ४८
विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अँहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥ ४९
अनवस्ते रथमश्वाय तक्षन् त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।
ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ५०
वृष्णे यत् ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिस्सजोषाः ।
अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ ५१
अनु त्वाहिघ्ने अध देव देवा मदन्विश्वे कवितमं कवीनाम् ।
करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः ॥ ५२
अनु द्यावापृथिवी तत् त ओजोऽमर्त्या जिहत इन्द्र देवाः ।
कृष्वा कृत्नो अकृतं यत् ते अस्त्युक्थं नवीयो जनयस्व यज्ञैः ॥ ५३
अभि प्रभर धृषता धृषन्मनश्श्रवाश्चित्ते असद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥ ५४

---

[स्थिरं मनश्चकृषे० । ऋ ५,३०,४ । यो जात एव० । ऋ. २,१२,१; अथर्व. २०,३४,१; तै. सं. १,७,१३, २: नि. ३,२१; १०,१० । इन्द्रः सुत्रामा स्ववाँ० । ऋ. ६,४७,१२; १०,१३१,६ । अथर्व. ७,९१,१; २०, १२५,६; तै. सं. १,७,१३,४ । तस्य वयँ सुमतौ० । ऋ. ६.४७,१३; १०,१३१,७; अथर्व. ७,९२,१; २०, १२५,७; तै. सं. १,७,१३,५; नि. ६,७ । विवेष यन्मा धिषणा० । ऋ. ३,३२,१४; तै. सं. १,६,१२,३ । अनवस्ते रथमश्वाय० । ऋ. ५,३१,४; सा. ४३९,४४०; तै. सं. १,६,१२,६ । वृष्णे यत्ते वृषणो० । ऋ. ५,३१,५; तै. सं. १,६,१२,६, । अनु त्वाहिघ्ने अध० । ऋ. ६,१८,१४ । अनु द्यावापृथिवी० । ऋ. ६, १८,१५ । अभि प्रभर धृषता० । ऋ. ८,८९,४ ]

अस्मा इदु प्रभरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व विरदा तिरश्चेष्यन्नर्णाँस्यपां चरध्यै ॥ ५५
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणे रणे ॥ ५६
ममाग्ने वर्चः ॥ ५७
इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥ ५८
मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः ।
सृकँ सँशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व ॥ १६ ॥ ५९
रेवतीर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥ ६०
ता अस्य नमसा सहस्सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ ६१
इन्द्राणी पत्या सुजितं जिगायोदँशेन पतिविद्ये बिभेद ।
त्रिँशदस्या जघनं योजनान्युपस्थ इन्द्रँ स्थविरं बिभर्ति ॥ ६२
सेना ह नाम पृथिवी धनंजया विश्वव्यचा अदितिस्सूर्यत्वक् ।
इन्द्राणी प्रासहा संजयन्ती मयि पुष्टिं पुष्टिपत्नी दधातु ॥ ६३
इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ६४
नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यँ हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ ६५

---

[अस्मा इदु प्रभरा०: ऋ. १,६१,१२; अथर्व. २०,३५,१२; नि. ६,२० । उत ब्रुवन्तु जन्तव०। ऋ. १,७४,३; सा. १३८२; तै. सं. ३,५,११,४ । ममाग्ने वर्चः० । ऋ. १०,१२८,१; अथर्व. ५,३,१; तै. सं. ४,७,१४,१। इन्द्र क्षत्रमभि० । ऋ. १०.१८०,३; अथर्व. ७,८४,२; तै. सं. १,६,१२,४ । मृगो न भीमः० । ऋ. १०, १८०,२; सा. १८७३; अथर्व. ७,८४,३; तै. सं. १,६,१२,४ ]

[ १७ ] वा. १३.४; २३,१,३; २५,१०-११; १०,२०, १९,४४,५४,६१; २३.६५ । क.०व १४,४; २५,१,३; २७, १४—१५; ११,२९; २१,४६,५४,६१; २५,६७ । [ रेवतीर्नस्सधमाद०। ऋ. १,३०.१३; सा. १५३,१०८४; अथर्व. २०,१२२,१; तै. सं. १,७.१३,५; २,२,१२,८; ४,१४,४ । ता अस्य नमसा० । ऋ. १,८४,१२; सा. १००७; अथर्व. २०,१०९,३ । इन्द्राणीमासु नारिषु० । ऋ. १०,८६,११; अथर्व. २०,१२६,११; तै. सं. १, ७,१३,१; नि. ११,३८ । नाहमिन्द्राणि रारण० । ऋ. १०,८६,१२; अथर्व. २०,१२६,१२; तै. सं. १,७,१३, १; नि. ११,३९ ]

प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां वृत्रहन् वृत्रहासि ।
यत्र यन्ति स्रवत्यस्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः ॥ ६६
अस्येदेव प्ररिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात् ।
स्वराडिन्द्रो दम आ विश्वगूर्तस्स्वरिरमत्रो ववक्षे रणाय ॥ ६७
त्वमिन्द्रास्यधिराजस्त्वं भवाधिपतिर्जनानाम् ।
दैवीर्विशस्त्वमुता विराजौजस्वत् क्षत्रमजरं ते अस्तु ॥ ६८
हिरण्यगर्भो यः प्राणतः ॥ ६९
सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥ ७०
इमौ देवौ जायमानौ जुषन्तेमौ तमाँसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तस्सोमापूषभ्यां जनदुस्रियासु ॥ ७१
प्रिया वो नाम हुवे तुराणाम् । आ यत् तृपन्मरुतो वावशानाः ॥ ७२
श्रियसे कं भानुभिस्संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिस्सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥ ७३
इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ ७४
आ नो विश्वाभिरूतिभिस्सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत्स्थविरेभिस्सुशिप्रास्मे दधद्वृषणँ शुष्ममिन्द्र ॥ ७५
मरुतो यद्ध वो दिवस्सुम्नायन्तो हवामहे । आ तू न उपगन्तन ॥ ७६
यूयमस्मान्नयत वस्यो अच्छा निरँहतिभ्यो मरुतो गृणानाः ।
जुषध्वं नो हव्यदातिं यजत्रा वयँ स्याम पतयो रयीणाम् ॥ ७७

---

[ **प्राच्यां ( ०च्या ) दिशि ( ०शस्त्व० )०** । अथर्व. ६,९८,३ । **अस्येदेव प्ररिरिचे०** । ऋ. १,६१,९, अथर्व. २०,३५,९; तै. सं. २,४,१४,२ । **त्वमिन्द्रास्यधि ( ०न्द्राधि० )०** । अथर्व. ६,९८,२ । **हिरण्यगर्भः०** । ऋ. १०,१२१,१; अथर्व. ४,२,७; तै. सं. ४,१,८,३; २,८,२; ताण्ड्य ब्रा. ९,९,१२; नि. १०,२३ । **यः प्राणतो०** । ऋ. १०,१२१,३; अथर्व. ४,२,२; तै. सं. ४,१,८,४; ७,५,१६,१ । **सोमापूषणा जनना०** । ऋ. २,४०,१; तै. सं. १,८,२२,५ । **इमौ देवौ जायमानौ०** । ऋ. २,४०,२; तै. सं. १,८,२२,५ । **प्रिया वो नाम०** । ऋ. ७,५६, १०; तै. सं. २,१,११,१ । **श्रियसे कं भानुभिः०** । ऋ. १,८७,६; तै. सं. २,१,११,२; ४,२,११,२; नि. ४,१६। **इन्द्रं वो विश्वत०** । ऋ. १,७,१०; सा. १६२०; अथर्व. २०,३९,१; ७०,१६; तै. सं. १,६,१२,१ । **आ नो विश्वाभि०** । ऋ. ७,२४,४; तै. ब्रा. २,४,३,६; ७,१३,४ । **मरुतो यद्ध वो०** । ऋ. ८,७,११; तै. सं. १, ५,११,४ । **यूयमस्मान्नयत०** । ऋ. ५,५५,१० ]

स युध्मस्सत्वा खजकृत् समद्वा तुविम्रक्षो नदनुमाँ ऋजीषी ।
बृहद्रेणुश्च्यवनो मानुषीणामेकः कृष्टीनामभवत् सहावा ॥ ७८

सं यद्धनन्त मन्युभिर्जनासश्शूरा यह्वीष्वोषधीषु विक्षु ।
अध स्मा नो मरुतो रुद्रियासस्त्रातारो भूत पृतनास्वर्यः ॥ ७९

एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ॥ ८०

स्वस्तये वाजिभिश्च प्रणेतस्सं यन्महीरिष आसत्सि पूर्वीः ।
रायो वन्तारो बृहतस्स्यामास्मे अस्तु भग इन्द्र प्रजावान् ॥ ८१

या वश्शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वियन्त रयिं नो धत्त वृषणस्सुवीरम् ॥ १७ ॥ ८२

[६४१

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां दिशस्थानकं नामाष्टमं स्थानकं संपूर्णम् ॥८॥



अथ नवमं स्थानकम् ।

## उत्सीदनम् ।

अग्निर्वा उत्सीदन् संवत्सरमनूत्सीदति सप्तदश सामिधेनीः कार्यास्सप्तदशो वै संवत्सरः पञ्चर्तवो द्वादश मासा एष वाव स संवत्सरस्संवत्सरादेवैनमध्यवरुन्द्धे तदाहुः पञ्चदशैव कार्या न सप्तदशेत्ये तद्धि संवत्सरस्य संक्रमणतरं यत् पञ्चदश पञ्चदश सामिधेनीरनूच्यन्ते पञ्चदशार्धमासस्य रात्रय स्ताभिरेव ता आप्यन्ते यावन्ति वै सामिधेनीनामक्षराणि तावन्ति संवत्सरस्याहानि तैरेव तान्या प्यन्तेऽग्निर्वा उत्सीदन् संवत्सरमनूत्सीदति षड्वा ऋतवस्संवत्सरो यत् षड् विभक्तयस्संवत्सरादेवैनम ध्यवरुन्द्धे ॥ संवत्सरो वा अग्निर्वैश्वानरष्षडृतवस्तस्मात् षड् विभक्तयो यद् द्व्यक्षरास्सतीश्चतुरक्षरा क्रियन्त आचतुरं हीमे पशवो द्वन्द्वं मिथुनास्ते वीर्यकृतो यद्वा इदमग्निं बहुधा विहरान्ति यदिमा पोषान् पुपोष तस्मादग्निरेवैतावतीर्विभक्तीरश्नुते नान्या देवता यज्ञमुखं वै प्रयाजा यत् प्रयाजानन्त

---

[स युध्मस्सत्वा० । ऋ. ६,१८,२ । सं यद्धनन्त मन्यु० । ऋ. ७,५६,२२ । एन्द्र सानसिं रयिं० । ऋ. १,८,१; सा. १२९; अथर्व. २०,७०,१७; तै. सं. ३,४.११,३; तै. ब्रा. ३,५,७,३ । स्वस्तये वाजिभिश्च० ऋ. ३,३०,१८ । या वश्शर्म शशमानाय० । ऋ, १,८५,१२; तै. सं. १,५,११,५, तै. ब्रा. २,८,५,६ ]

[ १ ] मै. १,७,३—४ ( १४—१८ ) । कपि. ८,४ । वा. १२,९—१०,४०—४१ । काण्व. १३,१०—१ ४१ – ४२ ।

रियाद्यज्ञमुखमन्तरियादन्नं वै प्रयाजा यत् प्रयाजानन्तरियादन्नमन्तरियाद्यं कामयेतर्ध्नुयादिति तस्यो-
परिष्टात् प्रजानां विभक्तीः कुर्याद्वीर्यं वै प्रयाजा वीर्यं विभक्तयो वीर्यादेवाधि वषट्करोत्यजिरमृद्धि-
मभिक्रामति ॥ नानाग्नेयं क्रियत इत्याहुः कस्मात् सविभक्तयः प्रयाजा भवन्तीति संवत्सरं वा एते
परीज्यन्ते यत् प्रयाजास्तेनाग्नेयं तेन नानाग्नेयं क्रियते ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा पुनर्नः
पाह्यँहस इति पुरस्तात् प्रयाजानां जुहुयात् सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया विश्वप्स्न्या
विश्वतस्परीत्युपरिष्टादनुयाजानां जुहुयादूर्जा वा एष पशुभिरुत्सीदन् सहोत्सीदति पुनरेवोर्जं पशून-
वरुन्द्धेऽथो उभयत एव यज्ञस्याशिषर्ध्नोति ॥ १ ॥ १--४

नानाग्नेयं क्रियत इत्याहुः कस्मादाज्यभागौ यजन्तीति चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदा-
ज्यभागा अन्तरियाच्चक्षुषी यज्ञस्यान्तरियादग्न आयूँषि पवस इत्येतां सोमस्याज्यभागस्य लोके कुर्या-
द्यदाग्नेयं तेनाग्नेयी यत् पावमानं तेन सौमी नानाग्नेयं क्रियते न सोममन्तरेत्यग्निर्मूर्धा दिवः ककुदित्ये-
तां सोमस्याज्यभागस्य लोके कुर्यात् प्रजाकामस्य वा पशुकामस्य वा यन्मिथुना तेन प्रजननवती
यद्रेतस्वती तेन सौमी नानाग्नेयं क्रियते न सोममन्तरेति ॥ वीरहा वा एष देवानां योऽग्निमुत्साद-
यते शतदायो वीरो यदेताश्शताक्षरा अक्षरपङ्क्तयो वीरमेवैतद्देवानामवदयतेऽन्यस्यै वै प्रमाया
आधेयोऽन्यस्यै पुनराधेयो न वै तामाधेयेन स्पृणोति यस्यै पुनराधेयः पुनराधेयेन वाव तां स्पृणोति
जरा वै देवहितमायुस्तावतीर्हि समा जीवति तस्मादाहुश्शतदायो वीर इति यदेताश्शताक्षरा अक्षर-
पङ्क्तयो भवन्ति यावदेव वीर्यं तदाप्नोति तत् स्पृणोत्यायुषा वा एष वीर्येण व्यृध्यते योऽग्निमु-
त्सादयते शतायुर्वै पुरुषश्शतवीर्य आयुर्वीर्यं हिरण्यं यद्धिरण्यँ शतमानं ददात्यायुरेव वीर्यं पुनरा-
लभेत ॥ २ ॥ ५--६

यज्ञेन वा एष व्यृध्यते योऽग्निमुत्सादयते पाङ्क्तो यज्ञो यत् पञ्चकपालो यज्ञमेवालभते
तदाहुरष्टकपाल एव कार्यो न पञ्चकपाल इत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रच्छन्दा आग्ने-
यमेतत् क्रियते यत् पुनराधेयं तस्मादष्टाकपालस्तत् तन्न सूर्क्ष्यं पञ्चकपाल एव कार्योऽग्निर्वा
उत्सीदन् संवत्सरमनूत्सीदति पञ्च वा ऋतवस्संवत्सरः पञ्चथाद्वा अध्यृतोष्षष्ट ऋतुर्बभूव
समानमेतद्यत् पञ्चथश्चर्तुष्षष्ठश्च यत् पञ्चकपालस्संवत्सरादेवैनमध्यवरुन्द्धे पञ्च वा ऋतवः
प्रजननमृतवो यत् पञ्चकपालः प्रजननाय प्रजननं वा ऋतवोऽग्निः प्रजनयिता यत् पञ्चकपालः

[ २ ] मै. १,७,४-५ ( १८-१९ ) । कपि. ८,५ । वा. १९,३८; ३५,१६, ३,१२, १३,१४; १५,२०; काण्व. ८,१९; ११,४०; २९,३७; ३५,४८; ३,१८, १४,१४; १६,४१ । [ अग्न आयूंषि० । ऋ. ९,६६ १९, गा. ६२७, १४६४, १५१८; तै. सं. १,३,१४,७; ४,२९,१; ५,५,१; ६,६,२, तै. ब्रा. २,६,३४; तै. आ २,५,१ । अग्नि-मूर्धा दिवः० । ऋ. ८,४४,१६; सा. २७, १५३२, तै. सं. १,५,५,१; ४,४,१,१; तै. ब्रा. ३,५,७,१ ]

[ ३ ] मै. १,७,४-५ ( १८-१९ ) । कपि. ८,६ ।

प्रजननादेवैनं प्रजनयिता प्रजनयत्यादित्या वा इतस्सर्वेणैव सहामुं लोकमायँस्तेऽमुं लोकं गत्वा व्यतृष्यँस्तेऽविदुरमुतः प्रदानाद्वा इहाजगामेति त एतं पुनरादधत तेनार्ध्नुवन्नादित्या वा अस्मिंल्लोक ऋद्धा आदित्या अमुष्मिन् पशवोऽस्मिन्नृतवोऽमुष्मिन्नुभयोरेव लोकयोर्ऋध्नोति य एवं विद्वानेतमाधत्ते केतस्सुकेतस्सकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा सलिलस्सलिगस्सगरस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा दिवो ज्योतिर्विवस्व आदित्यं ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वमादित्येभ्यस्स्वाहेत्येतैर्वै ते तमादधत तेनार्ध्नुवन् यदा वा एतैराधत्तेऽथाहित आदित्यो हि पुनराधेयः ॥ ३ ॥ ७

आग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावित्रो द्वादशकपालस्सारस्वतश्चरुः पौष्णश्चरुर्मारुतस्सप्तकपालो वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपाल आग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावित्रोऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरुरैन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा वारुण्यामिक्षा काय एककपालो नमस्त आतानानर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेण ॥ ८

प्रघास्यान् हवामहे मरुतो यज्ञवाहसः । करम्भेण सजोषसः ॥ ९

मो षू ण इन्द्रात्र पृत्सु देवा अस्तु स्म ते शुष्मिन्नवयाः ।
मही देवस्य मीढुषोऽवया हविष्मतो मरुतो वन्दते गीः ॥ १०

यद्ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये । यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् ।
यदेकस्यापि धर्मण्येतत् तदवयजामहे । स्वाहा ॥ ११

अक्रन् कर्म कर्मकृतस्सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः ॥४॥ १२

अग्नयेऽनीकवते प्रातरष्टाकपालो मरुद्भ्यस्सांतपनेभ्यो मध्यंदिने चरुर्मरुद्भ्यो गृहमेधेभ्यस्सर्वासां दुग्धे सायमोदनो निष्कासो निधीयते संतत्यै ॥ १३

पूर्णा दर्वे परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ॥ १४

देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारमिन्नि मे हर निहारं निहरामि ते ।
अपामित्यमिव संभरैषमूर्जं शतक्रतो ॥ १५

---

[ ४ ] मै. १,१०,१—२ ( १,३-७ ) । कपि. ८,७ । वा. ६,१२; ३.४४—४७; २०,१७; ८४,१६ । काण्व. ६,१६ ३,५२-५५; २२,४ । [ मो षू / षु ) ण इन्द्रात्र० । ऋ १,१७३,१२ । यदेनश्चकृमा वयम्० । अथर्व. १० ३,८ ]

[ ५ ] मै. १,१०,१-२ ( १-२,८-९ ) । कपि. ८,८ । वा २४,१६; ३.४९—५०; २,९ । काण्व. २६,१०; ३ ५७—५८; २,१३ । [ पूर्णा दर्वे ( दर्वि )०। अथर्व. ३,१०,७; श्रौ. पू. अ. २, खं. १८ । देहि मे ददामि ते० । श्रौ. पू. अ. २, खं. १८ ]

मरुद्भ्यः क्रीडिभ्यः प्रातस्सप्तकपालस्साकं सूर्यस्य रश्मिभिराग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावि-
त्रोऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरुरैन्द्राग्न एकादशकपाल ऐन्द्रश्चरुर्वैश्वकर्मण एककपालोऽग्ने वेर्होत्रं
वेरध्वरं वेर्दूत्यमूर्ध्वोऽध्वरेऽस्था अवतां त्वा द्यावापृथिवी अव त्वं द्यावापृथिवी स्विष्टकृदिन्द्राय देवेभ्यो भव
जुषाणो अस्य हविषो घृतस्य वीहि स्वाहा ॥ ५ ॥ १६

सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यष्षट्कपालः पुरोडाशः पितृभ्योऽग्निष्वात्तेभ्यो धाना
अग्नये कव्यवाहनाय मन्थ एतत् ते तत ये च त्वामन्वेतत् ते पितामह ये च त्वामन्वेतत् ते प्रपिता-
मह ये च त्वामन्वत्र पितरो मादयध्वम् ॥ १७

सुसंदृशं त्वा वयं मघवन् मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाँ अनु योजा न्विन्द्र ते हरी ॥ १८
परेत पितरस्सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः ।
दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नस्सर्ववीरं नियच्छत ॥ १९

अमीमदन्त पितरः ॥ २०

अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत् तनूं तन्वमैरयत ॥ २१
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ २२

नमो वः पितरो मन्यवे नमो वः पितरश्शुष्माय नमो वः पितरो जीवाय नमो वः पितरो
रसाय नमो वः पितरः क्रूराय नमो वः पितरो बलाय नमो नमो वः पितरस्स्वधा वः पितरो
यात्र पितरस्स्वधा यत्र यूयं स्थ सा युष्मासु तया यूयं यथाभागं मादयध्वं येह पितर ऊर्ग्यत्र वयं
स्मस्सास्मासु तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥ २३

मनो न्वाहुवामहे नाराशँसेन स्तोमेन । पितॄणां च मन्मभिः ॥ २४
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे ॥ २५

---

[ ६ ] मै. १,१०,३ (१०-२०) । कपि. ८.९-१० । वा. २,२९,३१,—३२, ३,५१-५५ । काण्व. २,६५,५४,५६-५७, ३,५९—६३ । [ सुसंदृशं त्वा वयं० । ऋ. १,८२,३; तै. स. १,८,५,१ । परेत पितरस्सोम्यासो० । अथर्व. १८,४,६२—६३; श्रौ. पू. अ. २, खं. ७ । अया विष्ठा० । अथर्व. ७,३,१, श्रौ. पू. अ. २, खं. ६९ । अक्षन्नमीमदन्त० । ऋ. १,८२,२, अथर्व. १८,४,६१; सा. ४१५, तै. सं. १,८,५,२ । नमो वः पितरो० । अथर्व. १८,४,८१-८७; श्रौ. पू. अ. २, खं. ७ । मनो न्वाहुवामहे० । ऋ. १०,५७,३; तै. सं. १,८,५,१ । आ न ( त ) एतु मनः० । ऋ. १०,५७,४; अथर्व. १,६,३, ६,१९,२; तै. सं. १.८,५,२ ]

पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातँ सचेमहि ॥ २६

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् । यद्ध स्या ते पनीयसी समिद्दीदयति द्यवि ।
इषँ स्तोतृभ्य आभर ॥ २७

यदन्तरिक्षं पृथिवीमुत द्यां यत् पितरं मातरं वा जिहिँसिम ।
अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ ६ ॥ २८

रुद्राखुं ते पशुं करोमि तेन त्वा पशुभ्यो निरवदय एष ते रुद्र भागस्सह स्वस्राम्बिकया तं जुषस्व स्वाहा ॥ २९

अवाम्ब रुद्रमदिमह्यव देवं त्र्युम्बकम् ।
यथा नो वस्यसस्करद्यथा नश्श्रेयसस्करद्यथा नो व्यवसाययात् ॥ ३०

भेषजं गवेऽश्वाय पुरुषाय सुगं मेषाय मेष्यै ।
अथो अस्मभ्यं भेषजँ सुभेषजं यथासति ॥ ३१

त्र्युम्बकं यजामहे सुगन्धिं रयिपोषणम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ३२

भगस्स्थ भगस्य वो लप्सीयैष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि कृत्तिवासाः पिनाकहस्तोऽवततधन्वा ॥ एधोऽस्येधिषीमहि समिदसि समेधिषीमहि तेजोऽसि तेजो मयि धेहि ॥ ७ ॥ ३३-३४

चित्तिस्स्रुक् चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निद्वाचस्पतिर्होता मन उपवक्ता प्राणो हविस्सामाध्वर्युरिन्द्रं गच्छ स्वाहा पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उपवक्ता वाचस्पते वाचो वीर्येण संभृततमेनायक्षसे यज्ञपतये वार्यमा स्वस्करो वाचस्पतिस्सोमं पिबतु जजनदिन्द्रमिन्द्रियाय स्वाहा सोमस्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य पुरोगाश्श्रातास्त इन्द्र सोमा वातापे हवनश्रुतस्स्वाहाग्निर्होताश्विनाध्वर्यू रुद्रोऽग्नीद्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधे नामन् वाचस्पतिस्सोममपादस्मासु नृम्णं धात् स्वाहा सोमस्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य पुरोगाश्श्रातास्त इन्द्र सोमा वातापे हवनश्रुतस्स्वाहा ॥ ८ ॥ ३५

---

[ पुनर्नः पितरो० । ऋ. १०,५७,५; तै. सं. १,८,५,३ । आ ते अग्न इधीमहि० । ऋ. ५ ६,४; सा. ४१९, १०२१; अथर्व. १८,४,८८, तै. सं. ४,४,४,६ । इषँ स्तोतृभ्य आ भर । ऋ. ५,६,१-१०; सा. ४१९,४२५, १०२१-१०२४,१५८६,१७३७--१७३९ । यदन्तरिक्षं पृथिवी०। अथर्व. ६,१२०,१, श्रौ. पू. अ. १, खं. ७]

[ ७ ] मै. १,१०,४, ( २२—२७ ) । कपि. ८,११ । वा. ३,५७—६१; २०,२३; ३८,२५ । काण्व. ३,६५-७०; ११, ७. ३८,२४ । [ सुगं मेषाय मेष्यै (०ष्ये) [ द्वि. पा. ] । ऋ. १,४३,६ । त्र्यम्बकं यजामहे० । ऋ. ७,५९, १२; अथर्व. १४.१,१७; तै. सं. १,८,६,२; नि. १४,३५ । एधोऽस्येधिषीमहि० । श्रौ. पू. अ. ३, खं. ६ ]

[ ८ ] मै. १.९,१ ( १ ) । कपि. ८. १२ । [ चित्तिस्स्रुक्०...ध्वर्युः । ऐ. ब्रा. ५,२५ ]

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु देवि दक्षिणे यमायाश्वं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु देवि दक्षिणेऽग्नये हिरण्यं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु देवि दक्षिणे रुद्राय गां तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ग्नास्त्वाकृन्तन्नपसोऽतन्वत वरुत्रीरवयन् वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु देवि दक्षिण उत्तानायाङ्गिरसायाप्राणत् तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्ववा नयतु देवि दक्षिणे प्रजापतये पुरुषं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे क इदं कस्मा अदात् कामः कामाय कामो दाता कामः प्रतिग्रहीता कामस्समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत् ते महाहविर्होता सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्तमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता वाचस्पते विधे नामन् विधेम ते नाम विधेस्त्वमस्माकं नाम मा देवानां तन्तुश्छेदि मा मनुष्याणाम् ॥ ९ ॥ ३६-३७

अग्निर्यजुर्भिस्सविता स्तोमैरिन्द्र उक्थामदैर्बृहस्पतिश्छन्दोभिर्विष्णुर्दीक्षातपोभ्यामदितिस्सदोहविर्धानाभ्यामादित्या आज्यैर्मित्रावरुणौ धिष्ण्येभिरग्निभिर्मरुतोऽपश्च बर्हिश्च त्वष्टा समिधाश्विना आशिरा पूषा स्वगाकारैः पृथिव्यग्नेर्वाग्वातस्य सेनेन्द्रस्य धेना बृहस्पतेः पथ्या पूष्णो गायत्री वसूनां त्रिष्टुब्रुद्राणां जगत्यादित्यानामनुष्टुम्मित्रस्य विराड्वरुणस्य पङ्क्तिर्विष्णोर्दीक्षा सोमस्य ॥ १० ॥ ३८

प्रजापतिरकामयत स्यात् प्रजायेयेति स दशधात्मानं व्यधत्त तस्य चित्तिस्स्रुगासीच्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निद्वाचस्पतिर्होता मन उपवक्ता प्राणो हविस्सामाध्वर्युस्स दशधात्मानं विधाय मिथुनं कृत्वा स आयतनमैच्छत् स त्रिवृतमेवायतनमचायत् प्राणाँस्ततः प्रजा

---

[ ९ ] मै. १,९,१,४ (१,४—१६)। कपि ८,१३। वा. ६,३०; ७,४७—४८। काण्व ६,४३ ९,१२—१४। [ देवस्य त्वा०। अथर्व. १९,५१,२; ऐ आ. ८,७; गृ. स. १,२०,२४ । कस्मा अदात्काम:०। अथर्व. ३,२९,७; श्री. सू. अ. ५, खं. १३ ]

[ १० ] मै, १,९,२ ( २ )।

[ ११ ] मै. १,९,३—४ ( ३ —१६ ]।

असृजत तत ऊर्ध्वोऽन्य उदतृणत् पञ्चदशोऽवाङन्योऽन्वातृणत् पञ्चदशो य ऊर्ध्व उदतृणत् स पूर्व-
पक्षस्तेन देवानसृजत तमूर्ध्वमाप्यायमानं देवा ऊर्ध्वा अन्वाप्यायन्त योऽवाङन्वातृणत् सोऽपरपक्ष-
स्तेनासुरानसृजत तमपध्वँसमानमसुरा अवाञ्चोऽनुप्राध्वँसन्त दक्षिणँ हस्तमनु देवानसृजत ते वीर्या-
वन्तोऽभवन् सव्यँ हस्तमन्वसुराँस्ते मृद्धा अभवँस्तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरस्सत्येन
देवानसृजत ते सत्यमभवन्ननृतेनासुराँस्तेऽनृतमभवन्नह्ना देवानसृजत ते शुक्लं वर्णमपुष्यन् रात्र्यासु-
राँस्ते कृष्णा अभवन् स वै तदेवैच्छद्यस्मिन् होष्यामीति स इन्द्रमेव वीर्यमन्तरात्मन्नपश्यत् सर्वमन्य-
ज्ज्ञातमासीत् स इन्द्रं गच्छ स्वाहेत्यपानीद्वीर्यं वै प्राणो वीर्यमिन्द्रो वीर्य एव वीर्यमादधात् ते चतु-
र्होत्रा सोमगृहपतयो न्यसीदन्निन्द्रं जनयामेति तेषां पृथिवी होतासीद् द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उप-
वक्ता त एतौ ग्रहा अगृह्णत त आयतनमैच्छँस्त एकविँशमेवायतनमचायँस्त इन्द्रमजनयँस्ते पञ्च-
होत्रा वरुणगृहपतयो न्यसीदन् स्वरयामेति तेषामग्निर्होतासीदश्विनाध्वर्यू यदश्विना तेन पञ्चहोत्रा
रुद्रोऽग्निद्बृहस्पतिरुपवक्ता त एतौ ग्रहा अगृह्णत त आयतनमैच्छँस्ते त्रिणवमेवायतनमचायँस्ते
स्वरायँस्तँ सेतुं कृत्वा तत् पशवोऽसृज्यन्त तान् देवताभ्योऽनयन् यमायाश्वमग्नये हिरण्यं रुद्राय गां
बृहस्पतये वास उत्तानायाङ्गिरसायाप्राणत् प्रजापतये पुरुषम् ॥ ११ ॥ ३९

तस्य यमस्याश्वं प्रतिजगृहुषोऽर्धमिन्द्रियस्यापाक्रामत् स एतेन प्रत्यगृह्णात् सोऽर्धमिन्द्रियस्यो-
पाधत्त य एतद्विद्वानश्वं प्रतिगृह्णात्यर्धमिन्द्रियस्योपधत्ते य एतदविद्वान् प्रतिगृह्णात्यर्धमस्येन्द्रियं-
स्यापक्रामति तस्याग्नेर्हिरण्यं प्रतिजगृहुषस्तृतीयमिन्द्रियस्यापाक्रामत् स एतेन प्रत्यगृह्णात् स तृतीय-
मिन्द्रियस्योपाधत्त य एतद्विद्वान् हिरण्यं प्रतिगृह्णाति तृतीयमिन्द्रियस्योपधत्ते य एतदविद्वान्
प्रतिगृह्णाति तृतीयमस्येन्द्रियस्यापक्रामति तस्य रुद्रस्य गां प्रतिजगृहुषश्चतुर्थमिन्द्रियस्यापाक्रामत्
स एतेन प्रत्यगृह्णात् स चतुर्थमिन्द्रियस्योपाधत्त य एतद्विद्वान् गां प्रतिगृह्णाति चतुर्थमिन्द्रियस्यो-
पधत्ते य एतदविद्वान् प्रतिगृह्णाति चतुर्थमस्येन्द्रियस्यापक्रामति ॥ तस्य बृहस्पतेर्वासः प्रतिजगृहुषः
पञ्चममिन्द्रियस्यापाक्रामत् स एतेन प्रत्यगृह्णात् स पञ्चममिन्द्रियस्योपाधत्त य एतद्विद्वान् वासः
प्रतिगृह्णाति पञ्चममिन्द्रियस्योपधत्ते य एतदविद्वान् प्रतिगृह्णाति पञ्चममस्येन्द्रियस्यापक्रामति तस्यो-
त्तानस्याङ्गिरसस्याप्राणत् प्रतिजगृहुषः षष्ठमिन्द्रियस्यापाक्रामत् स एतेन प्रत्यगृह्णात् स षष्ठमिन्द्रि-
यस्योपाधत्त य एतद्विद्वानप्राणत् प्रतिगृह्णाति षष्ठमिन्द्रियस्योपधत्ते य एतदविद्वान् प्रतिगृह्णाति
षष्ठमस्येन्द्रियस्यापक्रामति तस्य प्रजापतेः पुरुषं प्रतिजगृहुषस्सप्तममिन्द्रियस्यापाक्रामत् स एतेन
प्रत्यगृह्णात् स सप्तममिन्द्रियस्योपाधत्त य एतद्विद्वान् पुरुषं प्रतिगृह्णाति सप्तममिन्द्रियस्योपधत्ते य

---

[१२] मै. १,९,४-५ (४-१७)। वा. ७,४८। काण्व. ९ १४।

एतद्विद्वान् प्रतिगृह्णाति सप्तमंमस्येन्द्रियंस्यापक्रामति ।। क इदं कस्मा अदात् कामः कामायेति कामो हिं दाता कामः प्रतिग्रहीता कामस्समुद्रमाविशदिति समुद्र इव हि कामोऽपरिमितः कामेन त्वा प्रतिगृह्णामि कामैतत् त इति कामेनैवं प्रतिगृह्णाति कामे प्रतिष्ठापयति न ह वै तस्मिन्नमुष्मिल्लोके दक्षिणामिच्छन्ति य एवं विद्वान् दक्षिणां प्रतिगृह्णाति यस्तं देवं वेद योऽग्रे दक्षिणा अनयत् प्र तावदाप्नोति यावद्दक्षिणानां नेत्रं य उ तान् वेद येभ्यस्सं तदनयद्दक्षिणीयो भवति यस्तं प्रतिग्रहं वेद येन तं प्रत्यगृह्णन् वसीयान् भवति प्रतिगृह्य वसीयाँसो हि तं प्रतिगृह्याभवँस्तं देवास्त्वरित्वा व्यतृष्यँस्तेऽविदुरमुतः प्रदानाद्वा इहाजगामेति ।। तं ऋषीनब्रुवन्नतो नो यूयं प्रयच्छतेति सप्तहोतॄन् केनायतनेनेत्यत्रैवं वेत्स्यथेति तं सप्तहोत्रायंमगृहपतयो न्युसीदन् संतनवामेति तेषां महाहविर्होतासीत् सत्यंहविरध्वर्युरचित्तपाजा अग्निदचित्तमना उपवक्ताऽनाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता तं एतं ग्रहमगृह्णत तं आयतनमैच्छँस्तं त्रयस्त्रिँशमेवायतनमचायँस्तेनेदं संमतन्वँस्त्रयस्त्रिँशेन च ह वा इदं सप्तहोत्रा च संततं यदिदं देवमनुष्या अन्योऽन्यस्मै प्रददति संततमस्मा अविच्छिन्नं प्रदीयते य एवं वेद ।। १२ ।। ४०-४३

प्रजापतिर्दशहोता दर्शपूर्णमासौ चतुर्होता चातुर्मास्यानि पञ्चहोता सौम्योऽध्वरस्सप्तहोताग्निहोत्रं दशहोता दर्शपूर्णमासौ चतुर्होता पशुयज्ञष्षड्ढोता सौम्योऽध्वरस्सप्तहोता प्राणो दशहोता चक्षुश्चतुर्होता श्रोत्रं पञ्चहोता वाक्चात्मा च सप्तहोतायुषे कमग्निहोत्रँ हूयते सर्वमायुरेति य एवं वेद चक्षुषे कं पूर्णमा इज्यते न चक्षुषो गृहये य एवं वेद श्रोत्राय कममावस्येज्यते न श्रोत्रस्य गृहये य एवं वेद ।। वाचे चात्मने च कँ सौम्योऽध्वर इज्यते न वाचो नात्मनो गृहये य एवं वेद प्रजापतिर्दशहोतैकस्सन् भूयिष्ठभाग्व्याहृतीनामुतैकस्सन् बहुर्भवति य एवं वेद तेजसे कं पूर्णमा इज्यत आग्नेयो वै ब्राह्मणो गायत्रोऽग्निर्गायत्रच्छन्दास्स्वे एव देवते सप्रस्थे अकर्नास्यान्यो योगक्षेमस्येशे य एवं वेदायुषे कममावस्येज्यते सर्वमायुरेति य एवं वेद स्वर्गाय कँ सौम्योऽध्वर इज्यते स्वर्गमेव तेनैति ।। १३ ।। ४४-४५

यः प्रजया पशुभिरेव प्रभवेद्वरासीं परिधाय तप्तं पिबन् द्वादश रात्रीरधश्शयीत द्वादश्याः प्रातः प्राङुद्द्रुत्य दशहोतारं व्याचक्षीतामिथुनो हि वा एषोऽथ न प्रभवति प्रजापतिर्दशहोता दशधैवात्मानं विधाय मिथुनं कृत्वा प्र प्रजया प्र पशुभिर्जायते चतुर्होत्रा याजयेत् पुत्रकामं चतुर्होत्रा वै देवा इन्द्रमजनयन्निन्द्रियं पुत्रः पुत्रमेवास्मै जनयति न त्वेनमपरोऽनुजायते सर्वेण हीन्द्रियेण सर्वेण

[ क इदं कस्मा अदात्० । अथर्व. ३,२९,७. श्रौ. पू. अ. ५, खं. १३ ]

[१३] मै. १,९,५ (१७)।

[१४] मै. १,९,५-६ (१७-१८)।

वीर्येण जायते वरो दक्षिणा वरो हि पुत्रश्चतुर्होत्रा याजयेद्राजानँ संग्रामे संयत्ते चतुर्होत्रा वै देवा इन्द्रमजनयन्यतरेषामिन्द्रो भवति ते संग्रामं जयन्तीन्द्रमेवास्मै जनयति जयति संग्रामं यत् तत्र विन्दते ततो दक्षिणा समृद्ध्यै पञ्चहोत्रा याजयेत् पशुकामं पञ्चहोत्रा वै देवाः पशूनसृजन्त सर्वा-नेवास्मै पशूञ्जनयति तस्यैताश्चतस्रो दक्षिणा अश्वो हिरण्यं गौर्वासस्सप्तहोत्रा याजयेद्यो यज्ञस्य सँस्थामनु पापीयान् स्याद्वि वा एष च्छिनत्ति यो यज्ञस्य सँस्थामनु पापीयान् भवति पराङेव संक्रामति सप्तहोत्रा वै देवास्स्वरायन् सप्तहोत्रेदँ समतन्वन् समेव तनोति न ततः पापीयान् भवति यादृक्तन्यजते यच्चतुर्होतॄननुसवनं तर्पयितव्यान् वेद तृप्यति प्रजया पशुभिरुपैनँ सोमपीथो नमति॥ दशहोतारं व्याख्याय बहिष्पवमानेनोद्गायेत् प्रजापतिर्दशहोता प्रैव जनयति चतुर्होतारं व्याख्या-याज्यैरुद्गायेच्चतुर्होत्रा वै देवा इन्द्रमजनयन्निन्द्रमेवास्मै जनयति सेन्द्रं तत् सवनं करोति पञ्च-होतारं व्याख्याय माध्यंदिनेन पवमानेनोद्गायेत् पञ्चहोत्रा वै देवा असुरान् प्राणुदन्त पञ्चहोत्रा पशूनसृजन्त भ्रातृव्यमेव पराणुद्य पशून् सृजते सप्तहोतारं व्याख्यायार्भवेण पवमानेनोद्गायेत् सप्त-होत्रा वै देवास्स्वरायन् सप्तहोत्रेदँ समतन्वन् समेव तनोति ॥ दशहोतारँ सामिधेनीष्वनूच्यमानासु व्याचक्षीत प्रजापतिर्दशहोता प्रैव जनयति चतुर्होतारं प्रयाजानां पुरस्ताद्व्याचक्षीत चतुर्होत्रा वै देवा इन्द्रमजनयन्निन्द्रमेवास्मै जनयति सेन्द्रं यज्ञं करोति पञ्चहोतारँ हविषामवदीयमाने व्याचक्षीत पञ्चहोत्रा वै देवा असुरान् प्राणुदन्त पञ्चहोत्रा पशूनसृजन्त भ्रातृव्यमेव पराणुद्य पशून् सृजते सप्त-होतारमनुयाजानामुपरिष्टाद्व्याचक्षीत सप्तहोत्रा वै देवास्स्वरायन् सप्तहोत्रेदँ समतन्वन् समेव तनोति चतुर्होत्रा पूर्णमासे हवीँष्यासन्नान्यभिमृशेच्चतुर्होत्रा वै देवा इन्द्रमजनयन् प्रजननं पूर्णमाः प्रैव जन-यति पञ्चहोत्रामावस्यायाँ हवीँष्यासन्नान्यभिमृशेत् पञ्चहोत्रा वै देवास्स्वरायन् स्वर्ग्यामावस्या स्वर्ग-स्यैवैष लोकस्य परिग्रहः ॥ १४ ॥ ४६-४८

अन्नं वै चतुर्होतारोऽन्नवान् भवति य एवं वेद यदेक एव चतुर्होतेत्याहुः कस्मात् सर्वे चतुर्हो-तार उच्यन्त इति चत्वारो वा एते यज्ञास्तेषां चत्वारो होतारस्तदेषां चतुर्होतृत्वँ संवत्सरं चतुर्णा-मेको नाश्नीयात् तदेषां व्रतमेषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारोऽन्नाद्यायैवैतां विदुस्तेजसे वीर्याय सर्पराज्ञ्या ऋग्भिर्दशमेऽहन्नुद्गातोद्गायेदियं वै सर्पराज्ञ्यन्नं चतुर्होतारोऽन्नमेवाप्त्वान्नमवरुन्द्धेऽप्रयुक्ता वा एतेऽनवरुद्धा यच्चतुर्होतारो यच्चतुर्होतॄन् होता वदति तानेव प्रयुङ्क्ते तानवरुन्द्ध एतद्वै देवानाँ स्तोत्रमनिरुक्तं यत् सर्पराज्ञ्या ऋचस्तस्यै तदुक्थमनिरुक्तं यच्चतुर्होतारो मनसा प्रस्तौति मनसोद्गा-यति मनसा प्रतिहरति रेत एवैतदुद्गातारः प्रसिञ्चन्ति यच्चतुर्होतॄन् होता वदति रेत एव प्रसिक्तँ होता प्रजनयत्यग्न्याधेये व्याचक्षीत ब्रह्मणो वा एतदुदरणं यदग्न्याधेयं ब्रह्मण एतदुदरणं यच्चतु-

[१५] मै. १,९,७--८ ( १९—२० )।

होतारो ब्रह्मण एतदुदरणं यदसा आदित्य उदेति सर्वमेव ब्रह्म सृजतेऽथैते संभारास्सह वै देवानां चासुराणां च यज्ञौ प्रतता आस्तां यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा यज्ञमादाय व्युत्क्रामँस्तमुपरि समभरँस्तेनासुरान् पराभावयन् यत् समभरँस्तत् संभाराणाँ संभारत्वँ समृतसोम एतेषां चतुर्भिश्चतुर्भिः प्रचरिष्यञ्जुहुयात् पूर्व एव यज्ञं पूर्वो देवता गृह्णाति सयज्ञो भवत्ययज्ञ इतरो दीक्षायां वाचयेदेतावान् वै यज्ञो यावानेव यज्ञस्तं गृहीत्वा दीक्षते द्वादशाहे वाचयेदेतावान् वै यज्ञो यावान् द्वादशाहो यावानेव यज्ञो यावान् द्वादशाहस्तं गृहीत्वा दीक्षतेऽथैताः पत्न्यो दक्षिणतो वै देवानामसुरा यज्ञमभ्यजयँस्तेषामाग्नीध्रमनभिजितमासीत् तद्देवाः पत्नीभिस्संप्रापद्यन्त तेऽसुरा ह्रीकाः पत्नीः प्रख्याय पुनरावर्तन्त तान् देवास्ततोऽनूत्थाय माध्यंदिनेन पवमानेनाभ्यजयन् यस्य पत्नीर्विद्वानग्निद्भवत्यभि भ्रातृव्यस्य गृहानभि पशूनारोहति नास्य भ्रातृव्यो गृहान्न पशूनभ्यारोहति यस्य पत्नीर्विद्वानग्निरपात्नीवतस्य यजति विद्वान् पत्नीं तर्पयति तृप्ता पत्नी रेतो धत्ते रेतसः प्रजाः प्रजायन्ते प्रजनिष्णुः प्रजया च पशुभिश्च भवति ॥ १५ ॥ ४९

प्रजास्सृष्ट्वा सोऽकामयत यज्ञँ सृजेयेति स एतँ सप्तहोतारमपश्यत् तं मनसानूद्द्रुत्याजुहोत् तेन यज्ञमसृजत सोऽस्माद्यज्ञस्सृष्टः पराङैत् तं ग्रहेणानूद्द्रुत्यागृह्णात् तद्ग्रहस्य ग्रहत्वँ दीक्षिष्यमाणस्सप्तहोत्रा पुरस्ताज्जुहुयाद्यज्ञमेव सृष्ट्वालभ्य प्रतनुते ग्रहो भवति यज्ञस्य सृष्टस्य धृत्यै यज्ञँ सृष्ट्वा सोऽकामयत दर्शपूर्णमासौ सृजेयेति स एतँ चतुर्होतारमपश्यत् तं मनसानूद्द्रुत्याजुहोत् तेन दर्शपूर्णमासा असृजत तौ अस्माद्दर्शपूर्णमासौ सृष्टौ पराञ्चा ऐतां तौ ग्रहेणानूद्द्रुत्यागृह्णात् तद्ग्रहस्य ग्रहत्वँ दर्शपूर्णमासा आलप्स्यमानश्चतुर्होत्रा पुरस्ताज्जुहुयाद्दर्शपूर्णमासा एव सृष्ट्वालभ्य प्रतनुते ग्रहो भवति दर्शपूर्णमासयोस्सृष्टयोर्धृत्यै दर्शपूर्णमासौ सृष्ट्वा सोऽकामयत चातुर्मास्यानि सृजेयेति स एतं पञ्चहोतारमपश्यत् तं मनसानूद्द्रुत्याजुहोत् तेन चातुर्मास्यान्यसृजत तान्यस्माच्चातुर्मास्यानि सृष्टानि पराञ्च्यायँस्तानि ग्रहेणानूद्द्रुत्यागृह्णात् तद्ग्रहस्य ग्रहत्वं चातुर्मास्यान्यालप्स्यमानः पञ्चहोत्रा पुरस्ताज्जुहुयाच्चातुर्मास्यान्येव सृष्ट्वालभ्य प्रतनुते ग्रहो भवति चातुर्मास्यानाँ सृष्टानां धृत्या अभिचरन् दशहोत्रा जुहुयान्नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेवास्योपदासयति स्वकृत इरिणे प्रदरे वा जुहुयादेतद्वा अस्या निर्ऋतिगृहीतं निर्ऋत्यैवैनं ग्राहयति वषट्करोत्येतद्वै वाचः क्रूरं वाचं एवैनं क्रूरेण प्रवृश्चत्याङ्गिरसश्च वा आदित्याश्च स्वर्गे लोकेऽस्पर्धन्त त आदित्या एतं पञ्चहोतारमपश्यँस्तं मनसानूद्द्रुत्याजुहवुस्तत आदित्यास्स्वर्गं लोकमायन्नपाङ्गिरसोऽभ्रँशन्त तेऽङ्गिरस आदित्यानब्रुवन् क्व स्थ कथं वो हव्यं वक्ष्याम इति च्छन्दस्स्वित्यब्रुवन् गायत्र्यां वसवस्त्रिष्टुभि रुद्रा जगत्यामादित्या इत्यत्र वै देवेभ्यस्सद्भ्यो हव्यमुह्यते य एवं देवानुपदेशनाद्वेदोपदेशनवान् भवति यस्स्वर्गं-

कामस्स्यात् स एत पञ्चहोतारं मनसानुद्द्रुत्य जुहुयात् पञ्च वा ऋतव ऋतवस्संवत्सरस्संवत्सर-
स्स्वर्गो लोक ऋतुष्वेवं संवत्सरे प्रतिष्ठाय स्वर्गं लोकमेति ॥ योऽब्राह्मणो विद्यामनूच्य नैव रोचेत
स एतांश्चतुर्होतॄनरण्यं परेत्य दर्भस्तम्बमुद्ग्रथ्य ब्राह्मणं दक्षिणतो निषाद्य व्याचक्षीतैतद्वै देवानां
ब्रह्मानिरुक्तं यच्चतुर्होतारस्तदेनं निरुच्यमानं प्रकाशं गमयति दर्भस्तम्बमुद्ग्रथ्य व्याचष्टेऽग्निर्वै दर्भ-
स्तम्बोऽग्निमत्येव व्याचष्टे ब्राह्मणो दक्षिणत आस्ते ब्राह्मणो वै प्रजानामुपद्रष्टोपद्रष्टृमत्येव व्याचष्ट
ईश्वरं वा एता उभौ यशोऽर्तोर्यो व्याचष्टे यश्च दक्षिणत आस्ते यो दक्षिणत आस्ते तस्मै वरं दद्या-
द्यदेव तत्र यश ऋच्छति तद्वरेणावरुन्द्धे ॥ १६ ॥ ५०-५१

ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवानोजो वै वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येणाभिभवत्यैन्द्रा-
ग्नमेकादशकपालं निर्वपेत् सजातकाम ओजो वै वीर्यमिन्द्राग्नी ओजसैवैनान् वीर्येणाधस्तादुपा-
स्यते न वा एत एतं प्रयान्तमकामा अनुप्रयान्त्योजो वीर्यमिन्द्राग्नी यदैन्द्राग्न ओज एवैषां वीर्यं
संगृह्य प्रयाति तं प्रयान्तमकामा अनुप्रयान्त्यैन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः प्रजापतेर्वै
प्रजास्सिसृक्षमानस्य तस्येन्द्राग्नी प्रजा अपागूहतां सोऽवेदिन्द्राग्नी वै मे प्रजा अपाघुक्षतामिति स
एतमैन्द्राग्नमपश्यदेकादशकपालं ततो वै तस्मै तौ प्रजाः पुनरदत्तामिन्द्राग्नी एतस्य प्रजामपगूहतो
योऽलं प्रजायै सन् प्रजां न विन्दते ता एव भागधेयेनोपधावति ता अस्मै प्रीतौ प्रजां पुनर्दत्तः पुन-
र्दातृमती याज्यानुवाक्ये भवतस्समृद्ध्या ऐन्द्राग्नमेकादशकपालं निर्वपेत् संग्राममभिप्रयानोजो वै
वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येणाभिप्रयात्यैन्द्राग्नमेकादशकपालं निर्वपेत् संग्राममागत्यौजो वै वीर्य-
मिन्द्राग्नी ओजसैवैनं वीर्येण जयत्यैन्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं जित्वौजसा वा एष वीर्येण
व्यृध्यते यस्संग्रामं जयति सर्वेण हीन्द्रियेण सर्वेण वीर्येण जयत्योजो वीर्यमिन्द्राग्नी यदैन्द्राग्न इन्द्राग्नी
एवैनमोजसा वीर्येण समर्धयत ऐन्द्राग्नमेकादशकपालं निर्वपेत् पौष्णं चरुं सनिं प्रयन्नोजो वै वीर्य-
मिन्द्राग्नी ओजसैव वीर्येण प्रैति पूषा वीर्यस्यानुप्रदाता यत् पौष्णः पूषैवास्मै वीर्यमनुप्रयच्छत्यैन्द्रा-
ग्नमेकादशकपालं निर्वपेत् पौष्णं चरुं क्षेत्रस्य पतये चरुं यः कामयेतास्यां मे जनतायामृध्येतेत्योजो
वै वीर्यमिन्द्राग्नी यदैन्द्राग्न इन्द्राग्नी एवास्मा ओजसा वीर्येण लोकं विन्दतः पूषा वीर्यस्यानुप्रदाता
यत् पौष्णः पूषैवास्मै वीर्यमनुप्रयच्छतीयं क्षेत्रस्य पतिर्यत् क्षेत्रपत्योऽस्यामेव प्रतितिष्ठति॥१७॥ ५२

कया शुभा संवयसस्सनीडास्समान्या मरुतस्संमिमिक्षुः ।
कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया ॥ ५३

---

[१७] मै. २,१,१ ( १ )।

[१८] मै. ४,११,३ ( ७९-९३ )। वा. ३३,२७,७८-७९; ३४,४८। काण्व. ३२,२७,७८-७९; ३३,३६। [ कया शुभा०...वसूया। ऋ. १,१६५,१ ]

कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त ।
श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम ॥ ५४
कुतस्त्वमिन्द्र माहिनस्सन्नेको यासि सत्पते किं त इत्था ।
संपृच्छसे समराणश्शुभानैर्वोचेस्तन्नो हरिवो यत् ते अस्मे ॥ ५५
ब्रह्माणि मे मतयश्शँ सुतासश्शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आ शासते प्रतिहर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥ ५६
अतो वयमन्तमेभिर्युजानास्स्वक्षत्रेभिस्तन्वश्शुम्भमानाः ।
महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥ ५७
क्व स्या वो मरुतस्स्वधासीद्यन्मामेकँ समधत्ताहिहत्ये ।
अहँ ह्युग्रस्तविषस्तुविष्मान् विश्वस्य शत्रोरनमं वधस्नैः ॥ ५८
भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौँस्येभिः ।
भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥ ५९
वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्रास्सुगा अपश्चकर वज्रबाहुः ॥ ६०
अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ६१
एकस्य चिन्मे विभ्वस्त्वोजो या नु दधृष्वान् कृणवै मनीषा ।
अहँ ह्युग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥ ६२
अमन्दन्मा मरुतस्स्तोमो अत्र यन्मे नरश्श्रुत्यं ब्रह्म चक्र ।
इन्द्राय वृष्णे सुमखाय मह्यँ सख्ये सखायस्तन्वे तनूभिः ॥ ६३
एवेदेते प्रति मा रोचमाना अनेद्यश्श्रव एषो दधानाः ।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥ ६४

[ कस्य ब्रह्माणि०...रीरमाम । ऋ. १,१६५,२ । कुतस्त्वामिन्द्र०...अस्मे । ऋ. १,१६५,३ । ब्रह्माणि मे मतयः०...अच्छ । ऋ. १,१६५,४ । अतो वयमन्त०...बभूथ । ऋ. १,१६५,५ । क्व स्या वो० वधस्नैः । ऋ. १,१६५,६; तै. ब्रा. २,८,३,५ । भूरि चकर्थ०...यद्वशाम । ऋ. १,१६५,७; नि. ६,७ । वधीं वृत्रं०...वज्रबाहुः । ऋ. १,१६५,८, तै. ब्रा. २,८,३,६ । अनुत्तमा ते०...प्रवृद्ध । ऋ. १,१६५,९ । एकस्य चिन्मे०...एषाम् । ऋ. १,१६५,१० । अमन्दन्मा०...तनूभिः । ऋ. १,१६५,११ । एवेदेते०...नूनम् । ऋ. १,१६५,१२ ]

को न्वत्र मरुतो मामहे वः प्रयातन सखींरच्छा सखायः ।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥ ६५
आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।
ओ षु वर्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥ ६६
एष वस्स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषायासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १८ ॥ ६७

मरुतो यद्ध वो दिवो यूयमस्मानिन्द्रं वः ॥ ६८

आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात् ।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ ६९
त्वा युजा तव तत् सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः ।
अहन्नहिमरिणात् सप्त सिन्धूनपावृणोदपिहितेव खानि ॥ ७०
ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यस्सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ ७१

अग्ने नक्षत्रमग्ने बृहन्नुदु त्यं चित्रं देवानाम् ॥ ७२

अयुक्त सप्त शुन्ध्युवस्सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ॥ ७३
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ ७४
अयं पूषा रयिर्भगस्सोमः पुनानो अर्षति । पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ७५

---

[ को न्वत्र मरुतो० . ऋतानाम । ऋ. १,१६५,१३ । आ यद्दुवस्या०...अर्चत् । ऋ. १,१६५,१४ । एष वस्स्तोमो०. जीरदानुम । ऋ. १,१६५,१५ १६६,१५; १६७,११; १६८,१० ]

[ १९ ] मै. ४ ११,१—७ ( ७४,४६—८७ )। वा ७,४१—४२; ८,४१;३३,३१; १३,४६; ४,३; १२,१९ । काण्व ८,२३—२४; ९,६—७; ३२,३१ १४,४८; ४,४; १३,२० । [ मरुतो यद्ध वो०। ऋ. ८,७,११; तै. सं. १ ५,११,४ । यूयमस्मान्नयत० । ऋ ५,५५,१० । इन्द्रं वः० । ऋ. १,७,१०; ६,२९,१; सा. १६२०; अथर्व २०,३९,१ ७०,१६; तै. सं. १,६,१२,१ । आ ते शुष्मो० । ऋ. ६,१९,९; तै ब्रा. २,५,८,१; ८,५,९ त्वा युजा तव० । ऋ. ४,२८ १ । ऋदूदरेण सख्या० । ऋ ८ ४८,१०; तै. सं. २,२,१२,३; नि. ६,४ अग्ने नक्षत्र० । ऋ. १०,१५६,४; सा. १५३० । अग्ने बृहन्० । ऋ. १०,१,१; तै. सं. ४,२,१,४ । उदु त्यं० ऋ १,५०,१; सा. ३१; अथर्व. १३,२,१६; २०,४७,१३; तै. सं. १,२,८,२; ४,४३,१; नि. १२,१५ । चित्रं देवाना० । ऋ. १,११५,१; अथर्व. १३,२,३५; २०,१०७,१४; तै. सं. १,४,४३,१; २,४,१४,४; तै. ब्रा २,८ ७,३, तै आ. ३,९; तै. आ. १,७ ६, २,१३,१; नि. १२,१६ । अयुक्त सप्त० । ऋ. १,५०,९; अथर्व. १३ २,२४; २०,४७,२१; तै. ब्रा. २,४,५,४ । सप्त त्वा० । ऋ. १,५०,८ सा. ६४०; अथर्व. १३,२,२३; २०,४७ २०; तै. सं २,४,१४,४ । अयं पूषा रयि० । ऋ ९,१०१,७; सा. ५४६ ८१८ ]

वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्युस्मान्निधयेव बद्धान् ॥ ७६

यथा ह त्यद्वसवः ॥ ७७

चक्षुर्मे धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येम ॥ ७८

सुसंदृशं त्वा वयं प्रतिपश्येम सूर्य । विपश्येम नृचक्षसः ॥ ७९

अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥ ८०

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ ८१

इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ८२

अतिविद्धा विथुरेणा चिदस्त्रा त्रिस्सप्त सानु संहिता गिरीणाम् ।
न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥ ८३

यस्तस्तम्भ सहसा वि ज्मो अन्तान् बृहस्पतिस्त्रिषधस्थो रवेण ।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥ ८४

विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृन्तत् ।
बृहस्पतिरुषसं सूर्यं गामर्कं विवेद स्तनयन्निव द्यौः ॥ १९ ॥ ८५

[७२६]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामुत्सीदनं नाम नवमं स्थानकं संपूर्णम् ॥९॥



---

[ वयस्सुपर्णा० । ऋ. १०,७३,११· गा. ३१९; तै. ब्रा २,५,८,३: तै. आ. ४,४२,३; नि. ४,३ । यथा ह त्यद्वसवो० । ऋ. ४,१२,६; १०,१२६ ८; तै. सं. ४,७,१५,७ । चक्षुर्मे (०र्नो) धेहि० । ऋ. १०,१५८,४ । सुसंदृशं त्वा० । ऋ. १०,१५८,५ । अग्ने त्री ते० । ऋ. ३,२०,२;· तै. सं. ३,२,११,१ । विद्मा ते अग्ने० । ऋ. १०,४५,२· तै सं ४,२,२,१ । इन्द्र त्रिधातु० । ऋ. ६,४६,९; सा. २६६; अथर्व. २०,८३,१ । अतिविद्धा विथुरेणा० । ऋ ८,९६,२ । यस्तस्तम्भ सहसा० । ऋ. ४,५०,१· अथर्व. २०,८८,१ । विभिद्या पुरं० । ऋ १०,६७,५; अथर्व २०,९१,५ ]

अथ दशमं स्थानकम् ।

## आग्नावैष्णवम् ।

आग्नावैष्णवमेकादशकपालं निर्वपेत् सारस्वतं चरुं बार्हस्पत्यं चरुमभिचरन्वाभिचर्यमाणो वाग्निर्वै सर्वा देवता विष्णुर्यज्ञो वाक् सरस्वती ब्रह्म बृहस्पतिरग्निनैवास्य देवताभिर्देवताः प्रतिचरति विष्णुना यज्ञेन यज्ञँ सरस्वत्या वाचा वाचं बृहस्पतिना ब्रह्मणा ब्रह्म सममेव कृत्वा यत् किंच ततः करोति तेनातिप्रयुङ्क्त एतामेव निर्वपेदभिचरन्नग्निर्वै सर्वा देवता विष्णुर्यज्ञो वाक् सरस्वती ब्रह्म बृहस्पतिरग्निनैवैनं देवताभिरभिप्रयुङ्क्ते विष्णुना यज्ञेन सरस्वत्या वाचा बृहस्पतिना ब्रह्मणा स्तृणुत एनमाग्नावैष्णवमेकादशकपालं निर्वपेत् पशुमालप्स्यमानो व्यृद्धेन वा एष पशुना चरति यो देवताश्च यज्ञं चानवरुध्य पशुमालभतेऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चावरुध्य पशुमालभत आग्नावैष्णवमेकादशकपालं निर्वपेत् संग्रामेऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च जयति यदि मन्येत प्रति पुरस्ताच्चरन्तीति द्वे अनुवाक्ये कुर्यादेकां याज्यां सममेव द्वाभ्यां करोत्येकया प्रयुङ्क्त आग्नावैष्णवं घृते चरुं निर्वपेदभिचर्यमाणोऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं च मध्यतः प्रविशति ॥ मिथुनं वा एतद्यद् घृतं च तण्डुलाश्च धेन्वा घृतं पयोऽनडुहस्तण्डुला मिथुनेनैवात्मानमभितः पर्यूहते स्तृत्या आग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै मनुष्याश्चक्षुषा पश्यन्ति विष्णोर्देवतास्तौ चक्षुषः प्रदातारौ ता एव भागधेयेनोपधावति ता अस्मै चक्षुः प्रयच्छतो मिथुनं वा एतद्यद् घृतं च तण्डुलाश्च धेन्वा घृतं पयोऽनडुहस्तण्डुला मिथुनं चक्षुर्मिथुनेनैवास्मै मिथुनं जनयति घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मिँस्तेजो दधात्याग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातस्सारस्वतं चरुं बार्हस्पत्यं चरुमाग्नावैष्णवमेकादशकपालं मध्यंदिन एतौ च चरू आग्नावैष्णवं द्वादशकपालमपराह्ण एतौ च चरू यस्य भ्रातृव्यस्सोमेन यजेताग्निर्वै सर्वा देवता विष्णुर्यज्ञो वाक् सरस्वती ब्रह्म बृहस्पतिरग्निनैवास्य देवताभिर्देवता आप्नोति विष्णुना यज्ञेन यज्ञँ सरस्वत्या वाचा वाचं बृहस्पतिना ब्रह्मणा ब्रह्म पुरोडाशैस्सवनानि कपालैश्छन्दाँसि सैपाध्वरकल्पा नामेष्टिर्यज्ञमेवैतयाप्नोति तत्र यत् किंच ददाति तद्दक्षिणा मैत्रावरुणमेककपालमनुनिर्वपति यैवासौ मैत्रावरुणी वशानूबन्ध्या तामेव तेनाप्नोत्येककपालो भवति न वै पुरुषं कपालैराप्तुमर्हत्येकधैवैनमाप्नोति ॥ १ ॥ १-२

देवा वै सत्रमासत यशस्कामा अग्निस्सोम इन्द्रस्तेऽब्रुवन् यन्नो यश ऋच्छात् तन्नस्सहेति तेषाँ सोमं यश आर्च्छत् तस्मात् स यशस्वी स गिरिमगच्छत् तस्मात् स गिरौ तमग्निरन्वागच्छत् ता

[ १ ] मै. २,१,७ (७)। तै. सं. २,२,९।
[ २ ] मै. २,१,५ (४)। तै. सं. २,३,३, २,४,४,३।

अग्नीषोमौ समभवतामथेन्द्रोऽधृतश्शिथिल इवामन्यत सोऽन्वागच्छत् सोऽग्नौ चैव सोमे चानाथत
तमेतयेष्ट्यायाजयतामग्नीषोमीयेणैकादशकपालेन तेजो वा अग्निरिन्द्रियँ सोमस्तेज एवास्मिन्नग्निरा-
ग्नेयेनादधादिन्द्रियँ सोमस्सौम्येन ततो वै सोऽभवदेतेन यजेत बुभूषन्नग्नीषोमीयेणैकादशकपालेन
तेजो वा अग्निरिन्द्रियँ सोमस्तेज एवास्मिन्नग्निराग्नेयेनादधातीन्द्रियँ सोमस्सौम्येन भवत्येवाग्नी-
षोमीयमेकादशकपालं निर्वपेत् सर्वेभ्यः कामेभ्यो ब्राह्मणोऽग्नीषोमौ वै ब्राह्मणस्य स्वा देवता ता एव
भागधेयेनोपधावति ता अस्मै सर्वान् कामान् प्रयच्छतोऽग्नीषोमीयमष्टाकपालं निर्वपेच्छ्यामाकं
वसन्ता ब्राह्मणो ब्रह्मवर्चसकामोऽग्नीषोमौ वै ब्रह्मवर्चसस्य प्रदातारौ ता एव भागधेयेनोपधावति
ता अस्मै ब्रह्मवर्चसं प्रयच्छतो वसन्ता यजेत वसन्तो वै ब्राह्मणस्यर्तुस्स्व एवर्तौ ब्रह्मवर्चसमवरुन्द्ध
एवमिव वै ब्रह्मवर्चसं बभ्रुव क्षुद्रमिव हरितमिव ब्रह्मवर्चसमेव संदधाति यदष्टाकपालस्तेनाग्नेयो
यच्छ्यामाकस्तेन सौम्यस्तेनोभयस्मान्नैत्यग्नीषोमीये याज्यानुवाक्ये भवतस्सामान्नी संयाज्ये तेजो
वा अग्निरिन्द्रियँ सोमस्तेजसा चैवेन्द्रियेण च ब्रह्मवर्चसमुभयतः परिगृह्यात्मन्धत्ते ॥ २ ॥ ३
अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्योऽनन्नमद्याद्यो वा जिघत्सेत् संवत्सरो वा अग्निर्वैश्वा-
नरस्संवत्सरेणैव पूतँ स्वदितमत्ति यदि जग्ध्वा निर्वपति संवत्सर एवास्मै जग्धं स्वदयत्यग्नये वैश्वा-
नराय द्वादशकपालं निर्वपेद्यस्समान्तमभिद्रुह्येद्यो वाभिदुद्रुक्षेत् संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरा-
यैष समम्ते यस्समम्ते संवत्सरमेवाप्त्वा काममवरुणमभिद्रुह्यत्यग्नये वैश्वानराय द्वादशकपालं निर्व-
पेद्यः प्रतिगृहीतस्स्यात् सनिकामस्संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरायैतं प्रतिगृह्णन्ति यं प्रति-
गृह्णन्ति संवत्सरमेवाप्त्वा सातँ सनिं वनुतेऽग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सनिं निदधत्
संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरमेष प्रयुङ्क्ते यो याचति संवत्सरमेव विमुञ्चति संवत्सरो वा
एतदेतस्मै सनोति यद् वनुते तमेव भागिनं करोति यमुत्तममार्जेत् तँ स रज्जुमप्रियाय भ्रातृव्याय
दद्यात् पाशेन वा एष चरति यो याचति पाशमेवाप्रियाय भ्रातृव्याय प्रतिमुञ्चत्यग्नये वैश्वानराय
द्वादशकपालं निर्वपेद्यः कामयेतानेन राज्ञा वा ग्रामण्या वेदँ सस्यमाददीयेति संवत्सरो वा अग्नि-
र्वैश्वानरस्संवत्सरोऽन्नाद्यस्य प्रदाता तमेव भागधेयेनोपधावति सोऽस्मा अन्नाद्यं प्रयच्छति संवत्सरं
ह्यन्नमनुप्रजायतेऽग्नये वैश्वानराय द्वादशकपालं निर्वपेद् वृष्टिकामस्संवत्सरो वा अग्निर्वैश्वानर एषा
संवत्सरस्य क्रूरा तनूर्या वैश्वानरी तयैतदभितपन्नभिशोचयँस्तिष्ठति भागधेयमिच्छमानस्तामेवास्य
प्रीणाति सास्मै प्रीता वृष्टिं निनयत्यग्नये वैश्वानराय द्वादशकपालं निर्वपेत् संग्रामे संवत्सरो
वा अग्निर्वैश्वानरो यतरस्संयत्तयोरनायतनो भवति परा स जयते संवत्सरमेवायतनं कृत्वा जयति
संग्रामम् ॥ ३ ॥ ४

---

[ ३ ] मै. २,१,२ ( २ ) । तै. सं. २,२,६ । [ अग्नये वैश्वानराय द्वादशकपालं । ऐ. ब्रा. अ. ७, खं. ९ ]

अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्ग्रामकामो भूतिकामो ब्रह्मवर्चसकामस्तस्य हरितँ हिरण्यं मध्ये कुर्याद् रजतमुपरिष्टात् संवत्सरो वा अग्निर्वैश्वानरो वीर्यँ संवत्सर आत्मा हरितँ हिरण्यं वीर्यस्यैवैनं मध्यतो दधाति भूत्यै भवत्येव यद् रजतं तत् सह भस्मनापोहति शमलगृहीतो वा एष योऽलं ब्रह्मवर्चसाय सन्न ब्रह्मवर्चसी भवति शमलमेवास्मादपहन्ति ब्रह्मवर्चसेनैनँ सँसृजति यथा वै नाभिमरा अभिसँश्रिता एवँ संवत्सरं मासाश्चर्तवश्चाभिसँश्रिता यद्धिरण्यं मध्ये करोति नाभिमेवैनं करोति॥ यथा नाभिमरा अभिसँश्रिता एवमेनँ सजातैरभिसँश्रयति वारुणं यवमयं चरुं निर्वपेदग्नये वैश्वानराय द्वादशकपालमामयावी वरुणगृहीतो वा एष य आमयावी यद् वारुणो वरुणादेवैनं मुञ्चति यवमयो भवत्येतद्वै वरुणस्य भागधेयं यद्यवास्स्वेनैव भागधेयेन वरुणं निरवदयते प्रादेशमात्रो भवत्येतावान् वै पुरुषो यावदस्य प्राणा अभि यावानेवास्यात्मा तं वरुणान्मुञ्चति संवत्सरो वा अग्निर्वैश्वानर आयुस्संवत्सरस्संवत्सर एवैनमायुषि प्रतिष्ठापयति सर्वमायुरेति वारुणं यवमयं चरुं निर्वपेदग्नये वैश्वानराय द्वादशकपालं राजन्यायाभिचरते वा बुभूषते वा वरुणगृहीतो वा एष योऽन्यस्याददान उपहरमाणश्चरति यद् वारुणो वरुणादेवैनं मुञ्चति यवमयो भवति प्रादेशमात्रो भवति संवत्सरो वा अग्निर्वैश्वानरो वीर्यँ संवत्सरस्संवत्सर एवैनं वीर्ये प्रतिष्ठापयति भूत्यै भवत्येवाग्नये वैश्वानराय द्वादशकपालं निर्वपेदग्निमुत्सादयिष्यन् संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरमेष उत्साद्यमानोऽनूत्सीदति भागिनमेवैनं कृत्वा संवत्सरमनूत्सादयत्यग्नये वैश्वानराय द्वादशकपालं निर्वपेद्यः पुरुषं प्रतिगृह्णीयादार्तां वा एष आत्मना दक्षिणां प्रतिगृह्णाति यः पुरुषं प्रतिगृह्णात्यार्तां दक्षिणां प्रतिगृहीताँ हिनस्ति संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरस्स्वदितस्य स्वदयिता तमेव भागधेयेनोपधावति सोऽस्मै तत् सर्वँ स्वदयति ॥ ४ ॥ ५–६

अग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्य पौर्णमासी वामावस्या वातिपद्येत बहिष्पथं वा एष एति यस्य पौर्णमासी वामावस्या वातिपद्यतेऽग्निर्देवानां पथिकृत् तमेवान्वारभते स एनं पन्थामपिनयति वि वा एतद्यज्ञं छिनत्ति यद्यज्ञे प्रतत एतामन्तरेष्टिं निर्वपति य एवासा आग्नेयोऽष्टाकपालः पूर्णमासे योऽमावस्यायां तमग्नये पथिकृते कुर्यात् तेनैव पुनः पन्थामवैति न यज्ञं विच्छिनत्त्यग्नये वाजसृतेऽष्टाकपालं निर्वपेत् संग्रामेऽग्निर्वै देवानां वाजसृद्वाजमेष धावति यस्संग्रामं जयति तमेव भागधेयेनोपधावति वाजमेव धावति जयति संग्राममथो अग्निरिव न प्रतिधृषे भवत्यग्नये व्रतपतयेऽष्टाकपालं निर्वपेद्य आहिताग्निस्सन्नव्रत्यं चरेदानीतो वा एष देवानां य आहिताग्निरदन्त्यस्यान्नं व्रतपतिमेतस्य व्रतं गच्छति य आहिताग्निस्सन्नव्रत्यं चरत्यग्निर्देवानां व्रतपतिस्तमेव

[ ४ ] मै. २,१,२ ( २ )। तै. सं. २,२,६। [ अग्नये०...कपालं । ऐ. ब्रा. अ. ७ खं ९ ]

[ ५ ] मै. २,१,१०—११ ( १४—१५ )। तै. सं. २,२,२। [ अग्नये पथिकृतेऽष्टाकपालं । ऐ. ब्रा. ७,८ ]

भागधेयेनोपधावति व्रतपतेरेवाधि व्रतमालभतेऽग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेदामयावीन्द्रं वै जातं रक्षाँस्यसचन्त स आदीयमानो रक्षोभिस्संमृश्यमानोऽग्निं प्राविशत् तस्मादग्नी रक्षाँस्यपाहन् रक्षाँस्येतँ सचन्ते य आमयाव्यग्निर्देवानां रक्षोहा तमेव भागधेयेनोपधावति सोऽस्माद् रक्षाँस्यपहन्त्यमावस्यां रात्रीं निशि यजेतामावस्यां वै रात्रीं निशि रक्षाँसि प्रेरते पूर्णान्येवैनान्यपवपति परिश्रिते यजेत रक्षसामन्तर्हित्यै ॥ वामदेवस्यैतत् पञ्चदशं राक्षोघ्नँ सामिधेन्यो भवन्ति वामदेवश्च वै कुसिदायी चात्मनोराजिमयातां तस्य कुसिदायी पूर्वस्यातिद्रुतस्य कूबरं न्यमृणत् सा द्वितीयमुपपर्यावर्ततेषां वाक्षं वा छेत्स्यामीति स वामदेव उरव्यमाग्निमाविभस्तमवैक्षत स एतत् सूक्तमपश्यत् कृणुष्व पाजः प्रसितिं न पृथ्वीमिति तामग्निरनूद्द्रुत्य समदहत् सा दह्यमाना ह्रदं कौसिदं प्रामज्जद्यदेतदनूच्यते रक्षसां दुष्ट्यै ॥ ५ ॥ ७-८

नैमिष्या वै सत्रमासत त उत्थाय सप्तविँशतिं कुरुपञ्चालेषु वत्सतरानवन्वत तान्वको दाल्भिरब्रवीद्यूयमेवैतान् विभजध्वमिममहं धृतराष्ट्रं वैचित्रवीर्यं गमिष्यामि स मह्यं गृहान् करिष्यतीति तमागच्छत् तन्नाभ्यक्षत् तं प्राकालयतैता गा ब्रह्मबन्ध इत्यब्रवीत् पशुपतिर्गा हन्ति ताः परः पचमानश्चरेति तासां देवक्ष्मे राजानं प्रासुपोदिति सकथान्युत्कर्तमपचत तस्मिन् पचमाने व्युदस्यत् सोऽग्नये रुद्रवतेऽष्टाकपालं निरवपत् कृष्णानां व्रीहीणां तस्य यत् किंच धृतराष्ट्रस्यासीत् तत् सर्वमवकर्णं विद्राणमभिव्यौच्छत् ता विप्रश्निका अविन्दन् ब्राह्मणो वै त्वायमभिचरति तस्मिन्नाथस्वेति तमुपाशिक्षत् तस्मै बह्वददात् सोऽग्नये सुरभिमतेऽष्टाकपालं निरवपच्छुक्लानां व्रीहीणां ततो वै तद्व्यदस्यदग्नये रुद्रवतेऽष्टाकपालं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्नग्निर्वै रुद्रो रुद्रायैवैनमपिदधाति कृष्णानां व्रीहीणां भवति कृष्णमिव वै तमस्तमो मृत्युर्मृत्युनैवैनं ग्रहयत्यग्नये सुरभिमतेऽष्टाकपालं निर्वपेद्यह्यँ देवः प्रजा अभिमन्येत यदा कामयेत विदस्येदिन्येषा वा अग्नेर्भिषज्या तनूर्या सुरभिमती तामेव भागधेयेनोपधावति तयैना भिषज्यत्यग्नये सुरभिमतेऽष्टाकपालं निर्वपेद्यं प्रमीतँ शृणुयुः पूतिर्वा एष श्रूयते यः प्रमीतश्श्रूयते यैवाग्नेस्सुरभिमती तनूस्तामेव भागधेयेनोपधावति तयैनँ सुरभिं करोत्यग्नये सुरभिमतेऽष्टाकपालं निर्वपेद्यमजघ्निवाँसमभिशँसेयुश्शमलगृहीतो वा एष यमजघ्निवाँसमभिशँसन्ति यैवाग्नेस्सुरभिमती तनूस्तामेव भागधेयेनोपधावति तयैनं पुनात्यग्नयेऽन्नादायाष्टाकपालं निर्वपेद्यः कामयेतान्नादस्स्यामित्यग्निर्वै देवानामन्नादस्तमेव भागधेयेनोपधावति स एनमन्नादं करोत्यग्नयेऽन्नवतेऽष्टाकपालं निर्वपेद्यः कामयेतान्नवान् स्यामित्यग्निर्वै देवानामन्नवाँस्तमेव भागधेयेनोपधावति स एनमन्नवन्तं करोत्यग्नयेऽन्नपतयेऽष्टाकपालं निर्वपेद्यः कामयेतान्नपतिस्स्यामित्यग्निर्वै देवानामन्नपतिस्तमेव भागधेयेनोपधावति स एनमन्नपतिं करोति संवत्सरं परिनिर्वपेत् संवत्सरो वा

[ कृणुष्व पाजः प्रसितिं० । ऋ. ४,४,१; तै. सं. १,२,१४,१; नि. ६,१२ ]

अन्नाद्यस्य प्रदाता तमेव भागधेयेनोपधावति स एनमन्नादमन्नवन्तमन्नपतिं करोत्यग्नये वसुमतेऽष्टा-
कपालं निर्वपेत् सर्वेभ्यः कामेभ्यो ब्राह्मणो यद्वै किंच विन्दते तद्वस्वग्निर्देवानां वसुमाँस्तमेव भाग-
धेयेनोपधावति सोऽस्मै सर्वान् कामान् प्रयच्छति ॥ ६ ॥ ९

अग्नये यविष्ठायाष्टाकपालं निर्वपेदभिचरन् वाभिचर्यमाणो वा देवाश्च वा असुराश्च व्यभ्युचरन्त तेऽसुरा देवेभ्यो विसृष्टीर्व्यसृजँस्ते देवा अविदुर्विसृष्टीर्वै नोऽसुरा व्यस्राक्षुरिति तेऽग्नये यविष्ठाया-ष्टाकपालं निरवपँस्तेन वै ते ता विसृष्टीरयावयन्तात्मनोऽधि विसृष्टिमेतस्मै विसृजन्ति यमभिचरन्ति यदग्नये यविष्ठाय निर्वपति तेनैव तां विसृष्टिं यावयत आत्मनोऽध्यग्नये यविष्ठायाष्टाकपालं निर्वपेत् समृतसोमे देवतासु वा एते संमृच्छन्ते येषाँ सोमौ समृच्छेते अग्निस्सर्वा देवता अग्निनैवैषां यविष्ठेन देवता वृङ्क्ते॥ देवाश्च वा असुराश्च संयत्ता आसन् यान् देवानामघ्नँस्तदेव तेऽभवन् यानसुराणां पुनस्त उत्पत्यायुध्यन्त ते देवा अविदुर्यं वै न इमे केच म्रियन्तेऽग्निर्वावैतान् हन्तीति तेऽब्रुवन् मा नश्श-म्नीथाः कथा नश्शम्नीष इति भागो मेऽस्त्वित्यब्रवीन्न वोऽभागधेयः क्षमिष्य इति तेऽग्नये क्षमवते-ऽष्टाकपालं निरवपँस्ततो वै स तेभ्योऽक्षमताग्नये क्षमवतेऽष्टाकपालं निर्वपेद्यद्यर्यं देवः प्रजा अभिमन्येत यदा कामयेत विदस्येदिति ये वा इमे केच म्रियन्तेऽग्निर्वावैतान् हन्त्यग्निर्देवानां क्षमवाँस्त-मेव भागधेयेनोपधावति सोऽस्मै प्रीतः क्षमत एवं देवाः पितरो मनुष्यास्तेऽन्यत आसन्नसुरा रक्षाँसि पिशाचास्तेऽन्यतस्ते समयतन्त ते यद्देवानामप्यल्पकं लोहितमसुरा अकुर्वँस्तद्रात्रीभी रक्षाँ-स्यसुम्भँस्तान् सुब्धान् मृतानभिव्यौच्छत् ते देवा अविदुर्यं वै न इमे केच म्रियन्ते रक्षाँसि वावैतान् सुम्भन्तीति तान्युपामन्त्रयन्त तान्यब्रुवन् वार्यं वृणामहै यद्देवेमानसुराञ्जयाम तन्नस्सहासदिति ततो देवा असुरानजयँस्तेऽसुराञ्जित्वा रक्षाँस्यपानुदन्त तान्यनृतमकर्तेति समन्तं देवान् पर्यविशँस्ते देवा अग्ना एवानाथन्त तेऽग्नये प्रवतेऽष्टाकपालं निरवपन्नग्नये विबाधवतेऽष्टाकपालमग्नये प्रतीकवतेऽष्टा-कपालं यदग्नये प्रवते यान्येव पुरस्ताद्रक्षाँस्यासँस्तानि तेन प्राणुदन्त यद्विबाधवते यान्येवाभित आसँ-स्तानि तेन व्यबाधन्त यत् प्रतीकवते यान्येव पश्चाद्रक्षाँस्यासँस्तानि तेनापानुदन्तैतया यजेत भ्रातृ-व्यवान् यो बहुभ्रातृव्यस्स्यादग्नये प्रवतेऽष्टाकपालं निर्वपेदग्नये विबाधवतेऽष्टाकपालमग्नये प्रतीकवते-ऽष्टाकपालं यदग्नये प्रवते य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्त तेन प्रणुदते यद्विबाधवते य एवैनेन सदृङ् तं तेन विबाधते यत् प्रतीकवते य एवास्य पश्चाद्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयाँसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतया यजते देवाश्च वा असुराश्च संयत्ता आसँस्तान् गायत्र्यन्तरातिष्ठदोजो वीर्यमन्नाद्यं परिगृह्य संवत्सरो वावैनान् सोऽन्तरातिष्ठच्चतुर्विंशति-

[ ७ ] मं. २,१,११ ( १५—२१ )। वा. १०,१५; १९,९। काण्व. ११,२३; २१,८।

गायत्र्या अक्षराणि चतुर्विंशतिस्संवत्सरस्यार्धमासास्तेऽविदुर्यतरान्वा इयमुपावत्स्यतीति तं इदं भविष्यन्तीति तां व्यह्वयन्त दाभीत्यसुरा अह्वयन् विश्वकर्मन्निति देवास्सा नान्यतरांश्चनोपावर्तत तं देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुस्सर्वमासि सर्वायुरभिभूरिति सा देवानुपावर्तत ततो देवा अभवन् परासुरा अभवन्नाग्नेयमष्टाकपालं निर्वपेद्भ्रातृव्यवान् वा स्पर्धमानो वा तमासाद्यैतैर्यजुर्भिरभिमृशेदोजो वै वीर्यं संवत्सरं ओज एवं वीर्यं भ्रातृव्यस्य वृङ्क्ते स निर्वार्गः पराभवति मैषा गायत्री नामेष्टिरथो आहुः क्षत्रस्य संवर्ग इति ॥७॥

१०-११

इन्द्राय घर्मवत एकादशकपालं निर्वपेद्ब्रह्मवर्चसकामोऽसौ वा आदित्यो घर्म एष इन्द्र एष ब्रह्मवर्चसस्य प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै ब्रह्मवर्चसं प्रयच्छतीन्द्रायेन्द्रियवत एकादशकपालं निर्वपेत् पशुकाम इन्द्रियं वै पशव इन्द्रः पशूनां प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै पशून् प्रयच्छतीन्द्रायार्कवत एकादशकपालं निर्वपेदन्नकामोऽन्नं वा अर्क इन्द्रोऽन्नाद्यस्य प्रदाता तमेव भागधेयेनोपधावति सोऽस्मा अन्नाद्यं प्रयच्छतीन्द्रायार्कवत एकादशकपालं निर्वपेदपरुद्धोऽवगमकामोऽन्तं वा एष गच्छति यमपरुन्धन्त्येषेन्द्रस्यान्त्या तनूर्यार्कवत्यन्त एवास्मा अन्तं कल्पयति वशा दक्षिणा वशं मा नयादितीन्द्राय घर्मवत एकादशकपालं निर्वपेदिन्द्रायेन्द्रियवत एकादशकपालमिन्द्रायार्कवत एकादशकपालँ समानबर्हींषि बुभूषन् यदिन्द्राय घर्मवतेऽसौ वा आदित्यो घर्म एष इन्द्र एष शिरः प्रजानां शिर एव तेन कुरुते यदिन्द्रायेन्द्रियवत इन्द्रियमेव तेनात्मन् धत्ते यदिन्द्रायार्कवत इयं वा अर्कोऽस्यामेव तेन प्रतितिष्ठति चरुर्मध्ये स्यादजामित्वायेन्द्राय मन्युमत एकादशकपालं निर्वपेत् संग्रामे मन्युना वै वीर्यं करोतीन्द्रियेण जयति मन्युं चैवैष्विन्द्रियं च जित्यै दधातीन्द्राय मन्युमते मनस्वत एकादशकपालं निर्वपेत् संग्रामे मन्युना वै वीर्यं करोतीन्द्रियेण जयति मन्युं चैवैष्विन्द्रियं च सयुजौ कृत्वा तयोर्मनो जित्यै दधातीन्द्राय मनस्वते त्विषीमत एकादशकपालं निर्वपेद्यः कामयेत मनस्वी त्विषीमान् स्यामिति मनो वै श्रीस्त्विषिर्मन एवास्मिञ्छ्रियं त्विषिं दधाति संवत्सरं पुरा मनसो न कीर्तयेत् संवत्सरेण वा अनाप्तमाप्यते संवत्सरमेवाप्त्वावरुन्द्धे ॥ ८ ॥ १२

इन्द्राय सुत्राम्ण एकादशकपालं निर्वपेदपरुद्धो वापरुरुत्स्यमानो वेन्द्रो वै त्रातेन्द्रोऽपरोद्धा तमेव भागधेयेनोपधावति स एनं त्रायत इन्द्रायाँहोमुच एकादकपालं निर्वपेदामयाव्यँहसा वा एष गृहीतो य आमयाव्येषेन्द्रस्य भिषज्या तनूर्याँहोमुगिन्द्रोऽँहसो मोक्ता तमेव भागधेयेनोपधावति स एनमँहसो मुञ्चतीन्द्रायाँहोमुच एकादशकपालं निर्वपेद्य आत्मना वा गृहैर्वाह्वूरणमवेयादँहसा वा

---

[ ओजोऽसि सहोऽसि बलमसि । अथर्व. २,१७,१—३ ]

[ ८ ] मै. २,२,९,१२ ( ३१,३४ ) । तै. सं. २,२,७—८; ८,२ । [ ९ ] मै. २,२,१० ( ३० ) ।

एष गृहीतो य आत्मना वा गृहैर्वाँहूरणमवैतीन्द्रोऽँहसो मोक्ता तमेव भागधेयेनोपधावति स एनमँहसो मुञ्चतीन्द्रायार्कवतेऽश्वमेधवत एकादशकपालं निर्वपेद्यः कामयेत महायज्ञो मोपनमेदितीयं वा अर्कोसा अश्वमेध ऐन्द्रो यज्ञोऽन्तमेतस्य यज्ञो गच्छति यं यज्ञकामं यज्ञो नोपनमत्येते इन्द्रस्यान्त्ये तन्वौ ये अर्कवती ये एवेन्द्रस्यान्त्ये तन्वौ ताभ्यामेव यज्ञमालभत उपैनं यज्ञो नमतीन्द्रायान्वृजव एकादशकपालं निर्वपेत् सजातकाम इन्द्रियं वै ज्यैष्ठ्यमिन्द्रियेणैव सजातानन्वृजून् कुरुत इन्द्राय प्रबभ्रायैकादशकपालं निर्वपेद्भ्रातृव्यवान् वज्रो वै प्रबभ्रः प्रबभ्रेण वा इन्द्रोऽसुरेभ्यो वज्रं प्राहरद्वज्रमेव भ्रातृव्याय प्रहरति स्तृणुत एनमाग्नेयमष्टाकपालं निर्वपेदिन्द्राय विमृधायैकादशकपालँ संग्राम ऋद्ध्या एवाग्नेय इन्द्रं वै वृत्रं जघ्निवाँसं मृधोऽसचन्त स एतं वैमृधमपश्यत् तेन ता मृधोऽपाहत वृत्रमेष जिघाँसति यस्संग्रामं जिगीषति यैवेन्द्रस्य विमृधा तनूस्तामेव भागधेयेनोपधावति तया मृधोऽपहते हन्ति वृत्रं जयति संग्राममाग्नेयमष्टाकपालं निर्वपेदिन्द्राय विमृधायैकादशकपालं यँ सर्वतो भयमागच्छेदृद्ध्या एवाग्नेय इन्द्रं वै वृत्रं जघ्निवाँसं तँ समन्तं मृधस्संप्राकम्पन्त स एतं वैमृधमपश्यत् तेन ता मृधोऽपाहत समन्तमेतं मृधस्संप्रकम्पन्ते यँ सर्वतो भयमागच्छति यैवेन्द्रस्य विमृधा तनूस्तामेव भागधेयेनोपधावति तया मृधोऽपहत आत्मनोऽधि ॥ ९ ॥ १३

प्रजापतिर्वा इन्द्राय वज्रं प्रत्यमुञ्चन्महानाम्नीस्तेन व्यजयत ततो वै सोऽभवत् सोऽबिभेद्वज्रो मेऽशान्तो ग्रीवा अपिधक्ष्यतीति ततो रेवतीर्निरमिमीत शान्त्या ऐन्द्रं चरुं निर्वपेद्राजन्याय बुभूषत ऐन्द्रो वै राजन्यो देवतया स्वादेवैनं योनेर्जनयति भूत्यै भवत्येव रेवत्यनुवाक्या शक्करी याज्या वज्रो वै रेवती वज्रश्शक्करी वज्रमेव संदधाति तेन विजयते भवत्येव चरुर्भवति शान्त्या अनुदाहायेन्द्राण्यै चरुं निर्वपेत् सेनायामुत्थितायां राज्ञो गृहे सेना वा इन्द्राणी ब्रह्मणैवैनां विच्यै सँश्यति बल्बजा इध्मे च बर्हिषि चापिभवन्ति शक्रो वा एते जाता न्यायेनैवैनामभिनयति यत् सा विन्देत ततो दक्षिणा समृद्ध्या इन्द्राय चेन्द्राण्यै च चरुं निर्वपेत् सेनायामुत्थितायां राज्ञो गृह एषा वा इन्द्रस्य परिवृक्ती जाया गोष्वेवैनामधिनयति बल्बजा इध्मे च बर्हिषि चापिभवन्ति शक्रो वा एते जाता न्यायेनैवैनामभिनयति यत् सा विन्देत ततो दक्षिणा समृद्ध्यै प्रजापतिर्वै देवेभ्यो भागधेयानि व्यादिशत् तदिन्द्रियमत्यरिच्यत तदिन्द्रोऽब्रवीन्मयीदमस्त्विति तदस्मिन्नदधात् तदेनमत्यत्येवारिच्यत तदिमांल्लोकानूर्ध्वमनूदश्रयत तन्नेकेनाप्नोन्न द्वितीयेन तत् तृतीयेनाप्त्वावारुन्द्ध त्रीन् पुरोडाशान्निर्वपेद् बुभूषँस्त्रय इमे लोका इमानेव लोकानाप्त्वौजो वीर्यमवरुन्द्ध उत्तर उत्तरो ज्यायान् भवत्युत्तर उत्तरो ह्येषां लोकानां ज्यायानिन्द्राय राज्ञे प्रथममथेन्द्राय स्वराजेऽथेन्द्रायाधिराजायैतानि वै सर्वाणीन्द्रोऽभवन्नोदेतान्येव सर्वाणि भवति य एवं विद्वानेतया जयते ॥ तिस्रोऽनुवाक्यास्ता

---

[ १० ] मै. २,२,५; १० ( १४—२०,३२ )।

याज्यास्तासां प्रथमामनूच्य मध्यमया यजति मध्यमामनूच्योत्तमया यजत्युत्तमामनूच्य पुनः प्रथमया यजत्येषां लोकानाँ संतत्यै प्रतिप्रज्ञात्यै सर्वा एवानुवाक्याः करोति सर्वा याज्या देवाश्च वा असुराश्च संयत्ता आसँस्तेऽसुरा भूयाँसोऽजितमनस आसन् कनीयाँसः पराजितमनस्तरा इव देवास्ते देवा अब्रुवँश्चिकित्सत यो नो वीर्यावत्तमस्तमनुसमारभामहा इति त इन्द्रमब्रुवँस्त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तन्वो वीर्यावतीस्ता मे प्रीणीताथैतानभिभविष्याम इति ता वै ब्रूहीत्यब्रुवन्नियं विमृधेत्यब्रवीदियमँहोमुगियमिन्द्रियावतीति त इन्द्राय विमृधायैकादशकपालं निरवपन्निन्द्रायाँहोमुच एकादशकपालमिन्द्रायेन्द्रियवत एकादशकपालं यदिन्द्राय विमृधाय मृधा वै तेऽभिषण्णा आसन् ये श्रेयोभिरसुरैरस्पर्धन्त मृध एव तेनापाघ्नत यदिन्द्रायाँहोमुचेऽँहसा वै ते गृहीता आसन्नँहस एव तेनामुच्यन्त यदिन्द्रायेन्द्रियवत इन्द्रियमेव तेनात्मन्नदधतैतया यजेत भ्रातृव्यवान् यो बहुभ्रातव्यस्स्यादिन्द्राय विमृधायैकादशकपालं निर्वपेदिन्द्रायाँहोमुच एकादशकपालमिन्द्रायेन्द्रियवत एकादशकपालम् ॥ यदिन्द्राय विमृधाय मृधा वा एषोऽभिषण्णो यश्श्रेयसा भ्रातृव्येण स्पर्धते मृध एव तेनापहते यदिन्द्रायाँहोमुचेऽँहसा वा एष गृहीतो यो भ्रातृव्यवानँहस एव तेन मुच्यते यदिन्द्रायेन्द्रियवत इन्द्रियमेव तेनात्मन् धत्ते त्रयस्त्रिँशद्वै देवतास्तास्तँ सर्वा वीर्यैरनुसमारभन्त स उत्तमां विजितिमसुरैर्व्यजयत ततो वै सोऽभवद्यत् त्रयस्त्रिंशत् कपालानि भवन्ति यावतीरेव देवतास्तास्सर्वा वीर्यैरात्मानमनुसमारम्भयते भवत्येव सैषा विजितिर्नामेष्टिरुत्तमामेव विजितिं भ्रातृव्येण विजयते य एवं विद्वानेतया यजते ॥

॥ १० ॥ १४-१६

प्रजापतिः पशूनसृजत तेऽस्मादपाक्रामँस्तेषां बृहस्पतिश्च पदेनान्वैतां ते यत्रावसँस्तद्दर्मुतँ शक्रो जातामविन्दतां तामाच्छिद्याहरतां तं बृहस्पतिरब्रवीदनया त्वाया जयान्युप वै त्वैते पशवः पुनर्नँस्यन्तीति स प्राजापत्यं चरुं निरवपद्दार्मुतमप्सु ततो वै तं पशवः पुनरुपानमन् प्राजापत्यं चरुं निर्वपेद्दार्मुतमप्सु पशुकामोऽपक्रान्ता वा एतस्मात् पशवो योऽपशुः प्रजापतिः पशूनां प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै पशून् पुनरुपावर्तयति गोमूत्रस्यापि स्यात् सयोनित्वाय प्रजापतिः पशून् सृष्ट्वा तेषां पूषणमधिपामकरोत् तेऽस्मादपाक्रामँस्तेषां पूषा पदेनान्वैत् ते यत्रावसँस्तद्दर्मुतँ शक्रो जातामविन्दत् तामाच्छिद्याहरत् तया प्रजापतिमब्रवीदनया मा प्रतिष्ठस्वोप वै त्वैते पशवः पुनर्नँस्यन्तीति तत् सोमोऽभ्यार्तीयत ॥ मम वा एतद्यदकृष्टपच्यमिति स सौमापौष्णं चरुं निरवपद्दार्मुतमप्सु ततो वै तं पशवः पुनरुपानमन् सौमापौष्णं चरुं निर्वपेद्दार्मुतमप्सु प्रजाकामो वा पशुकामो वा सोमो वै रेतोधाः पूषा प्रजनयिता सोम एवास्मै रेतो दधाति पूषा प्रजनयति विन्दते

[ ११ ] मै. २,२,४ (१३) ।

प्रजा वा पशून् वा यतरस्मै कामाय निर्वपति गोमूत्रस्यापि स्यात् सयोनित्वाय मारुतं प्रैयङ्गवं चरुं निर्वपेत् पृश्न्या दुग्धे सजातकामः पृश्न्या वै मरुतो जाता वाचो वास्या वा पृथिव्या मारुतास्सजाता एतन्मरुताँ स्वं पयो यत् प्रियङ्गवस्स्वेनैवैनान् पयसाच्छैति यथा वत्स ऊधोऽभ्यायच्छत्येवमेनँ सजाता अभ्यायच्छन्ति ॥ प्रियंवत्यनुवाक्या श्रीवती याज्या यत् प्रियंवती प्रियमेवैनँ सजातानां करोति यच्छ्रीवती श्रियमेवैनं गमयति द्विपदानुवाक्या चतुष्पदा याज्या द्विपदश्चैव चतुष्पदश्च पशूनवरुन्द्ध ऐन्द्रमेकादशकपालं निर्वपेन्मारुतं प्रैयङ्गवं चरुं तं पश्चा शृतं कुर्युर्यस्मात् क्षत्रियाद्विडभ्यर्धश्चरेत् क्षत्रं वा इन्द्रो विण्मरुतः क्षत्रायैव विशमनुनियुनक्ति तमनूच्यमाने पश्चात् प्राञ्चमुदाहरन्ति विशमेवास्मै पश्चादुपदधात्यसँसर्गाय मारुतँ सप्तकपालं निर्वपेदैन्द्रमेकादशकपालं यः कामयेत विशे च क्षत्राय च समदं कुर्यामिति क्षत्रं वा इन्द्रो विण्मरुतो भागधेय एवैभ्यस्समदं करोति मारुतस्य मारुतीमनूच्यैन्द्र्या यजेदैन्द्रस्यैन्द्रीमनूच्य मारुत्या यजेत् क्षत्रमेव विशः परिहायादत्ते विट् क्षत्रस्य ते अन्यान्या निर्णयत उभयतः पुरोडाशस्यावद्येद्यतरान् कामयेत पराजयेरन्निति त्युभयत एव विशमुपदीपयति ताजक् पराजयन्त एतामेव निर्वपेद्यदा कामयेत कल्पेरन्निति तस्याः प्रसृतिं यजेद्भागधेयेनैवैनान् कल्पयति मारुतँ सप्तकपालं निर्वपेद्यः क्षत्रियो विशो ज्यान्या बिभीयाद्ब्राह्मणो वा विड्वै मरुतो भागधेयेनैवैनाञ्छमयत्यगस्त्यस्यैतत् सूक्तं कयाशुभीयं तस्य सामिधेनीष्वप्यनुब्रूयात् तस्य याज्यानुवाक्ये स्यातामगस्त्यो वै मरुद्भ्यश्शतमुक्ष्णः पृश्नीन् प्रौक्षत् तानिन्द्रायालभत तं मरुतः क्रुद्धा वज्रमुद्यत्याभ्युपतन् स एतत् सूक्तमपश्यत् तेनैनानशमयद्यदेतदनूच्यते शान्त्यै ॥ ११ ॥ १७–१९

अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम् ॥ २०

यस्मै त्वँ सुकृते जातवेद उ लोकमग्ने कृणवस्स्योनम् ।

अश्विनँ स पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥ २१

य इमा विश्वा जातान्याश्रावयति श्लोकेन । प्र च सुवाति सविता ॥ २२

विश्वा रूपाणि ॥ २३

वायुरग्रेगा यज्ञप्रीस्साकं गन्मनसा यज्ञम् । शिवो नियुद्भिश्शिवाभिः ॥ २४

प्र याभिर्यासि दाश्वाँसमच्छा नियुद्भिर्वाय इष्टये दुरोणे ।

नि नो रयिँ सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥ २५

---

[१२] मै. २,२,६ (२२-२६)। तै. ब्रा. २,४,४। वा. १२,३,५८. २७,२७,३१; ३३,८६। काण्व. १३,३,५९; २९, २५-२६। [अस्मै ते प्रतिहर्यते०। ऋ. ८,४३,२। यस्मै त्वं सुकृते०। ऋ. ५,४,११; तै. सं. १,४,४६,१। य इमा विश्वा जातानि०। ऋ.५,८२,९। विश्वा रूपाणि०। ऋ.५,८१,२; तै. सं. ४,१,१०,४; नि.१२,१३। प्र याभिर्यासि दाश्वाँ०। ऋ. ७,९२,३; तै. सं. २,२,१२,७; तै. ब्रा. २,८,१,१]

बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि। प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि॥२६

दृढा चिद्या वनस्पतीन् क्ष्मया दर्धर्ष्योजसा ।
यत् ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥ २७

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥ २८

गोमाँ अग्ने ॥ २९

मदे मदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
संगृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आभर ॥ ३०

शिप्रिन् वाजानां पते शचीवस्तव दँसना ।
आ तू न इन्द्र शँसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ३१

रेवतीर्नः प्र ससाहिषे ॥ ३२

संज्ञानं नो दिवा पशोस्संज्ञानं नक्तमर्वतः ।
संज्ञानं नस्स्वेभ्यस्संज्ञानमरणेभ्यस्संज्ञानमश्विना युवमिहास्मासु नियच्छतम् ॥ ३३

समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः ।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥ ३४

इन्द्रवायू सुसंदृशा सुहवेह हवामहे । यथा नस्सर्व इज्जनस्संगमे सुमना असत् ॥ ३५

अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रैरभिरक्षतु त्मना ।
इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वादित्यैर्नो वरुणश्शर्म यँसत् ॥ ३६

समग्निर्वसुभिर्नो अव्यात् सँ सोमो रुद्रियाभिस्तनूभिः ।
समिन्द्रो रातहव्यो मरुद्भिस्समादित्यैर्वरुणो विश्ववेदाः ॥ ३७

समाना व आकूतानि समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वस्सुसहासति ॥ ३८

---

[बडि(ळि)त्था पर्वतानां०। ऋ. ५,८४,१; तै.सं. २,२,१२,२; नि. ११,३७। दृढा(ळ्हा)चिद्या वनस्पतीन्०। ऋ.५,८४,३। आ नो अग्ने रयिं भर०। ऋ.१,७९,८; सा.१५२५। गोमाँ अग्ने०। ऋ ४,२,५, तै.सं.१,६,६,४; ३,१,११,१। मदे मदे हि नो०। ऋ. १,८१,७; अथर्व. २०,५६,४; तै. ब्रा. २,४,४,७। शिप्रिन् वाजानां पते०। ऋ. १,२९,२; अथर्व. २०,७४,२; तै. ब्रा. २,४,४,८। रेवतीर्नः०। ऋ. १,३०,१३; सा. १५३, १०८४; अथर्व. २०,१२२,१; तै. सं. १,७,१३,५; २,२,१२,८; ४,१४,४। प्र ससाहिषे०। ऋ. १०,१८०,१; तै. सं. ३,४,११,४; तै. ब्रा. २,६,९,१; ३,५,७,४। संज्ञानं नस्स्वेभ्य०। ऋ. परि० ३६,२; अथर्व. ७,५२,१। समिन्द्र राया०। ऋ. १,५३,५; अथर्व. २०,२१,५। इन्द्रवायू सुसंदृशा०। ऋ. १०,१४१,४; अथर्व. ३,२०,६। समाना(नी) व आकूतानि०। ऋ. १०,१९१,४; अथर्व. ६,६४,३; तै. ब्रा. २,४,४,५ ]

सं वो मनाँसि सं व्रता समु चित्तान्याकरम् ।
अमी ये विव्रतास्स्थन तान् वस्संनमयामसि ॥ ३९
यथादित्यमादित्या आप्याययन्ति यथाक्षितिमक्षितयो मदन्ति ।
एवा मामिन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः ॥ ४०
नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ १२ ॥ ४१
प्र यो जज्ञे विद्वाँ अस्य बन्धुं विश्वा देवानां जनिमा विवक्ति ।
ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाभि प्रतस्थौ ॥ ४२
महान्मही अस्कभायद् वि जातो द्यां द्विता पार्थिवं च रजः ।
स बुध्नादाष्ट जनुषाभ्यग्रं बृहस्पतिर्देवता तस्य सम्राट् ॥ ४३
गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नश्शृण्वन्नूतिभिस्सीद सादनम् ॥ ४४
स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद् वावशतीरुदाजत् ॥ ४५
अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पतिं देवाँ अवो वरेण्यम् ॥ ४६
उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्रयन्तु मरुतस्सुदानव इन्द्र प्राशूर्भवा सचा ॥ ४७
आर्यमा यातु वृषभस्तुविष्मान् यन्ता वसूनि विधते तनूपाः ।
सहस्राक्षो गोत्रभिद् वज्रबाहुरस्मासु देवो द्रविणं दधातु ॥ ४८
ये ते अर्यमन् बहवो देवयानाः पन्थानो राजन् दिव आचरन्ति ।
तेभिर्नो अद्य पथिभिस्सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ ४९

---

[ **सं वो मनाँसि०** । ऋ. परि. ३६,४; अथर्व. ६,९४,१ । **नवो नवो भवति०** । ऋ. १०,८५,१९; अथर्व. ७,८१,२; १४,१,२४; तै. सं. २,३,५,३; ४,१४,१, नि. ११,६ ]

[१३] वा. २३,१,३,१९; ३४,५६; १३,४; २५,१०-११; ७,४१-४२; ८,४१; ३३,३१,३६; १३,४६ । काण्व. २५,१, ३,२१; ३३,४४, १४,४; २७,१४-१५, ८,२३-२४, ९,६-७; ३२,३१,३६; १४,४८ । [ **प्र यो यज्ञे विद्वाँ०**। अथर्व. ४,१,३; आ. श्रौ. सू. ४,६,३ । **महान्मही अस्कभा०** । अथर्व. ४,१,४ ( उत्तरार्धः ) । **सबुन्धा ( ०ध्न्या )दाष्ट ( ०ष्ट्र ) ०** । अथर्व. ४,१,५ ( पूर्वार्धः ) । **गणानां त्वा गणपतिँ०** । **ऋ.** २,२३,१; तै. सं. २,३,१४,३ । **स सुष्टुभा स ऋक्वता०** । **ऋ.** ४,५०,५; अथर्व. २०,८८,५; तै. सं. २,३,१४,४ । **अग्निरुक्थे पुरोहितो०** । ऋ. ८,२७,१; सा. ४८ । **उत्तिष्ठ ब्रह्मणस्पते०** । ऋ. १,४०,१; तै. आ. ४,२,१ ]

अस्मे इन्द्राबृहस्पती रयिँ धत्तँ शतग्विनम् । अश्वावन्तँ सहस्रिणम् ॥ ५०

बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नस्सखा सखिभ्यो वरिवः कृणोतु ॥ ५१

हिरण्यगर्भो यः प्राणत उदु त्यं चित्रं देवानाम् ॥ ५२

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॥ ५३

दिवो रुक्म उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः ।
नूनं जनास्सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपाँसि ॥ १३ ॥ ५४

[७८०]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामाग्नावैष्णवं नाम दशमं स्थानकं संपूर्णम् ॥१०॥



अथैकादशं स्थानकम् ।

## मारुतम् ।

मारुतं चरुं निर्वपेत् तस्यैकविँशतिनिर्बाधो हरितो रुक्मोऽपिधानस्स्यात् तस्यापग्राहमवद्येद्यत् क्षत्रियं विण् निर्बाधे कुर्वीत विड्वै मरुतो भागधेयेनैवैनाञ्छमयत्येकविँशतिनिर्बाधो भवत्येकविँशतिर्वै मारुता गणा यदेकविँशतिनिर्बाधो निर्बाधैरेवैषां निर्बाधान् वृङ्क्त ऐन्द्रमेकादशकपालं निर्वपेद् वैश्वदेवं द्वादशकपालँ सजातकामः क्षत्रं वा इन्द्रो वैश्वदेवीरिमाः प्रजाः क्षत्रायैव विशमनुनियुनक्त्यैन्द्रस्यावदायाथ वैश्वदेवस्योभे अवदाने अवद्येदथैन्द्रस्य क्षत्रं वा इन्द्रो वैश्वदेवीरिमाः प्रजाः क्षत्रेणैव विशमुभयतः परिगृह्णात्यैन्द्री वैश्वदेववर्णे याज्यानुवाक्ये भवतस्समृद्ध्या उपचाय्यपृडं हिरण्यं दक्षिणा सजातानेवास्मा उपदधाति तदेतदनुवर्त्म नाम हविस्सजातानेवास्मा अनुवर्त्मनः करोति सौम्यँ श्यामाकं चरुं निर्वपेत् सोमवामीन्द्रो वै त्वष्टुस्सोममनुपहूतोऽपिबत् स विश्वक् सोमपथेन व्याध्यत तस्मात्

[ अस्मे इन्द्राबृहस्पती० । ऋ. ४,४९,४; तै. सं. ३,३,११,१ । बृहस्पतिर्नः परिपातु० । ऋ. १०, ४२,११; ४३,११; ४४,११; अथर्व. ७,५१,१ २०, १७,११; ८९,११, ९४,११, तै. सं. ३,३,११, १ । हिरण्यगर्भो० । ऋ. १०,१२१,१; अथर्व. ४,२,७, तै. सं. ४,१,८,३, २,८,२, ताण्ड्य ब्रा. ९,९,१२, नि. १०, २३ । यः प्राणत० । ऋ. १०,१२१,३; अथर्व. ४,२,२; तै. सं. ४,१,८,४; ७,५,१६,१ । उदु त्यं० । ऋ. १, ५०,१; सा. ३१; अथर्व. १३,२,१६; २०,४७,१३; तै. सं. १,२,८,२; ४,४३,१; नि. १२,१५ । चित्रं देवानाम् । ऋ. १,११५,१; अथर्व. १३,२,३५; २०,१०७,१४; तै. सं १,४,४३,१; २,४,१४,४, तै.ब्रा. २,८,७,३; ऐ. आ. ३,९; तै. आ. १,७,६; २,१३,१; नि. १२,१६ । तरणिर्विश्वदर्शतो० । ऋ. १,५०,४, सा. ६३५; अथर्व. १३, २,१९; २०,४७,१६; तै. सं. १,४,३१,१; तै. आ. ३,१६,१ । दिवो रुक्म उरुचक्षा० । ऋ. ७,६३,४, तै. ब्रा. २,८,७,३ ]

[ १ ] मै. २,२,१३ ( ३५ ) । वा. ७,४१; ८,४१; ३३,३१ । काण्व. ८,१३; ९,६; ३२,३१ ।

सोमो नानुपहूतेन पातवै सोमपीथेन व्यर्धुको भवति स यत् परावमीत्ते श्यामाका एष वाव स सोमपीथो यच्छ्यामाकस्समक्षमेव सोमपीथमवरुन्द्धे सौमेन्द्रः कार्य इन्द्रियेण वा एष सोमपीथेन व्यृध्यते यस्सोमं वमिति सौम्यो ब्राह्मणो देवतयेन्द्रियमस्य सोमपीथो यत् सौमेन्द्र इन्द्रियेणैवैनँ सोमपीथेन समर्धयत्यधृतो वा एतास्मिन् सोमपीथो यस्सोमं वमिति तण्डुलानुच्छिँषेत् तान् क्रथति प्रत्यावपेत् सोमपीथमेवास्मिन् दधाराग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत् सौर्यं चरुमग्नये ज्योतिष्मत उपरिष्टादष्टाकपालं चक्षुष्कामोऽग्नेर्वै मनुष्या नक्तं चक्षुषा पश्यन्ति सूर्यस्य दिवा तौ चक्षुषः प्रदातारौ ता एव भागधेयेनोपधावति ता अस्मै चक्षुः प्रयच्छतो यत् समानी देवता द्वेधा क्रियते तस्मात् समानँ सच्चक्षुर्द्वेधा तस्मात् समानी याज्यानुवाक्ये भवतस्सौर्यस्य मध्यतोऽवद्यतीदमेव तेन करोति यदिदमन्तरा चक्षुषी चक्षुषोर्व्यावृत्त्यै त्रीन् पिण्डान् प्रयच्छत्युदु त्यं जातवेदसमयुक्त सप्त शुन्ध्युवस्सप्त त्वा हरितो रथ इति चक्षुरेवास्मै तत् प्रयच्छति यदेव तस्य तत् सैषा राजनी नामेष्टिरेतया ह वै रजनं कोणेयं क्रतुजिज्जानकिश्चक्षुष्कामं याजयांचकार तयैतया चक्षुष्काम एव यजेताग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं बार्हस्पत्यमष्टाकपालं बुभूषन्निन्द्रो वा अधृतश्शिथिल इवामन्यत सोऽग्नौ चैव बृहस्पतौ चानाथत तमेतयेष्ट्यायाजयतां यदाग्नेयस्तेज एवास्मिँस्तेन पुरस्ताद्धत्तां यदैन्द्र इन्द्रियमेवास्मिँस्तेन मध्यतोऽधत्तां यद्बार्हस्पत्य उपरिष्टादेवास्मिँस्तेन ब्रह्मवर्चसमधत्तां ततो वै सोऽभवदेतया यजेत बुभूषन् यदाग्नेयस्तेजो वा अग्निस्तेज एव तेन पुरस्ताद्धत्ते यदैन्द्र इन्द्रियं वा इन्द्र इन्द्रियमेव तेन मध्यतो धत्ते यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिरुपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते भवत्येवैन्द्र इतरयोर्नाभी समादधातीन्द्रियमेवास्मिन् मध्यतस्समादधात्यैन्द्रो मध्ये भवत्यभित इतरौ तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्म बृहस्पतिस्तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन् परिगृह्णाति त्रिवतीर्याज्यानुवाक्या भवन्ति समृद्ध्यै तदेतत् त्रिधातु नाम हविस्त्रीणि हि स तेन वीर्याण्यधत्त ॥ १ ॥ १

आग्नेयमष्टाकपालं निर्वपेत् सावित्रमष्टाकपालं वायव्यां यवागुं भौममेककपालं यस्य हिरण्यमपहृतं वोपहृतं वा स्याद्यो वा कामयेत हिरण्यं विन्देयेत्यग्निर्वा अन्ने हिरण्यमविन्दत् तस्मिन् सविता चामन्त्रयतान्नेऽतो वायुनानुपगतमस्त्यस्यामेतद्विन्दन्त्यस्यां पुनन्ति यदाग्नेयो वित्त्या एव स जातवेदा इति हि प्रसवायैव सावित्रोऽभिनीत्यै वायव्यास्यामेतद्विन्दन्त्यस्यां पुनन्त्येता वै देवता हिरण्यस्ये-

[ उदु त्यं जातवेदसं०। ऋ. १ ५०,१; सा. ३१; अथर्व. १३,२,१६; २०,४७,१३; तै. सं. १,२,८,२; ४,४३, १; नि. १२,१५ । अयुक्त सप्त शुन्ध्युवः० । ऋ. १,५०,९; अथर्व. १३,२,२४; २०,४७,२१; तै. ब्रा २ ४. ५,४ । सप्त त्वा हरितो० । ऋ. १,५०,८; सा. ६४०; अथर्व. १३,२,२३; २०,४७,२०; तै. सं. १,४,१४,४ ]

[ २ ] मै. २.२,७ ( २९ ) । तै. सं. १,३,५ ।

शते ता एव भागधेयेनोपधावति ता अस्मै हिरण्यं ददति यदा हिरण्यं विन्देताथैतामेव निर्वपेद्या एवास्मै देवता हिरण्यं ददाति ता एव भागिनीः करोत्यात्मनोऽहिँसाया आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं दधि मधु घृतं धानास्तण्डुलास्तत् सँसृष्टं स्यात् तेन पशुकामो यजेतद्वर्ध्या एवाग्नेयो यदैन्द्र इन्द्रः पशूनां प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै पशून् प्रयच्छति यत् सँसृष्टं पशवो वै सँसृष्टं पशूनेवावरुन्द्ध ऐन्द्रंः कार्यमिन्द्रः पशूनां प्रदाता यदैन्द्रे द्वे सह कुर्याज्जामि स्यात् प्राजापत्यं कार्यं प्रजापतिः पशूनां योनिस्स्वादेवैनान् योनेः प्रजनयति प्रजापतिः प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै पशून् प्रयच्छति रेवती सँसृष्टस्य याज्यानुवाक्ये शक्वरी इतरस्य पशवो वै रेवती पशवश्शक्वरी पशूनेवावरुन्द्धे पश्चैतानि सँसृष्टानि द्वे इतरे तानि सप्त सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्द्धे ॥ पङ्क्तिरपिभवति पाङ्क्तः पुरुषस्सर्व एव भूत्वा पशूनुपैति घृतं भवत्याग्नेयं वै घृतमग्निः प्रवापयिता प्रैव तेन वापयति मधु भवति सौम्यं वै मधु सोमो रेतोधा रेत एव तेन दधाति धानाश्च तण्डुलाश्च भवन्त्यह्नो वै रूपं धाना रात्र्यास्तण्डुला अहोरात्रे पशवोऽनुप्रजायन्ते नक्तं वा हि दिवा वा प्रजायन्तेऽहोरात्रे एवैनाननुप्रजनयति दधि भवत्येतद्रूपा वै पशवो यद्दधि सरूपानेव पशूनवरुन्द्धे न मधु होतव्यमायुर्वै मध्वायुरग्नौ प्रदध्यात् प्रमायुकस्स्यादेतयेष्ट्वायुष्युया यजेत पशूनेवावरुध्यायुरुपैति यद्येतया न यजेत वरं दद्याद्वरेणैव वरँ स्पृणोति ॥ द्वौ दद्याद् द्वौ हि प्राणश्चापानश्च त्रीन् दद्यात् त्रयो हि प्राणाः प्राणो व्यानोऽपानस्तानेव यजमाने दधात्येकमेव दद्यात् त्रिवृतं तु त्रिवृद्धि प्राणो बहु वा एतदन्यदन्यज्जुहोति स ईश्वरोऽन्यद्रूपं पोष्टोस्सिध्मां गां दद्याद्रूपाणां निष्क्रीत्यै सर्वाणि वयाँसि दद्यात् सर्वानेव पशूनवरुन्द्धे यदि नाभ्याशँसेत पष्ठौहीमन्तर्वर्तीं दद्यात् सा हि सर्वाणि वयाँसि यद्वत्सं बिभर्ति तेन वत्सा यद्वत्सतरी तेन वयो यत् परं वय आप्ता तेन स्थविरा तथैव सर्वान् पशूनवरुन्द्ध आपो वा इदं निरमृजन् स मनुरेवोदशिष्यत स एतामिष्टिमपश्यत् तामाहरत् तयायजत तयाप्रथत तयेमं भूमानमगच्छत् प्रथत एव तं भूमानं गच्छति यं मनुरगच्छद्य एवं विद्वानेतया यजेत ॥ २ ॥ २-४

देवा वै न समजानत ते चतुर्धा व्युदक्रामन्नग्निर्वसुभिस्सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैस्तान् बृहस्पतिरब्रवीद्याजयानि वस्सं वै ज्ञास्यध्व इति तव गृहे याजयानीतीन्द्रमब्रवीत् तव वै श्रैष्ठ्याय संज्ञास्यन्त इति सोऽग्नये वसुमतेऽष्टाकपालं निरवपत् सोमाय रुद्रवते चरुमिन्द्राय मरुत्वत एकादशकपालं वरुणायादित्यवते चरुं तानिन्द्रस्य गृहेऽयाजयत् ततो वै ते समजानत त इन्द्रस्यैव श्रैष्ठ्याय समजानत स त्रिष्टुभौ याज्यानुवाक्ये अकरोत् त्रिष्टुब् वा इन्द्रस्य स्वं छन्द ओजो वीर्यं त्रिष्टुप् स्वेनैवास्मिञ्छन्दसौजो वीर्यमदधात् तस्मादिन्द्रो देवानामोजिष्ठो ये स्वा न संजानीरँस्ता-

नेतया याजयेद्यं कामयेतायं श्रेष्ठस्स्यादिति तस्य गृहे संमेव जानत एता एवैनं देवता भागधेय-
मभि संजानानास्संज्ञापयन्ति त्रिष्टुभौ याज्यानुवाक्ये कुर्यादोजो वै वीर्यं त्रिष्टुबोज एवैषु वीर्यं दधाति
संवती संयाज्ये समृद्ध्यै सैषा संज्ञानी नामेष्टिस्समेवं जानते प्रजापतिर्वै सोमाय राज्ञे दुहितॄरददा-
न्नक्षत्राणि स रोहिण्यामेवावसत् तान्यनुपेयमानानि पुनरगच्छँस्तस्मात् स्त्र्यनुपेयमाना पुनर्गच्छति
तान्यन्वागच्छत् तानि पुनरयाचत तान्यस्मै न पुनरददात् सोऽब्रवीत् सर्वेष्वेव समावद्वसाथ ते
पुनर्दास्यामीति स रोहिण्यामेवावसत् तं तस्मिन्ननृते यक्ष्मोऽगृह्णाच्चन्द्रमा वै सोमो राजा यद्राजानं
यक्ष्मोऽगृह्णात् तद्राजयक्ष्मस्य जन्म स तृणमिवाशुष्यत् स प्रजापता अनाथत सोऽब्रवीत् सर्वेष्वेव
समावद्वसाथ त्वातो मोक्ष्यामीति तस्माच्चन्द्रमास्सर्वेषु नक्षत्रेषु समावद्वसति तं वैश्वदेवेन चरुणामा-
वस्यां रात्रीमयाजयत् तेनैनं यक्ष्मादमुञ्चत् सोऽमुमत्राप्यायमानमन्वाप्यायत वैश्वदेवेन चरुणामावस्यां
रात्रीं यजेत यो राजयक्ष्माद्बिभीयाद्यक्ष्मादेवैनं मुञ्चति सोऽमुमेवाप्यायमानमन्वाप्यायते ॥३॥ ५
बार्हस्पत्यं चरुं निर्वपेदानुषूकानां व्रीहीणामानुजावरो बृहस्पतिर्वै देवानामानुजावरस्सोऽग्रं पर्यै-
द्बृहस्पतिरेतस्य देवता य आनुजावरस्तमेवान्वारभते स एनमग्रं परिणयति ब्रह्म वै बृहस्पतिर्ब्रह्म
ब्राह्मणस्य पिता पिता पुत्रस्येशे प्राचो वापाचो वा नोत्तोर्ब्रह्मैवैनं पिताग्रं परिणयत्यानुषूका वा एते
व्रीहयो य आनुजावरस्तानेतदग्रं परिणयति यद्धविष्करोति तानेवान्वारभते त एनमग्रं परिणयन्ति
पुनः प्रवृद्धं बर्हिर्भवति पुनः प्ररूढ इध्मस्समृद्ध्यै बार्हस्पत्यं चरुं निर्वपेत् सजातकामस्तस्य गणवती
याज्यानुवाक्ये स्यातां बार्हस्पत्यो वै ब्राह्मणो देवतया स्वामेव देवतां भूयिष्ठेनार्पयते गणवती
याज्यानुवाक्ये भवतस्सजातैरेवैनं गणिनं करोति ब्राह्मणस्पत्यं चरुं निर्वपेत् तस्य मारुती याज्या-
नुवाक्ये स्यातां यः कामयेत ब्रह्म बलं स्यादिति ब्रह्म वै ब्रह्मणस्पतिर्विण्मरुतो ब्रह्मण्येव विशमनु-
विनाशयति ताजग् ब्रह्म बलं भवत्यर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजास्स्युरित्येष
वा अर्यमा यो ददाति दानमिमाः प्रजा उपजीवन्ति दानकामा अस्मै भवन्त्यैन्द्राबार्हस्पत्यं
चरुं निर्वपेद्राजन्याय बुभूषते देवा वै राजन्याज्जायमानादबिभयुस्तमनुहाय दाम्नापौम्भन्नपोब्धो
वा एष जायते यो राजन्यो यद्वा एषोऽनपोब्धो जायेत न किंचन स्यात् सर्वा इमाः प्रजा
अधिषादमद्यादैन्द्रो राजन्यो देवतया ब्रह्म बृहस्पतिर्ब्रह्मणैवैनमपोम्भनान्मुञ्चति सोऽनपोब्धो
वीर्याय प्रस्रियते द्विवृद्धिरण्यं दक्षिणा यदेवादो दाम तस्य निरवत्त्यै प्राजापत्यं चरुं निर्व-
पेच्छतकृष्णलं घृत आयुष्कामो देवा वै प्रमयादबिभयुस्ते प्रजापता अनाथन्त तानेतयेष्ट्या-
याजयदमृतं वै हिरण्यममृतेनैवैष्वमृतमदधात् ततो वै तेऽमृता अभवन्नेतया यजेत यः प्रम-
याद्बिभीयादमृतं वै हिरण्यममृतेनैवास्मिन्नमृतं दधाति शतकृष्णलो भवति शतायुर्वै पुरुषश्शतवीर्य

[४] मै. २,१,१२; २,२,२ (२२,११)।

आयुरेव वीर्यमवरुन्द्धे वैश्वदेवः कार्यो विश्वान् हि स तद्देवानयाजयत् प्राजापत्यः कार्यः प्रजापतिर्यो-निर्योना एव प्रतितिष्ठति ॥ चत्वारि चत्वारि कृष्णलान्यवदानं भवति समृद्ध्यै तं ब्रह्मणे परिहरन्ति ब्रह्म वै ब्रह्मा ब्रह्मणैवास्मिन्नेकधायुर्दधात्येतया यजेत यः कामयेत वसीयान् स्यामित्येष वै मनुष्यस्य स्वर्गो लोको यदस्मिंल्लोके वसीयान् भवत्यृध्नोति वसीयान् भवति य एवं विद्वानेतया यजेत सौर्यं चरुं निर्वपेद्गतश्रीस्तस्य हरितो रुक्मोऽपिधानस्स्याद्रजतोऽधस्तादसौ वा आदित्योऽन्तोऽन्तं मनु-ष्यश्रियो गत्वा निवर्ततेऽन्तादेवान्तमालभते न ततः पापीयान् भवति यादृक् सन् यजतेऽसौ वा आदित्य इदमासीत् स इदं निर्दहन्नचरत् तं देवा आभ्यां परिगृह्यामुं लोकमगमयन् स न व्यरोचत ते प्रयाजेषु पञ्च हिरण्यकृष्णलान्यजुहवुस्तेजो वै हिरण्यं तेजसैवास्मिंस्तेजोऽदधुस्ततो वै स तेजो ऽगृह्णात् स इमाः पञ्च दिशोऽनु तेजस्व्यभवदियं वै रजतासौ हरिण्याभ्यामेवैनं परिगृह्यामुं लोकं गमयति स वै न विरोचत इत्याहुर्न हि स व्यरोचतेति प्रयाजेषु पञ्च हिरण्यकृष्णलानि जुहुयाद् तेजो वै हिरण्यं तेजसैवैनँ सँसृजति स इमाः पञ्च दिशोऽनु तेजस्वी भवति ॥ ४ ॥ ६–७

सौमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणाँ श्वेतायाश्श्वेतवत्साया आज्यं मथितँ स्यात् तस्मिन् ब्रह्मवर्चसकामस्स्वर्भानुर्वा आसुरस्सूर्यं तमसाविध्यत् स न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छँ-स्तमेतयेष्ट्यायाजयँस्तयास्मात् तमोऽपाघ्नँस्तमसैष प्रावृतो योऽलं ब्रह्मवर्चसाय सन्न ब्रह्मवर्चसी भवति तम एवास्मादपहन्ति ब्रह्मवर्चसेनैनँ सँसृजति श्वेतायाश्श्वेतवत्साया आज्यं भवति शुक्ला व्रीहय एवमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसमेवं संदधाति ॥ घृतेन प्रोक्षन्ति घृतेन मार्जयन्ते शान्त्यै शान्ति-र्ह्यापोऽप्यस्य तां रात्रीमपो गृहान्नावहरेयुः परिश्रिते यजेत ब्रह्मवर्चसस्य परिगृहीत्यै प्रादेशमात्र-श्चरुरूर्ध्वो भवत्येवं तिर्यङ्ङेतावान् वै पुरुषो यावदस्य प्राणा अभि यावानेवास्यात्मा तस्मात् तमोऽपहन्ति साकं रश्मिभिः प्रचरन्त्यसा एवास्मादादित्य उद्यँस्तमोऽपहन्ति तिष्यापूर्णमासे यजेत तिष्यो वै रुद्रश्चन्द्रमास्सोमस्सौमीरतः प्राचीनमोषधयो रौद्रीः प्रतीचीनँ शुष्यन्ति प्राचीनँ शुष्यन्ति प्रतीचीनं प्रत्यक्षमेवैना ऋध्नोतीश्वरो दुश्चर्मा भवितोर्य एतया यजतेऽतीव ह्यस्मादपहन्ति मनोर्ऋचस्सामिधेनीर्भवन्त्यनुब्रूयान्मनुर्वै यत् किंचावदत् तद्भेषजमासीद्भेषजमेवास्मै करोत्यु-पक्षरन्ति सिन्धवो मयोभुव इति नाराशँस्या परिददाति शान्त्यै षट्पदा भवति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठतीश्वरस्तु तदति दुश्चर्मैव भवितोस्तेजाँसि ह्युप प्रत्यारोहन्तीति सौमापौष्णं चरुं पशुकामोऽनुनिर्वपेत् सोमो वै ब्राह्मणस्य स्वा देवता पशवः पूषा स्वामेव देवतां पशुभिर्वँ-हयते स्वचमेव कुरुते सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन् सोमो वा आसां प्रजानामं-धिपती रुद्रोऽग्निरधिपतिर्वध्यस्य चावध्यस्य चेशेऽधिपतिमेवैनं निर्याच्य रुद्रायापिदधाति कृष्णानां

[ ५ ] मै. २.१.५–६ (५—६) । तै. सं. २.२.१० ।

व्रीहीणां भवति कृष्णमिव वै तमस्तमो मृत्युर्मृत्युनैवैनं ग्राहयति शरमयं बर्हिश्शीर्त्यै वैभीतक इध्मो विभित्त्यै सौमारौद्रं चरुं निर्वपेद् भ्रातृव्यवतायै वा द्वितीयवतायै वा तस्यार्धमर्धँ सर्वँ स्यादर्धँ शुक्लानां व्रीहीणाँ स्यादर्धं कृष्णानामर्धँ शरमयं बर्हिषोऽर्धं दर्भमयमर्धं वैभीतकमिध्मस्यार्धमन्यस्य वृक्षस्य सोमो वै ब्राह्मणस्य स्वा देवता स्वायामेवास्मै देवतायां द्वितीयं जनयति यदर्धमर्धं द्वितीयत्वायैवं तत् सौमारौद्रं चरुं निर्वपेत् पयस्यामयाविनस्सौम्यो वै जीवस्वाग्नेयः प्रमीतो नैष जीवो न मृतो य आमयावी तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ पयसि भवति पयो वै पयः पयः पुरुषः पय एतं स्यामयति यस्यामयानि पयसैवास्य पयस्स्पृणोति ग्रसितं वा एष एतं सोमारुद्रयोर्निष्खिदति यो होता भवति स ईश्वरः प्रमेतोरनड्वांहं तस्मै दद्यात् तँ हन्यात् तस्याश्नीयात् सैवं तत्र प्रायश्चित्तिस्सौमारौद्रं चरुं निर्वपेत् प्रजाकामो वा पशुकामो वा सोमो वै रेतोधा रुद्रोऽग्निस्सं प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजनयति विन्दते प्रजां वा पशून् वा यतरस्मै कामाय निर्वपति॥५॥८-१०

आदित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वापरुरुत्स्यमानो वादित्या वै त्रातार आदित्या अपरोद्धारस्तानेव भागधेयेनोपधावति त एनं दाधत्यादित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूषन्नदितिर्वै प्रजाकामौदनमपचत् तस्योच्छिष्टमाश्नात् सा गर्भमधत्त तत आदित्या अजायन्त सामन्यतेतो मे श्रेयाँसोऽजनिष्यन्त यत् पुरस्तादाशिष्यमिति सापरमपचत् तस्योभयत आश्नात् पुरस्ताच्चोपरिष्टाच्च सा गर्भमधत्त सोऽन्तरेव गर्भोऽवदत् त आदित्या अमन्यन्तायँ च वै जनिष्यते स एवेदं भविष्यतीति तं निरघ्नन् स निरस्तोऽशयत् सा तृतीयमपचदादित्येभ्य एवास्त्वेवं स यस्तस्माद्योनेरभूद्यस्माद्यूयमसृज्यध्वमिति तँ समस्कुर्वँस्तस्य यन्मृतमासीत् तदपाकृन्तन् स हस्त्यभवद्यज्जीवँ स विवस्वाँ आदित्यस्सं न तथासीद्यथा तेन भवितव्युं स एतमादित्येभ्यो भुवद्वद्भ्यश्चरुं निरवपत् स्वो वै स्वाय नाथिताय सुहृदयतमस्स्वानेवोपाधावत् ततो वै सोऽभवदादित्या इमाः प्रजास्स्वस्स्वाय नाथिताय सुहृदयतमस्स्वानेव भागधेयेनोपधावति भूत्यै भवत्येवादित्या भागं वः करिष्यामीति निर्दिवन् ब्रूयादिमममुमामुष्यायणममुष्याः पुत्रममुष्यां विश्यवगमयतेति भागधेयमेवैभ्यः कुर्वन् प्राह तमादित्येभ्यश्चरुं निर्वपत्यादित्या वै देवविशा देवविशा मनुष्यविशाया ईशे देवविशैवैनं मनुष्यविशामवगमयति सप्ताश्वत्था मयूखा भवन्ति तानिध्मेऽपि प्रोक्षति ते आ संस्थातोर्वेद्याँ शेरते तान् सँस्थिते मध्यमेषायामुपहन्तीदमहमादित्यान् बध्नाम्यमुष्यामुष्यायणस्यावगमायेति यद्या सप्तमादह्नो नावगच्छेदिध्मं तान् कृत्वापरया यजेतैवं द्वितीययैवं तृतीयया त्रिर्वा आदित्यास्सप्त सप्त यावन्त एवादित्यास्तान् बध्नाति त एनं बद्धा मोक्षमाणा अवगमयन्ति ॥ विशो वै वीर्यमपाक्रामत् तदश्वत्थं प्राविशत् तस्मादेषोऽधृतस्सर्वाहा पर्णमेजयँस्तिष्ठति यदाश्वत्था भवन्ति विश एवास्मिन् वीर्यं बध्नाति

[६] मै. २,२,१ (१—१०)। तै. सं. २,३,१।

सत्याशीरिह मन इति निरुद्धस्य पदमादधीतामनस एवैनान् करोत्युप प्रेत मरुतस्स्वतवस एना
विश्पतिनाभ्युमुं राजानमिति विशोऽभिवातमभिध्वंसयन् परीयादभिमनस एवैनान् करोति यः पर-
स्ताद्ग्राम्यवादी स्यात् तस्य गृहाद्व्रीहीनाहरेयुस्ताञ्छुक्लांश्च कृष्णांश्च विचिनुयुर्ये शुक्लास्तमादित्येभ्यश्चरुं
निर्वपेद्ये कृष्णा नि तान् दध्युरादित्या वै देवविशा देवविशा मनुष्यविशाया ईशे देवविशैवैनं मनुष्य-
विशामवगमयत्येतद्विशमवागन्नित्याहुरथ क्व क्षत्रमिति यदा वै क्षत्रमवगच्छत्यथावगच्छति यदा-
वगच्छेद्ये कृष्णास्तं वारुणं चरुं निर्वपेत् क्षत्रं वै वरुणो वरुण एवैनं क्षत्रमवगमयत्युभे विशा अव-
गच्छति देवविशां च मनुष्यविशां च यच्छुक्लानामादित्येभ्यो निर्वपति तस्माच्छुक्ल इव वैश्यो जायते
यत् कृष्णानां वारुणं तस्माद्धूम्र इव राजन्यः ॥६॥ ११-१२

अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्धेहीन्द्रस्य प्राणस्स ते प्राणं ददातु
यस्य प्राणस्तस्मै ते स्वाहा पितृणां प्राणस्ते ते प्राणं ददतु येषां प्राणस्तेभ्यो वस्स्वाहा मरुतां
प्राणस्ते ते प्राणं ददतु येषां प्राणस्तेभ्यो वस्स्वाहा विश्वेषां देवानां प्राणस्ते ते प्राणं ददतु येषां
प्राणस्तेभ्यो वस्स्वाहा प्रजापतेः परमेष्ठिनः प्राणस्स ते प्राणं ददातु ययोः प्राणस्ताभ्यां वाँ स्वाहा
यदसर्पस्तत् सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदघ्रियथास्तद् घृतमभवः ॥ १३

घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तां प्रयतं मरुद्भिः ।
तत्त्वा विष्णुरन्वपश्यत् तत्त्वेडा गव्यैरयत् ॥ १४

पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्योपांशोर्वीर्येणोद्धराम्यसौ बृहता त्वा रथन्तरेण त्रिष्टुभा
वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसा अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे
जीवनस्याया असौ देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेषामयमायुषायुष्मानस्त्वसौ ब्रह्मायुष्मत्
तद्ब्राह्मणैरायुष्मत् तस्यायमायुषायुष्मानस्त्वसा अग्निरायुष्मान् स वनस्पतिभिरायुष्माँस्तस्यायमायुषा-
युष्मानस्त्वसौ यज्ञ आयुष्मान् स दक्षिणाभिरायुष्माँस्तस्यायमायुषायुष्मानस्त्वसौ सोम आयुष्मान्
स ओषधीभिरायुष्माँस्तस्यायमायुषायुष्मानस्त्वसा ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्ता-
सामयमायुषायुष्मानस्त्वसौ ॥ १५

इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥ १६

अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव
बृहस्पतेः प्राणस्स ते प्राणं ददातु तेन जीव ॥७॥ १७

---

[७] मै. १,३,४ (१२-१८) तै. सं. १,३,१० । [इममग्न आयुषे० । अथर्व. २,२८,५ । जरदष्टिर्यथासत्० । ऋ० परि. २७,८; अथर्व. ८,५,२१ ]

आग्नावैष्णवमेकादशकपालं निर्वपेत् सारस्वतं चरुं बार्हस्पत्यं चरुं पूर्वेद्युरेतया यक्ष्यमाणोऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो वाक् सरस्वती ब्रह्म बृहस्पतिरेता एवं देवताः पूर्वेद्युर्गृह्णाति प्राणा वै देवताः प्राणानेव गृहीत्वोपवसत्याग्नेयमष्टाकपालं श्वो निर्वपेत् सौम्यं चरुमदित्यै चरुं वारुणं यवमयं चरुमग्नये वैश्वानराय द्वादशकपालमामयाव्यग्निं वै पुरुषस्य प्रमीतस्य माँसानि गच्छान्ति सोमं रसः पृथिवीं शरीरमियमदितिरस्याँ हिं शय एता वै देवताः पुरुषस्येशते ताभ्य एवैनमधि समीरयति॥ सौम्यो वै जीवन्नाग्नेयः प्रमीतो नैष जीवो न मृतो य आमयावी तयोरेवैनं भागधेयेन निष्क्रीणाति वरुणगृहीत एष य आमयावी यद्वारुणो वरुणादेवैनं मुञ्चति यवमयो भवति प्रादेशमात्रो भवति संवत्सरो वा अग्निर्वैश्वानर आयुस्संवत्सरस्संवत्सर एवैनमायुषि प्रतिष्ठापयति सर्वमायुरेति पञ्चैतानि हवीँषि पाङ्क्तः पुरुषः पुरुषमेवाप्नोत्यग्नेरायुरसीति हिरण्यं घृतेऽवदधात्यग्निजा वै हिरण्यं मनुष्या अग्नेरायुष्कृतस्तैरेवास्मा आयुर्दधातीन्द्रस्य प्राण इत्येतद्देवत्या वै प्राणास्तानेवास्मिन् दधात्येतद्देवत्या दिशो यथादेवतमेवैनं दिग्भ्योऽधि समीरयति पञ्चैतानि जुहोति पाङ्क्तः पुरुषः पुरुषमेव स्पृणोति॥ सर्व ऋत्विजः पर्याहुस्सर्व एवास्मा ऋत्विजश्चिकित्सान्ति ब्रह्मणो हस्तमनु पर्याहुर्ब्रह्म वै ब्रह्मा ब्रह्मणैवास्मिन्नेकधायुर्दधाति यदसर्प इति घृतस्यैवैतज्जन्म बन्धुतां वीर्यं व्याचष्टे पावमानेन त्वा स्तोमेनेत्येतावद्वावास्ति यावद्ब्रहास्स्तोमाश्छन्दाँसि यावेदवास्ति तावतास्मै चिकित्सत्युद्धराम्युत्सृजाम्युन्नयामीति यथा वध्यमुद्धरत्युत्सृजत्युन्नयत्येवमेवैनमेतदुद्धरत्युत्सृजत्युन्नयति देवा आयुष्मन्त इति प्रयच्छत्येते वै देवा आयुष्मन्तस्तैरेवास्मा आयुः प्रयच्छति तत् पिबत्यायुरेव तत् पिबति यदेव तस्य तन्निरिव धयेद्धिरण्याद् घृतं तेजो वै हिरण्यमायुर्घृतं तेजस एवाध्यायुरात्मन् धत्त इममग्न आयुषे वर्चसे कृधीति हिरण्यमाबध्नात्यग्निर्वै सर्वा देवता आयुर्हिरण्यँ सर्वाभिरेवास्मै देवताभिराबध्नाति तिग्ममोजो वरुण सँशिशाधीति समेवैनँ श्यति मातेवास्मा अदिते शर्म यच्छेतीयमदितिरस्यामेवैनं प्रतिष्ठापयति विश्वे देवा जरदष्टिर्यथासदिति जरामृत्युमेवैनं करोत्यश्विनोः प्राणो मित्रावरुणयोर्बृहस्पतेरित्येतद्देवत्या वै प्राणास्तानेवास्मिन् दधाति तानस्मिन्नधि विशातयति तानस्मादनपगान् करोति ॥८॥ १८–२०

पुरोवातो जिन्व रावत् स्वाहा वातावान् वर्षन्नुग्र रावत् स्वाहा स्तनयन् वर्षन् भीम रावत् स्वाहावस्फूर्जन् विद्युद्वर्षँस्त्वेष रावत् स्वाहातिरात्रं ववृष्वान् पूत रावत् स्वाहा बहु हायमवृषदिति श्रुत रावत् स्वाहा तपति वर्षन् विराड् रावत् स्वाहा नशन्युवस्फूर्जन् विद्युद्वर्षन् भूत रावत् स्वाहा मान्दा

[८] मै. २,३,४-५ ( १७,१९-२१ )। तै. सं. २,३,११। [ इममग्न आयुषे०। अथर्व. २,२८,५। जरदष्टिर्यथासत्। ऋ. परि० २७,८; अथर्व. ८,५,२१]

[९] मै. १,३,२६; २,४,७; ४,१२,५ ( ७५,१३-३५,१४० )। वा. १८,५५। काण्व. २०,२५।

वशाश्शुन्ध्युवोऽजिरा उन्दतीस्सुफेना ज्योतिष्मतीस्तमस्वतीर्मित्रभृतः क्षत्रभृतस्सुराष्ट्रा इह मावत ॥
वृष्णस्संदानमसि वृष्ट्यै त्वोपनह्यामि देवा वसव्या अग्ने सोम सूर्योग्रो दत्तोदधिं भिन्त दिवः
पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो मा वृष्ट्यावत देवाश्शर्मण्या मित्र वरुणार्यमन्नुग्रो दत्तोदधिं
भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो मा वृष्ट्यावत देवास्सपीतयोऽपां नपादाशुहेमन्नुग्रो
दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो मा वृष्ट्यावत ॥ २१-२२

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । यत् पृथिवीं व्युन्दन्ति ॥ २३

उदीरयत मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उपदस्यन्ति धेनवश्शुभं यातामनु रथा अवृत्सत ॥ २४

आ यं नरस्सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
प्र पर्जन्यस्सृजतां रोदसी अनु धन्वना यन्तु वृष्टयः ॥ २५

सृजा वृष्टिं दिव आद्भिस्समुद्रं पृण ये देवा दिविभागा येऽन्तरिक्षभागा ये पृथिविभागास्त
इमं यज्ञमवन्तु त इदं क्षेत्रमाविशन्तु त इदं क्षेत्रमनुविविशन्त्वब्जा असि प्रथमजा बलमसि समु-
द्रियं दिवो धारां भिन्द्धि मारुतमसि मरुतामोजोऽपां धारां भिन्द्धि ॥ २६

उत्स्तम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः ।
उद्नो दिव्यस्य नो देहीशानो विष्या दृतिम् ॥ २७

कृष्णं नियानँ हरयस्सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन् सदनानि रात्वी घृतेन द्यावापृथिवी व्युन्दन् ॥९॥ २८

कृष्णाजिनं भवति मधु करीराणि श्यावस्याश्वस्य दाम तानि पूर्वस्याग्नेरन्ते निधाय कृष्णं वासो यजमानं परिधापयित्वान्वारम्भयित्वैतानि जुहोति वातनामानि वा एतान्येष वै वर्षस्येशे यदा ह्येष आप्याययति यदा समीरयति यदा प्रदापयत्यथ वर्षति तमेव भागधेयेनोपधावति सोऽस्मै प्रीतो वृष्टिं निनयत्यष्टा एतानि जुहोति चतस्रो दिशश्चतस्र उपदिशा यथादिशमेव दिग्भ्यो वृष्टिं संप्रच्यावयति कृष्णाजिने संयौति हविरेव करोति मधुना संयौत्यपां वा एष ओषधीनां रसो यन्मध्वद्भ्य एवौष-धिभ्यो वर्षति यर्हि वर्षत्यद्भ्य एवौषधिभ्यो वृष्टिं निनयति ॥ मान्दा वशा इत्येतानि वा अपां नामधेयानि यथादं आहासा एह्यसा एहीत्येवमेवैना एतन्नामग्राहं दिवश्च्यावयति न वा अन्ययै-

---

[ दिवा चित्तमः०...व्युन्दन्ति । ऋ. १,३८,९; तै. सं. २,४.८,१। उदीरयत ( था ) मरुतः० । ऋ. ५, ५५,५; तै. सं. २,४,८,१ । आ यं नरस्सुदानवो० । ऋ. ५,५३,६; तै. सं. २,४,८.१ । कृष्णं नियानं हरय० । ऋ. १,१६४,४७; अथर्व. ६.२२,१, ९,१०,२२; १३,३,९; तै. सं. ३,१,११,४; नि. ७,२४ ]

[ १० ] मै. २,४,८ ( ३१ ) । तै. सं. २,४,९—१० ।

स्याहुस्सौम्यया आहुत्या दिवो वृष्टिं च्यावयितुमर्हतीति यतीन् वै सालावृकेया आदँस्तेषाँ शीर्षाणि
परापतँस्ते खर्जूरा अभवन् यस्सोमपीथस्स ऊर्ध्वोऽपतत् तानि करीराणि यत् करीराणि भवन्ति
सौम्ययैवाहुत्या दिवो वृष्टिं निनयति तस्मात् करीराणि न स्त्रियै दद्यान्न शूद्रायासोमपीथ इव ह्येषं
वृष्णस्संदानमसि वृष्ट्यै त्वोपनह्यामीति वृषा ह्यश्वो वृषा पर्जन्यस्समृद्ध्यै श्यावस्याश्वस्य दाम भवति
श्याव इव ह्येष वर्षिष्यन् भवति।। देवा वसव्या देवाश्शर्मण्या देवास्सपीतय इत्येता वै देवता वर्षस्येशते
ताभिरेवास्मा अन्वहं वृष्टिमिच्छति कृष्णाजिनं उपनह्यत्यृक्सामयोर्वा एतद्रूपं यत् कृष्णाजिनमृक्सामा-
भ्यामेवास्मै वृष्टिमिच्छति यदि वर्षेत् तदेवेष्टिं निर्वपेद्यदि न वर्षेत् तथैव वसेयुरहोरात्रे वै मित्रावरुणा
अहोरात्रे पर्जन्योऽनुवर्षति नक्तं वा हि दिवा वा वर्षत्येते वर्षस्येशाते ता एव भागधेयेनोपधावति
ता अस्मै प्रीतौ वृष्टिं निनयतोऽग्नये धामच्छदे अष्टाकपालं निर्वपेन्मारुतं चरुँ सौर्यमेककपालमग्निर्वा
इतो वृष्टिमुदीरयति धामच्छदिव भूत्वा वर्षति मरुतस्सृष्टां वृष्टिं नयन्ति ।। यदासा आदित्योऽर्वाङ्
रश्मिभिः पर्यावर्ततेऽथ वर्षत्येता वै देवता वर्षस्येशते ता एव भागधेयेनोपधावति ता अस्मै प्रीता
वृष्टिं निनयन्त्यप्यवर्षिष्यन् वर्षत्येव षडेतानि हवीँषि षड्वा ऋतव ऋतुभ्य एव वृष्टिं संप्रच्यावयति
यत् सप्तमँ संवत्सरादेव तेन वृष्टिं च्यावयत्यथैता मारुतीश्चतस्रः पित्र्यास्तासां तिसृभिः प्रचरन्ति
न्येकां दधत्यृचोऽनुवाक्या यजूँषि याज्या मरुतो वै वर्षस्येशते तेभ्य एव भूयो भागधेयं करोति
या चतुर्थी ताँ सँस्थितेऽप्सु जुहोति सृजा वृष्टिं दिव आद्भिस्समुद्रं पृणेत्याभिरेवामूरच्छैत्यथो इमा-
श्चैवामूश्च सँसृजति ये देवा दिविभागा इति कृष्णाजिनमवधूनोति दिशश्चैव देवताश्च तर्पयत्यथो इम
एवास्य लोका अभीष्टाः प्रीता भवन्ति सैषा कारीरी नामेष्टिस्संवत्सरं करीराणां नाश्नीयाद्य एतया
यजेताथो योऽनुब्रुवीत तदस्या व्रतम् ।।१०।। २९–३२
या वां मित्रावरुणौ सहस्यौजस्या रक्षस्या यातव्या तनूस्तया वां विधेम तयेममम्नुमामुष्यायण-
ममुष्याः पुत्रमँहसो मुञ्चतं यस्ते राजन् वरुण देवेषु पाशस्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन्
वरुणाग्ने द्विपात्सु चतुष्पात्सु पशुषु वनस्पतिष्वोषधीष्वप्सु पृथिव्यां पाशस्तं त एतदवयजे तस्मै
स्वाहा या वां मित्रावरुणौ सहस्यौजस्या रक्षस्या यातव्या तनूस्तया वामविधाम तयेममम्नुमामुष्या-
यणममुष्याः पुत्रमँहसोऽमौक्तम् ।।११।। ३३

मक्षू देववतो रथश्शूरो वा पृत्सु कासु चित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ।। ३४

---

[ ११ ] मै. २,३,१ ( ३ ).

[ १२ ] मै. १.३,२६; ४,१०,२.४; ११,२; १२,१; १४,१४ (७३,४९,१०४,४२—४३,४९—५६,७,२००-२०१) वा. ८,४; ३३,६८; ३४,५४; २१,१। काण्व. ८,३; ३२,६८; ३३,४१; २३, १। [ मक्षू देववतो०। ऋ. ८,३१,१५; तै. सं. १,८,२२,३ ]

नकिष्टं कर्मणा नशन्न प्रयोषन्न योषति ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ ३५

न यजमान रिष्यसि न सुन्वान न देवयो ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ ३६

असदत्र सुवीर्यमुत त्यदाश्वश्व्यम् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ ३७

अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् ।
सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् ॥ ३८

उपक्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।
पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उपयन्ति विश्वतः ॥ ३९

सोमारुद्रा विवृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु ॥ ४०

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥ ४१

सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयोऽरमश्नुवन्तु ।
दमे दमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥ ४२

सोमापूषणेमौ देवौ महि वो महतामवः ।
वरुण मित्रार्यमन्नवाँस्याव्रृणीमहे ॥ ४३

यज्ञो देवानाम् ॥ ४४

धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥ ४५

---

[ **नकिष्टं कर्मणा०** । ऋ. ८,३१,१७; तै. सं. १,८,२२,४ । **न यजमान रिष्यसि०** । ऋ. ८,३१,१६; तै.सं. १,८.२२,४ । **असदत्र सुवीर्यमुत०** । ऋ. ८,३१,१८ । **अग्नि वः पूर्व्यं गिरा०** । ऋ. ८,३१,१४; तै. सं. १,८,२२,३ । **उपक्षरन्ति सिन्धवो०** । ऋ. १,१२५,४; तै. सं. १,८,२२,४ । **सोमारुद्रा विवृहतं०** । ऋ. ६,७४,२; अथर्व. ७,४२,१; तै. सं. १,८,२२,१ । **सोमारुद्रा युवमेतानि०** । ऋ. ६,७४ ३; अथर्व. ७ ४२,२; तै. सं. १ ८,२२ ५ । **सोमारुद्रा धारयेथा०** । ऋ ६,७४,१ । **सोमापूषणेमौ०** । ऋ. २,४०,१-३; तै. सं. १,८,२२,५। **यज्ञो देवानाम्०**। ऋ. १,१०७,१; तै. सं. १,४,२२.१; २,१.११,४। **धारयन्त आदित्यासो०**। ऋ. २,२७,४; तै. सं. २,१,११,४ ]

तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनादित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु ॥ ४६

इमा गिर आदित्येभ्यो घृतस्नूस्सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो मे तुविजातो वरुणो दक्षो अंशः ॥ ४७

आदित्यासो अदितयस्स्याम पूर्देवत्रा वसवो मर्त्यत्रा ।
सनेम मित्रावरुणा सनन्तो भवेम द्यावापृथिवी भवन्तः ॥ ४८

इमं मे वरुणास्तभ्नाद् द्यामसुरः ॥१२॥ ४९

अग्नाविष्णू अग्नाविष्णू पावका न आ नो दिवो बृहस्पते जुषस्व नः ॥ ५०

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत् तमांसि ॥ ५१

अग्न आयूँषि पवसे ॥ ५२

आयुर्दा देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने ।
घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् ॥ ५३

गयस्फानः ॥ ५४

---

[ तिस्रो भूमीर्धारय० । ऋ. २,२७,८; तै. सं. २,१,११,५ । इमा गिर आदित्येभ्यो० । ऋ. २,२७,१; नि. १२,३६ । आदित्यासो अदितय० । ऋ. ७,५२,१ । इमं मे वरुण० । ऋ. १,२५,१९; सा. १५८५; तै. ब्रा. २,१,११,६ । अस्तभ्नाद् द्यामसुरः० । ऋ. ८,४२,१; तै. सं. १,२,८,१ ]

[ १३ ] मै. ४,११,२; १२ ४—५ ( ५८—६०,६२—६३; ९६—१००; १४०—१४१,१४५ ) । वा. २०,८४; १९, ३८; ३५,१६; ४,३७; २१,१—२,५—६; १८,७२—७३; २६,८ । काण्व. २२,६९; ८,१९; २२,४०; २९, ३७; ३५,४८; ४,४९; २३,१—२,५—६; २०,४१—४२; २८,८ । [ अग्नाविष्णू सजोषसा० । तै. स. ४, ७,१; ५,७,३,२; तै. ब्रा. ३,११,३; श्रौ. सू. २,८ । अग्नाविष्णू महि० । अथर्व. ७,२९,१—२; तै. सं. १,८, २२,१; २,५,१२,१; श्रौ. सू. २,८ । पावका नः० । ऋ. १,३,१०; सा. १८९; तै. ब्रा. २,४,३,१; नि. ११,२६ । आ नो दिवो० । ऋ. ५,४३,११; तै. सं. १,८,२२,१; २,५,१२,१; ३,१,११,२ । बृहस्पते जुषस्व नः० । ऋ. ३,६२,४; तै. सं. १,८,२२,२ । बृहस्पतिः प्रथमं० । ऋ ४,५०,४; अथर्व. २०,८८,४; तै ब्रा. २,८,२,७ । अग्न आयूँषि० । ऋ. ९,६६,१९; सा. ६२७,१४६४,१५१८; तै. सं १,३,१४,७; ४,२९,१; ५,५,१; ६,६,२, तै. ब्रा. २,६,३,४; तै. आ. २,५,१ । गयस्फानः० । ऋ. १,९१,१२; तै. सं. ४,३,१३,५ ]

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणस्सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ॥ ५५
सुत्रामाणं महीमू ष्विमं मे वरुण तत्त्वायामि वैश्वानरो न ऊतये पृष्टो दिवि ॥ ५६
रमयता मरुतश्श्येनमायिनं मनोजवसं वृषणं सुवृक्तिम् ।
येन शर्धोऽवसृष्टमुग्रमेति तमश्विना परिधत्तं स्वस्ति ॥ ५७
अभिक्रन्द स्तनय गर्भमाधा उदन्वता परिदीया रथेन ।
दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥ ५८
आ ते सुपर्णा अमिनन्तँ एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न स्मयमानाभिरागात् पतन्ति मिहस्स्तनयन्त्यभ्रा ॥ ५९
कृष्णं नियानं हरयस्सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन् सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते ॥ ६०
वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ॥ ६१
दिवो नो वृष्टिं मरुतो ररीध्वं प्रपिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥ ६२
परि यो रश्मिना दिवोऽन्तान्ममे पृथिव्याः । उभे आपप्रौ रोदसी महित्वा ॥ ६३
वहिष्ठेभिर्विहरन् यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयस्सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः ॥१३॥ ६४
[ ८४४ ]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां मारुतं नाम एकादशं स्थानकं संपूर्णम् ॥११॥

---

[ या ते धामानि हविषा० । ऋ. १,९१,१९; तै. सं. १,२,१०,१; तै. ब्रा. २,८,३,१ । सुत्रामाणं० । ऋ. १०,६३,१०; अथर्व. ७,६,३; तै. सं. १,५,११,५ । महीमू षु० । तै. सं. १,५,११,५; कपि. ४६,७ । इमं मे वरुण० । ऋ. १,२५,१९; सा. १५८५; तै. सं. २,१,११,६ । तत्त्वायामि० । ऋ. १,२४,११; तै. सं. २,१,११,६ । वैश्वानरो न ऊतये० । तै. सं. १,५,११,१; श्रौ. सू. २,८ । पृष्टो दिवि पृष्टो० । ऋ. १,९८,२; तै. सं. १, ५,११,१; तै. ब्रा. ३,११,६,४ । अभिक्रन्द स्तनय० । ऋ. ५,८३,७; अथर्व. ४,१५,६; तै. सं. ३,१,११,६ । आ ते सुपर्णा० । ऋ. १,७९,२; तै. सं. ३,१,११,५ । कृष्णं नियानं हरय० । ऋ. १,१६४,४७; अथर्व. ६, २२,१; ९,१०,२२; १३,३,९; तै. सं. ३,१,११,४; नि. ७,२४ । वाश्रेव विद्युन्मिमाति० । ऋ. १,३८,८; तै. सं. ३,१,११,५ । दिवो नो वृष्टिं० । ऋ. ५,८३,६; तै. सं. ३,१,११,७ । परि यो रश्मिना दिवो० । ऋ. ८,२५,१८ । वहिष्ठेभिर्विहरन्० । ऋ. ४,१३,४; तै. ब्रा. २,४,५,४ ]

अथ द्वादशं स्थानकम् ।

## पयस्स्थानकम् ।

पयस्यया यजेतामयावी मैत्रावरुणीं ब्राह्मणस्य स्यादैन्द्रावरुणीं राजन्यस्याग्निवारुणीं वैश्यस्यर्द्ध्या एवाग्नेयो मैत्रो ब्राह्मणो देवतया वरुणगृहीत एष य आमयावी स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चत्यैन्द्रो राजन्यो देवतया वरुणगृहीत एष य आमयावी स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चत्यग्निस्सर्वा देवतास्तत्र वैश्यस्यापि वरुणगृहीत एष य आमयावी स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या भवति पयो वै पयस्या पयः पुरुषः पय एतस्यामयति यस्यामयति पयसैवास्य पयस्स्पृणोति ॥ पुरोडाशो भवत्यस्थन्वन्तमेवैनं कृत्वा प्रतिष्ठापयति पशुर्वै पुरुषः पशुः पुरोडाशः पशुनैव पशुं स्पृणोति व्युद्यावद्यति यथानुभिद्य शल्यं निर्हरत्येवमेवास्यैतन्मध्यतो यक्ष्मं निर्हरति समुद्यावद्यतेऽवद्यति यथा शल्यं निर्हृत्य समायत्य संनह्यत्येवमेव तदथैत एककपाला न वै पुरुषं कपालैराप्नुमर्हत्येकधैवैनमाप्नोत्यष्टौ भवन्त्यष्टौ वै पुरुषस्य शफाश्शफश एवैनमाप्नोतिताननुपरिचारं जुहोत्यत्रात्र वै वरुणपाशो यत्र यत्रैव वरुणपाशस्तत एनं वरुणान्मुञ्चति ॥ व्यृद्धा वा एषाहुतिर्यामनग्नौ जुहोत्यग्नौ सर्वे होतव्या अग्निस्सर्वा देवतास्तेनैव तान् कामान् स्पृणोति न व्यृद्धामाहुतिं जुहोति पयस्यया यजेत सजातकाम ऋद्ध्या एवाग्नेयो मैत्रो ब्राह्मणो देवतया वरुणगृहीत एष योऽलँ सजातेभ्यस्सन्नसजातो भवति स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या भवति पयो वै पयस्या पयस्सजाताः पयसैव पयोऽवरुन्द्धे व्यूहति दिशस्तर्पयति समूहति सजातानेवास्मै समूहति समानमेककपालानां ब्राह्मणं पयस्यया यजेत पशुकाम ऋद्ध्या एवाग्नेयो मैत्रो ब्राह्मणो देवतया वरुणगृहीत एष योऽलं पशुभ्यस्सन्नपशुर्भवति स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या भवति पयो वै पयस्या पयः पशवः पयसैव पयोऽवरुन्द्धे व्यूहति दिशस्तर्पयति समूहति पशूनेवास्मै समूहति समानमेककपालानां ब्राह्मणं पयस्यया यजेत बुभूषन्नृद्ध्या एवाग्नेयो मैत्रो ब्राह्मणो देवतया वरुणगृहीत एष योऽलं भूत्यै सन्न भवति स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या भवति पयो वै पयस्या पयः पुरुषः पयसैव पयोऽवरुन्द्धे व्यूहति दिशस्तर्पयति समूहति भूतिमेवास्मै समूहति समानमेककपालानां ब्राह्मणम् ॥१॥ १–३

ध्रुवोऽसि ध्रुवोऽहँ सजातेषु भूयासं ध्रुवा मयि सजाता उग्रश्चेत्ता वसुविदभिभूरस्यभ्यहँ सजा-

[ १ ] मै. २,३,१ ( १–३ ) । तै. सं. २,३,१३ ।
[ २ ] मै. २,३,२ (४—८) । तै. सं. २,३,९ ।

तान् भूयासं धीरश्चेत्ता वसुवित् परिभूरसि पर्यहँ सजातान् भूयासं धीरश्चेत्ता वसुवित् सूरिरसि सूरिरहँ सजातेष्वाधिभूयासमुग्रश्चेत्ता वसुविदामनस्य देवा ये सजातास्समनसो यानहं कामये हृदा ते मां कामयन्ताँ हृदा तान्म आमनसस्कृधि स्वाहामनस्य देवा यास्स्त्रियस्समनसो या अहं कामये हृदा ता मां कामयन्ताँ हृदा ता म आमनसस्कृधि स्वाहामनस्य देवा ये पुत्रासो ये पशवस्समनसो यानहं कामये हृदा ते मां कामयन्ताँ हृदा तान्म आमनसस्कृधि स्वाहा ॥ देवाश्च वा असुराश्च संयत्ता आसँस्तेऽसुरा मनस्वितरा आसन्नमनस्तरा इव देवास्ते देवा एतत् संग्रहणमपश्यँस्तेनासुराणां मनाँसि समगृह्णँस्ततो वै ते समनसः पराभवन् मन एव भ्रातृव्यस्य संगृह्णाति सोऽस्यामनाः पराभवत्येतया यजेत पशुकाम एतया वै देवा असुराणां पशून् समगृह्णँस्ततो वै ते पशवः पराभवन् पशूनेव भ्रातृव्यस्य संगृह्णाति सोऽस्यापशुः पराभवत्येतया यजेत सजातकामो मनोग्रहणं वा एतन्मनस्विन इव सजाता यावन्त एव सजातास्तेषां मनाँसि गृह्णाति तेऽस्मान्मनोगृहीता नापयन्ति ॥ वैश्वदेवः कार्यो वैश्वदेवा हि सजाताः पृषत्याः पृषद्वत्साया दुग्धे भवति वैश्वदेवी हि पृषती सर्वेभ्यस्सजातेभ्य आज्यँ समाहरन्ति वैश्वदेवत्वाय वैश्वदेवा हि सजाता ध्रुवोऽसीति परिधीन् परिदधाति सजातानेवास्मा उपदधात्यामनस्य देवा इत्यन्वारम्भयित्वा जुहोति मनोग्रहणं वा एतदेवमिव सजातास्स्त्रिय इव पुमाँस इव कुमारा इव यावन्त एव सजातास्तेषां मनाँसि गृह्णाति तेऽस्मान् मनोगृहीता नापयान्ति ॥ वि वा एतद्यज्ञं छिनत्ति यद्यज्ञे प्रतत एता अन्तराहुतीर्जुहोति सँस्थिते होतव्या यत् सँस्थिते जुहुयाद्बहिरात्मँ सजातान् कुर्वीतान्तरा प्रयाजानुयाजाञ्जुहुयात् प्राणा वै प्रयाजा अपाना अनुयाजा आत्मा हविरात्मन्नेव मध्यतस्सजातान् धत्ते दारुमयेण जुहुयाद्यदि कामयेत क्षिप्रं मा सजाता एयुः क्षिप्रं पुनः परेयुरित्येवमिव हि वनस्पतयोऽध्रुवा इव चराचरा इव मृन्मयेन जुहुयाद्यदि कामयेत चिरं मा सजाता एयुश्चिरं पुनः परेयुरित्येवमिव हीयं ध्रुवेव प्रतिष्ठितेवाचराचरेव ॥२॥ ४--७

इन्द्रो वै वृत्राय वज्रमुदयच्छत सोऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत् ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छत् सोऽवेदस्ति वावास्मिन् वीर्यमिति तस्मै द्वितीयं तस्मै तृतीयमुदयच्छत सोऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत् ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छद्यज्ञं वावास्मै तत् प्रायच्छद्यज्ञं प्रायच्छदिन्द्राय प्रायच्छत् तस्मादैन्द्रावैष्णवँ हविर्भवति वीर्यं वावास्मै तत् प्रायच्छत् तान्निर्वीर्यं भूतमस्तृणुत तं विष्णुर्वीर्यैरन्वतिष्ठत सोऽब्रवीत् सकृन्माधा विष्णो द्विर्माधा विष्णो त्रिर्माधा विष्ण इति तत् त्रैधातव्यायास्त्रैधातव्यात्वमिन्द्रो वै वृत्रँ हत्वा तँ शवे मानवे प्रौहत् सोमो वै वृत्र उदरँ शवो मानवस्तस्मादुदरे सोमः पीयते ॥ तस्मादाहुर्हतो वृत्रोऽस्तृतस्त्विति यज्ञो वा असुरेभ्योऽपाक्रामदु-

[ ३ ] मै. २,४,३ ( ३—१५ )। काण्व. २,१८।

त्सङ्के पात्राण्योप्यैतद्रूपं कृत्वा यत् ताप्यर्याणि विषीव्यन्ति स इन्द्रं प्रतिन्यागच्छेत् तेनेन्द्रोऽयजत ततो देवा अभवन् परासुरा अभवन् य एवं विद्वानेतेन यजेत भवत्यात्मना परास्य भ्रातृव्यो भवति यज्ञो न्यागच्छादिन्द्रं प्रतिन्यागच्छत् तस्मादैन्द्रावैष्णवँ हविर्भवत्यृचो वावास्मै तदग्रे प्रायच्छदथ सामान्यथ यजूँषि ब्रह्मणो वा एष योनिरतो वा इदँ सर्वमसृज्यतर्चस्सामानि स्तोमा यजूँषि ब्रह्मण एव योनिमालभते ॥ स इदँ सर्वमत्येत्येतेन वै सृञ्जया अयजन्त त इदँ सर्वमत्यायँस्तदेनान्मुहुः प्रयुज्यमानमवाधूनुत तस्मान्न मुहुः प्रयोज्यं वि वा एष च्छिनत्ति य एतेन यजतेऽपि पुत्रं याजये-दनुसंतत्या एतस्य वै वीर्येण वृत्रोऽहरहरिषुमात्रमूर्ध्वोऽवर्धतेषुमात्रं तिर्यङ्ङथो यत् प्राणीत् तत् पुनर्न समैद्वर्धते प्रजया प्र पशुभिर्भवति य एवं विद्वानेतेन यजते सर्वेभ्यः कामेभ्यो यजेत सर्वो वा एष यज्ञस्सर्वेभ्यो हि कामेभ्यस्सौम्योऽध्वरः प्रयुज्यतेऽभिचरन् यजेत न दक्षिणां दद्यान्मेनिमेवैनं कृत्वाभिप्रयुङ्क्ते मेनिर्ह्यदक्षिणः ॥३॥ ८-१०

त्रीन् पुरोडाशान्निर्वपेद्भूभुवँस्त्रय इमे लोका इमानेव लोकानाप्त्वौजो वीर्यमवरुन्द्ध उत्तर उत्तरो ज्यायान् भवत्युत्तर उत्तरो ह्येषां लोकानां ज्यायानधरोत्तरं भवन्त्येवमिव हीमे लोका द्वादश कपालानि भवन्ति त्रयो हि ते चतुष्कपालास्समृद्ध्यै सर्वेषामभिघातमवद्यत्यच्छम्बट्कारं यस्य नावद्यति च्छम्बट्करोति च्छम्बणनास्य चरति व्रीहिमयः प्रथमो भवत्यथ यवमयोऽथ व्रीहिमयो रोहिता इव वै व्रीहयो रोहित इवायं लोको रोहित इवासौ शुक्ला इव यवाश्शुक्लमिवान्तरिक्षमन्त-रिक्षेणेमे लोकास्संतता एषां लोकानामनुसंतत्यै नैवारमुत्तमं कुर्यादजामित्वाय ॥ तिस्रो धेनवो दक्षिणा त्रीणि ताप्यर्याणि त्रीणि हिरण्यानि यजुषां वा एतद्रूपं यत् ताप्यर्याणि विषीव्यन्ति साम्नाँ हिरण्यानि च्छन्दसां धेनव एतानि वै यज्ञस्य रूपाणि रूपैरेव यज्ञमवरुन्द्धे सर्वदेवत्यं वासो यद्वा-साँसि ददाति सर्वा एव देवता अवरुन्द्धे तेजो ब्रह्मवर्चसँ हिरण्यं यद्धिरण्यानि ददाति तेज एव ब्रह्मवर्चसमवरुन्द्धे ॥ त्रिस्समृद्धा धेनुरात्मा वत्सः पयो यद्धेनूर्ददाति त्रिस्समृद्धमेवैनं करोति सर्वाणि च्छन्दाँस्यनुब्रूयात् सर्वो वा एष यज्ञस्सर्वाणि हि च्छन्दाँसि सौम्येऽध्वरेऽनूच्यन्ते यज्ञो यदसृज्यत तस्योल्बमन्ववेष्टत तत् ताप्र्यमभवद्यज्ञस्त्वैधातव्या यत् ताप्र्यं यजमानः परिधत्ते स्वेनैव योनिना-त्मानमोर्णुत उष्णिहककुभौ सामिधेनीष्वप्यनुब्रूयादुष्णिहा वै ककुभो वीर्यं ककुबुष्णिहायास्सवीर्ये एवैने अवरुन्द्धे न जगत्या परिदध्यादन्तो वा एषा छन्दसामन्तं गच्छेद्यज्ञं विच्छिन्द्यादग्ने त्री ते वाजिना त्री षधस्थेति त्रिष्टुभा परिदधात्योजो वै वीर्यं त्रिष्टुब्नान्तं गच्छत्योजस्येनं वीर्ये प्रतिष्ठापयति॥४॥ ११-१३

[४] मै. २,४,४—५ (१८—२१)। तै. सं. २,४,११,६; २,४,११; ३,१,११।
[अग्ने त्री ते वाजिना०। ऋ. ३,२०,२]

देवा वा असुराणां वेशत्वमुपायँस्तदिन्द्रोऽपि नोपैत् तेषां वीर्याण्यपाक्रामन्नग्ने रथन्तरमिन्द्राद्बृहद्द्विश्वेभ्यो देवेभ्यो वैरूपँ सवितुर्वैराजं मरुताँ शक्करी त्वष्टु रेवती तानीन्द्रोऽवरुरुत् समानोऽन्वचरत् स एतमैन्द्रमपश्यद् द्वादशकपालं तेन वै स तानीन्द्रियाणि वीर्याण्यवारुन्द्ध ततो वै सोऽभवत् तत एनं देवा अनुसमभवन्नेतेन यजेत बुभूषन्नैन्द्रेण द्वादशकपालेनैतान्येवेन्द्रियाणि वीर्याण्यवरुन्द्धे भवत्येवान्वेनँ स्वास्संभवन्ति द्वादशकपालो भवति वैश्वदेवत्वायोत्तानेषु कपालेष्वधिश्रयति चरुमेव करोति शान्त्या अनिर्दाहाय सर्वाणि वा एतानीन्द्रियाणि वीर्याणि यत् पृष्ठानि तान्येनमीश्वराण्यनायतनानि निर्मृजो व्यतिषजेद् याज्यानुवाक्या इन्द्राय राथन्तरायानुब्रूहीति रथन्तरस्यर्चमनूच्य बृहत ऋचा यजेदिन्द्राय बार्हतायानुब्रूहीति बृहत ऋचमनूच्य रथन्तरस्यर्चा यजेदिन्द्राय वैरूपायानुब्रूहीति वैरूपस्यर्चमनूच्य वैराजस्यर्चा यजेदिन्द्राय वैराजायानुब्रूहीति वैराजस्यर्चमनूच्य वैरूपस्यर्चा यजेदिन्द्राय शाक्करायानुब्रूहीति शक्करीमनूच्य रेवत्या यजेदिन्द्राय रैवतायानुब्रूहीति रेवतीमनूच्य शक्कर्या यजेदेतैरेवेन्द्रियैर्वीर्यैरात्मानमभ्यतिषजत्यनिर्मार्गाय न बृहत्या वषट्कुर्याद् बृहत्या वा इदमन्वयातयामत्वं प्रजाः प्रजायन्ते प्रजननमपिहन्यात् पशवो वै बृहती रुद्रोऽग्नी रुद्राय पशूनपिदध्यादपशुस्स्यादनुवाक्यायाश्चत्वार्यक्षराणि याज्यामभ्यत्यूहेत् तथा ते पङ्क्तिश्चानुष्टुप् च संपद्येते अनुष्टुबनुवाक्या स्यात् पङ्क्तिर्याज्या प्रजाकामस्य वा पशुकामस्य वा प्रजापतिर्वा इदमासीत् तस्य वाग् द्वितीयासीत् तां मिथुनँ समभवत् सा गर्भमधत्त सास्मादपाक्रामत् सेमाः प्रजा असृजत सा प्रजापतिमेव पुनः प्राविशद् यदनुष्टुबनुवाक्या भवति पङ्क्तिर्याज्या वाग् वा अनुष्टुप्पाङ्क्तस्संवत्सरस्संवत्सरः प्रजापतिर्वाच्येव संवत्सरं वृषाणमपिसृजति सोऽस्मै मिथुनं करोति समन्तं पर्यूहं पुरोडाशस्यावद्येदेतैरेवेन्द्रियैर्वीर्यैस्समन्तमात्मानमभितः पर्यूहति स्तृत्या एतया यजेत यमजघ्निवाँसमभिशँसेयुर्देवता वा एतस्यान्नं नादन्ति यमजघ्निवाँसमभिशँसन्ति तस्य देवैः परिवृज्यमानस्य मनुष्या अन्नं नादन्ति तस्मादपि यमनृतमभिशँसेयुस्तस्यान्नं नाद्यात् सर्वदेवत्यानि पृष्ठानि यत् सर्वपृष्ठया यजते देवता एवास्यान्नमादयति तस्य पूतस्य स्वदितस्य मनुष्या अन्नमदन्ति सैषा सर्वपृष्ठा नामेष्टिः पृष्ठमेव समानानां भवति य एवं विद्वानेतया यजते ॥५॥ १४

अश्वो न प्रतिगृह्य उभयादन्वा एष एतस्येन्द्रियं वीर्यं निर्बभस्ति यः प्रतिगृह्णाति तस्मान्न प्रतिगृह्यो वरुणो वा एतमग्रे प्रत्यगृह्णात् स स्वां देवतामार्छत् तं वरुणोऽगृह्णात् स एतेन वारुणेन हविषायजत निर्वरुणत्वाय योऽश्वं प्रतिगृह्णीयात् स एतेन वारुणेन हविषा यजेत निर्वरुणत्वाय चतुष्कपालो भवति चतुष्पाद् वा अश्वः प्रत्यक्षमेवैनं वरुणपाशान्मुञ्चति तदाहुर्न वै तेनेतरेभ्यो मुच्यते

[ ५ ] मै. २,३,७ ( २३—३५ ) । तै. सं. २,३,७ ।
[ ६ ] मै. २,३,३ ( ९—११ ) । तै. सं. २,३,१२ ।

यदेनमेकस्मान्मुञ्चतीति यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान्निर्वपेदत्र वै वरुणपाशो यत्र यत्रैव वरुणपाशस्तत एनं वरुणान्मुञ्चत्येकोऽधिभवति यस्यैव नाधियन्ति तस्मादेनं तेन मुञ्चत्यथो भविष्यदेव वरुणस्यावयजते भूयस्त्वा एतं वरुणो गृह्णाति य एतयेष्ट्वापरमश्वं प्रतिगृह्णाति यद्यपरमश्वं प्रतिग्रहीष्यन् स्यात् सौर्यवारुणं कुर्यात् सूर्यमेव देवतामेतं लोकमुपप्रतिगृह्णाति वरुणादेनं वारुणेन मुञ्चत्यपांनप्त्रीयश्चरुरपिभवत्ययोनिर्वा अश्वोऽप्सुजा योनिमन्तमेवैनं कृत्वा प्रतिष्ठापयत्येकविंशतिस्सामिधेन्यो भवन्त्येकविंशो वै संवत्सरः पञ्चर्तवो द्वादश मासास्त्रय इमे लोका असा आदित्य एकविंश एष प्रजापतिः प्राजापत्योऽश्वोऽश्वमेवाप्नोति ॥ यस्ते राजन् वरुण गायत्रच्छन्दाः पाशस्त त एतदवयजे तस्मै स्वाहा यस्ते राजन् वरुण त्रिष्टुप्छन्दा जगच्छन्दा अनुष्टुप्छन्दाः पाशस्तं त एतदवयजे तस्मै स्वाहेत्येतावन्ति वै छन्दाँसि च्छन्दाँसि वरुणपाशास्तैरेष गृह्णाति यं वरुणो गृह्णात्यत्रात्र वै वरुणपाशो यत्र यत्रैव वरुणपाशस्तत एनं वरुणान्मुञ्चत्यपांनप्त्रीये द्वे अपिभवतो या एवास्याप्सव्यौ पाशौ ताभ्यामेनं तेन मुञ्चति षडेतानि जुहोति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति ॥६॥
१५--१६

देवा वा ओषधीषु पक्वास्वाजिमयुस्स इन्द्रोऽवेदग्निर्वा उज्जेष्यतीति सोऽब्रवीद्यतरो ना उज्जयात् तन्नौ सहेति सोऽग्निरेव पूर्व उदजयत् तदिन्द्रोऽनूदजयत् तस्मादाग्नेन्द्रमैन्द्राग्नं कार्यमग्निर्हि पूर्व उदजयत् तदिन्द्रोऽनूदजयदभिजित्या एवाग्रायणं द्वादशकपालो भवति संवत्सराद्ध्येतदधिभवति सप्तदश सामिधेन्यो भवन्ति संवत्सराद्ध्येतदधिभवत्येका वै तर्हि व्रीहेरंशुष्टिरासीदेका यवस्यैका माषस्यैका तिलस्य ते विश्वे देवा अब्रुवन् भागो नोऽस्तु वयमिदं प्रथयिष्याम इति तेभ्य एतं भागमकुर्वँस्ततो वा इदमप्रथत भूम्ने वैश्वदेवः प्रथयत्येवैतेन पयसि भवति वैश्वदेवत्वाय वैश्वदेवँ हि पयोऽथ वा इयमब्रवीन्मयि वा एतदध्यसौ वृष्ट्या पचति नावाभ्यामृत उज्जेष्यथेति ताभ्यामेतं भागमकुर्वन्नेककपालं प्रतिष्ठित्यै द्यावापृथिव्यं ग्राम्या वा अन्या ओषधय आरण्या अन्यास्ता अस्यैतेनोभयीरिष्टा भवन्ति सोम ओषधीनामधिराजस्तस्यैष उद्धारो यदकृष्टपच्यमुद्धार एवास्यैष भाग एव यदारण्यं तस्यैतेनाग्रं क्रियते यत् फालकृष्टं तस्येतरेण वत्सः प्रथमजो दक्षिणा रेत एव ह्येषोऽप्रजातः प्रजननाय सर्वस्मै वा एषोऽभिषिच्यते यदाग्रायणं राजसूये भवत्यन्नमेवावरुन्द्धे तदस्य स्वदितमिष्टं भवत्यानीतो वा एष देवानां य आहिताग्निरदन्त्यस्यान्नं यदनिष्ट्वाग्रायणेन नवस्याश्नीयाद् देवानां भागं प्रतिक्लृप्तमद्यादार्तिमार्छेत् तस्मान्नानिष्ट्वाग्रायणेन नवस्याशितव्यमेतेन वै देवा अग्रं पर्यायँस्तदाग्रायणस्याग्रायणत्वमग्रमेव समानानां पर्येति य एवं विद्वानाग्रायणेन यजते ॥७॥ १७

संवत्सरं वा एतस्य च्छन्दाँसि यातयामानि भवन्ति यस्सोमेन यजते छन्दाँसि देविकाश्छन्दाँस्येवायातयामानि पुनर्यामाणि कुरुते पष्ठौह्यप्रवीता दक्षिणाशा वा एषाशामेष उपाभिषिच्यत आशामे-

वास्मै करोति पशुकामो देविकाभिर्यजेत च्छन्दाँसि देविका मिथुनं छन्दाँसि गायत्र्यनुमती राका त्रिष्टुप्सिनीवाली जगती कुहूरनुष्टुब्धाता वषट्कारो यद् द्वे अवरं द्वे परे तन्मिथुनं यद्धाता वषट्कारस्तन्मिथुनं तस्मादेवास्मै मिथुनात् पशून् प्रजनयति ॥ या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावस्या सा सिनीवाली योत्तरा सा कुहूश्चन्द्रमा एव धाता यत् पूर्णोऽन्यां वसत्यूनोऽन्यां तन्मिथुनं यत् पश्यन्त्यन्या नान्यां तन्मिथुनं यच्चन्द्रमा अमावस्याया अधि प्रजायते तन्मिथुनं तस्मादेवास्मै मिथुनात् पशून् प्रजनयति प्रजाकामो देविकाभिर्यजेत धातारमुत्तमं कुर्यात् स्त्रियो वै देविकाः पुमान् धाता पराचीः प्रजा रेतो दधते पराचीष्वेवैतद् रेतो धीयते तदाहुर्न वै तेन पराधत्ते यत् पूर्वा प्रवीयत इति व्यवदध्याद्धातारँ सर्वा एवैना वृषामोदिनीः करोति ॥ विन्दते पुत्रं पश्चाच्चर इव तु भवति स्त्रीभिर्ह्येनं पश्चात् परिणयति यदाजायेत धातारं पुरस्तात् कृत्वाथैतामेव निर्वपेदग्रमेवैनं परिणयत्यामयावी देविकाभिर्यजेत धातारं मध्ये कुर्यात् संवत्सरो वै धाता संवत्सरो हि वा एतस्य लुब्धोऽथैतस्यामयति संवत्सरमेवास्मै मध्यतः कल्पयित्वाथैनमेतस्मान्मिथुनात् पुनः प्रजनयतीश्वराणि वा एनमेतानि च्छन्दाँस्यशान्तानि निर्मृजः पशुमालभेत शान्त्या आनिर्मार्गाय ॥ वीरस्था वा अन्ये पशवोऽवीरस्था अन्ये ये पुरस्तात् पुरोडाशास्ते वीरस्था ये पश्चात् पुरोडाशास्तेऽवीरस्था ये वीरस्था भुञ्जन्तस्त उपतिष्ठन्ते येऽवीरस्थाः परा त भवन्ति ये पुरस्तात् पुरोडाशास्ते वीरस्थाः प्रजापतिं ते प्रतिष्ठामभिसृज्यन्ते यासु स्थालीषु सोमा भवन्ति तासु देविकाः कुर्याद् रेतोधा हि सोमस्सर्ववेदसी देविकाभिर्यजेत पशुभिर्वा एष व्यृध्यते यस्सर्वं ददाति च्छन्दाँसि देविकाः पशवश्छन्दाँस्यत्रैष जघन्यं पशून् पश्यति यत्रैनान् विभजति यत्रैवैनाञ्जघन्यं पश्यति तत एनान् पुनः प्रजनयति य एव कश्च सोमेन यजेत स देविकाभिर्यजेत च्छन्दाँसि देविकाश्छन्दाँस्येवायातयामानि पुनर्यामाणि कुरुते ॥८॥ १८—२१

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेण देवीं देवेन शुक्राँ शुक्रेणामृताममृतेन सृजामि सँ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥ २२

पुनातु ते परिस्रुतँ सोमँ सूर्यस्य दुहिता । वारेण शश्वता तना ॥ २३

वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः । इन्द्रस्य युज्यस्सखा ॥ २४

---

[ ९ ] मै. २,३.८ (३६—४१) । वा. १९,१,३—४,६: १०,३२; २०,३३; २३,३८ । काण्व २१,१,३—५; २२ १८; ११,४५; २५,४० । तै. सं. १,८,२१; ३,२,८,३ । तै ब्रा. १,४.३; २.६,१.३ । [ पुनातु (०ति ) ते०... तना । ऋ. ९,१,६ । वायुः पूतः पवित्रेण० । अथर्व. ६,५१,१ । इन्द्रस्य युज्यस्सखा० । ऋ. १,२२,१९; सा. १६७१ ]

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २५

उपयामगृहीतोऽस्यच्छिद्रां त्वाच्छिद्रेणाश्विभ्यां जुष्टां गृह्णाम्येष ते योनिरश्विभ्यां त्वोपयामगृहीतोऽस्यच्छिद्रां त्वाच्छिद्रेण सरस्वत्यै जुष्टां गृह्णाम्येष ते योनिस्सरस्वत्यै त्वोपयामगृहीतोऽस्यच्छिद्रां त्वाच्छिद्रेणेन्द्राय सुत्राम्णे जुष्टां गृह्णाम्येष ते योनिरिन्द्राय त्वा सुत्राम्णे ॥ स्वाद्वीं त्वा स्वादुनेति ब्रह्मणैवैनाँ सँसृजति तिस्रो रात्रीस्सँसृष्टा वसति तिस्रो हि रात्रीस्सोमः क्रीतो वसत्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्येताभ्यो ह्येषा देवताभ्यः पच्यते वायुः पूतः पवित्रेणेति व्यृद्धस्यातिपवितस्यैतया पुनीयादेका पुरोरुगेकधैवास्मिन् वीर्यं दधात्यनिरुक्ता प्राजापत्यानिरुक्तः प्रजापतिः प्रजापतिमेवाप्नोति ॥९॥ २६-२७

विश्वरूपो वै त्रिशीर्षासीत् त्वष्टुः पुत्रोऽसुराणां स्वस्रीयस्स सोममेकेन शीर्ष्णापिबदन्नमेकेनावयत् सुरामेकेनापिबत् स इन्द्रोऽमन्यतायं वावेदं भविष्यतीति तेन समलभत तेन युगशरमपद्यत स तक्षाणं तिष्ठन्तमब्रवीदाधावास्येमानि शीर्षाणि च्छिन्द्धीति तस्य तक्षोपाद्रुत्य परशुना शीर्षाण्यच्छिनत् तस्मात् तक्ष्णश्शिरो धृतं तस्मादस्यान्नमन्नाद्यं तस्य यत् सोमपानँ शिर आसीत् स कपिञ्जलोऽभवद् यदन्नादनँ स तित्तिरिर्यत् सुरापानँ स कलविङ्कस्तस्मात् स निततपमिव वदति॥ स त्वष्टा पुत्रहतो वीन्द्रँ सोममाहरत् तमधस्सहस्रशलेऽसुनोदथो आहुश्शतशल इति तमस्येन्द्रः प्रासह्यापहृत्य नाड्या निरपिबत् स विष्वक् सोमपीथेन व्यार्ध्यत तस्मात् सोमो नानुपहूतेन पातवै सोमपीथेन व्यर्धुको भवति तस्य यन्नस्तोऽमुच्यत तौ सिंहा अभवतां यदक्षीभ्यां तौ शार्दूलौ यत् कर्णाभ्यां तौ वृकौ यदधस्तात् सा सौत्रामणी यत् प्रथमं निरष्ठीवत् तत् कुवलमभवद् यद् द्वितीयं तद्बदरं यत् तृतीयं तत् कर्कन्धु तमश्विना अभिषज्यतां तमयाजयतामेतया सौत्रामण्या स यैरेव तद्वीर्यैर्व्यार्ध्यत तान्यस्मिन्नाप्त्वाधत्तामेतया यजेत यँ सोमोऽतिपवेत वीर्येण वा एष व्यृध्यते यँ सोमोऽतिपवते यावदेव वीर्यं तदस्मिन् दधात्येषैव राजसूयेऽपि भवति वीर्येण वा एष व्यृध्यते यो राजसूयेनाभिषिच्यते वृत्रँ हि हन्ति यावदेव वीर्यं तदस्मिन् दधात्येतयैव ब्राह्मणो वा राजन्यो वा बुभूषन् यजेतैतावद्धं वीर्यं यावदेव वीर्यं तदस्मिन् दधाति तदाहुरार्तयज्ञा वा एष नानार्त एतया यजेतेति तदाहुर्यष्टव्यमेव सर्वो हि पुरुष आर्तस्सर्वो बुभूषति तस्माद्यष्टव्यं यदाश्विनोऽश्विनौ ह्यभिषज्यतां यत् सारस्वतो वाग्वै सरस्वती वाचा ह्यभिषज्यताम्॥ यदैन्द्र इन्द्रे हि तद्वीर्यमधत्तां कुवलसक्तुभिराश्विनँ श्रीणाति बदरसक्तुभिरैन्द्रं कर्कन्धुसक्तुभिस्सारस्वतं वाग्वै सरस्वती वाच्येवास्य स्वाम्नानं दधात्यथो

---

[ कुविदङ्ग यवमन्तो०। ऋ. १०,१३१,२; अथर्व. २०,१२५,२ ]

[ १० ] मै. २,३,९; ४,१ ( ४८:१ ) । तै. सं. २,५,१ ।

यैनमसौ वागश्लीलमभिवदति सैनं पुनः कल्याणमभिवदति सिँहा अध्वर्युर्मनसा ध्यायेच्छार्दूलौ प्रतिप्रस्थाता वृकौ यजमानस्सुरा भवति यैरेव तद्वीर्यैर्व्यृध्यते तान्यस्मिन्नाप्त्वा धत्तः॥१०॥२८-३०

ब्राह्मणस्य मूर्धन् सादयेत् तेन मेध्यान्नं वै सुरा मेध्यमन्नं तेन मेध्यैका पुरोरुगेका याज्यैकधैवास्मिन् वीर्यं दधाति सर्वहुतं जुहोति सर्वमेवास्मिन् वीर्यं दधाति ब्राह्मणं पाययेत् तेन हविष्क्रियत आत्मनापेयात्मन्नेव वीर्यं धत्ते तत् तन्न सूक्ष्यं पाप्मा वै सुरा मध्यत एष पाप्मना गृहीतो यत् समयात्येति मध्यत एवैनं पाप्मनो मुञ्चति यदुत्तरेऽग्नौ जुहुयान्न पाप्मना व्यावर्तेत क्रियेत भेषजं यद् दक्षिणेऽग्नौ जुहोति वि पाप्मना वर्तते क्रियते भेषजं यद् विक्षारयति वीव ह्येष क्षरिति ॥ यद् वा एतस्य व्याधिं यत् प्रामायि पितॄँस्तदगन्यत् पितृमतीभिरभिमन्त्रयन्ते पितृभ्य एवैनमधिममीरयन्ति यत् तिसृभिस्तिसृभिस्तृतीये हि लोके पितरो यच्चत्वार आभ्य एवैनं चतसृभ्यो दिग्भ्योऽधिसमीरयन्ति शताक्षरा भवति शतायुर्वै पुरुषश्शतवीर्य आयुरेव वीर्यमवरुन्द्धे क्लीबात् सीसेन तोक्मानि क्रीणात्यनृतं वै क्लीबोऽनृतँ सीसमनृतँ सुरानृतेनैवानृताद्ध्यनृतं क्रीणाति वडवा दक्षिणा सृत्वरी ह्येषा सृत्वरीव सुरा समृद्ध्यै ॥११॥ ३१-३२

आश्विनमजमालभेत सारस्वतीं मेषीमैन्द्रमृषभं वा वृष्णि वैवमेव वपाभिश्चरन्ति यदैन्द्री वपानामुत्तमा भवतीन्द्र एवास्मिँस्तदधिभवति यत् प्रचरन्त ऐन्द्रेण पुनः प्रथमेन प्रचरन्तीन्द्रमेव तत् पुनरालब्ध सेन्द्रत्वाय यदाश्विनोऽश्विनौ ह्यभिषज्यतां यत् सारस्वती वाग्वै सरस्वती वाच्येव प्रतितिष्ठत्यैन्द्री वपानामुत्तमा भवत्यैन्द्रः पुरोडाशानां प्रथमो वीर्यं वा इन्द्रो वीर्य एवैनमभिसंधत्तः प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणो मध्यतो ह्येष वरुणगृहीतः पश्चाद् वा एषा सृष्टा प्रतीचीनशीर्ष्णी यदुपरिष्टात् पुरोडाशा भवन्त्यपिहित्या एवाच्छिद्रत्वाय सह समवत्तं भवति सहेडामुपह्वयन्ते सँहित्या एवाथो इडाया अविदोहाय ॥ यद्वै सौत्रामण्या व्यृद्धं तदस्यास्समृद्धं यदन्यदेवत्याः पशवो भवन्त्यन्यदेवत्याः पुरोडाशा एतद् वा अस्या व्यृद्धँ सदथ समृद्धं नाना वै तैर्वीर्याण्यवरुन्द्धेऽर्धं वै प्रजापतेर्धैर्यमासीदर्धं माल्व्यं यद्धैर्यमासीत् तद् पुरस्तात् पर्यहरत सोमो वाव स ततो ब्राह्मणमसृजत तस्माद् ब्राह्मणस्सर्वो ब्रह्माभि धीरो यन्माल्व्यमासीत् तत्पश्चात् पर्योहत सुरा वाव सा ततो राजन्यमसृजत तस्माज्ज्यायाँश्च कनीयाँश्च स्नुषा च श्वशुरश्च सुरां पीत्वा सह लालपत आसते पाप्मा वै माल्व्यं तस्माद् ब्राह्मणस्सुरां न पिबति पाप्मना नेत्संसृज्या इति तदेतत् क्षत्रियाय ब्राह्मणं ब्रूयान्नैनँ सुरा पीता हिनस्ति य एवं विद्वान् सुरां पिबति प्रजापतेर्वा एषा तनूर्वीर्यं प्रजापतिर्वीर्यमेवास्मिन् दधाति ॥१२॥ ३३-३४

[ ११ ] मै. २,३,९; ४,२ (४८, २)। [ १२ ] मै. २,४,२ (२)।

स्वर्भानुर्वा आसुरस्सूर्यं तमसाविध्यत् स न व्यरोचत तस्माद्देवास्तमोऽपालुम्पन् यत् प्रथममपालुम्पन् साविष्कृष्णाभवद्यद् द्वितीयँ सा फल्गुर्यत् तृतीयँ सा बलक्षी यदध्यस्थादपालुम्पन् साविर्वशाभवदथ वा इयं तर्ह्यृक्षालोमकासीत् तां देवा अदित्यै कामायालभन्त तयास्यां लोमान्यरोहयँस्ततो वा इयं लोमान्यगृह्णात् तामेतामेवमालभेतादित्यै कामाय यमेव कामं कामयते तँ स्पृणोत्यमुतो वा आदित्यस्यार्वाङ् रश्मिरवातिष्ठद्वात्वालमभि तदिमं मिथुनँ समभवतां साविर्वशाभवदथ वा इमास्तर्ह्यफला ओषधय आसँस्तां देवा आदित्येभ्यः कामेभ्य आलभन्त तया सु फलमग्राहयँस्ततो वा इमाः फलमगृह्णँस्ते एते एवमालभेतादित्या अन्यां कामायादित्येभ्योऽन्यां कामेभ्य उभाभ्यामेव सृष्टिभ्यां कामायालभते सारस्वतीं मेषीमालभेत यस्माद् वागपक्रामेद् वाग्वै सरस्वती सरस्वत्येतस्माद-पक्रामति यस्माद् वागपक्रामति यत् सारस्वतीं वाचमेव समक्षमाप्त्वावरुन्द्धेऽपन्नदती भवति सर्वत्वायानास्कन्ना समृद्ध्यै यस्त्रेतानामुत्तमो जायेत तमूर्जे आलभेतोर्क्कामो नाना वा एतौ स्तना अभिजायेते अथैष ऊर्जमेवाभिजायत ऊर्जमेवैतेनाप्त्वावरुन्द्ध औदुम्बरो यूपो भवति देवा वै यत्रोर्जं व्यभजन्त तत उदुम्बरोऽजायत यदौदुम्बर ऊर्जे एवावरुद्ध्या एतमेव सौमापौष्णमालभेत प्रजाकामो वा पशुकामो वा सोमो वै रेतोधाः पूषा प्रजनयिता सोम एवास्मै रेतो दधाति पूषा प्रजनयति विन्दते प्रजां वा पशून् वा यतरस्मै कामायालभते वायवे श्वेतमजमालभेत बुभूषन् वायुर्वै देवानां क्षेपिष्ठस्तमेव भागधेयेनोपधावति स एनमाशिष्टँ श्रियमभिप्रणयति स निमार्ष्टि स प्रधन्वति स एवैनँ श्रियमभिप्रणयति ॥ स एव आचोपचं उत पुण्यो भवत्युतो यथेव तथेव वायवे नियुत्वते श्वेतमजं पिशुकर्णमालभेत सजातकामो वायुं वा इमाः प्रजा नस्योता इत्थं चेत्थं चानुचरन्ति प्राणो वायुर्वायुर्देवानां विशो नेता नियुतो देवानां विशस्तमेव भागधेयेनोपधावति सोऽस्मै विशं निनयति यन्नियुत्वत आरम्भणमेव कुरुतेऽनिर्मार्गाय वायवे श्वेतमजमालभेत कामेभ्योऽणु वा एष कामयते यः कामयते वायुर्देवानामण्वनुवाति तमेव भागधेयेनोपधावति सोऽस्य कामाननुवाति॥ १३॥ ३५-३६

आ नो मित्रावरुणा प्र बाहवा ॥ ३७

इन्द्रावरुणयोरहँ सम्राजोरव आवृणे । ता नो मृडात ईदृशे ॥ ३८

नू न इन्द्रावरुणा गृणाना पृङ्क्तं रयिँ सौश्रवसाय देवा ।
इत्था गृणन्तो महिनस्य शर्धोऽपो न नावा दुरिता तरेम ॥ ३९

[ १३ ] मै. २,५,१-१ ( १-२ ) ।

[ १४ ] मै. ४.११,२; १४ १२ ( ६५ – ६६; १६६ )। वा. ९.१८; ११,३—४,८—११; ३३,४२; ३४,३०; ३ १२; १३,१४; १५,२०,३५ । काण्व. १०.२४; १३,३-४,८-१०,१२; ३२,४२; ३३.२४; ३,१८; १४,१४; १६,४१, ५७ । [ आ नो मित्रावरुणा० । ऋ. ३,६२,१६; ७,६५ ४; सा. २२०,६६३; तै. सं. १,८,२२,३; तै. ब्रा.२, ८,६,७ । इन्द्रावरुणयोरहँ० । ऋ. १,१७,१; तै. सं. २,५,१२,१ । नू म इन्द्रावरुणा० । ऋ. ६,६८,८ ]

त्वं नो अग्ने स त्वं नो अग्ने शं नो भवन्तु वाजे वाजे ॥ ४०

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृतास्सनुयाम वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत द्यौः ॥ ४१

एनाङ्गूषेण वयमिन्द्रवन्तोऽभिष्याम वृजने सर्ववीराः ।
तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत द्यौः ॥ ४२

अग्निर्मूर्धा ॥ ४२

प्र सो अग्ने तवोतिभिस्सुवीराभिस्तिरते वाजभर्मभिः । यस्य त्वं सख्यमावरः ॥ ४४

अग्ने वाजस्याग्ने त्री ते ॥ ४५

सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ ४६

उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥ ४७

इषं दुहन् सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुन्वते ।
अग्ने घृतस्नुस्त्रिर्ऋतानि दीद्यद् वर्तिर्यज्ञं परियन् सुक्रतूयसि ॥ ४८

त्रीण्यायूँषि तव जातवेदः ॥१४॥ ४९

दूतं वो विश्ववेदसँ हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥ ५०

---

[त्वं नो अग्ने० । ऋ. १,३१,८-९,१२. ४,१.४; ५.१०,२,७; ८,७१,१; १०.८७,२०; १४१,६: सा. ६, १५०५; अथर्व. ३,२०.५; ८,३,१९; तै. सं. २,५,१२,३ । स त्वं नो अग्ने० ऋ. ४,१,५; तै. सं. २,५,१२,३ । शं नो भवन्तु०। ऋ. ७,३८.७; तै. सं. १,७,८,२; नि. १२.४४ । वाजे वाजे० । ऋ. ७,३८,८: तै. सं. १,७, ८,२; ४ ७,१२,१ । विश्वाहेन्द्रो अधिवक्ता० । ऋ. १,१००.१९; १०२,११। तन्नो मित्रो०...उत द्यौः। ऋ. १,९४,१६; ९५,११; ९६,९; ९८.३, १००,१९; १०१,११; १०२,११; १०३,८; १०५,१९; १०६,७; १०७,३; १०८,१३; १०९,८; ११०,९; १११,५; ११२,२५; ११३,२०, ११४.११; ११५,६ । एनाङ्गूषेण वय० । ऋ. १ १०५,१९; नि. ५,११ । अग्निर्मूर्धा० । ऋ. ८ ४४.१६; सा. २७,१५३२; तै. सं १,५,५,१; ४,४,१ १; तै. ब्रा. ३. ५,७,१ । प्र सो अग्ने० । ऋ. ८,१९,३०; सा. १०८, १८२२; तै. सं. ३,२,११,१ । अग्ने वाजस्य० । ऋ. १ ७९.४; सा. ९९,१५६१; तै. सं. ४,४,४,५ । अग्ने त्री ते० । ऋ. ३,२०,२; तै. सं. ३.२ ११,१ । सं वां कर्मणा० । ऋ. ६,६९.१; तै. सं. ३,२.१२.१ । उभा जिग्यथुर्न परा० । ऋ. ६,६९, ८; अथर्व. ७ ४४,१; तै. सं. ३ २,११,२; ७,१,६,७ । इषं दुहन् सुदुघां० । ऋ. १०,१२२,६ । त्रीण्यायूँषि तव० । ऋ. ३,१७,३ तै. सं. ३,२.११,२ ]

[ १५ ] वा. २७,३५,३७; २१,१-२; १८,४९; ३,५४ । कण्व. २९,४०,४२; २३,१-२; २०,१९,; ३,६२ । [ दूतं वो विश्ववेदसँ० । ऋ. ४,८,१; सा. १२ ]

स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥ ५१

स वेद देव आनमं देवाँ ऋतायते दमे । दाति प्रियाणि चिद् वसु ॥ ५२

स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते । विद्वाँ आरोधनं दिवः ॥ ५३

ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः । य ईं पुष्यन्त इन्धते ॥ ५४

ते राया ते सुवीर्यैस्ससवाँसो विशृण्विरे । ये अग्ना दधिरे दुवः ॥ ५५

अभि त्वा शूर नोनुमस्त्वामिद्धि हवामहे ॥ ५६

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन् सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ ५७

बोधा सु मे मघवन् वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ५८

ता अस्य नमसा सहो रेवतीर्न इमं मे वरुण तत्त्वायामि ॥ ५९

रदत् पथो वरुणस्सूर्याय प्रार्णाँसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो अर्वतीर्ऋतायश्चकार महीरवनीरहभ्यः ॥ ६०

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ ६१

उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे ।
अपां नपादाशुहेमा कुवित् स सुपेशसस्करोति जोषिषद्धि ॥ ६२

---

[स हि वेदा वसुधितिं० । ऋ. ४,८,२ । स वेद देव आनमं० । ऋ. ४,८,३ । स होता सेदु० । ऋ. ४,८,४ । ते स्याम ये० । ऋ. ४.८,५ । ते राया ते० । ऋ. ४,८,६ । अभि त्वा शूर० । ऋ. ७,३२,२२; सा. २३३,६८०; अथर्व. २०,१२१,१; तै. सं. २,४,१४,२। त्वामिद्धि हवामहे० । ऋ. ६,४६,१; सा. २३४,८०९; अथर्व. २०,९८,१; तै. सं. २,४ १४,३ । यद् द्याव इन्द्र० । ऋ. ८,७०;५; सा. २७८,८६१; अथर्व. २०,८१,१; ९२,२०; तै. सं. २,४,१४,३; तै. आ. १,७,५; नि. १३,१ । बोधा सु मे मघवन्० । ऋ. ७,२२,३; सा. ९.२९; अथर्व. २०,११७,३ । ता अस्य नमसा० । ऋ. १,८४,१२; सा. १००७; अथर्व. २०,१०९,३ । रेवतीर्न० । ऋ. १,३०,१३; सा. १५३,१०८४; अथर्व. २०,१२२,१; तै. सं. १,७,१३,५; २,२,१२,८; ४,१४,४ । इमं मे वरुण० । ऋ. १,२५,१९; सा. १५८५; तै. ब्रा. २,१,११.६, । तत्त्वायामि० । ऋ. १,२४,११; तै. सं. २,१,११,६ । रदत् पथो० । ऋ. ७,८७,१ । प्र सम्राजे बृहदर्चा० । ऋ. ५,८५,१ । उपेमसृक्षि वाजयु० । ऋ. २,३५,१ ]

इमँ स्वस्मै हृद आ सुतष्टं मन्त्रं वोचेम कुविदस्य वेदत् ।
अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान ॥ ६३

आपो रेवतीः ॥ ६४

आपः पृणीत भेषजं वरूथं तन्वे मम । ज्योक् च सूर्यं दृशे ॥१५॥ ६५

[ ९०९ ]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां पयस्स्थानकं नाम द्वादशं स्थानकं संपूर्णम् ॥१२॥

अथ त्रयोदशं स्थानकम् ।

## पशुबन्धम् ।

तिस्रोऽजाश्श्वेता मल्हा गर्भिणीरालभेत ब्रह्मवर्चसकाम आग्नेयीं वसन्ता सौरीं ग्रीष्मे बार्हस्पत्याँ शरदि यदाग्नेयी मुखत एव तया तेजो धत्ते यत् सौरी मध्यत एव तया रुचं धत्ते यद् बार्हस्पत्योपरिष्टादेव तया ब्रह्मवर्चसं धत्ते संवत्सरं पर्यालभ्यन्ते वीर्यं वै संवत्सरस्संवत्सरमेव वीर्यमाप्नोति यच्छ्वेता रुच एव तद्रूपं गर्भिणीर्भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवावरुन्द्धे तिस्रो मल्हा गर्भिणीरालभेत यं पर्यम्युर्वायव्याँ श्वेताँ सारस्वतीं मेषीमादित्यामजामघोरामां मेषीं वा मनसा वा एत एतं पर्यमन्ति मनो वायुर्यद् वायव्या मनसैवैषां मनाँसि शमयति वाचा वा एत एतं पर्यमन्ति वाक् सरस्वती यत् सारस्वती वाचैवैषां वाचँ शमयत्यप्रतिष्ठितो वा एष यं पर्यमन्तीयमदितिर्यदादित्यास्यामेव प्रतितिष्ठत्यनपिमन्त्रो वा एष एतेषु यं पर्यमन्ति वाचो मन्त्रो गर्भो यद् गर्भिणीर्वाच एवैनं गर्भमकरपिमन्त्रमेनं करोत्यप वा एतस्मादिन्द्रियं क्रामति यं पर्यमन्तीन्द्रियं गर्भो यद्गर्भिणीरिन्द्रियमेवावरुन्द्धेऽग्नये वैश्वानराय कृष्णं पेत्वमालभेत यस्समान्तमभिद्रुह्येद् यो वाभिदुद्रुक्षेत् संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरायैष सममते यस्सममते संवत्सरमेवाप्त्वा काममवरुणमभिद्रुह्यति प्राजापत्यमजं तूपरं विश्वरूपमालभेत सर्वेभ्यः कामेभ्यः प्रजापतिर्योनिर्योनेरेव प्रजायते प्रजापतिः प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै सर्वान् कामान् प्रयच्छत्यश्वस्येव वा एतस्य शिरो गर्दभस्येव कर्णौ पुरुषस्येव श्मश्रूणि गोरिव पूर्वौ पादा अवेरिवापरौ शुन इव लोमान्यजो भवत्येतावन्तो वै ग्राम्याः पशवस्तानेवैतेनाप्त्वावरुन्द्धे द्वादश धेनवो दक्षिणा ताप्यं हिरण्यमधीवासः प्रजापतेर्यास्सामिधेन्यस्तास्सा-

[ इमँ स्वस्मै हृद०। ऋ. २,३५,२ । आपो रेवतीः०। ऋ. १०,३०,१२। आपः पृणीत भेषजं०। ऋ. १, २३,२१; १०,९,७; अथर्व. १,६,३ ]

[ १ ] मै. २,५,१—२ ( १—२ ) । तै. सं. २,१,१—२ ।

मिधेन्यः प्रजापतेर्या आप्रियस्ता आप्रियो हिरण्यगर्भवत्याघार एतस्य सूक्तस्य याज्यानुवाक्ये एतेन ह वा उपकेतू रराधऽर्ध्नोति य एतेन यजते द्वादशधा ह त्वै स प्राशित्राणि परिजहार तत्र द्वादश द्वादश धेनूर्ददौ यद् द्वादश ददाति सैव तस्य प्रतिमा यत् तार्प्यं हिरण्यमधीवासमपरिमितमेव तेनावरुन्द्धे ॥१॥ १

वारुणं कृष्णं पेत्वमेकशितिपादमालभेतामयावी ज्योगामयावी प्रजापतिः प्रजा असृजत ता एनमत्यचरँस्ता अतिचरन्तीर्वरुणेनाग्राहयत् ता जिह्माः पन्ना अशेरत वरुणगृहीतास्ताः कृष्णः पेत्व आप्रवत तस्याभिहाय पादमगृह्णात् स प्रावृह्यत स एकशितिपादभवत् ताः प्रजापता अनाथन्त सोऽपश्यद्योऽयमवरुणगृहीतस्तेनैना वरुणान्मुञ्चानीति तं वारुणमालभत तेनैना वरुणादमुञ्चद्वरुण-गृहीत एष य आमयावी यद्वारुणो वरुणादेवैनं मुञ्चति ॥ द्वीपे यजेतापो वै वरुणस्समक्षमेवैनं वरु-णान्मुञ्चति प्रजापतिः पशून् सृष्ट्वा वरुणं वरमभ्यसृजत् स एतमवृणीत तस्माद्वरुणदेवत्यः पाप्मनैष गृहीतो य आमयावी कृष्ण इव पाप्मा यत् कृष्णः पाप्मानमेवापहते यदेकशितिपाद्वरुणपाशमेव तेन प्रमुञ्चत आग्नेयमजमालभेत वारुणं कृष्णं पेत्वं बुभूषन्नृद्ध्या एवाग्नेयो वरुणगृहीत एष योऽलं भूत्यै सन्न भवति यद्वारुणो वरुणादेवैनं मुञ्चत्यर्धं वै पुरुषस्याग्नेयमर्धं वारुणमस्थान्याग्नेयानि माँसानि वारुणानि तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ सोऽनृणो भूत्वा भवत्येव वारुणं कृष्णं वृष्णिम-भिचरन्नालभेत मृत्युर्वै वरुणो मृत्युनैवैनं ग्राहयत्येतद्वै पाप्मनो रूपं कृष्ण इव पाप्मा यत् कृष्णः पाप्मनैवैनमभिषुवति ॥ २–४

पशुं बध्नामि वरुणाय राज्ञ इन्द्राय भागमृषभं केवलो हि ।
गात्राणि देवा अभिसंविशन्तु यमो गृह्णातु निर्ऋतिस्सपत्नान् ॥ ५

इत्येता वै देवताः पुरुषस्येशते ताभ्य एवैनमधिनिष्क्रीय मृत्युर्यमो मृत्युनैवैनं ग्राहयति॥२॥ ६

वैष्णवं वामनमालभेत भ्रातृव्यवान् विष्णुर्वा इमांल्लोकानुदजयत् स एभ्यो लोकेभ्योऽसुरान् प्राणुदतेमानेव लोकानुज्जयत्येभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदते विषमे यजेत विषमा इव हीमे लोका ऐन्द्रामारुतं पृश्निसक्थमालभेत यस्मात् क्षत्रियाद् विडभ्यर्धश्चरेत् क्षत्रं वा इन्द्रो विण्मरुतः क्षत्रायैव विशमनुनियुनक्ति पृश्निसक्थो भवति विशमेवास्मै पश्चादुपदधात्यसँसर्गायैन्द्रमुत्पृष्टिमालभेत पशु-काम इन्द्रो वै वलमपावृणोत् तँ सहस्रमनूदैत् तस्यैषोऽग्रत उदतृणत् स समैषदुच्चितृत्सन्निमांल्लो-कान् पश्यँस्तस्मादेष समीषितः प्रतीषितग्रीवस्तमेतं पुरस्तात् सहस्रस्यालभेत प्र सहस्रं पशूनाप्नोति

[ २ ] मै. २,५,६ ( ६-८ )। तै. सं. २,१,२ ।
[ ३ ] मै. २,५,३,८-९ ( ४,१०-११ )। तै. सं. २,१,३-५, २,५.३ ।

बलमेवापवृणोति यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमालभेत प्रतिष्ठित्या एतस्मिन् वै तत् सहस्रमध्यतिष्ठत् स व्यैषदधिष्ठीयमानस्तस्मादेष तिर्यङ्ङिव वीषितस्ता एता एवमभित आलभेत सहस्रस्य परिगृहीत्यै यज्ञो वै दक्षिणामभ्यकामयत ताँ समभवत् सा गर्भमधत्त तमववृज्य प्राद्रवत् तमववृक्णँ शयानमदितिरचायत् तमाहरत् तमधस्तादूर्वोरुपास्यत सोऽधस्तादूर्वोरवर्धत तस्मादेष तिर्यङ्ङिव वीषितोऽधस्ताद्ध्यूर्वोरवर्धत तं विष्णुरचायत् तमभ्यवदत् तस्मिन् प्रश्नमैतां तं विष्णवेऽन्वब्रुवँस्तस्मादाहुः कर्तुरेव पुत्र इति येन वामनेनेत्सेदिदित्यै चरुं पुरस्तान्निर्वपेददितिर्वा एत-मवर्धयत् तस्या एवैनमधिनिष्क्रीणाति तेनानृणेन निष्क्रीतेन मेध्येन प्रसूतेनर्ध्नोत्येव सौम्यं बभ्रु-मृषभं प्रथमकुसिन्धमालभेत यो राज्य आशँसेत सोमो वै देवानां राजा सोम एतस्य देवता यो राज्य आशँसते स्वामेव देवतां भागधेयेनोपधावति सैनं राज्याय परिणयति यत् प्रथमकुसिन्धो वीर्यस्य तद्रूपमिन्द्राय वज्रिणे रोहितमृषभं प्रथमकुसिन्धमालभेत राजन्यायाभिचरते वा बुभूषते वैन्द्रो वै राजन्यो देवतया वज्रोऽस्य वीर्यं वज्रमेवास्मिन् दधाति तेन विजयति भवत्येव यत् प्रथमकुसिन्धो वीर्यस्य तद्रूपं य एकाष्टकायां जायेत तमुत्सृजेद् यदि द्वौ जायेयातां ता उभा उत्सृजेद् यदि संवत्सरे द्वितीयो जायेत तँ संवत्सरेऽनूत्सृजेदाग्नेयमष्टाकपालं निर्वपेज्जातयोराग्नेया वै पशवस्तस्मादेवैना अधिनि-ष्क्रीणात्यग्नये वैश्वानराय द्वादशकपालं निर्वपेत्संवत्सरे पर्येते संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरादेवैना अधिनिष्क्रीणात्या मेध्याभ्यां भवितोस्संवत्सरे संवत्सरेऽग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सं-वत्सरो वा अग्निर्वैश्वानरस्संवत्सरादेवैना अधिनिष्क्रीणाति ॥ ताभ्याँ सर्वतो निष्क्रीताभ्यां मेध्याभ्यां प्रसूताभ्यामृध्नोत्येवैतस्यां वा इन्द्रोऽजायत स देवानां वीर्यावत्तमस्तस्माद् य एकाष्टकायां पशूनां जायते स वीर्यावान् भवति वीर्यावान् भवति य एवं विद्वानेताभ्यां यजत इन्द्रायाभिमातिघ्ने पूर्वमालभेत पाप्मा वा अभिमातिः पाप्मानमेवापहत इन्द्राय वृत्रतुर उत्तरं पाप्मा वा अभिमातिः पाप्मानमेवापहत्याथैतेन वृत्रतूर्भवति स्वाराज्यमुपैति नास्मादन्यस्समानेषु वसीयान् भवति य एवं विद्वानेताभ्यां यजते शतमन्यस्य दक्षिणाश्वोऽन्यस्य पूर्ववाडया एव क्रौञ्च द्वा एतद् ब्राह्मणा अनेवमुत्सृष्टा आलभेत ताभ्यामेवर्ध्नोति तत्र यत् किंच ददाति तद् दक्षिणा ॥ ३ ॥　　७—८

इन्द्राय मन्युमते ललाममृषभमालभेत संग्रामे मन्युना वै वीर्यं करोतीन्द्रियेण जयति मन्युं चैवैष्वि-न्द्रियं च जित्यै दधाति यल्ललामः पुरस्तान्मन्योस्समृद्ध्यै देवाश्च वा असुराश्च संयत्ता आसँस्ते न व्यजयन्त तेऽब्रुवन् ब्रह्मणा नो मेनी विजयेतामिति त ऋषभौ समवासृजञ्छ्वैत्रेयोऽरुणस्तूपरो देवाना-मासीच्छ्येनेयश्श्येतोऽयश्शृङ्गोऽसुराणां तौ समहतां तँ श्वैत्रेयस्समयाभिनत् सा या वाक् पराजिता-

---

[ ४ ] मै. २५.३—४.८ ( ३-४.१०—११ )। तै. सं २.१.३—५; २५.३।

सीत् सावाच्यपतद् याजयत् सोर्ध्वा तस्माद् यस्यावाची वाक् सोऽनार्त्विजीनोऽसुर्यो हि स वर्णस्तस्माद् यस्योर्ध्वा वाक् स आर्त्विजीनो देवत्रेव हि स बार्हस्पत्यमरुणं तूपरमभिचरन्नालभेत ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनमाभिप्रयुङ्क्त एतेन वै देवा असुरानस्तृण्वत यत् तूपरस्स्तृत्या इन्द्रो वै वृत्रमहँस्तँ हतस्सम्भिर्भोगैः पर्यहँस्तस्य मूर्ध्नो वैदेहीरुदायँस्ताः प्राचीरायँस्तस्मात् ताः पुरस्स जघन्यमृषभं वैदेहमनूद्यन्तममन्यतेममिदानीमालभेय तेन त्वा इतो मुच्येयेति तमालभत तेन नामुच्यत स आग्नेयमजमालभतैन्द्रमृषभं तेन वै स तानग्निना पाप्मनो भोगानपिदह्याथैन्द्रेणेन्द्रियं वीर्यमात्मन्नधत्त ततो वै सोऽभवदाग्नेयजमालभेतैन्द्रमृषभं बुभूषन् यः पाप्मगृहीत इव मन्येत पाप्मा वै स तँ समभिर्भोगैः पर्यहन् पाप्मन एष भोगैः परिहतो योऽलं भूत्यै सन्न भवति यदाग्नेयोऽग्निनैव पाप्मनो भोगान् पिदह्याथैन्द्रेणेन्द्रियं वीर्यमात्मन् धत्ते भवत्येव ॥ देवाश्च वा असुराश्चास्मिंल्लोक आसँस्तेऽसुरा देवाननुदन्तास्माल्लोकात् ते देवाः प्रजापता एवानाथन्त स एता असृजतर्षभं च वशां च यमं च यम्यं च तस्माद् यौ यमौ मिथुनौ जायेते ऋषभ एवान्यो भवति वशान्या स वैष्णुवारुणीं वशामालभतैन्द्रमृषभं तेन वै स तान् वरुणेनासुरान् ग्राहयित्वा विष्णुना यज्ञेन प्राणुदताथैन्द्रेणेन्द्रियं वीर्यमात्मन्नदधादेषु ततो देवा अभवन् परासुरा अभवँस्ता एता एवमालभेत यो भ्रातृव्येन व्यायच्छेत वैष्णुवारुणीं वशामैन्द्रमृषभं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्रणुदतेऽथैन्द्रेणेन्द्रियं वीर्यमात्मन् धत्ते भवत्यात्मना परास्य भ्रातृव्यो भवत्योषधिभ्यो वेहतमालभेत प्रजाकाम ओषधीनां वा एषा प्रिया ता एताँ सूतोः परिबाधन्ते तस्मादेषा सर्वेषां पशूनां प्रियाप ओषधय आपोऽसत् खनन्ति ता एव भागधेयेनोपधावति ता अस्मै प्रजां खनन्ति यावन्तस्तां वाशितामन्वाधावन्ति ते दक्षिणा समृद्ध्या ऐन्द्रीं सूतवशामालभेत राजन्याय बुभूषत इन्द्रो वा एतस्या अजायत स पुनः प्रत्यवैक्षत सोऽमन्यत यो वा इतोऽपरो जनिष्यते स मे भ्रातृव्यो भविष्यतीति तं प्रत्यवमृश्य योनिं न्यवेष्टयत् तस्मादेषा नापरँ सूत ऐन्द्रो राजन्यो देवतया स्वादेवैनं योनेर्जनयति भूत्यै भवत्येव यस्तस्या अधिजायेत तमैन्द्रमालभेतेन्द्रियकाम इन्द्रियं वा एतदेतस्या अधिजायते तदेव समक्षमाप्त्वावरुन्द्धे ब्राह्मणस्पत्यमतिष्ठायमालभेत यः कामयेतातिष्ठायस्स्यामित्यग्रेवै जिह्वा ब्रह्मणस्पतिस्सर्वमेषातितिष्ठति रूपेणैवैनँ समर्धयति सैनमातिष्ठायं करोति ॥ ४ ॥ ९-१०

आग्नेयमजमालभेत सौम्यमृषभं यस्य पिता पितामहः पुण्यस्स्यादथ तन्न प्राप्नुयादग्निस्सर्वा देवता मुखत एव देवता आलभत इन्द्रियेण वा एष सोमपीथेन व्यृध्यते यस्य पिता पितामहः पुण्यो भवत्यथ तन्न प्राप्नोति सौम्यो ब्राह्मणो देवतयेन्द्रियमस्य सोमपीथो यत् सौम्य इन्द्रियेणैवैनँ सोमपीथेन समर्धयति द्यावापृथिव्यां धेनुं पर्यारिणीमालभेत निरुद्धो ज्योङ्निरुद्धो द्यावापृथिव्योर्वा एष

[ ५ ] मै. २,५,१ ( ५ ) । तै. सं. २,१,५ ।

निर्भक्तो यो निरुद्धो ज्योङ्निरुद्धो यद् द्यावापृथिव्या द्यावापृथिव्योरेवैनमाभजति पर्यारी वा एष यो निरुद्धो ज्योङ्निरुद्धः पर्यारिण्यस्य देवता यत् पर्यारिणी स्व एवास्य तेन पशुरेतस्या एव वायव्यं वत्सँ श्व आलभेत वायुर्वा अनयोर्वत्सस्स इमे आप्याययति स प्रदापयति तमेव भागधेये-नोपधावति सोऽस्मा इमे प्रदापयत्यैन्द्राग्नमेतमनुसृष्टमालभेत यस्य पिता पितामहस्सोमं न पिबेदथ स पिपासेदिन्द्रियेण वा एष सोमपीथेन व्यृध्यते यस्य पिता पितामहस्सोमं न पिबत्याग्नेयो ब्राह्मणो देवतयेन्द्रियमस्य सोमपीथो यदैन्द्राग्नस्स्वयैव देवतया सोमपीथमनुसंतनोत्यनुसृष्टो वा एतस्य सोमपीथो यस्य पिता पितामहस्सोमं न पिबति यदनुसृष्टस्स्व एवास्य तेन पशुर्यदेतौ द्विवत्यस्य तद्रूपं त्वाष्ट्रँ शुण्ठमालभेत यः कामयेत सूपकाशो मे पुत्रो जायेतेति त्वष्टा वै रूपाणां विकर्ता तमेव भागधेयेनोपधावति सोऽस्मै रूपाणि विकरोत्याश्विनं कृष्णललाममालभेत भ्रातृव्यवान् देवा वा असुरानह्नोऽनुदन्त तेषां यत् स्वमासीद् यद्वित्तं यद्वेद्यं तेन रात्रीँ समवायँस्ते देवा एतमाश्विनं कृष्ण-ललाममपश्यँस्तमालभन्त तेनैनान् रात्रीमन्ववायन् द्यावापृथिवी वा अश्विनौ तान् द्यावापृथिवीभ्या-मेवावस्तान्निबाध्यादित्येन परस्ताद्रात्र्या अनुदन्त तेषां यत् स्वमासीद् यद्वित्तं यद्वेद्यं तदवृञ्जत ततो देवा अभवन् परासुरा अभवन् द्यावापृथिवी वा अश्विनौ द्यावापृथिवीभ्यामेवावस्ताद् भ्रातृव्यं निबा-ध्यादित्येन परस्तादहोरात्रयोः प्रणुदते तस्य यत् स्वं यद्वित्तं यद्वेद्यं तद् वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवति।। यल्ललामोऽह्नस्तद्रूपं यत् कृष्णो रात्र्यास्तदुभयोरेवैनं वर्णयोः प्रणुदत इन्द्रो वै विलि-स्तेङ्गां दानवीमकामयत सोऽसुरेष्वचरत् स्त्र्येव स्त्रीष्वभवत् पुमान् पुँसु स निर्ऋतिगृहीत इवामन्यत स एतमैन्द्रानैर्ऋतं विपुँसकमपश्यद्येन रूपेणाचरत् तमालभत तस्य यदनवदानीयमासीत् तेन पूर्वेण प्राचरद्दक्षिणा परेत्य स्वकृत इरिणे जुषाणा निर्ऋतिर्वेत्तु स्वाहेत्यथेतरं पुनरेत्यैन्द्रँ समस्थापयत् स निर्ऋतिमेव पूर्वां निरवदायाथैन्द्रेणेन्द्रियं वीर्यमात्मन्नधत्त ततो वै सोऽभवदैन्द्रानैर्ऋतं विपुँसकमाल-भेत बुभूषन् यो निर्ऋतिगृहीत इव मन्येत तस्य यदनवदानीयँ स्यात् तेन पूर्वेण प्रचरेद्दक्षिणा परेत्य स्वकृत इरिणे जुषाणा निर्ऋतिर्वेत्तु स्वाहेत्यथेतरं पुनरेत्यैन्द्रँ सँस्थापयेन्निर्ऋतिमेव पूर्वां निरव-दायाथैन्द्रेणेन्द्रियं वीर्यमात्मन् धत्ते भवत्येवैन्द्रं विशालमृषभमालभेत संग्रामे यः कामयेतायँ संग्रामो न विजयेतेतीन्द्रो वै संग्रामस्य विनेतेन्द्रो विजापयिता तमेव भागधेयेनोपधावति स एनान् विनयति यद्विशालो वियतां तद्रूपमिन्द्राय विघनाय विशालमृषभमालभेत जनतयोस्संधौ यः कामयेतोभे जनते ऋच्छेयमित्युभे एव जनते ऋच्छति ते अन्यान्यां प्रती चरतो यद्विशाल आत्रस्कमेवैने गम-यति ॥५॥　　　　११-१२

आग्निवारुणीमनड्वाहीमालभेतानाज्ञातयक्ष्मगृहीतोऽनाज्ञातयक्ष्मो वा एतां निचो या स्त्री सत्य-

[ ६ ] मै. १,५,४ ( ४ ) । तै. सं १,१,५ ।

नड्वाही तस्मादेनामनाज्ञातयक्ष्मगृहीत आलभेताग्निस्सर्वा देवता यदेवास्य देवताभिर्निषितं तदग्निना मुञ्चति यद्वरुणगृहीतं तद्वरुणेन यद्वाहिनी तेनाग्नेयी यत् स्त्री सती दान्ता तेन वारुणी तस्मादाग्निवारुणी भवति त्वाष्ट्रँसेपादमालभेत पशुकामो मिथुनो वा एष योँऽसेपात्त्वष्टा मिथुनस्य प्रजनयिता तमेव भागधेयेनोपधावति सोऽस्मा एतस्मान्मिथुनात् पशून् प्रजनयति वारुणँ श्यामशितिकण्ठमालभेत यं ज्येमानं यक्ष्मो गृह्णीयाद् रुणो वा एवं गृह्णाति यं ज्येमानं यक्ष्मो गृह्णाति यद् वारुणो वरुणादेवैनं मुञ्चति पाप्मनैष गृहीतो य आमयावी श्याम इव पाप्मा यच्छ्यामः पाप्मानमेवापहते यच्छितिकण्ठो वरुणपाशमेव तेन प्रमुञ्चत आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणँ सोमं पिपाययिषेदश्विनौ वै देवानामसोमपा आस्तां तौ पश्चात् सोमपीथं प्राप्नुतामश्विना एतस्य देवता यः पश्चात् सोमपस्ता एव भागधेयेनोपधावति ता एनँ सोमपीथाय परिणयतस्तायदिव यजेत स्तायदिव हि दुर्ब्राह्मणो ब्राह्मणो बुभूषति धूम्र इव वा एष यो दुर्ब्राह्मणो यद्धूम्रो धूम्रिमाणमेवापहते यल्ललामो मुखत एव तेन तेजो धत्ते सारस्वतीं धेनुष्टरीमालभेत यं भ्रातृव्या नीव श्वासयेरन् वाचा वा एत एतं निश्वासयन्ते वाक् सरस्वती यत् सारस्वती वाचैवैषां वाचं प्रतिशृणाति ॥ धेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषाँ स्तरीकरोति सारस्वतीं धेनुष्टरीमालभेत यमजग्निवाँसमभिशँसेयुरशान्ता वा एतं वागृच्छति यमजग्निवाँसमभिशँसन्ति वाक् सरस्वती यत् सारस्वती वाचैवैषां वाचँ शमयति धेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषाँ स्तरीकरोति सावित्रं पुनरुत्सृष्टमालभेत यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्याद्यया वा एष देवतया पुरा पुण्यो भवति सा हि वा एतमनुसृजत्यथैष पापीयान् भवति सविता श्रियः प्रसविता तमेव भागधेयेनोपधावति स एनं पुनश्श्रियै प्रसुवति पापो वा एष पुरा भूत्वा पश्चाच्छ्रियं प्राप्नोति योऽनड्वान् भूत्वोक्षा भवति यथैव स श्रियं प्राप्नोत्येवमेनँ श्रियं प्रापयति ॥६॥ १३-१४

त्रीँल्ललामानृषभान् वसन्तालभेत त्रीञ्छितिककुदो ग्रीष्मे त्रीञ्छितिभसदश्शरदि यल्ललामा मुखत एव तेन तेजो धत्ते यच्छितिककुदा मध्यत एव तेन रुचं धत्ते यच्छितिभसद उपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते संवत्सरं पर्यालभ्यन्ते वीर्यं वै संवत्सरस्संवत्सरमेव वीर्यमाप्नोति नव भवंति नव प्राणाः प्राणानेवात्मन् धत्त ऐन्द्रास्स्युर्बुभूषन् यजेतासौ वा आदित्य इन्द्रस्स एतैरभवत् स एतैस्तेजो वीर्यमात्मन्नधत्त भवत्येव तेजो वीर्यमात्मन् धत्ते य एवं विद्वानेतैर्यजते प्राजापत्यँ सर्वरूपं दशममालभेत संवत्सरे पर्येते संवत्सरस्याप्त्यै प्रजापतिर्योनिर्योना एव प्रतितिष्ठति ॥ सर्वरूपो भवति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै दश भवन्ति दश प्राणाः प्राणा वीर्यं वीर्य एव प्रतितिष्ठति द्यावापृथिव्ये धेनू

[ ७ ] मै २,५,४, ७ ( ४,९ ) । तै सं. २,१,१,७—८ ।

संमातरा आलभेतान्नकामो द्यावापृथिवी वा अन्नाद्यस्येशाते अमुतो वर्षत्यस्यां प्रतितिष्ठत्येते अन्नाद्यस्य प्रदात्री ते एव भागधेयेनोपधावति ते अस्मा अन्नाद्यं प्रयच्छतस्संमातरौ भवतस्संमातरा इव हीमे एतयोरेव वायव्यं वत्सँश्च आलभेत वायुर्वा अनयोर्वत्सस्स इमे आप्यायति स प्रदापयति तमेव भागधेयेनोपधावति सोऽस्मा इमे प्रदापयति बार्हस्पत्यँ शितिपृष्ठमालभेत ब्रह्मवर्चसकामो ब्रह्म वै बृहस्पतिर्बृहस्पतिर्ब्रह्मवर्चसस्य प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै ब्रह्मवर्चसं प्रयच्छति ॥ पृष्ठमिव वा एष भवति यो भवति यच्छितिपृष्ठः पृष्ठमेवैनं करोत्याश्विनं कृष्णललाममालभेतानुजावरोऽश्विनौ वै देवानामानुजावरौ ता अग्रं पर्यैतामश्विना एतस्य देवता य आनुजावरस्ता एवान्वारभते ता एनमग्रं परिणयतः पाप्मनैष गृहीतो य आनुजावरः कृष्ण इव पाप्मा यत् कृष्णः पाप्मानमेवापहते यल्ललामो मुखत एव तेन तेजो धत्त आश्विनं कृष्णललाममालभेतामयाव्यश्विनौ वै देवानां भिषजा अश्विनौ एतस्य देवता य आमयावी ता एव भागधेयेनोपधावति ता एनं भिषज्यतः पाप्मनैष गृहीतो य आमयावी कृष्ण इव पाप्मा यत् कृष्णः पाप्मानमेवापहते यल्ललामो मुखत एव तेन तेजो धत्ते ॥ त्वाष्ट्रं विपुँसकमालभेत प्रजाकामो वा पशुकामो वा प्रजापतिर्वै प्रजास्सिसृक्षमाणस्स द्वितीयं मिथुनं नाविन्दत स एतद्रूपं कृत्वाङ्गुष्ठेनात्मानँ समभवत् ततः प्रजा असृजत त्वष्टा मिथुनस्य प्रजनयिता तमेव भागधेयेनोपधावति सोऽस्मा एतस्मान्मिथुनात् पशून् प्रजनयत्येतेन वै रूपेण प्रजापतिः प्रजा असृजत येनैव रूपेण प्रजापतिः प्रजा असृजत तस्मादेव रूपात् प्रजया च पशुभिश्च प्रजायत ऐन्द्रं विपुँसकमालभेत यः पण्डकत्वाद्बिभीयादिन्द्रो वा एतां त्वचमेतं पाप्मानमपाहत तमेव भागधेयेनोपधावति सोऽस्मात् तां त्वचं तं पाप्मानमपहन्त्यृषभो दक्षिणा वीर्यं वा ऋषभो वीर्यमेवास्मिन् दधाति॥७॥

१५-१८

छन्दाँसि वै यज्ञमभ्यमन्यन्त स वषट्कारोऽभ्यद्रुत्य गायत्र्याश्शिरोऽच्छिनत् ततो यो रसोऽस्रवत् सा वशाभवद्यद्वशमस्रवत् तद्वशाया वशात्वं यत् प्रथममस्रवल्लोहितं वाव तदस्रवत् तद्बृहस्पतिरुपागृह्णात् सा या रोहिणी साभवत् तस्मात् सा बार्हस्पत्या यद् द्वितीयमस्रवत् तन्मित्रावरुणा उपागृह्णीताँ सा या द्विरूपा साभवत् तस्मात् सा मैत्रावरुणी यत् तृतीयमस्रवत् तद्विश्वे देवा उपागृह्णन् सा या बहुरूपा साभवत् तस्मात् सा वैश्वदेवी ॥ यदुदौक्षत तद्बृहस्पतिरभ्यगृह्णात् स उक्षाभवत् तदुक्ष्ण उक्षत्वं यदत्यमुच्यत तानीमान्यन्यानि रूपाणि बार्हस्पत्यां रोहिणीमालभेत ब्रह्मवर्चसकामो रसेन वा एष व्यृध्यते योऽलं ब्रह्मवर्चसाय सन्न ब्रह्मवर्चसी भवति च्छन्दसामेष रसो ब्रह्म बृहस्पतिर्ब्रह्मणैवास्मिँस्तेजो रसं दधाति ब्रह्मवर्चसी भवति मैत्रावरुणीं द्विरूपामालभेत वृष्टिकामो-

[ ८ ] मै. २,५,७ (९)। तै. सं २,१,७-८।

ऽहोरात्रे वै मित्रावरुणा अहोरात्रे पर्जन्योऽनुवर्षति नक्तं वा हि दिवा वर्षत्येतौ वर्षस्येशाते ता एव भागधेयेनोपधावति ता अस्मै प्रीतौ वृष्टिं निनयतो मैत्रावरुणीं द्विरूपामालभेत प्रजाकामोऽहोरात्रे वै मित्रावरुणा अहोरात्रे प्रजा अनुप्रजायन्ते नक्तं वा हि दिवा वा प्रजायन्तेऽहोरात्रे एवैना अनुप्रजनयति ॥ वैश्वदेवीं बहुरूपामालभेत कामेभ्यः कामा वै विश्वे देवास्तानेव भागधेयेनोपधावति तेऽस्मै स सर्वान् कामान् प्रयच्छन्ति बार्हस्पत्यमुक्षाणमालभेत बुभूषन् रसेन वा एष व्यृध्यते योऽलं भूत्यै सन्न भवति च्छन्दसामेष रसो ब्रह्म बृहस्पतिर्ब्रह्मणैवास्मिन् भूतिं रसं दधाति भवत्येव सौरीं श्वेतामालभेत रुक्कामोऽसौ वा आदित्यो रुचः प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै रुचं प्रयच्छति ब्राह्मणस्पत्यां बभ्रूमभिचरन्नालभेत ब्रह्म वै ब्रह्मणस्पतिर्ब्रह्मणैवैनमभिप्रयुङ्क्त एतद्वै ब्रह्मणो रूपं यद्बभ्रू रूपेणैवैनत्सँश्यति ॥८ ॥ १९-२१

धाता रातिस्सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात ॥ २२
आवर्तय निवर्तया वर्तन वर्तय नि निवर्तन वर्तय ।
इन्द्र नन्दबल भूम्याश्चतस्रस्स्रक्तयस्ताभ्यस्त्वा वर्तयामसि ॥ २३
वि ते भिनद्मि तकरिं वि योनिं वि परीणहम् ।
वि मातरं च पुत्रं च वि गर्भं च जरायु च ॥ २४
बहिष्टे अस्तु बालिति पुरुदस्मवद् विश्वरूपमिन्दुः पवमानो गर्भमानञ्ज धीरः ।
एकपादं द्विपादं त्रिपादं चतुष्पादं भुवनानुप्रथन्ताम् ॥ २५
गर्भो यस्ते यज्ञियो योनिर्यस्ते हिरण्ययः । अङ्गान्यह्रुता यस्य तं देवास्समचीक्लृपन् ॥ २६
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ २७
नमो महिम्न उत चक्षुषे ते मरुतां पितरुत तद्गृणीमः ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ २८
देवानामेष उपनाह आसीदपां पतिरोषधीनाम् ।
सोमस्य द्रप्समवृणीत पूषा बृहन्नद्रिरभवद्यत् तदासीत् ॥ २९

[ ९ ] मै. २,५,१०; १,३,३८; २,७,१६; ४,१०,३; ११,१ ( १३—१६; १०७; ११५; ६४; ३३ ) तै. सं. ३,३,९,१०। वा. ८,१७,२९-३०,३१; १३,३१ । काण्व. ९,१७, २८-२९,३१; १४,३४ । [ धाता रातिस्सवितेदं० । अथर्व. ७,१७,४ । मही द्यौः पृथिवी० । ऋ १,२२,१३; तै. सं. ३,३,१०,२; ५,११,३; ४,२,९,३ । हुतो ( तृप्ता ) याहि ( ०त ) पथिभिर्दैवयानैः । ऋ. ७,३८,८; अथर्व. ९,४,३ । तै. सं. १,७,८,२; ४,७,१२,१ । ओषधीषु प्रतितिष्ठा शरीरैः । ऋ. १०, १६,३; अथर्व. १८.२; ७; तै. सं. ४,६,३,३ । देवानामेष (०नां भाग) ...आसीत् (च्छरीरम्) । अथर्व. ९,४,५ ]

पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
गर्भो जरायुः प्रतिधुक् पीयूष आमिक्षा मस्तु घृतमस्य योनिः ॥ ३०
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥९॥ ३१

यदाष्टापद्यभूदित्यनुबुध्येत धाता रातिस्सवितेदं जुषन्तामिति स्रुवेणाहवनीये जुहुयाद्देवताभ्य एवैनान्निवेदयत्यावर्तय निवर्तयेतीन्द्रमेव दिग्भ्य आवर्तयति प्रायश्चित्त्यै वि ते भिनद्मि तकरीमिति प्रैव जनयत्यन्तरा श्रोणी निघ्नन्ति प्रजननाय पुरुदस्मवदिति पात्रमुपदधात्यस्कन्दायैकपादं द्विपादमिति प्रथयत्येव यदवद्येदवदानान्यतिरेचयेद्यन्नावद्येत् पशोरालब्धस्य नावद्येदार्तिमार्च्छेत् पुरस्तादन्यन्नाभ्या अवद्येत् पश्चादन्यत् पुरस्ताद्धि नाभ्याः प्राणः पश्चादपान एतावान् वै पशुर्यावानेव पशुस्तस्यावद्यत्यच्छम्बट्कारं यद्रसमवदानेषु व्यानयति तेनैव सर्वेषामङ्गानामवत्तं भवत्यष्टापृडुँ हिरण्यं दक्षिणाष्टापदी वा एषात्मा नवमोऽष्टापृडमेतन्नाभिर्नवमः पशोराप्त्यै तृतीयेऽन्तरकोश उष्णीषेणावेष्टितं भवति त्रिबिलानिव कोशान् कुर्यादेवमेव हि पशुर्लोम चर्म माँसमस्थि मज्जा पशुमेवाप्नोति तद्विष्णवे शिपिविष्टाय जुहोति यो वै पशूनां भूमा यदतिरिक्तं तद्विष्णोश्शिपिविष्टमतिरिक्तं वा एतदतिरिक्तँ शिपिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोत्यथो अतिरिक्त एवातिरिक्तं दधाति ॥ गर्भो यस्ते यज्ञिय इति यज्ञियमेवैनं करोति योनिर्यस्ते हिरण्यय इति हिरण्ययमेवैनं करोत्यङ्गान्यहुता यस्य तं देवास्समचीक्लपन्निति समेवैनं कल्पयति मही द्यौः पृथिवी च न इति पशुश्रपण उपवपत्यनयोर्वा एष गर्भोऽनयोरेवैनं प्रतिष्ठापयति नमो महिम्न उत चक्षुषे त इति व्यृद्धेन वा एष पशुना चरति यस्यैतानि न क्रियन्ते यदेतानि करोति सर्वमेवैनँ सवीर्यँ सयोनिँ सतनूमृद्ध्यै संभरति ॥१०॥
३२ ३३

आ वायो भूष शुचिपा उप नस्सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥ ३४

आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते चक्षुस्सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याँ स्वाहा किक्किटा ते वाचँ सरस्वत्यै स्वाहा किक्किटा ते प्राणं वाताय स्वाहा ॥ ३५

---

[पिता वत्सानां०...योनिः ( रेत० )। अथर्व. ९,४,४ । द्रप्सश्चस्कन्द०.. होत्राः। ऋ. १०,१७,११, अथर्व. १८,४,२८ ]

[ १० ] तै. सं. ३,४,१ । ( नवमानुवाके द्रष्टव्यम् ) ।

[ ११ ] मै. १,३,६ (१०) । तै. सं. ३,४,२ । वा ७,७, । काण्व. ७,३ । [ आ वायो भूष शुचिपा० । ऋ. ७,९२, १; तै. सं. १,४,४,१; ३,४,२,१ ]

वशासि वशिनी सकृद्यत्तं मनसा गर्भमाशयत् ।
वशा त्वं वशिनी गच्छ देवान् सत्यास्सन्तु यजमानस्य कामाः ॥ ३६

अजासि रयिष्ठाः पृथिव्याँ सीद । ऊर्ध्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भास्स्वाहा ॥ ३७

तन्तुं ततं रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयसि जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ ३८

तपसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाग्भूयासँ सूर्यो दिवो दिविषद्भ्यो धाता क्षत्रस्य वायुः प्रजानां बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मते ज्योतिष्मतीं जुहोतु स्वाहा ॥११॥ ३९

इमे वै सहास्तां ते वायुर्व्यवात् ते गर्भमदधातां ततोऽजा वशाजायत तामग्निरग्रसत तां प्रजापतिरेतेन पुरोडाशेन निरक्रीणाद्यदाग्नेयः पुरोडाशो भवति निष्क्रीत्यै यद्वायुर्व्यवात् तस्माद्वायव्या यद् द्यावापृथिवी गर्भमदधातां तस्माद् द्यावापृथिव्येमे वै सहास्तां ते यथा वेणू संधाव्येते एवँ समधाव्येताँ सा या वागासीत् साजा वशाभवत् तस्मात् सारस्वती भवत्यसौ वा आदित्य इमे अभ्यक्रन्दत् ते गर्भमदधातां ततोऽजा वशाजायत तस्मात् सौरी भवति वायव्यामालभेत बुभूषन् क्षिप्रा देवताजिरं भूतिमुपैति द्यावापृथिव्यामालभेत कृषिमवस्यत् प्रतिष्ठा वा एतस्मा एष्टव्या यः कृषिमवस्यति यद् द्यावापृथिव्या द्यावापृथिव्योरेव प्रतितिष्ठति वर्षुकोऽस्मै पर्जन्यो भवति तामेतां कण्वास्सौश्रवसा विदुस्सारस्वतीमालभेत यस्माद्वागपक्रामेद्वाग्वै सरस्वती सरस्वत्येतस्मादपक्रामति यस्माद्वागपक्रामति यत् सारस्वती वाचमेवावरुन्द्धे तामेतां गर्भाः प्रावरेया विदुस्सौरीमालभेत रुक्कामोऽसौ वा आदित्यो रुचः प्रदाता सोऽस्मै रुचं प्रयच्छति तामेतां यस्का गैरिक्षिता विदुराग्नेन्द्रीमालभेत पुरोधाकाम आग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यो ब्रह्म चैव क्षत्रं च सयुजौ करोति तामेतां कापेया विदुरग्नीषोमीयामालभेतान्नकामोऽग्निर्वै देवानामन्नादस्सोमोऽन्नमग्निनैवान्नमत्ति सोमेनावरुन्द्धे तामेतामारुणयो विदुरा वायो भूष शुचिपा उप न इति य एव प्राजनयत् तस्मादेनामध्यवरुन्द्ध आकूत्यै त्वेत्याकूत्यै ह्येषालभ्यते कामाय त्वेति कामाय ह्येषालभ्यते समृधे त्वेति समृधे ह्येषालभ्यते किक्किटा ते मनः प्रजापतये स्वाहेति प्रजापतिमेवास्या मनो गमयति किक्किटा ते चक्षुस्सूर्याय स्वाहेति सूर्यमेवास्याश्चक्षुर्गमयति किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याँ स्वाहेति द्यावापृथिवी एवास्याश्श्रोत्रं गमयति किक्किटा ते वाचँ सरस्वत्यै स्वाहेति सरस्वतीमेवास्या वाचं गमयति किक्किटा ते प्राणं वाताय स्वाहेति वातमेवास्याः प्राणं गमयति ॥ किक्किटा त इति जुहोति तस्मात् किक्किटाकारं ग्राम्या

[१२] तै. सं. ३,४,३ ।

पशव उपतिष्ठन्ते किङ्किटाकारादारण्याः प्रत्रसन्ति पञ्चैतानि जुहोति पाङ्क्ताः पशवो यावानेव पशुस्तँ स्वर्गं लोकं गमयति वशासि वशिनीत्याशिषमेवाशास्ते सकृद्यत्ते मनसा गर्भमाशयदिति प्रैव जनयत्यजासि रयिष्ठाः पृथिव्याँ सीदेतीमानेवैनांल्लोकानामयत्यूर्ध्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भास्स्वाहेति स्वर्गमेवैनांल्लोकान् गमयति तन्तुं ततं रजसो भानुमन्विहीत्याशिषमेवाशास्ते ज्योतिष्मतः पथो रक्ष धिया कृतानिति रक्षसामपहत्या अनुल्बणं वयसि जोगुवामप इत्यनुल्बणमेवैनां तनुते मनुर्भव जनया दैव्यं जनमिति प्रैव जनयति तपसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाग्भूयासमित्याशिषमेवाशास्ते ॥ यदप्सु प्रवपति व्यृद्धिस्सा यदग्नौ जुहोति स्वगाकृतिस्सा यन्मेघ आलभते व्यृद्धा तेनाप्रजातैव तर्हि वीध्रसमृद्धा वा एषा वीध्र एवैतया यजेत त्रयाणां वावैषावरुद्धा संवत्सरसदो गृहमेधिनस्सहस्रयाजिनस्त एवैतया यजेरन् सूर्यो देवो दिविषद्भ्यो धाता क्षत्रस्य वायुः प्रजानां बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मते ज्योतिष्मतीं जुहोतु स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनां प्रजापतये ज्योतिष्मते ज्योतिष्मतीं जुहोति ॥१२॥ ४०–४२

अग्निर्वै जातो न व्यरोचत सोऽकामयत तेजस्वी स्यामिति सोऽग्नये तेजस्विनेऽजं कृष्णग्रीवमालभत ततो वै स तेजस्व्यभवत् सोऽकामयत सर्वत्र विभवेयमिति सोऽग्नये विभुमतेऽजं कृष्णग्रीवमालभत ततो वै स सर्वत्र व्यभवत् सोऽकामयत सर्वत्रापिभागस्स्यामिति सोऽग्नये भागिनेऽजं कृष्णग्रीवमालभत ततो वै स सर्वत्रापिभागोऽभवद्यः कामयेत तेजस्वी स्याँ सर्वत्र विभवेयँ सर्वत्रापिभागस्स्यामिति स एतानाग्नेयानजान् कृष्णग्रीवानालभेत तेजस्व्येव भवति सर्वत्र विभवति सर्वत्रापिभागो भवति ॥१३॥ ४३

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः ॥ ४४

वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवस्सविता धर्मं साविषत् ॥ ४५

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिषु । अश्वा भवथ वाजिनः ॥ ४६

वायुर्वा त्वा मनुर्वा त्वा गन्धर्वास्सप्तविंशतिः ।
ते अग्रे अश्वमयुञ्जँस्ते अस्मिञ्जवमादधुः ॥ ४७

---

[ १४ ] मै. १,११,१-२ ( १—१४ )। वा. ९,१,५—१०,१३-१८, ११,७; ३०,१: १८,३०; २१,१०—११। कण्व. १०,१,७-१०, १४,१८-२४; २०,१; १२,७; ३४,१; २३,१०-१२। [ वाजस्य नु प्रसवे०। अथर्व० ७,६,४। अप्स्वन्तरमृतमप्सु०। ऋ. १,२३,१९; अथर्व. १,४,४; तै मं. १,७,७,१ ]

अपां नपादाशुहेमन्य ऊर्मिः प्रतूर्तिः ककुद्मान् । वाजसास्तेन वाजँ सेषम् ॥ ४८

देवस्य सवितुः प्रसवे सत्यसवस्य वर्षिष्ठं नाकं रुहेयं देवस्य वयँ सवितुः प्रसवे सत्यसवनस्य
बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्म ॥ वाजं वाजिनो जयताध्वनस्स्कभ्नुवन्तो योजना मिमानाः
काष्ठां गच्छत ॥ ४९-५०

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवस्स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षाँसि सनेम्यस्मद्युयवन्नमीवाः ॥ ५१

वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ ५२

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता सनिष्यवो महो ये धना समिथेषु जभ्रिरे ॥ ५३

एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवासु बद्धो अपिकक्ष आसनि ।
क्रतुं दधिक्रा अनुसँसनिष्यदत् पथामङ्काँस्यन्वापनीफणत् ॥ ५४

उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्धिनः ।
श्येनस्येव द्रवतो अङ्कसं परि दधिक्राव्णस्सहोर्जा तरित्रतः ॥१४॥ ५५

त्वमिमा ओषधीस्सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ५६

या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैस्सुमना अहेडन् राजन् सोम प्रति हव्या गृभाय ॥ ५७

सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीस्संपिपृक्त ।
भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्याँ सदनं पुरुक्षोः ॥ ५८

---

[शं नो भवन्तु० । ऋ. ७,३८,७. तै. सं. १,७,८,२, नि. १२,४४ । वाजे वाजेऽवत वाजिनो० । ऋ. ७, ३८,८, तै. सं. १,७,८,२. ४,७,१२,१ । ते नो अर्वन्तो० । ऋ. १०,६४,६ तै. सं. १,७,८,२ । एष (उत) स्य वाजी० । ऋ. ४,४०,४ तै. सं. १,७,८,३ नि. २,२८ । उत स्मास्य द्रवत० । ऋ. ४,४०,३; तै. सं. १,७,८,३]

[१५] मं. ४,१४,१; १०,३; १२,१,६, ११,१; १३,५; १४,८. ९,१८; २,१३,२३ (४-५, ७६; १४९; ९; ३९; १०४. ८४; २३ ११६, ११७)। तै. सं. ५,७,२ । वा. ३४,२२; ७,३२; १९,५०; २७,४५ । काण्व. ३३,१६; ७,३२, २१,४९ । त्वमिमा ओषधीस्सोम० । ऋ. १,९१,२२; तै. ब्रा. २,८,३,१ । या ते धामानि दिवि० । ऋ. १,९१,४, तै. सं. २,३,१४,१, तै. ब्रा. २,८,३,२ । सदा सुगः पितुमाँ० । ऋ. ३,५४,२१ ]

स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवाँसि ।
विश्वाँ अग्ने पृत्सु ताञ्जेषि शत्रूँरहा विश्वा सुमना दीदिही नः ॥ ५९
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ॥ ६०
सुकर्माणस्सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन् ॥ ६१
इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ ६२
शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वाँ सुहवा जोहवीमि ता वाजँ सद्य उशते धेष्ठा ॥ ६३
विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः ॥ ६४
ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपाँ सधस्थे ।
ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥ ६५
मही द्यौर्घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे ।
सुपेशसा द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ६६
शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे ।
शतं यो नश्शरदोऽनयदिन्द्रो विश्वस्य दुरितस्य पारम् ॥ ६७
इमे चत्वारो रजसो विमाना अन्तरा द्यावापृथिवी वियन्ति पन्थानः ।
तेषामज्यानिं यतमो न आवहात् तस्मै नो देवाः परिदत्त सर्वे ॥ ६८
वसन्तो ग्रीष्मो मधुमन्ति वर्षाश्शरद्धेमन्तस्सुविते दधात ।
तेषां वयँ सुमतौ यज्ञियानां ज्योगजीता अहतास्स्याम ॥ ६९
संवत्सराय परिवत्सरायेदावत्सरायानुवत्सरायोद्वत्सराय कृणुता बृहन्नमः ।
तेषां वयँ सुमतौ यज्ञियानां निवात एषामभये स्याम ॥ ७०
इयँ स्वस्तिस्संवत्सरीया परिवत्सरीयेदावत्सरीयानुवत्सरीयोद्वत्सरीया ।
सा नः पिपर्त्वहृणीयमानैनाह्वेदमहरशीय स्वाहा ॥ ७१

---

[**स्वदस्व हव्या समिषो०**। ऋ. ३,५४,२२ । आ घा ये अग्निमिन्धते०। ऋ ८,४५,१, सा १३३,१३३८; तै. आ. १,४,५,७; नि. ६,१४। **सुकर्माणस्सुरुचो०**। ऋ. ४,२,१७; अथर्व. १८,३,२२। **इयं वामस्य मन्मन०**। ऋ. ७,९४,१; सा. ९१६ । **शुचिं नु स्तोमं०** । ऋ. ७,९३,१, तै. सं १,१४,१, तै. ब्रा. २,४,८,२ । **विश्वे देवा ऋतावृध०** । ऋ. ६,५२,१०. तै सं २,४,१४,५ । **ये के च ज्मा महिनो०** । ऋ. ६,५२,१५। **तेषां (तस्य) वयँ सुमतौ यज्ञियानां** (०यस्य)०। ऋ ६,४७,१३; १०,१३१,७; अथर्व. ७,९२,१; २०,१२५,७; तै. सं. १,७,१३,५. नि ६,७ ]

आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः ।
संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ७२

अग्निः प्राश्नातु प्रथमस्स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः करोतु विश्वचर्षणिः॥७३

भद्रान्नश्श्रेयस्समनैष्ट देवास्त्वयावसेन समशीमहि त्वा ।
स नः पितो मधुमाँ आविशेह शिवस्तोकाय तन्वे न एधि ॥ ७४

एतमु त्यं मधुना संयुतं यवँ सरस्वत्या अधि मानावचर्कृषुः ।
इन्द्र आसीत् सीरपतिश्शतक्रतुः कीनाशा आसन्मरुतस्सुदानवः ॥१५॥ ७५

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥ ७६

एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ ।
सँजानते मनसा सँचिकित्रेऽध्वर्यवो धिषणापश्च देवीः ॥ ७७

ओषधीरिति मातरः ॥ ७८

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहँ शतं धामानि सप्त च ॥ ७९

गावो भगो गाव इन्द्रो मे अच्छान् गावस्सोमस्य प्रथमस्य भक्षः ।
इमा या गावस्स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ ८०

न ता अर्वा रेणुककाटो अश्नुते न सँस्कृतत्रमुपयन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य विचरन्ति यज्वनः ॥ ८१

रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः । विश्वा अधि श्रियोऽधित ॥ ८२

उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषी ॥ ८३

---

[ आ नः प्रजां जनयतु० । ऋ. १०,८५,४३ ]

[१६] वा. ३६,१२; १२,७५,७८; ७,४१-४२ ८,४१; ३३,३१; १३,४६; ३४,८,१०; ११,६३। काण्व. ३६,१२; १३,७६,७९; ८,२३—२४; ९,६—७; ३२,३१; १४,४८; ३३,३—४; १२,६५। [शं नो देवीरभिष्टय०। ऋ. १०,९,४; सा. ३३; अथर्व. १,६,१; तै. ब्रा. १,२,१.१; २,५,८,५; तै. आ. ४,४२,४ । एवेद्यूने युवतयो० । ऋ. १०,३०,६। ओषधीरिति मातरः० । ऋ. १०,९७,४; तै. सं. ४,२,६,१; नि. ६,३ । या ओषधीः पूर्वा जाता० । ऋ. १०,९७,१; तै. सं. ४,२,६,१; नि. ९,२८ । गावो भगो गाव इन्द्रो० । ऋ. ६,२८,५; अथर्व. ४,२१,५; तै. ब्रा. २,८,८,१२ । न ता अर्वा रेणुककाटो० । ऋ, ६,२८,४; अथर्व. ४,२१,४; तै. ब्रा. २,४,६,९ । रात्री व्यख्यदायती० । ऋ. १०,१२७,१; तै. ब्रा. २,४,६,१० । उप ते गा इवाकरं० । ऋ. १०,१२७,८; तै. ब्रा. २,४,६,१० ]

उदु त्यं चित्रं देवानाम् ॥ ८४

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।

इषं तोकाय नो दधः प्र ण आयूंषि तारिषः ॥ ८५

यत् ते नाम सुहवं सुप्रणीतेऽनुमते अनुमतं सुदानु ।

तेन त्वं सुमतिं देव्यस्मे इषं पिन्व विश्ववारां सुवीराम् ॥ ८६

राकामहं सुहवां सुष्टुती हुवे शृणोतु नस्सुभगा बोधतु त्मना ।

सीव्यत्वपस्सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ८७

यास्ते राके सुमतयस्सुपेशसो याभिर्ददासि दाशुषे वसूनि ।

ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ८८

सिनीवालि पृथुष्टुके या देवानामसि स्वसा। जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः॥८९

या सुबाहुस्स्वङ्गुरिस्सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविस्सिनीवाल्यै जुहोतन ॥ ९०

कुहूमहं सुकृतं विद्मनापसमस्मिन् यज्ञे सुहवा जोहवीमि ।

या नो ददाति श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥ ९१

कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्शृणोतु ।

स्वसा देवानां महयन्त्यस्मै रायस्पोषं चिकितुषे दधातु ॥ ९२

धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ ९३

प्रजापती रमयतु प्रजा इह धाता दधातु सुमनस्यमानः ।

संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥१६॥ ९४

[ ९३८ ]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां पशुबन्धं नाम त्रयोदशं स्थानकं संपूर्णम् ॥१३॥

---

[ उदु त्यं० । ( ९८ पृष्ठे द्रष्टव्यम् ) । **चित्रं देवानाम्०** । ऋ. १,११५,१, अथर्व. १३,२,३५, २०,१०७,१४; तै. सं. १,४,४३,१; २,४,१४,४; तै. ब्रा. २,८,७,३; ऐ. आ. ३,९, तै. आ. १,७,६; २,१३,१, नि १२,१६ । **अन्विदनुमते त्वं०** । ऋ. परि. ३,४; अथर्व. ७,२०,२ । **यत्ते नाम सुहवं०** । अथर्व. ७,२०,४ । **राकामहं सुहवां०** । ऋ. २,३२,४; अथर्व. ७,४८,१, तै. सं. ३,३,११,५; नि. ११,३१ । **यास्ते राके सुमतयः०** । ऋ. २,३२,५; अथर्व. ७,४८,२; तै. सं. ३,३,११,५ । **सिनीवालि पृथुष्टुके०** । ऋ. २,३२,६; अथर्व. ७,४६,१; तै. सं. ३,१,११,३; नि. ११,३२ । **या सुबाहुस्स्वङ्गुरि०** । ऋ. २,३२,७; अथर्व. ७,४६,२; तै. सं. ३,१,११, ४; ३,११,५ । **कुहूमहं सुकृतं ( वृतं )०** । ऋ. परि. ३,१; अथर्व. ७,४७,१; तै. सं. ३,३,११,५ । **कुहूर्देवानाममृतस्य०** । ऋ. परि. ३,२; अथर्व. ७,४७,२; तै. सं. ३,३,११,५ । **धाता दधातु नो रयिं०** । ऋ. परि. ३,५; अथर्व. ७,१७,१—२; तै. सं. ३,३,११,३ ]

अथ चतुर्दशं स्थानकम् ।

## वाजपेयम् ।

इन्द्राय वाचं वदतेन्द्राय वाचं संवदतेन्द्रं वाजं जापयतेन्द्र वाजं जय ॥ १

आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे ।
आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ २

एषा वस्सा सत्या संवागभूद्यामिन्द्रेण समदध्वम् ।
अजीजपत वनस्पतय इन्द्रं वाजं विमुच्यध्वम् ॥ ३

वाजिनो वाजजितो वाजं जित्वा बृहस्पतेर्भागमवजिघ्रता वाजिनो वाजजितो वाजं जिगीवाँसो बृहस्पतेर्भागे निमृजता पत्नी३ स्वो रोहावेहि स्वो रोहावेहि स्वो रोहाव स्वो रोहाव स्वो रोहाव स्वो रोहावायुर्यज्ञेन कल्पतां मनो यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताँ श्रोत्रं यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताँ स्वर्देवा अगन्म प्रजापतेः प्रजा अभूवन्नमृता अभूम वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा वाक्पतये स्वाहा वसवे स्वाहा स्वर्मोर्ध्नाय स्वाहा मूर्ध्ने वैयश-नाय स्वाहा व्यश्नुवन आन्त्याय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहा प्रजापतये स्वाहाधिपतये स्वाहान्नाय त्वा वाजाय त्वा वाजजित्यै त्वा ॥१॥ ४

वाजस्य नु प्रसवस्सुषुवेऽग्रे सोमो राजौषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयामा पुरोहिताः ॥ ५
वाजस्येदं प्रसव आबभूवेमा विश्वा भुवनानि सर्वतः ।
अदित्सन्तं दापयति प्रजानन् सोमो रयिं सहवीरं नियँसत् ॥ ६

वाजस्य नु प्रसवश्शिश्रिये देवीमा विश्वा भुवनानि सम्राट् ।
स विराजा परियाति प्रजानन् प्रजां पुष्टिं वर्धयमानो अस्मे ॥ ७

सोमं राजानमवस इन्द्रं दानाय चोदय । विष्णुं वाचँ सरस्वतीँ सवितारं च वाजिनम् ॥ ८

प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः ॥ ९

---

[१] मै. १,११,३ (१६) । वा. ९,११—१२,१९—२१ । काण्व. १०,१५—१७,२५—२८ ।

[२] मै. १,११,४ (१७—२६) । वा. ९,२३-३० । काण्व. १०,३२—३९ । **वाजस्येदं प्रसव०** । अथर्व. ३,२०,८। **सोमं राजानमवस०** । ऋ. १०,१४१,३; सा. ९१; अथर्व. ३,२०,४,७· तै. सं. १,७,१०,३ । **प्र नो यच्छत्व-र्यमा०** । ऋ. १०,१४१,२; अथर्व. ३,२०,३, तै. सं. १,७,१०,२ ]

अग्ने अच्छा वदेह नः प्रत्यङ् नस्सुमना भव ।
प्र नो रास्व विशस्पते धनदा असि नस्त्वम् ॥ १०
इन्द्रवायू सुसंदृशा सुहवेह हवामहे । यथा नस्सर्व इज्जनस्संगमे सुमना असत् ॥ ११
सोमं राजानं वरुणमग्निमन्वारभामहे । आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ १२

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्या वाचा यन्तुर्यन्त्रेणेममसु-
मामुष्यायणममुष्याः पुत्रं बृहस्पतेस्साम्राज्येनाभिषिञ्चामीन्द्रस्य साम्राज्येनाभिषिञ्चामि ॥२॥ १३

उपयामगृहीतोऽसि द्रुषदं त्वा नृषदमायुस्सदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपया-
मगृहीतोऽस्यप्सुषदं त्वा घृतसदं भूतसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽसि
पृथिविषदं त्वान्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा ॥ उपयामगृहीतो-
ऽसि ग्रह विश्वजनीन न्यन्तर्विप्र आ सती ॥ १४-१५

यास्तिस्रः परमजा देव्यः कोशस्समुब्जितः । तासां विशिश्न्यानामिषमूर्जं समग्रभम् ॥ १६
एष ते योनिरिन्द्राय त्वोपयामगृहीतोऽसि ॥ १७
अपां रसमुदयँसँ सूर्ये शुक्रँ समाभृतम् । अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ॥ १८
एष ते योनिरिन्द्राय त्वा ॥ १९
अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रँ स्वा यत् तनू तन्वमैरयत ॥ २०
उपयामगृहीतोऽसि प्रजापतये त्वैष ते योनिः प्रजापतये त्वा ॥ २१
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २२
उपयामगृहीतोऽसि प्रजापतये त्वैष ते योनिः प्रजापतये त्वा ॥३॥ २३

अग्निरेकाक्षरामश्विनौ द्व्यक्षरां विष्णुस्त्र्यक्षराँ सोमश्चतुरक्षराँ सविता पञ्चाक्षरां पूषा षडक्षरां मरुत-
स्सप्ताक्षरां बृहस्पतिरष्टाक्षरां मित्रो नवाक्षरां वरुणो दशाक्षरामिन्द्र एकादशाक्षरां विश्वे देवा द्वाद-

[अग्ने अच्छा वदेह नः० । ऋ. १०,१४१,१; अथर्व. ३,२०,२; तै. सं. १,७,१०,२ । इन्द्रवायू सुसंदृशा०। ऋ. १०,१४१,४, अथर्व. ३,२०,६ । देवस्य त्वा सवितुः० अथर्व. १९,५१,२; ऐ ब्रा. ८,७ ]

[ ३ ] मै. १,११,४, ( २६—३३ ) । । वा. ९,२—४: १०,३१: १९,६, २३,३८ । काण्व. १०,३—५ ११,४'; २१,५; २५,४० । [ कुविदङ्ग यवमन्तो० । ऋ. १०,१३१,२; अथर्व. २०,१२५,२, तै. सं १,८,२१,१; ५, २,११,२ तै. ब्रा. २,६,१,३ ]

[ ४ ] मै. १,११,१० ( ३९ ) । वा. ९,३१—३४ । काण्व. १०,४०—४३ । तै. सं. १,७,११ । काठ० १८

शाक्षरां वसवस्त्रयादशाक्षरा रुद्राश्चतुर्दशाक्षरामादित्याः पञ्चदशमदितिष्षोडशं प्रजापतिस्सप्तदशोऽ-
ग्निरेकाक्षरया वाचमुदजयदश्विनौ द्व्यक्षरया प्राणापाना उदजयतां विष्णुस्त्र्यक्षरया त्रीनिमाँल्लोकानु-
दजयत् सोमश्चतुरक्षरया चतुष्पदः पशूनुदजयत् सविता पञ्चाक्षरया पञ्च दिश उदजयत् पूषा षड-
क्षरया षडृतूनुदजयन्मरुतस्सप्ताक्षरया शक्करीमुदजयन् बृहस्पतिरष्टाक्षरयाष्टौ दिश उदजयच्चतस्रो
दिशश्चतस्र उपदिशा मित्रो नवाक्षरया नव प्राणानुदजयद्वरुणो दशाक्षरया विराजमुदजयदिन्द्र एका-
दशाक्षरया त्रिष्टुभमुदयजयद्विश्वे देवा द्वादशाक्षरया जगतीमुदजयन् वसवस्त्रयोदशाक्षरया त्रयोदशं
मासमुदजयन् रुद्राश्चतुर्दशाक्षरया चतुर्दश रात्रीरुदजयन् या इमा अन्तरार्धमासा आदित्याः पञ्च-
दशमदितिष्षोडशं प्रजापतिस्सप्तदशोऽग्निरेकाक्षरया मामुदजयदिमां पृथिवीमश्विनौ द्व्यक्षरया प्रमाम-
न्तरिक्षं विष्णुस्त्र्यक्षरया प्रतिमाँ स्वर्गं लोकँ सोमश्चतुरक्षरयास्त्रीर्नक्षत्राणि सविता पञ्चाक्षरया पङ्क्ति-
मुदजयद्या ह्यक्षरपङ्क्तिस्सा पङ्क्तिश्चतुर्धा हि तस्याः पञ्च पञ्चाक्षराणि ॥ पूषा षडक्षरया गाय-
त्रीमुदजयच्चतुर्धा हि तस्याष्षट् षडक्षराणि मरुतस्सप्ताक्षरयोष्णिहमुदजयँश्चतुर्धा हि तस्यास्सप्त सप्ता-
क्षराणि बृहस्पतिरष्टाक्षरयानुष्टुभमुदजयच्चतुर्धा हि तस्या अष्टा अष्टाक्षराणि मित्रो नवाक्षरया बृहतीमुद-
जयच्चतुर्धा हि तस्या नव नवाक्षराणि वरुणो दशाक्षरया विराजमुदजयदिन्द्र एकादशाक्षरया त्रिष्टु-
भमुदजयद्विश्वे देवा द्वादशाक्षरया जगतीमुदजयन् वसवस्त्रयोदशाक्षरया त्रयोदशं मासमुदजयन् रुद्रा-
श्चतुर्दशाक्षरया चतुर्दश रात्रीरुदजयन् या इमा अन्तरार्धमासा आदित्याः पञ्चदशमदितिष्षोडशं
प्रजापतिस्सप्तदशः ॥४॥ २४--२५

देवा वै नानैव यज्ञानपश्यन्निममहमिमं त्वमित्यथैतँ सर्वेऽपश्यँस्तस्मिन्नायतन्त तस्मिन्नाजिमयुस्तं बृहस्पतिरुदजयद्बृहस्पतिर्वै देवानां पुरोहितो यद्वै पुरोहितो ब्रह्म शृणोति तद् राज्ञे तेनेन्द्रमयाजयत् स स्वाराज्यमगच्छत् स एष स्वाराज्यो यज्ञस्स्वाराज्यं गच्छाति य एतेन यजते यद्बृहस्पतिरुदजयत् तस्माद्ब्राह्मणो यजेत यदिन्द्रमयाजयत् तस्माद्राजन्यो देवा वै नानैव यज्ञानाहरन्नथैतं प्रजापति-राहरत् तस्मिन् देवा अपित्वमैच्छन्त तेभ्यश्छन्दाँस्युज्जितीः प्रायच्छदथैतेन प्रजापतिरयजत स स्वाराज्यमगच्छत् स एष स्वाराज्यो यज्ञस्स्वाराज्यं गच्छाति य एतेन यजतेऽन्नं वै वाजो य एवं विद्वानन्नमत्ति वाजयत्येनँ सोमो वाजपेयो य एवं विद्वान् सोमं पिबति वाजमेव गच्छति यावन्तो हि देवास्सोममपिबँस्ते वाजमगच्छँस्तस्मात् सर्व एव सोमं पिपासति वाग्वै वाजस्य प्रसवस्सा वाग्दृष्टा चतुर्धा व्यभवदेषु लोकेषु त्रीणि तुरीयाणि पशुषु तुरीयं या दिवि सा बृहति सा स्तन-यित्नौ यान्तरिक्षे सा वाते सा वामदेव्ये या पृथिव्याँ साग्नौ सा रथन्तरे या पशुषु तस्या यदत्य-रिच्यत तां ब्राह्मणे न्यदधुस्तस्माद् ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च करोति वाचा वीर्यं

[५] मै. १,११,५ (३४)।

य एवं वेद ॥ या बृहद्रथन्तरयोस्तयैनं यज्ञ आगच्छति या पशुषु तयतैयज्ञमाह वा एनमप्रति-
ख्याताद्गच्छति य एवं वेद यावती हि वाक्तां वेद वाचा हि दीयते वाचा प्रदीयते यो
गाथानाराशंसीभ्याँ सनोति तस्य न प्रतिगृह्यमनृतेन हि स सनोत्यनृतँ हि गाथानृतं नाराशँसी
मत्तस्य न प्रतिगृह्यमनृतँ हि मत्तो यदा हि सोऽमत्तो भवत्यथ तं तत्तुपति ॥ ५ ॥ २६-२७

सप्तदशैते द्वया ग्रहाः प्राजापत्यास्सप्तदशो वै पुरुषः प्राजापत्यश्चत्वार्यङ्गानि शिरोग्रीवमात्मा
वाक् सप्तथी दश प्राणा अङ्गेऽङ्गे वै पुरुषस्य पाप्मोपाश्लिष्टो यद्यतिषङ्गं ग्रहान् गृह्णात्यङ्गादङ्गा-
देवैनं पाप्मनो मुञ्चति श्रीर्वै सोमः पाप्मा सुरोपयामा यदागते काले प्राञ्चस्सोमैरुदद्रवन्ति प्रत्यञ्च-
स्सुरोपयामैः पाप्मनैवेनं विपुनाति तस्मादाहुर्वाजपेययाजी त्वै पूत इति पाप्मना ह्येनं विपुनाति
पञ्चैते ग्रहा गृह्यन्ते पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्ध ऐन्द्रास्सर्वे भवन्त्येकधैवास्मिन्निन्द्रियं दधाति ॥
परं वा एतद्देवानामन्नं यत् सोमः परममेतन्मनुष्याणामन्नाद्यं यत् सुरा यत् सोमग्रहाश्च सुराग्रहाश्च
सह गृह्यन्ते परेणैवान्नेनावरमन्नाद्यमवरुन्द्धे ब्रह्मणो वा एतत् तेजो यत् सोमोऽन्नस्य शमलँ
सुरा यत् सोमग्रहाश्च सुराग्रहाश्च सह गृह्यन्ते ब्रह्मण एव तेजसा तेज आत्मन् धत्तेऽन्नस्य
शमलेन शमलमपहते देवलोकमेव सोमग्रहैरभिजयति मनुष्यलोकँ सुराग्रहैरात्मानमेव सोमग्रहै-
स्स्पृणोति पत्नीँ सुराग्रहैस्तस्मादाहुर्वाजपेययाजी त्वा अमुष्मिँल्लोके संभवतीति यज्ञेन ह्यस्या-
भिजितं देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति सावित्र्या परुषि परुषि जुहोत्युत्स-
न्नयज्ञो वा एष को ह तद्वेद यावदेतस्याधियन्ति यावन्न सर्वत्वायैव प्रसवाय वाजस्य नु प्रसवे
मातरं महीमिति रथमुपावहरतीयमदितिरनया चैव सवित्रा च प्रसूत उपावहरति वाजस्योज्जित्या
अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान् पल्पूलयत्यप्सुजा वा अश्वस्स्वादेवैनान्योनेर्जनयत्यथो मेध्याने-
वैनान् यज्ञियान् करोति वायुर्वा त्वा मनुर्वा त्वेति युनक्ति न वा एतान्मनुष्यो योक्तुमर्हति देवता-
भिरेवैनान्युनक्त्यपां नपादाशुहेमन्निति रराटानि प्रतिमार्ष्टि पूर्वमेवोदितमनुवदति ॥६॥ २८-२९

सप्तदशस्सवो भवति सप्तदशः प्रजापतिः प्रजापतिमेवाप्नोति दुन्दुभीन्निर्ह्रादयन्ति वाग्वा एषैकारण्यं
प्राविशत् तामेवोज्जयति देवस्य सवितुः प्रसवे सत्यसवस्येति सवितृप्रसूत एव वज्रं रोहति देवस्य वयँ
सवितुः प्रसवे सत्यसवनस्येति सवितृप्रसूत एव रथमभ्यातिष्ठति वाजस्योज्जित्यै ब्रह्मन्वेति प्रजापति-
र्वै ब्रह्मा यज्ञस्य प्रजापतिरिन्द्रमसुवत प्रजापतिरेवैनं वज्रादधि प्रसुवति साम गायति सत्यं वै साम
सत्येनैवेनमुज्जापयति वाजिनामृचोऽन्वाह वाजस्योज्जित्या अनुदिष्टे रथैर्धावन्ति दक्षिणया वै देवा-
स्स्वर्गं लोकमायन् यदनुदिष्टे रथैर्धावन्ति दक्षिणयैव स्वर्गं लोकमेति॥ दर्भमयं वासो भवति पवित्र-

[ ६ ] मै. १,११,६ ( ३५ ) । वा. ९,१,५—७; ११,७; ३०,१ । काण्व. १०,१,७,९—१०; १२,७; ३४,१ ।
[ ७ ] मै. १,११,६—७ ( ३५—३६ ) । वा ९,९—१०,१२—१३,१९ । काण्व. १०,१३—१४,१७,२५-२६ ।

त्वायोज्जितीर्वाचयति वाग्वा उज्जितयो वाचमेवोज्जयति देवा वा ओषधीषु पक्वास्वाजिमयुस्ता बृहस्पतिरुदजयत् स नीवारान्निरवृणीत तन्नीवाराणां नीवारत्वं बृहस्पतिर्वा एतमुदजयत् तमेव भागिनं करोति चात्वालेऽवदधातीह वा असा आदित्य आसीत् तं देवा आभ्यां परिगृह्यामुं लोकमगमयन् स्वर्गस्य लोकस्य समष्ट्या आ मा वाजस्य प्रसवो जगम्यादिति पुनरागतेषु जुहोति यमेव ते वाजमुज्जयन्ति तमात्मन् धत्त एषा वस्सा सत्या संवागभूद्यामिन्द्रेण समदध्वम् ॥ अजीजपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति यजुषैव युज्यन्ते यजुषा विमुच्यन्ते वाजिनौ वाजजिता इति युग्या अवघ्रापयति भागिना एवैनौ करोति वाजिनो वाजजित इत्यनुदिशति सर्वानेवैनान् प्रीणाति ॥७॥

३०-३२

अर्धवशां च सुरोपयामाँश्च हरन्ति य आजिं धावन्ति तेभ्यो यमेव ते वाजमुज्जयन्ति तं तेन परिक्रीणाति मधुष्ठालं ब्रह्मणे हरन्ति ब्रह्मण एव तेन परिक्रीणाति ककुभो राजपुत्रः प्राश्नाति वीर्यं वै ककुब्वीर्यं राजपुत्रो वीर्य एवं वीर्यं दधाति पत्नी३ स्वो रोहावेति स्वरेव रोक्ष्यन् पत्न्या संवदते पत्न्या एवैष यज्ञस्यान्वारम्भोऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननायायुर्यज्ञेन कल्पतामित्येतावान् वै पुरुषस्सर्व एव भूत्वा स्वर्गं लोकमेति गौधूमं चषालं भवति प्राजापत्या वै गोधूमा अर्धं प्रत्योषधीनाँ सहैवान्नाद्येन स्वर्गं लोकमेति वाजाय स्वाहा प्रसवाय स्वाहेति त्रयोदशैता आहुतयस्त्रयोदश मासास्संवत्सरस्संवत्सरस्स्वर्गो लोकस्संवत्सरमेवास्मै स्वर्गं लोक उपाधात् तास्मिन्नधि प्रतितिष्ठत्यूषपुटैरर्पयन्ति प्राजापत्या वा ऊषा अन्नाद्येनैवैनमर्पयन्त्येति वा एषोऽस्माँल्लोकाद्योऽमुं लोकं गच्छति यदूषपुटैरर्पयन्ति तेनास्माल्लोकान्नैति बस्ताजिनं च रुक्मं चाभ्यवरोहति पशवो वै बस्ताजिनं यद्बस्ताजिनमभ्यवरोहति पशुष्वेव प्रतितिष्ठति तेजो हिरण्यं यद्रुक्ममभ्यवरोहति तेजस्येव प्रतितिष्ठति शतमानो भवति शतायुर्वै पुरुषश्शतवीर्य आयुरेव वीर्यमवरुन्द्धे वाजप्रसव्याभिरन्नस्यान्नस्य जुहोत्यन्नाद्यस्यावरुद्ध्यै सप्तभिस्सप्त वै छन्दाँसि च्छन्दोभिरेवान्नाद्यमवरुन्द्धे वाग्वै छन्दाँसि वाचैवान्नाद्यमवरुन्द्धे देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्या वाचा यन्तुर्यन्त्रेणेममसुमामुष्यायणममुष्याः पुत्रं बृहस्पतेस्साम्राज्येनाभिषिञ्चामीति यदि ब्राह्मणो यजेत बृहस्पतिसवो ह्येष इन्द्रस्येति यदि राजन्य इन्द्रसवो ह्येषः ॥८॥ ३३

अथैतेऽतिग्राह्या यदेव परमन्नाद्यमनवरुद्धं तस्यावरुद्ध्या अथैते पशवो यज्ञक्रतूनामवरुद्ध्यै यदाग्नेयोऽग्निष्टोमं तेनाप्नोत्यग्निप्रतिष्ठानो ह्यग्निष्टोमो यदैन्द्राग्न उक्थानि तेनाप्नोत्यैन्द्राग्नानि ह्युक्थानि

[ ८ ] मै. १,११,७—८ ( ३६—३७ )। वा. ९,२१: १८,२८—२९; २२,३२—३३। का.व. १०,२८; १९,४०, ४२: २४,४५—४६। [ देवस्य त्वा सवितुः० । अथर्व.. १९,५१,२· ऐ. ब्रा. ८,७ ]

[ ९ ] मै. १ ११,९ ( ३८ ) । मा. श्रौ. ७,१,५,६ ।

यदैन्द्रष्षोडशिनं तेनाप्नोत्यैन्द्रो हि षोडश्यात्मानमेवाग्निष्टोमेन स्पृणोति प्राणापानावुक्थेन वीर्यँ षोडशिनस्स्तोत्रेण वाचमतिरात्रेण प्रजां बृहतस्स्तोत्रेणास्मिन्नेव लोकेऽग्निष्टोमेन प्रतितिष्ठत्यन्तरिक्ष उक्थेन स्वर्गे लोके षोडशिनस्स्तोत्रेण ये देवयानाः पन्थानस्तेष्वतिरात्रेण नाके बृहतस्स्तोत्रेणैतावन्तो वै देवलोका यावन्त एव देवलोकास्तानाप्नोत्यथैषा सारस्वती मेषी यदेवादस्सप्तदशँ स्तोत्रमनवरुद्धं तस्यावरुद्ध्या अथैषा मारुती पृश्निर्वशा देवाश्च वा असुराश्चास्मिँल्लोक आसन्नेमे देवा नेमेऽसुरास्ते देवा एतां मारुतीं पृश्निं वशामपश्यँस्तामालभन्त तया लोकं द्वितीयमवृञ्जतासुरलोकं यस्यावद्यन्ति स देवलोको यस्य नावद्यन्ति सोऽसुरलोको लोकमेवैतया द्वितीयं वृङ्क्ते भ्रातृव्यलोकं द्वितीये हि लोके भ्रातृव्यस्सारस्वत्येतेषां पञ्चानामुत्तमा भवति सारस्वत इतरेषाँ सप्तदशानामुत्तमो वाग्वै सरस्वती वाचैव यज्ञँ संतनोति यद्वै विद्वान् यज्ञस्य न करोति यद्वाविद्वानन्तरेति तच्छिद्रं तद्वाचैव सरस्वत्या कल्पयति सप्तदशैते प्राजापत्याः पशव आलभ्यन्ते सप्तदशः प्रजापतिः प्रजापतिमेवाप्नोत्येकरूपा भवन्त्येकधैवास्मिन् वीर्यं दधाति सारस्वत उत्तमो भवति वाग्वै सरस्वती वाच्येव प्रतितिष्ठति ॥ ९ ॥ ३४

रथन्तरँ साम भवत्याशीय उज्जित्या इयं वै रथन्तरमस्यामेवाध्यभिषिच्यते वियोनिर्वै वाजपेयोऽनिरुक्तस्सन् प्राजापत्योऽनिरुक्तसामा तेन वियोनिर्यदनिरुक्ताः प्रातस्सवास्तेन संयोनिरनिरुक्ताः प्रातस्सवा अनिरुक्तः प्रजापतिः प्रजापतिमेवाप्नोति वाजवतीभिर्मध्यंदिने स्तुवन्त्यन्नं वै वाजोऽन्नाद्यस्यावरुद्ध्यै चित्रवतीभिरार्भवे पवमाने स्वर्गस्य लोकस्य समष्ट्या आष्ट्रादँष्ट्रमुत्तममुक्थानां भवत्युत्तरे एवं स्तोत्रे अभिसंतनोति बृहत् साम भवति यद्वा अतिरिच्यतेऽमुं तल्लोकमभ्यतिरिच्यते बृहत् स्वा अमुं लोकमाप्तुमर्हतीन्द्रियं वीर्यं बृहदिन्द्रिय एवं वीर्ये प्रतितिष्ठति वैष्णवीषु शिपिविष्टवतीषु स्तुवन्त्येषा वै प्रजापतेः पशुष्टास्तनूर्या शिपिविष्टवती तस्माच्छिपिविष्टवतीषु स्तुवन्त्यतिरिक्तं वा एतदतिरिक्तँ शिपिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोति ॥१०॥ ३५

[९७३]

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां वाजपेयं नाम चतुर्दशं स्थानकं संपूर्णम् ॥१४॥



[ १० ] मै. १,११,९ ( ३८ ) । मा. श्रौ. ७,१,५,६ ।

अथ पञ्चदशं स्थानकम् ।

## श्रीराजसूयम् ।

अनुमत्या अष्टाकपालो धेनुर्दक्षिणा ये प्रत्यञ्चश्शम्यामतिशीयन्ते स नैर्ऋत एककपालो भवति ता उभौ सह श्रृतौ कुर्वन्ति तयोर्नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय विस्रँसिकायाः काण्डाभ्यां जुहोति जुषाणा निर्ऋतिर्वेतु स्वाहा वासो भिन्नान्तं दक्षिणा य उदञ्चोऽवशीयन्ते तानुदक् परेत्य वल्मीकवपामुद्धृत्य जुहोतीदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजे स्वाहेदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीत्यपिदधात्यादित्येभ्यो भुवद्भ्द्यो घृते चरुर्वरो दक्षिणाग्नावैष्णव एकादशकपालोऽनड्वान् वामनो दक्षिणाग्नीषोमीय एकादशकपालो हिरण्यं दक्षिणैन्द्राग्न एकादशकपाल ऋषभोऽनड्वान् दक्षिणाग्नेयोऽष्टाकपालो महेन्द्रीयं दधि वासः क्षौमं दक्षिणा सौम्यश्श्यामाकश्चरुर्बभ्रुः पिङ्गलो दक्षिणैन्द्राग्नो द्वादशकपालो वैश्वदेवश्चरुर्द्यावापृथिव्य एककपालो वत्सः प्रथमजो दक्षिणा ॥ १ ॥ १

आग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावित्रोऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरुर्वायवे नियुत्वते पयो वा यवागूर्वैन्द्राय शुनासीराय द्वादशकपालस्सौर्य एककपाल उष्टारौ दक्षिणा सीरं वा द्वादशायोगमाग्नेयोऽष्टाकपालो वारुणो यवमयो दशकपालो रौद्रो गावीधुकश्चरुरैन्द्रँ सान्नाय्यं धेनुरनड्वाही दक्षिणापां न्ययनादपामार्गानाहरन्ति तान् सक्तून् कुर्वन्ति तान् पर्णमयेन स्रुवेण जुहोति दक्षिणा परेत्य स्वकृत इरिणे देवस्य सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रस्यौजसा रक्षोहासि स्वाहा हतं रक्षोऽवधिष्म रक्षो वरो दक्षिणा ॥ ये देवाः पुरस्सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ये देवा दक्षिणात् सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ये देवाः पश्चात् सदो मरुन्नेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ये देवा उत्तरात् सदो मित्रावरुणनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ये देवा उपरिषदस्सोमनेत्रा अवस्वद्वन्तो रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ॥ इदमहं रक्षोऽभिसमूहाम्यग्ने संदह रक्षस्संदग्धं रक्षोऽग्नये पुरस्सदे रक्षोघ्ने स्वाहा यमाय दक्षिणात् सदे रक्षोघ्ने स्वाहा मरुद्भ्यः पश्चात् सद्भ्यो रक्षोहभ्यस्स्वाहा मित्रावरुणाभ्यामुत्तरात् सद्भ्यां रक्षोहभ्याँ स्वाहा सोमायोपरिषदेऽवस्वद्वते रक्षोघ्ने स्वाहा रथः पञ्चवाही दक्षिणा ॥ २ ॥ २–४

---

[ १ ] मै. २,६,१—२ ( १- ८ ) । तै. सं. १,८,१; २,६,१ । वा. २९,६०; ३,१०; ९,३५ । काण्व. ३१,४९; ३, ११–१२ । शत. ब्रा. ५,२,३,२; मा. श्रौ. ९,१,१ ।

[ २ ] मै. २,६,३ ( ९-१२ ) । तै. सं. १,८,७ । वा. ९,३५—३६,३८ । काण्व. ११,१-४ । शत. ब्रा ५ २ ४ ५ । मा. श्रौ. ९,१,१, । [ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२; ऐ. ब्रा. ८,७ ]

अनुमत्यै चरू राकायै चरुस्सिनीवाल्यै चरुः कुह्वै चरुर्धात्रे द्वादशकपालः पष्ठौह्यप्रवीता दक्षिणा पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहाद्भ्यस्स्वाहौषधीभ्यस्स्वाहा वनस्पतिभ्यस्स्वाहा पतयद्भ्यस्स्वाहा परिप्लवेभ्यस्स्वाहा चराचरेभ्यस्स्वाहा सरीसृपेभ्यस्स्वाहाग्नावैष्णव एकादशकपाल ऐन्द्रावैष्णवश्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षिणा सौमापौष्णश्चरुरैन्द्रापौष्णश्चरुः पौष्णश्चरुश्श्यामो दक्षिणाग्नये वैश्वानराय द्वादशकपालो हिरण्यं दक्षिणा वारुणो यवमयश्चरुरश्वो बभ्रुर्दक्षिणा ॥ ३ ॥ ५

बार्हस्पत्यश्चरुः पुरोहितस्य गृहे शितिपृष्ठो दक्षिणैन्द्र एकादशकपालो राज्ञो गृह ऋषभो दक्षिणादित्यै चरुर्महिष्या गृहे धेनुर्दक्षिणा नैर्ऋतश्चरुः कृष्णानां व्रीहीणां नखनिर्भिन्नानां परिवृक्त्या गृहे श्येनी कूटा वण्डापस्फुरा दक्षिणाग्नेयोऽष्टाकपालस्सेनान्यो गृहे हिरण्यं दक्षिणाश्विनो द्विकपालस्संग्रहीतुर्गृहे सवात्यौ दक्षिणा सावित्रोऽष्टाकपालः क्षत्तुर्गृहे श्येतो दक्षिणा वारुणो यवमयो दशकपालस्सूतस्य गृहे बभ्रुर्महानिरष्टो दक्षिणा मारुतस्सप्तकपालो वैश्यस्य ग्रामण्यो गृहे पृश्निः पष्ठौही दक्षिणा पौष्णश्चरुर्भागदुघस्य गृहे श्यामो दक्षिणा रौद्रो गावीधुकश्चरुरक्षावपस्य च गोव्यच्छस्य च गृहेऽसिर्वालावृतो वध्रिर्वालप्रतिग्रथिता वरासी दामभूषा वत्सतरो वा शबलो दक्षिणेन्द्राय सुत्राम्ण एकादशकपाल इन्द्रायाँहोमुच एकादशकपालो राज्ञो गृह ऋषभो दक्षिणा ॥ ४ ॥ ६

स्वयमवपन्नाया अश्वत्थशाखायाः पात्रं भवति श्वेताँ श्वेतवत्सां दुहन्ति तत् स्वयं मूर्च्छति स्वयं मथ्यते स्वयं विलीयतेऽथ मैत्राबार्हस्पत्यँ हविर्निर्वपति तान् द्वेधा तण्डुलान् विभजति ये क्षोदीयाँसस्तं बार्हस्पत्यं चरुँ शृतं कुर्वन्ति स यदाशृतो भवत्यथ तत् पात्रमाश्वत्थमपिधाय पवित्रवत्याज्यमानयति तत् स्थवीयस आवपति स मैत्रश्चरुस्स्वयँशृतो भवत्यर्धं वेद्याः कुर्वन्त्यर्धँ स्वयंकृतमर्धं बर्हिषो दान्त्यर्धँ स्वयंदिनमर्धमिध्मस्य कुर्वन्त्यर्धँ स्वयंकृतँ शितिपृष्ठो बार्हस्पत्यस्य दक्षिणाश्वो मैत्रस्य सा वै श्वेता श्वेतवत्साग्नये गृहपतय आशूनामष्टाकपालस्सवित्रे प्रसवित्रे सतीनानामष्टाकपालस्सोमाय वनस्पतये श्यामाकश्चरुर्बृहस्पतये वाचस्पतये नैवारश्चरुरिन्द्राय ज्येष्ठाय हायनाना-

---

[ ३ ] मै. २,६,४ ( १३ ) । तै. सं. १,८,८ । शत. ब्रा. ५,२,५ । मा. श्रौ. ९,१,१ । वा. ३९,१—२; २२,२७-३०। काण्व. ३९,१; २४,३९-४१,४३ । [ **पृथिव्यै स्वाहा** । अथर्व. ५,९,२; ६ । **अन्तरिक्षाय स्वाहा** । अथर्व. ५,९,३—४ । **दिवे स्वाहा** । अथर्व. ५,९,१;५ । **सूर्याय स्वाहा** । अथर्व. १९,४३,३ । **चन्द्रमसे स्वाहा** । अथर्व. १९,४३,४ । **स्वाहाद्भ्यस्स्वाहौषधीभ्यः** । अथर्व. १९,४३,७ ]

[ ४ ] मै. २,६,५—६ ( १४-१६ ) । तै. सं. १,८,९-१० । शत. ब्रा. ५,३,१—२, २,४; ३,२ । मा. श्रौ. ९,१, १-२ ।

[ ५ ] मै. २,६,६ ( १५-१६ ) । तै. सं. १,८,९—१० । वा. ९,३९-४०; १०,१८; १७,८०,८२-८३ । काण्व. ११, ९-१०,२६; १८,८०,८२-८३ । शत. ब्रा. ५,३,२,४; ५,३,३,२ । मा. श्रौ. ९,१,१—२ ।

मेकादशकपालो मित्राय सत्यस्य पतय आम्बानां चरुर्वरुणाय धर्मणस्पतये यवमयो दशकपालो रुद्राय पशुपतय गावीधुकश्चरुस्सविता त्वा प्रसवानाँ सुवतामग्निर्गार्हपत्यानाँ सोमो वनस्पतीनां बृहस्पतिर्वाचामिन्द्रो ज्यैष्ठ्यानां मित्रस्सत्यानां वरुणो धर्मणां रुद्रः पशूनां ते देवा असपत्नमिमँ सुवध्व महते क्षत्राय महते ज्यैष्ठ्याय महते राज्याय महते जानराज्याय महते विश्वस्य भुवन-स्याधिपत्याय ॥५॥ ७

द्वारापा अपां नपाद्राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा वृषोर्मिरसि राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा वृषसेनोऽसि राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहापां पतिरसि राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा प्रहावरीस्स्थ परिवाहिणीस्स्थौजस्विनीस्स्थ व्रजक्षितस्स्थ सूर्यवर्चसस्स्थ सूर्यत्वचसस्स्थ मान्दास्स्थ वशास्स्थ शक्करीस्स्थ मरुतामोजस्स्थ जनभृतस्स्थ विश्वभृतस्स्थानाधृष्टास्स्थापामोषधीनां रसश्श्रविष्ठास्स्थ राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा ॥ ८

अपो देवीर्मधुमतीरगृभ्णामूर्जस्वती राजसूयाश्चितानाः ।
याभिर्मित्रावरुणा अभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्यरातीः ॥ ९
देवीरापो मधुमतीस्संसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वानाः ।
अनाधृष्टास्सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीः ॥ १०

आनिभृष्टमसि वाचो बन्धुस्तपोजास्सोमस्य दात्रँ शुक्रा वश्शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामि देवो वस्सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिस्स्वाहा राजसूयाः ॥ ११

सधमादो द्युम्न्या ऊर्ज एका अनाधृष्टा अपस्यो वसानः ।
पस्त्यासु चक्रे वरुणस्सधस्थमपाँ शिशुर्मातृतमास्वन्तः ॥ १२

रुद्र यत्ते क्रिवि परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहा सोम इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्म धारयन्तां तेऽस्मै वाचँ सुवन्ताम् ॥६॥ १३

क्षत्रस्य योनिरसि क्षत्रस्योल्बमसि क्षत्रस्य नाभिरस्याविद आवेदयताविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आवित्तौ मित्रावरुणौ धृतव्रता आवित्ते द्यावापृथिवी ऋतावृधा आवित्ता देव्यदिति-राविन्नः पूषा विश्ववेदा आवित्तोऽयमसा आमुष्यायणोऽमुष्याः पुत्रोऽमुष्यां विश्येष ते जनते

---

[६] मै. २,६,७-८ (१७-२४)। वा. ६,२७; १०,१—४,६-७,२०। काण्व. ६,३९; १०,८; ११,५—८, १३—१४,३०।

[७] मै. २,६,९-११ (२५-३०)। वा. १०,५,८-१६,१८-१९,२१,२३,२६; २०,१; ९,५,४०; २१,६,२०,२७; ३९,१। काण्व. ११,१०,१२-१३,१५—२४,२६,२८,३१,३३,३६; २१,९३; २४,६,३७; ३९,१। तै. सं.१,८, १२-१५। शत. ब्रा. ५,३,५,८-९, २०; ५,४,१,३—७; ५,४,२,५।

राजा सोमो अस्माकं ब्राह्मणानां राजेन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्याच्छत्रुबाधनास्स्थ
पात प्राचः पात प्रतीचः पातानूचः पात तिरश्चो मित्रोऽसि वरुणोऽसि ॥ १४

हिरण्यवर्णमुषसो व्युष्टा अयस्स्थूणमुदितौ सूर्यस्य ।
आरोहथो वरुण मित्र गर्तं तत्र चक्राथे अदितिं दितिं च ॥ १५

समिधमातिष्ठ गायत्री त्वा छन्दसावतु त्रिवृत्स्तोमो रथन्तरँ सामाग्निर्देवता ब्रह्म द्रविणमुग्रा-
मातिष्ठ त्रिष्टुप्त्वा छन्दसावतु पञ्चदशस्स्तोमो बृहत् सामेन्द्रो देवता क्षत्रं द्रविणं प्राचीमातिष्ठ जगती
त्वा छन्दसावतु सप्तदशस्स्तोमो वैरूपँ साम मरुतो देवता विड् द्रविणमुदीचीमातिष्ठानुष्टुप् त्वा छन्द-
सावत्वेकविँशस्स्तोमो वैराजँ साम मित्रावरुणौ देवता पुष्टं द्रविणमूर्ध्वामातिष्ठ पङ्क्तिस्त्वा छन्दसा-
वतु ॥ त्रिणवत्रयस्त्रिँशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणँ सोमस्य त्विषिरसि
त्विषिमाँ असि तवेव मे त्विषिर्भूयात् प्रत्यस्तं नमुचेश्शिरोऽवेष्टा दन्दशूका मृत्योः पाहि दिद्योत्पा-
ह्यग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय
स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाँशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा सोमस्य
त्वा द्युम्नेनाग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चाम्यति
दिवस्पाहीन्द्रस्य योनिरसि जनय ॥ १६-१७

समाववृत्रन्नधरागुदक्ता अहिं बुध्न्यमन्वीयमानाः ।
ताः पर्वतस्य वृषभस्य पृष्ठे नावो वियन्ति सुषिचो न वाणीः ॥७॥ १८

इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं वाजँ सेन्मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि विष्णोः
क्रमोऽसि मरुतां प्रसवे जयाप्तं मनस्समिन्द्रियेणैष वज्रो वाजसातमस्तेन नौ पुत्रो वाजँ सेदियदस्या-
युरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चोऽसि वर्चो मे धेहि मित्रोऽसि वरुणोऽसि सं विश्वै-
र्देवैर्नमो मात्रे पृथिव्यै ॥ १९

प्रति त्यन्नाम राज्यमधायि स्वां तन्वं वरुणोऽसुषोत् ।
शुचेर्मित्रस्य व्रत्या अभूमामन्महि महद्दतस्य नाम ॥ २०
सर्वे व्राता वरुणस्याभूवन्नि मित्रर्युररतींनतारीत् ।
अशूशुभन्त यज्ञिया ऋतेन नि त्रितो नो जरिमाणमानट् ॥ २१

---

[ अग्नये स्वाहा । अथर्व. १९,४३,१ । सोमाय स्वाहा । अथर्व. १९,४३,५ । समाववृत्र० ( ता अधराद् दीचीराववृ ) न वाणीः ( पुराणीः ) । अथर्व. ११,२,४१ ]

[ ८ ] मै. २,६,११-१३ ( ३१—४४ ) । वा. ९,५; १०,५,१०,२३ –२८; ११,६,१०,२७,२३,६५; ११,१४. ३९, १ । काण्व. ११,११-१३,३३-४०; १३,१५; ११,२९; २५,६७; २४,६,३७; ३९,१ । [ इयदस्यायुर्मे धेहि ( द्वाः ) । अथर्व. २,१७,४ ]

स्योनासि सुषदासि स्योनामासीद सुषदामासीद ॥ २२

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ २३

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुतामोजसे स्वाहा॥२४

हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ २५

ब्रह्माँ३स्त्वं ब्रह्मासि सवितासि सत्यसवो ब्रह्माँ३स्त्वं ब्रह्मासि मित्रोऽसि सुशेवो ब्रह्माँ३स्त्वं
ब्रह्मासीन्द्रोऽसि सत्यौजा ब्रह्माँ३स्त्वं ब्रह्मासि वरुणोऽसि विश्वौजा एष वज्रस्तेन मे रध्य दिशो
अभ्युभूदयम् ॥ २६

प्रजापते नहि त्वदन्य एता विश्वा जातानि परि ता बभूव ।

यत् कामास्ते जुहुमस्तन्नो अस्तु ॥ २७

असा अमुष्य पुत्रोऽमुष्यासौ पुत्रः । वयँ स्याम पतयो रयीणाम् ॥ २८

अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहा ॥८॥ २९

सावित्रोऽष्टाकपालश्श्येतो दक्षिणा सारस्वतश्चरुः पष्ठौह्यप्रवीता दक्षिणा पौष्णश्चरुश्श्यामो दक्षिणा बार्हस्पत्यश्चरुश्शितिपृष्ठो दक्षिणैन्द्र एकादशकपाल ऋषभो दक्षिणा वारुणो यवमयो दशकपालो बभ्रुर्महानिरष्टो दक्षिणा त्वाष्ट्रोऽष्टाकपालश्शुण्ठो दक्षिणाग्नेयोऽष्टाकपालस्सौम्यश्चरुर्वैष्णवस्त्रिकपाल आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणैन्द्र एकादशकपाल ऋषभो दक्षिणा ॥ वैश्वदेवश्चरुर्धेनुः पिशङ्गी दक्षिणा मैत्रावरुण्यामिक्षा वशा दक्षिणा बार्हस्पत्यश्चरुश्शितिपृष्ठो दक्षिणाग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावित्रोऽष्टाकपालो बार्हस्पत्यश्चरुरग्नये वैश्वानराय द्वादशकपालस्त्वाष्ट्रोऽष्टाकपालो दक्षिणो रथवाहनवाहो दक्षिणा सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुर्वारुणश्चरुरदित्यै चरुः क्षेत्रस्य पतये चरुरितरो रथवाहनवाहो दक्षिणा सवित्रे द्वादशकपालोऽश्विभ्यां पूष्ण एकादशकपालस्सरस्वत्यै सत्यवाचे चरुस्तिसृधन्वँ शुष्कदृतिर्दण्ड उपानहौ तद्दक्षिणाश्वो वा शोणकर्णः ॥९॥ ३०-३१

त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यंदिनः पवमानस्सप्तदशानि पृष्ठानि सप्तदश आर्भवः पवमान एकविँशोऽग्निष्टोमश्चतुस्त्रिँशाः पवमाना अभिषेचनीयस्य पञ्चदशान्याज्यानि सप्त-

---

[ निषसाद धृतव्रतो०। ऋ. १,२५,१०; तै. सं. १,८,१६,१, तै. ब्रा. १,७,१०,२;२,६,५,१ । अग्नये स्वाहा। अथर्व. १९,४३,१ । सोमाय स्वाहा । अथर्व. १९,४३,५ । हँसश्शुचिषद्वसु०। ऋ. ४,४०,५; तै. सं. १,८, १५,२,४,२,१,५; तै. आ. १०,१०,२ । प्रजापते नहि (नत्वदेता०)। ऋ. १०,१२१,१०; अथर्व. ७,७९,४; ८०,३; तै. सं. १,८,१४,२; ३,२,५,६; तै. ब्रा. २,८,१,२; ३,५,७,१; नि. १०,४३ ]

[ ९ ] मै. २,६,१३ (४५) । वा. २९,६० । काण्व. ३१,४९ । शत. ब्रा. ५,४,५,६; मा. श्रौ. ९,१,५ ।

दशानि पृष्ठान्येकविँशोऽग्निष्टोमश्चोक्थानि च सप्तदशो दशपेयस्सर्व एकविँशं बहिष्पवमानं केशवप-
नीयस्य सप्तदशान्याज्यानि सप्तदशो माध्यंदिनः पवमानः पञ्चदशानि पृष्ठानि पञ्चदश आर्भवः
पवमानस्त्रिवृदग्निष्टोमश्चोक्थानि चैकविँशिवष्षोडशी पञ्चदशी रात्री त्रिवृत्सन्धिरथैप द्विरात्रो व्युष्टि-
स्तस्य यावन्ति संवत्सरस्याहोरात्राणि तावतीस्स्तोत्रीयाः ॥१०॥ ३२

युञ्जानः प्रथमं मनस्तत्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ ३३

युक्तेन मनसा वयं देवस्य सवितुस्सवे । स्वर्ग्येया शक्त्या ॥ ३४

युक्त्वाय सविता देवान् स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतस्सविता प्रसुवाति तान् ॥ ३५

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ३६

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथेव सूरः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ३७

यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः ।
यः पार्थिवानि विममे स एतशो रजाँसि देवस्सविता महित्वना ॥ ३८

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ॥ ३९

दिव्यो गन्धर्वः केतपः केतं पुनातु वाचस्पतिर्वाचं नस्स्वदतु ॥ ४०

इमं मे देव सवितर्यज्ञं प्रणय देवाव्यम् । सखिविदँ सत्राजितं धनजितँ स्वर्विदम् ॥ ४१

ऋचा स्तोमँ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि ॥११॥ ४२

प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषक् ॥ ४३

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते । रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥ ४४

[ ११ ] मै. २, ७,१ ( १—८ ) । वा. ११,१—८; ५,१४; ३७,२; ९,१; ३०,१ । काण्व. १२,१-८; ५,१९; ३७,२, १०,१; ३४,१ । [ **युञ्जते मन उत०** । ऋ. ५,८१,१; तै. सं. १,२,१३,१; ४,१,१,१; तै. आ. ४,२,१ । **युजे वां ब्रह्म०** । ऋ १०,१३,१; अथर्व. १८,३,३९; तै. सं. ४,१,१,२ । **यस्य प्रयाणमन्वन्य०** । ऋ. ५,८१,३; तै. सं. ४,१,१,२ ]

[ १२ ] मै. २,७,१६; ४,१०,३—४; ४,११,१; १३,१; ( ९१ – ९७; १ ९, २२५, ६६—७१; ३३ ) । वा. ३४, १५; ११,३५-३६, ४२; ४,१०; ८,३२; १३, ३२; ११,३२—३४; १५,२२; ३१,१६ । काण्व. ३३,९; १२, ३५-३६,४२; ४,१३; ९,३१; १४ ३४; १२,३२—३४; १६,४३; ३५,१६ । [ **प्र देवं देव्या धिया०** । ऋ. १०,१७६,२; तै. सं. ३,५,११,१ । **अयमु ष्य प्र देवयुः** । ऋ. १०,१७६,३; तै. सं. ३,५,११ १ ]

अयमग्निरुरुष्यत्यमृतादिव जन्मनः । सहसश्चिन् सहीयान् देवो जीवातवे कृतः ॥ ४५

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥ ४६

अग्ने विश्वेभिस्स्वनीक देवैरूर्णावन्तं प्रथमस्सीद योनिम् ।
कुलायिनं घृतवन्तँ सवित्रे यज्ञं नय यजमानाय साधु ॥ ४७

सीद होतर्नि होता ॥ ४८

त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपाः ॥ ४९

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठाद् द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥ ५०

उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि । सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥ ५१

समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरँ सुवीरम् ।
आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय ॥ ५२

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ५३

ऊर्ध्वो नः पाह्यँहसो नि केतुना विश्वँ समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ ५४

युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ ५५

अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे ॥ ५६

---

[ अयमग्निरुरुष्यति० । ऋ. १०,१७६,४. तै. सं. ३,५,११,१ । इडा(ळा)यास्त्वा पदे वयं० । ऋ. ३.२९,४; तै. सं. ३,५,११,१ । अग्ने विश्वेभिस्स्वनीक० । ऋ. ६,१५,१६; तै. सं. ३,५,११.२ । सीद होतः० । ऋ. ३,२९,८; तै. सं. ३,५,११,२. ४,१,३,३ । नि होता० । ऋ. २,९,१; तै. सं. ३,५,११,२; ४,१,३,१ । त्वं दूतस्त्वमु नः० । ऋ. २,९,२; तै. सं. ३,५,११.२ । अञ्जन्ति त्वामध्वरे० । ऋ, ३,८,१; तै. ब्रा. ३,६,१,१, नि. ८,१८ । उच्छ्रयस्व वनस्पते० । ऋ. ३,८,३; तै. ब्रा. ३,६,१,१ । समिद्धस्य श्रयमाणः० । ऋ. ३,८,२; तै. ब्रा. ३,६,१,१ । उर्ध्व ऊ षु ण उतये० । ऋ. १,३६,१३; सा. ५७; तै सं. ४,१,४,२; तै. ब्रा. ३,६,१,२ । ऊर्ध्वो नः पाह्यंहसो० । ऋ १,३६,१४; तै. ब्रा. ३,६,१,२ । युवा सुवासाः परीवीत० । ऋ. ३,८,४; तै. ब्रा. ३,६,१,३ । अभित्वा देव सवित० । ऋ. १,२४,३; तै सं. ३,५,११,३ ]

महीं द्यौः पृथिवी च नस्त्वामग्ने पुष्करादधि तमु त्वा दध्यङ्ङृषिस्तमु त्वा पाथ्यो वृषाग्नी रक्षाँसि सेधत्युत ब्रुवन्तु जन्तवः ॥ ५७

आ यँ हस्ते न खादिनँ शिशुं जातं न बिभ्रति । विशामग्निँ स्वध्वरम् ॥ ५८

प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ निषीदत ॥ ५९

आ जातं जातवेदसि प्रियँ शिशीतातिथिम् । स्योन आ गृहपतिम् ॥ ६०

अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ ६१

त्वँ ह्यग्ने अग्निना विप्रो विप्रेण सन् सता । सखा सख्या समिध्यसे ॥ ६२

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ॥ ६३

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानस्सचन्त यत्र पूर्वे साध्यास्सन्ति देवाः ॥ १२ ॥ ६४

होता यक्षदग्निँ समिधा सुषमिधा समिधं नाभा पृथिव्यास्संगथे वामस्य वर्ष्मन् दिव इडस्पदे वेत्वाज्यस्य होतर्यज होता यक्षत् तनूनपातमदितेर्गर्भं भुवनस्य गोपां मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होतर्यज होता यक्षदग्निमिड ईडितो देवो देवाँ आ वक्षद्दूतो हव्यवाडमूर उपेमं यज्ञमुपेमां देवो देवहूतिं वेत्वाज्यस्य होतर्यज होता यक्षद्बर्हिस्सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रथताँ स्वासस्थं देवेभ्य एमेनदद्य वसवो रुद्रा आदित्यास्सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज होता यक्षद्दुर ऋष्वाः कवष्यो कोषधावनीरुदाताभिर्जिहतां वि पक्षोभिश्श्रयन्ताँ सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज होता यक्षदुषासानक्ता बृहती सुपेशसा नृँः पतिभ्यो योनिं कृण्वाने सँस्मयमाने इन्द्रेण देवैरेदं बर्हिस्सीदतां वीतामाज्यस्य होत-

[ महीं द्यौः पृथिवी० । ऋ. १,२२,१३; तै सं ३,३,१०,२ ५,११,३ ४,२,९,३ । त्वामग्ने पुष्करादध्य० । ऋ. ६,१६,१३; सा. ९ तै. सं. ३,५,११,३ ४,१,३,२; ४,४,१ । तमु त्वा दध्यङ्ङृषिः० । ऋ. ६,१६, १४; तै. सं. ३,५,११,३; ४,१,३,२ । तमु त्वा पाथ्यो वृषा० । ६,१६,१५. तै. सं. ३,५,११,४; ४,१,३,३; अग्नी रक्षाँसि सेधति० । ऋ. ७.१५,१०; अथर्व ८,३,२६; तै. ब्रा. २,४,१,६ । उत ब्रुवन्तु जन्तवः० । ऋ. १,७४,३; सा १३८२; तै. सं. ३,५,११.४ । आ यं हस्ते न खादिनं० । ऋ. ६,१६,४०; तै. सं. ३,५,११,४ । प्र देवं देववीतये० । ऋ. ६,१६,४१; तै. सं. ३,५,११,४ । आ जातं जातवेदसि० । ऋ. ६,१६,४२; तै. सं. ३,५,११,४ । अग्निनाग्निस्समिध्यते० । ऋ. १,१२,६; सा ८४४; तै. सं. १,४,४६,३; ३,५,११,५; तै. ब्रा. २,७,१२,३ । त्वँ ह्यग्ने अग्निना० । ऋ. ८,४३,१४. तै. सं. १,४,४६,३; ३,५,११,५ । तं मर्जयन्त सुक्रतुं० । ऋ. ८,८४,८; तै. सं. ३,५,११,५ । यज्ञेन यज्ञमयजन्त० । ऋ. १,१६४,५०; १०,९०,१६; अथर्व. ७,५,१; तै. सं. ३,५,११,५; तै. आ. ३,१,७; शत. ब्रा १०,२,२,२ ]

[ १३ ] मै. ४,१३,२, ( १० ) । वा. २८,१-१०,२४—३४; २१,२९—४० । काण्व. ३०,१—१०,२४—३४; ३३,३०—४१ । तै. ब्रा. ३,६,२ ।

र्यज होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा स्विष्टमद्यान्यः करत् स्वभिगूर्तमन्यस्स्व-
तवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज होता यक्षत् तिस्रो देवीरपसामपस्तमा अच्छि-
द्रमद्येदमपस्तन्वतां देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज होता यक्षत् त्वष्टारमचिष्टुमपाकं
रेतोधां विश्रवसं यशोधां पुरुरूपमकामकर्शनँ सुपोषः पोषैस्स्यात् सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज
होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारँ शशमन्नरस्स्वदात् स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्य-
वाड्वेत्वाज्यस्य होतर्यज होता यक्षदग्निँ स्वाहाज्यस्य स्वाहा मेदसस्स्वाहा स्तोकानाँ स्वाहा स्वाहा-
कृतीनाँ स्वाहा हव्यसूक्तीनाँ स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु होतर्यज ॥१३॥
६५
[१०३८]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां श्रीराजसूयं नाम पञ्चदशं स्थानकं संपूर्णम् ॥१५॥

---

अथ षोडशं स्थानकम्।

## अग्निवीशिका।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि गायत्रेण च्छन्दसा
पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन च्छन्दसाभ्रिरसि नार्यसि त्वया वयमग्निँ शकेम
खनितुँ सधस्थ आ जागतेन च्छन्दसा ॥ १

हस्त आधाय सविता बिभ्रदभ्रिं हिरण्ययीम्। अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत्॥ २

आनुष्टुभेन च्छन्दसा ॥ ३

प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम्। दिवि ते जन्म परममन्तरिक्षे तव नाभिः ॥ ४

पृथिव्यामधि योनिरित् ॥ ५

युञ्जाथाँ रासभं युवमस्मिन् यामे वृषण्वसू। अग्निं भरन्ता अस्मयुम् ॥ ६

योगे योगे तवस्तरं वाजे वाजे हवामहे। सखाय इन्द्रमूतये ॥ ७

प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्ये मयोभूरेहि। उर्वन्तरिक्षं वीहि ॥ ८

स्वस्ति गव्यूतिरभयानि कृण्वन् पूष्णा सयुजा सह पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदा-
भराग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामोऽग्निं पुरीष्यमङ्गिरस्वद्भरामः ॥१॥ ९

---

[१] मै. २,७,१-२ (९—१९)। वा. ११,९—१६। काण्व. १२,९—१६। मा. श्रौ. ६,१,१। तै. सं. ४,१,२—३।
[देवस्य त्वा सवितुः०। अथर्व. १९,५१,२; ऐ. ब्रा. ८,७। योगे योगे तवस्तरं०। ऋ. १,३०,७; सा. १६३, ७४३; अथर्व. १९,२४,७; २०,२६,१; तै. सं. ४,१,२,१]

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥ १०
आगत्य वाज्यध्वानँ सर्वा मृधो विधूनुत । अग्निँ सधस्थे महति चक्षुषा निचिकीषते ॥ ११
आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् ।
भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयम् ॥ १२
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षँ समुद्रो योनिः ।
विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥ १३
उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् ।
वयँ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥ १४
उदक्रमीद् द्रविणोदा वाज्यर्वाकस्सु लोकँ सुकृतं पृथिव्याः ।
ततः खनेम सुप्रतीकमग्निँ स्वो रुहाणा अधि नाक उत्तमे ॥ १५
जिघर्म्यग्निं मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नं रभसं विदानम् ॥ १६
आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषेथाः ।
मर्यश्रीस्स्पृहयद्वर्णो अग्निर्नाभिधृषे तन्वा जर्हृषाणः ॥ १७
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ १८
परि त्वाग्ने पुरं वयं विप्रँ सहस्य धीमहि । धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम् ॥ १९
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृभ्यो नृमणो जायसे शुचिः ॥२॥ २०

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्यास्सधस्थे अग्निं पुरीष्यमङ्गि-
रस्वत् खनामि ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतँ शिवं प्रजाभ्यो अहिँसन्तं पृथि-
व्यास्सधस्थे ॥ अग्निं पुरीष्यमङ्गिरस्वत् खनामि ॥ २१-२२

---

[ २ ] मै. २,७,२ ( १९—२९ )। वा. ११,१४—२७। काण्व. १२,१७—२७। तै. सं. ४,१,२,३। मा. श्रौ. ६,१,१। [ अन्वाग्नि ( प्रत्यग्नि ) रुषसा० । ऋ. ४,१३,१. अथर्व. ७,८२,४—५; १८,१,२७-२८। जिघर्म्यग्निं मनसा ( हविषा )०। ऋ. २,१०,४; तै. सं. ४,१,२,४। आ त्वा ( विश्वतः ) जिघर्मि ( प्रत्यञ्चं )०। ऋ. २,१०,५; तै. सं. ४,१,२,५। परि वाजपतिः०। ऋ. ४,१५,३; सा. ३०; तै. सं. ४,१,२,५; तै. ब्रा. ३,६,४,१। परि त्वाग्ने पुरं वयं०। ऋ. १०,८७,२२; अथर्व. ७,७१,१; ८,३,२२; तै. सं. १,५,६,४; ४,१,२,५। त्वमग्ने द्युभिस्त्वमाशु०। ऋ. २,१,१; तै. सं. ४,१,२,५; तै. आ. १०,७६,१; नि. ६,१; १३,१ ]

[ ३ ] मै. २,७,२—३ (३०-४१)। वा. ११,२८-३७। काण्व. ११,२८-३७। मा. श्रौ. ६,१,१। तै. सं. ४,१,२-३। [ देवस्य त्वा सवितुः०। अथर्व. १९,५१,२; ऐ. ब्रा. ८,७ ]

अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिणा प्रथस्व ॥ २३
शर्म च स्थो वर्म च स्थो अच्छिद्रे बहुले उभे ।
व्यचस्वती संवसाथां भर्तमग्निं पुरीष्यम् ॥ २४
संवसाथाँ स्वर्विदौ समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥ २५
पुरीष्योऽसि विश्वभराः ॥ अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥ २६-२७
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ २८
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरम् ॥ २९
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयं रणे रणे ॥ ३०
सीद होतस्स्व उ लोके चिकित्वान् सादया यज्ञँ सुकृतस्य योनौ ।
देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥ ३१
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत् सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठस्सहस्रंभरजश्शुचिजिह्वो अग्निः ॥ ३२
सँसीदस्व महाँ असि शोचस्व देववित्तमः ।
वि धूममग्ने अरुषं विविग्धि सृज प्रशस्त दर्शतम् ॥ ३३
जनिष्ट हि जेन्यो अग्रे अह्नाँ हितो हितेष्वरुषो वनेषु ।
दमे दमे सप्त रत्ना दधानोऽग्निर्होता निषसादा यजीयान् ॥३॥ ३४
अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः ।
तासामास्थानादुज्जिहतामोषधयस्सुपिप्पलाः ॥ ३५
सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् ।
यो देवानां चरसि प्राणथेन तस्मै देव वषडस्तु तुभ्यम् ॥ ३६
सुजातो ज्योतिषा शर्म वरूथमासदत्स्वः । वासो अग्ने विश्वरूपँ संव्ययस्व विभावसो ॥ ३७

---

[त्वामग्ने पुष्करादध्य० । ऋ. ६,१६,१३; सा. ९; तै. सं. ३,५,११,३; ४,१,३,२; ४,४,१ । तमु त्वा दध्यङ्० । ऋ. ६,१६,१४; तै. सं. ३,५,११,३; ४,१,३,२ । तमु त्वा पाथ्यो० । ऋ. ६,१६,१५; तै. सं. ३,५,११,४; ४,१,३,३ । सीद होतस्स्व उ लोके० । ऋ. ३,२९,८; तै. सं. ३,५,११,२; ४,१,३,३ । नि होता होतृषदने० । ऋ. २,९,१; तै. सं. ३,५,११,२; ४,१,३,३ । सँसीदस्व महाँ असि० । ऋ. १,३६,९; तै. सं. ४,१,३,३; तै. आ. ४,५,२ । जनिष्ट हि जेन्यो अग्रे० । ऋ. ५,१,५; तै. सं. ४,१,३,४]

[४] मै. २,७,४ (४५-६१) । वा. ११,३८—५२; ३६,१४—१६ । काण्व. १२,३८—५३; ३६,१४--१६ ]

उदु तिष्ठ स्वध्वरावा नो देव्या कृपा ।
दृशे च भासा बृहता सुशुक्वभिराग्ने याहि सुशस्तिभिः ॥ ३८
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ३९
स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रश्शिशुः परि तमाँस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ ४०
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः ॥ ४१
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी अभिशुचो मान्तरिक्षं मा वनस्पतीन् ॥ ४२
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥ ४३
वृषाग्निं वृषणं भरन्नपां गर्भँ समुद्रियम् । अग्न आयाहि वीतये ॥ ४४
ऋतँ सत्यमृतँ सत्यम् ॥ ४५
ओषधयः प्रतिगृह्णीताग्निमेतँ शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥ ४६
ओषधयः प्रतिमोदध्वं पुष्पवतीस्सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नँ सधस्थमासदत् ॥ ४७
वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतश्शर्मणि स्यामग्नेरहँ सुहवस्य प्रणीतौ ॥ ४८
आपो हिं ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ ४९
यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ ५०
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥४॥ ५१

---

[**उदु तिष्ठ स्वध्वरावा०** । ऋ. ८,२३,५; तै. सं. ४,१,४,१ । **ऊर्ध्व ऊ षु ण ऊतये०** । ऋ. १,३६,१३; सा. ५७; तै. सं. ४,१,४,२; तै. ब्रा. ३,६,१,२ । **स जातो गर्भो असि०** । ऋ. १०,१,२; तै. सं ४,१,४,२ । **अग्न आयाहि वीतये०** । ऋ. ६,१६,१०; सा. १,६६०; तै. सं. २,५,७,३; २,५,८,१; तै. ब्रा. ३,५,२,१ । **वि पाजसा पृथुना०** । ऋ. ३,१५,१; तै. सं. ४,१,५,१ । **आपो हि ष्ठा मयो०** । ऋ. १०,९,१; सा. १८३७; अथर्व. १,५,१; तै. सं. ४,१,५,१; ५,६,१,४; ७,४,१९,४, तै. आ. ४,४२,४; १०,१,११; नि. ९,२७ । **यो वश्शिवतमो०** । ऋ. १०,९,२; सा. १८३८; अथर्व. १,५,२. तै. सं. ४,१,५,१; ७,४,१९,४, तै. आ. ४,४२,४; १०,१,११ । **तस्मा अरं गमाम०** । ऋ. १०,९,३; सा. १८३९ अथर्व. १,५,३, तै. सं. ४,१,५,१. ५,६, १,४; ७,४,१९.४; तै. आ. ४,४२,४; १०,१,११ ]

मित्रस्संसृज्य पृथिवीं भूमिं च ज्योतिषा सह ।
सुजातं जातवेदसमयक्ष्माय त्वा सँसृजामि प्रजाभ्यः ॥ ५२
रुद्रास्सँसृज्य पृथिवीं बृहज्ज्योतिस्समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ५३
सँसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् ।
हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु ताम् ॥ ५४
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां दधातु हस्तयोः ॥ ५५
उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया ।
माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ ॥ ५६

मखस्य शिरोऽसि वसवस्त्वा कुर्वन्तु गायत्रेण च्छन्दसाङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि प्रजां रायस्पोषं गौपत्यँ सुवीर्यँ सजातान् यजमानाय रुद्रास्त्वा कुर्वन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वद् ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजां रायस्पोषं गौपत्यँ सुवीर्यँ सजातान् यजमानायादित्यास्त्वा कुर्वन्तु जागतेन च्छन्दसाङ्गिरस्वद् ध्रुवासि द्यौरसि धारया मयि प्रजां रायस्पोषं गौपत्यँ सुवीर्यँ सजातान् यजमानाय विश्वे त्वा देवा वैश्वानराः कुर्वन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वद् ध्रुवासि दिशोऽसि धारया मयि प्रजां रायस्पोषं गौपत्यँ सुवीर्यँ सजातान् यजमानायादित्या रास्नास्यदितिस्ते बिलं गृह्णातु ॥ ५७

कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । तां पुत्रेभ्यस्संप्रायच्छददितिश्श्रपयानिति॥५८
वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥५॥ ५९

अदितिस्त्वा देवी विश्वदेव्यावती पृथिव्यास्सधस्थे अङ्गिरस्वत् खनत्ववट देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वदभीन्धतामुखे वरुत्रीस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वच्छ्रूपयन्तूखे ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वत् पचन्तूखे जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वत् पचन्तूखे ॥ ६०

---

[५] मै २,७,५-६ (६२-६९)। वा. ११,५३-६०; ३७,८। काण्व. १२,५४-६१; ३७,८। तै. सं. ४,१,४-६। मा श्रौ ६,१,२-२।

[६] मै. २,७,६ (६९-७४)। वा. ११,६१-६५। काण्व. १२,६२-६६। तै. सं. ४,१,६; ४,१,९-१०। मा. श्रौ. ६,१,२—३।

मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ६१
देवस्त्वा सवितोद्वपतु सुपाणिस्स्वङ्गुरिः । सुबाहुरुत शक्त्या ॥ ६२
अव्यथमाना पृथिव्यामाशा दिश आपृण । उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम् ॥ ६३

मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदि वसवस्त्वाच्छृन्दन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥६॥ ६४

आकूतिमग्निं प्रयुजँ स्वाहा मनो मेधामग्निं प्रयुजँ स्वाहा चित्तं विज्ञातमग्निं प्रयुजँ स्वाहा वाचो विधृतिमग्निं प्रयुजँ स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहा ॥ ६५

विश्वो देवस्य नेतुर्मर्तो वरेत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वरेत पुष्यतु ॥ ६६
स्वाहा मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः ॥ ६७
दृँहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि ।
जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥ ६८
द्रवन्नस्सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥ ६९
परस्या अधि संवतोऽवराँ अभ्यातर । यत्राहमस्मि ताँ अव ॥ ७०
परमस्याः परावतो रोहिदश्व उपागहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः ॥ ७१
यदग्ने कानि कानि चा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य॥ ७२
यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ७३
रात्रीं रात्रीमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥ ७४
नाभा पृथिव्यास्समिधानो अग्निं रायस्पोषाय बृहते हवामहे ।
इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥ ७५

---

[ मित्रस्य चर्षणीधृतो० । ऋ ३,५९,६; तै. सं. ३,४,११,५; ४,१,६,३; तै. आ ४,३,२ । देवस्त्वा०(या) सुपाणिः (सुबाहुः)० । ऋ. २,३२,७; अथर्व ७,४६,२; तै. सं. ३,१,११,४ ]

[७] मै. २,७,७ (७५—९१) । वा. ११,६६—८२; ४,८; २२,२१ । काण्व. १२,६७—८३; ४,९; २४,२९ । तै. सं. ४,१,९—१० । मा. श्रौ. ६,१,३ । [ विश्वो देवस्य० । ऋ. ५,५०,१, तै सं १,२,२,१; ४,१,९,१ । द्रवन्नस्सर्पिरासुतिः० । ऋ २,७,६; तै. सं. ४,१,९,२ । परस्या अधि संवतो० । ऋ ८,७५,१५; तै. सं. २, ६,११,३; ४,१,९,३ । यदग्ने कानि कानि० । ऋ. ८ १०२,२०; अथर्व. १९,६४,३; तै. सं. ४,१,१०,१ । यदत्त्युपजिह्विका० । ऋ. ८,१०२,२१; तै. सं. ४,१,१०,१; नि. ३,२० ]

❀

यास्सेना अभीत्वरीराव्याधिनीरुगणा उत ।
ये स्तेना ये च तस्करास्ताँस्ते अग्नेऽपि दधाम्यास्ये ॥ ७६
दँष्ट्राभ्यां मलिम्लूनग्ने जम्भ्येभिस्तस्करानुत ।
हनुभ्याँ स्तेनान् भगवस्ताँस्त्वं खाद सुखादितान् ॥ ७७
ये जनेषु मलिम्लवस्स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः॥ ७८
यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान् दिप्साच्च सर्वाँस्तान् मष्मषा कुरु ॥ ७९
सँशितं मे ब्रह्म सँशितं वीर्यं बलम् । सँशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः ॥ ८०
उदेषां बाहू अतिरमुद्वर्चो अथो बलम् ।
क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ अहम् ॥७॥ ८१
दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुश्श्रिये रुचानः ।
अग्निरमृतो अभवत् सहोभिर्यदेनं द्यौरजनयत् सुरेताः ॥ ८२
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकँ समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः ॥ ८३
विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो विराजति ॥ ८४

सुपर्णोऽसि गरुत्मान् त्रिवृत् ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दाँस्यङ्गानि
यजूँषि नाम साम ते तनूर्वामदेव्यं यज्ञायज्ञीयं पुच्छं धिष्ण्याश्शफास्सुपर्णोऽसि गरुत्मान् दिवं गच्छ
स्वः पत ॥ विष्णोः क्रमोऽसि सपत्नहा गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व विष्णोः क्रमो-
ऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनुविक्रमस्व विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं
छन्द आरोह दिवमनुविक्रमस्व विष्णोः क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु-
विक्रमस्व ॥ ८५-८६

---

[सँशितं मे ब्रह्म० । अथर्व ३,१९,१]

[८] मै. २,७,८ (९३—१०७)। वा. १२,१—१७,२१,२५,३३,४०; १०,२४; १७,७० । काण्व. १३,१-१८,२१,२३, ३४,४१; ११,३४; १८,७० । तै. सं ४,१,१०; ४,२,१ । मा. श्रौ. ६,१,३ । [**दृशानो रुक्म उर्विया०** । ऋ. १०,४५,८; तै. सं. १,३,१४,५; ४,१,१०,४; ४,२,२,४ । **नक्तोषासा समनसा०** । ऋ. १,९६,५; १,११३,३ (च.पा.)। तै. सं. ४,१,१०,४; ६,५,२; ७,१२,३ । **विश्वा रूपाणि०** । ऋ. ५,८१,२; तै. सं. ४,१,१०,४; नि. १२,१३ । **विष्णोः क्रमोऽसि सपत्नहा०** । अथर्व. १०,५,२५-३५ ]

अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ८७
अग्नेऽभ्यावर्तिन्नभि नो निवर्तस्वायुषा वर्चसा प्रजया धनेन सन्या मेधया ॥ ८८
अग्ने अङ्गिरश्शतं ते सन्त्वावृतस्सहस्रं त उपावृतः ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥ ८९
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यँहसः ॥ ९०
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ ९१
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् । विशस्त्वा सर्वा वाञ्छन्त्वस्मे राष्ट्रमधिश्रय ॥ ९२
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ९३
अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥ ९४
हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ९५
सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनां तपसा मार्चिषाभिशोचोऽन्तरस्याँ शुक्रज्योतिर्विभाहि ॥ ९६
अन्तरग्ने रुचा त्वमुखायाँ सदने स्वे । तस्यास्त्वँ हरसा तपञ्जातवेदश्शिवो भव ॥ ९७
शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशस्सर्वास्स्वं योनिमिहासदः ॥८॥ ९८

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जनते स्वाधीः ॥ ९९

---

[अक्रन्ददग्निस्तनयन्निव०। ऋ. १०,४५,४, तै. सं. १,३,१४,२; ४,२,१; २,२,२ । आ त्वाहार्षमन्तरभू०। ऋ. १०,१७३,१; अथर्व. ६,८७,१; तै. सं. ४,२,१,४, तै. ब्रा. २,४,२,८। उदुत्तमं वरुण पाश०। ऋ. १, २४,१५; अथर्व. ७,८३,३; १८,४,६९; तै. सं. १,५,११,३; ४,२,१,३; नि. २,१३ । अग्रे बृहन्नुषसामूर्ध्वो० । ऋ. १०,१,१; तै. सं. ४,२,१,४ । हँसश्शुचिषद्वसु०। ऋ० ४,४०,५; तै. सं, १,८,१५,२; ४,२,१,५; तै. आ. १०,१०,२ ]

[९.] मै. २,७,९ (१०८-११६)। वा. १२,१,६,१८—२८,३३ । काण्व. १३,१,७,१९-२९,३४ । तै. सं. ४,२,२ । मा. श्रौ. ६,१.३ । [दिवस्परि प्रथमं० । ऋ.१०,४५,१; तै. सं. १,३,१४,५; ४,२,२,१; नि. ४,२४]

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा तमुत्सं यत आजगन्थ विद्मा ते नाम परमं गुहा यत् ॥ १००
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवाँसमृतस्य योनौ महिषा अहिन्वन् ॥ १०१
अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ १०२
उशिक् पावको अरतिस्सुमेधा मर्त्येष्वग्निरमृतो निधायि ।
इयर्ति धूममरुषो भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ १०३
श्रीणमुदारो धरुणो रयीणां मनीषाणां प्रार्पणस्सोमगोपाः ।
वसुस्सूनुस्सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥ १०४
विश्वस्य जज्ञे भुवनस्य राजा रोदसी अपृणाज्जायमानः ।
वीडुं चिदद्रिरभिनत् परायञ्जना यदग्निमयजन्त पञ्च ॥ १०५
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि द्युम्नं देवहितं यविष्ठ्य ॥ १०६
आ तं भज सौश्रवसेष्वग्न उक्थ आभज शस्यमाने ।
प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १०७
दृशानो रुक्म उर्विया व्यद्यौद् दुर्मर्षमायुश्श्रिये रुचानः ।
अग्निरमृतो अभवत् सहोभिर्यदेनं द्यौरजनयत् सुरेताः ॥ १०८
त्वामग्ने यजमाना अनु द्यून् विश्वा वसु दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो अपव्रन् ॥९॥ १०९
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वँ सुप्रतीको विभावसुः ॥ ११०

[**विद्मा ते अग्ने त्रेधा०** । ऋ. १०,४५,२, तै. सं. ४,२,२,१ । **समुद्रे त्वा नृमणा०** । ऋ. १०,४५,३; तै. सं. ४,२,२,१ । **अक्रन्ददग्नि०** (अष्टमानुवाके द्रष्टव्यम्) । **उशिक् पावको०** । ऋ १०,४५,७; तै. सं. ४,२,२,२ । **श्रीणामुदारो धरुणो०** । ऋ. १०,४५,५, तै. सं. ४,२,२,३ । **विश्वस्य (केतु०) जज्ञे०** । ऋ. १०,४५,६; तै. सं. ४,२,२,२ । **यस्ते अद्य०** । ऋ. १०,४५,९; तै. सं. ४,२,२,३ । **आ तं भज०** । ऋ. १०,४५,१०; तै. सं. ४,२,२,३ । **दृशानो रुक्म०** । (अष्टमानुवाके द्रष्टव्यम्) । **त्वामग्ने यजमाना०** । ऋ. १०,४५,११; तै. सं. ४,२,२,४]

[१०] मै. २,७,१० (११८-१३०) । कपि. २५,१ । वा. ११,८३; १२,३०-४३; ३,१ । काण्व. १२,८४; १३,३१-४४; ३,१ । तै. सं. ४,२,३ । मा. श्रौ. ६,१,४]

प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन् मा हिँसीस्तन्वा प्रजाः ॥ १११
अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ११२
अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ११३
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥ ११४
प्र प्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिश्शिवो नः ॥ ११५
आपो देवीः प्रतिगृह्णीत भस्मैतत् स्योने कृणुध्वँ सुरभा उ लोके ।
तस्मै नमन्तां जनयस्सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम् ॥ ११६
अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ॥ ११७
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥ ११८
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सँसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासदः ॥ ११९
पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्याँ शिवतमः ॥ १२०
पुनरूर्जा सह रय्या ॥ १२१
बोधा मे अस्य वचसो यविष्ठ मँहिष्ठस्य प्रभृतस्य स्वधावः ।
निन्दति त्वो अनु त्वो गृणाति वन्दारुं ते तन्वं वन्दे अग्ने ॥ १२२
स बोधि सूरिर्मघवा वसुदावा वसुपतिः । युयोध्यस्मद् द्वेषाँसि ॥१०॥ १२३
अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥ १२४

---

[ **अक्रन्ददग्नि०।** (अष्टमानुवाके द्रष्टव्यम्) । **समिधाग्निं दुवस्यत०** । ऋ. ८,४४,१; तै. सं. ४,२,३,१; तै. ब्रा. १,२,१,९ । **प्र प्रायमग्निर्भरतस्य०** । ऋ. ७,८,४; तै. सं. २,५,१२,४, ४,२,३,२ । **अप्स्वग्ने सधिष्टव०** । ऋ. ८,४३,९; तै. सं. ४,२,३,२, ११,३ । **गर्भो अस्योषधीनां०।** अथर्व. ५,२५,७, ६,९५,३। **पुनरूर्जा सह रय्या०** । सा. १८३२,१८३३ । **बोधा मे अस्य०** । ऋ. १,१४७,२; तै. सं. ४,२,३,४; नि. ३,२० । **स बोधि सूरिर्मघवा०** । ऋ. २,६,४; तै. सं. ४,२,३,४ ]

[११] मै. २,७,११ (१३१-१४४) । कपि. २५,१ । वा. १२,४५-५३,५७-६१, ३,१४, ५,३, १५,५६;१७,६१ । काण्व. १३,४६-५४,५८-६२; ३,२०; ५,३; १६,७८; १८,६१ । तै. सं. ४,२,४-५ । मा. श्रौ. ६,१,५ । [ **अपेत वीत वि च०** । ऋ. १०,१४,९; अथर्व. १८,१,५५; तै. सं. ४,२.४,१; तै. ब्रा. १,२,१,१६; तै. आ. १,२७,५; ६,६,१ ]

संज्ञानमसि कामधरणं मयि ते कामधरणं भूयादग्नेर्भस्मास्यग्नेः पुरीषमसि चितस्स्थ परिचित ऊर्ध्वश्रितश्श्रयध्वम् ॥ १२५

अयँ सो अग्निर्यस्मिन् सोममिन्द्रस्सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिँ ससवान् सन् स्तूयसे जातवेदः ॥ १२६

अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये ।
यास्त्वावस्तादुपतिष्ठन्त आपो या वा परो रोचने सूर्यस्य ॥ १२७

अग्ने यत् ते दिवि वर्चः पृथिव्यां यत् पर्वतेष्वोषधीष्वप्सु ।
येनान्तरिक्षमुर्वाततन्थ त्वेषस्स भानुरर्णवो नृचक्षाः ॥ १२८

पुरीष्यासो अग्नयः प्रवणेन सजोषसः । जुषन्ताँ हव्यमाहुतमनमीवा इषो महीः ॥ १२९

इडामग्ने पुरुदँसँ सनिं गोश्शश्वत्तमँ हवमानाय साध ।
स्यान्नस्सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ १३०

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ १३१

चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद परिचिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ १३२

समितँ संकल्पेथाँ संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ ॥ १३३

सं वां मनाँसि सं व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥ १३४

अग्ने त्वं पुरीष्यो रयिमान् पुष्टिमाँ असि ।
शिवाः कृत्वा दिशस्सर्वास्स्वं योनिमिहासदः ॥ १३५

भवतं नस्समनसौ समोकसा अरेपसौ ।
मा हिँसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः ॥ १३६

---

[ अयँ सो अग्निर्यस्मिन्० । ऋ. ३,२२,१; तै. सं. ४,२,४,२ । अग्ने दिवो अर्णमच्छा० । ऋ. ३,२२,३; तै. सं. ४,२,४,२ । अग्ने यत्ते दिवि० । ऋ. ३,२२,२; तै. ब्रा. ४,२,४,२ । पुरीष्यासो अग्नयः । ऋ. ३, २२,४; तै. सं. ४,२,४,३ । इडा(ळा)मग्ने पुरुदँसँ० । ऋ, ३,१,२३; ५,११; ६,११; ७,११; १५,७; २२,५; २३,५; सा, ७६; तै. सं. ४,२,४,३ । अयं ते योनिर्ऋत्वियो० । ऋ. ३,२९,१०; अथर्व. ३,२०,१; तै. सं. १, ५,५,२; ४,२,४,३; ७,१३,५; तै. ब्रा. १,२,१,१६; २,५,८,८ । सं वां (वो) मनाँसि० । ऋ. परि. ३६,४; अथर्व. ६,९४,१]

मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योना अभारुखा ।
तां विश्वे देवा ऋतुभिस्संविदानाः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥११॥ १३७
यदस्य पारे रजसश्चित्रं ज्योतिरजायत । तन्नः पर्षदति द्विषोऽग्ने वैश्वानर द्युमत् ॥ १३८
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्विहि ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ १३९
यत् ते अस्मिन् घोर आसन् जुहोम्येषां बन्धानामवसर्जनाय कम् ।
यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिरिति त्वाहं परि वेद विश्वतः ॥ १४०
नमस्सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधि रोहयैनम् ॥ १४१
यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम् ।
तं ते विष्याम्यायुषो नु मध्येऽधा विषितः पितुमाद्धि प्रमुक्तः ॥ १४२
निवेशनस्संगमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥ १४३
सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया ॥ १४४
युनक्त सीरा वि युगा तनोत कृते योनिर्वपतेह बीजम् ।
गिरा च श्रुष्टिस्सभरा असन्नो नेदीय इत् सृण्यः पक्वमायत् ॥ १४५
पूषा युनक्तु सविता युनक्तु बृहस्पतिस्सविता देवो अग्निः ॥ १४६
शुनँ सुफाला वितुदन्तु भूमिँ शुनं कीनाशा अभियन्तु वाहैः ।
शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम् ॥ १४७
लाङ्गलं पवीरवँ सुशेवँ सोमपित्सरु ।
उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम् ॥ १४८
घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतं मरुद्भिः ।
ऊर्जो भागं मधुमत् पिन्वमानास्मान् सीते पयसाभ्याववृत्स्व ॥ १४९

---

[१२] मै. २,७,१२ (१४५-१६०) । कपि. २५,३ । वा. १२,६२-७३ । काण्व. १३,६३-७४ । [ तन्न (स नः)पर्षदति द्विषः० । ऋ. परि- १६,७; ३५,१ । नमस्सु ते निर्ऋते० । अथर्व. ६,६३,२-३; ६,८४,३-४ । यं ते(यत्ते) देवी० । अथर्व. ६,६३,१ । निवेशनस्संगमनो० (रायो बुध्नः)० । ऋ. १०,१३९.३; अथर्व १०,८,४२; तै. सं. ४,२,५,४ । सीरा युञ्जन्ति कवयो० । ऋ. १०,१०१,४ अथर्व. ३,१७,१; तै. सं. ४,२,५,५ । युनक्त सीरा वि युगा० । ऋ. १०,१०१,३; अथर्व. ३,१७,२; तै. सं. ४,२,५,५, नि. ५,२८ । शुनँ सु(नः)फाला० । ऋ. ४,५७,८; अथर्व. ३,१७,५; तै. सं. ४,२,५,६ । लाङ्गलं पवीरवँ० । अथर्व. ३,१७,३ । घृतेन सीता मधुना० । अथर्व. ३,१७,९ ]

विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारम् । ज्योतिरापाम ॥ १५०
कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥१२॥ १५१
या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहं शतं धामानि सप्त च॥१५२
शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृत॥१५३
पुष्पवतीः प्रसूमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥ १५४
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । रपाँसि विघ्नतीरित रक्षश्चातयमानाः ॥ १५५
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत् सनवाथ पूरुषम्॥ १५६
अश्वावतीँ सोमावतीमूर्जयन्तीमुदोजसम् । आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये॥१५७
यदोषधयस्समगमत राजानस्समिता इव । विप्रस्स उच्यते भिषग्रक्षोहामीवचातनः ॥ १५८
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनँ सनिष्यन्तीनामात्मानं तव पूरुष ॥ १५९
अति विश्वाः परिष्ठास्स्तेन इव व्रजमक्रमुः । ओषधयः प्राचुच्यवुर्यत् किंचित् तन्वो रपः॥१६०
यास्त आतस्थुरात्मानमाविविशुः परुष्परुः ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥ १६१
यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ १६२
निष्कृतिर्नाम वो माताथो त्वमसि निष्कृतिः ।
सराः पतत्रिणीस्स्थ यदामयति निष्कृत ॥ १६३
साकं यक्ष्म प्रपत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ १६४

[१३] मै २,७,१३ (१६६-१८१)। कपि. २५,४ । वा. १२ ७५-९४ । काण्व. १३,७६-९५ । तै. सं. ४,२,६ । मा. श्रौ. ६,१,६ । [ **या ओषधयः(ओषधी)०** । ऋ. १०,९७,१; तै. सं. ४,२,६,१; नि. ९,२८। **शतं वो अम्ब०**। ऋ. १०,९७,२; तै. सं. ४,२,६,१ । **पुष्पवतीः(ओषधीः)०** । ऋ. १०,९७,३; तै. सं. ४,२,६,१ । **ओषधीरिति मातरः०** । ऋ. १०,९७,४; तै. सं. ४,२,६,१; नि. ६,३ । **अश्वत्थे वो निषदनं०** । ऋ. १०,९७,५; तै सं ४,२,६,२ । **अश्वावतीं सोमावती०** । ऋ १०,९७,७; तै. सं. ४,२,६,४ । **यदोषधय(यत्रौषधीः)स्समगमत०** । ऋ. १०,९७,६; तै. सं. ४,२.६,२ । **उच्छुष्मा ओषधीनां०** । ऋ. १०,९७,८; तै. सं. ४,२,६,३। **अति विश्वाः परिष्ठा०** । ऋ. १० ९७,१०: तै. सं. ४,२,६.३ । **यास्त आतस्थु(यस्यौषधीः प्रसर्पथ)(०)**। ऋ. १०,९७,१२। **यदहं(यदिमा)वाजय०** । ऋ. १०,९७,११; तै. सं. ४,२,६,२; नि. ३,१५ । **निष्कृति(इष्कृ०)र्नाम वो०** । ऋ. १०,९७,९; तै. सं. ४,५,६,२ । **साकं यक्ष्म प्रपत०** । ऋ. १०,९७,१३; तै. सं. ४,२,६,४ ]

अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
तास्सर्वास्संविदाना इदं मे प्रावता वचः ॥ १६५
अवपतन्तीरवदन् दिवोऽन्तेभ्यस्परि । यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १६६
याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वँहसः ॥ १६७
याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वँहसः ॥ १६८
यास्सोमराज्ञीर्वरुणस्य राज्ञो यासां विश्वे देवा अधिपतयश्च सर्वे ।
या अन्तरिक्षे दिवि याः पृथिव्यां ता नस्स्तुता ओषधीः पारयन्तु ॥१३॥ १६९

मा नो हिँसीज्जनिता यः पृथिव्या यो दिवँ सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥ १७०
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितो अरोहत् ॥ १७१
अग्ने यत् ते शुक्रं यच्चन्द्रं यत् पूतं यच्च यज्ञियम् । तद्देवेभ्यो भरामसि ॥ १७२
इषमूर्जमहमित आदृतस्य योनिं महिषस्य धाराम् ।
आ नो गोषु विशत्वा तनूषु जहामि सेदिमानिराममीवाम् ॥ १७३
अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥ १७४
पावकवर्चाश्शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रः पितरा विचरन्नुपावसि पृणाक्षि रोदसी उभे ॥ १७५
ऊर्जो नपाज्जातवेदस्सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे विश्वे संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ १७६

---

[ अन्या वो अन्यामव० । ऋ १०,९७,१४; तै. सं. ४,२,६,३ । अवपतन्तीरवदन्० । ऋ १०,९७,१७; अथर्व. ६,१०९,२; तै. सं. ४,२,६,५ । याः फलिनीर्या० । ऋ १०,९७,१५; अथर्व. ६,९६,१; ७,११,१; ८,७,२७; १४,२,४५; तै. सं. ४,२,६,४ । याश्चेदमुपशृण्वन्ति० । ऋ. १०,९७,२१, तै. सं ४,२,६,५]

[१४] मै. २,७,१४ (१८४-१८७,१८९—१९६)। कपि. २५,५ । वा १२,१०२—११३ । काण्व १३,१०१—११२ । तै. सं. ४,२,७ । मा. श्रौ. ६,१,६ [ मा नो हिँसीज्जनिता० । ऋ. १०,१२१,९, तै सं. ४,२,८,१ । कस्मै देवाय०...वदेम । अथर्व. ४,२,१—८ । अग्ने तव श्रवो वयो० । ऋ. १०,१४०,१; सा. १८१६, तै. सं. ४,२,७,२ । पावकवर्चाश्शुक्रवर्चा० । ऋ. १०,१४०,२: सा. १८१७; तै. सं. ४,२,७,३ । ऊर्जो नपाज्जातवेदः० । ऋ. १०,१४०,३; सा. १८१८; तै. सं. ४,२,७,२ ]

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं रयिम् ॥ १७७
ऋतावानं महिषं विश्वदर्शतमग्निँ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णँ सप्रथस्तमं त्वा युजा विप्रासो मानुषा युगा ॥ १७८
निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तँ शवसे महे ।
रातिं वामस्य सुभगां महीमिषं पृणक्षि दर्शतं क्रतुम् ॥ १७९
आप्यायस्व समेतु ते विश्वतस्सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ १८०
सं ते पयाँसि समु यन्तु वाजास्सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व ॥१४॥ १८१
अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिणा प्रथस्व ॥ १८२
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतस्सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठास्सतश्च योनिमसतश्च वि वः ॥ १८३
हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १८४
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ १८५
नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि ।
ये अन्तरिक्षे ये दिवि तेभ्यस्सर्पेभ्यो नमः ॥ १८६
येषु वा यातुधाना ये वा वनस्पतीँरनु । येऽवटेषु शेरते तेभ्यस्सर्पेभ्यो नमः ॥ १८७

---

[**इरज्यन्नग्ने प्रथयस्व०** । ऋ. १०,१४०,४; सा. १८१९; तै. सं. ४,२,७,२ । **ऋतावानं महिषं०** । ऋ. १०, १४०,६. सा. १८२१; तै. सं. ४,२,७,३ । **नि(इ)ष्कर्तारमध्वरस्य०** । ऋ. १०,१४०,५; सा. १८२०: तै. सं. ४,२,७,३ । **आप्यायस्व समेतु०** । ऋ. १,९१,१६; ९,३१,४: तै. सं. ३,२,५,३; ४,२,७,४: ताण्ड्य ब्रा. १,५,८। **सं ते पयाँसि समु०** । ऋ. १,९१,१८; तै. सं ४,२,७,४ ]

[१५] मै. २,७,१५ (१९७—१९८, २००-२११) । वा. १३,२—१३: २३,१; २५,१० । काण्व. १४,२—१५; २५,१; २७,१४ । तै. सं ४,२,८,९; १,२,१४ । मा. श्रौ. ६,१,७ । [**ब्रह्म जज्ञानं प्रथमं०** । अथर्व. ४,१,१: ५,६,१ । **हिरण्यगर्भः समवर्तताग्रे०** । ऋ. १०,१२१,१: अथर्व. ४,२,७, तै. सं ४,१,८,३; २.८,२; ताण्ड्य ब्रा. ९,९, १२; नि. १०,२३ । **द्रप्सश्चस्कन्द पृथिवी०** । ऋ. १०,१७,११; अथर्व. १८,४,२८; तै. सं. ३,१,८,३; ४,२,८,२; ९,५; तै. आ. ६,६,१ । **नमो अस्तु सर्पेभ्यो०** । ऋ. परि. १५,११ । **येषु(या)वा(इषवो)यातुधाना०** । ऋ. परि. १५,१० ]

ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
येऽप्सु सदाँसि चक्रिरे तेभ्यस्सर्पेभ्यो नमः ॥ १८८
कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १८९
तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूँष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥ १९०
प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशँसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ १९१
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ १९२
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥ १९३
अग्नेस्त्वा तेजसा सादयामीन्द्रस्य त्वौजसा सादयामि ॥ १९४
अयमग्निस्सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ १९५
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥१५॥ १९६
ध्रुवासि धरुणास्तृता विश्वकर्मणा मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृँह
प्रथोऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ १९७
काण्डात् काण्डात् प्ररोहन्ती परुषस्परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ १९८
या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्मै ते देवीष्टके विधेम हविषा वयम् ॥ १९९

---

[ ये वादो(ऽदो)रोचने दिवो० । ऋ परि. १५,९ । कृणुष्व पाजः प्रसितिं० । ऋ. ४,४,१; तै सं. १,२,१४,१; नि. ६,१२ । तव भ्रमास आशुया० । ऋ ४,४,२; तै. सं. १,२.१४,१ । प्रति स्पशो विसृज० । ऋ. ४,४,३; तै. सं. १,२,१४,१ । उदग्ने तिष्ठ प्रत्यातनुष्व० । ऋ. ४,४,४; तै. सं. १,२,१४,२ । ऊर्ध्वो भव प्रतिविध्या० । ऋ. ४,४,५; अथर्व. १३,१,३ । तै सं. १,२,१४,२ । अयमग्निस्सहस्रिणो० । ऋ ८,७५,४; तै. सं. २,६,११, १; ४,४,४,१ । भुवो यज्ञस्य रजसश्च० । ऋ. १०,८,६; तै. सं. ४,४,४,१; तै. ब्रा. ३,५,७,१ ]

[१६] मै. १,२,१४, २.७,१६—१७ (९७; ११२,११४—११९,१२५,१३७—१३८) । वा. १३,१६—२४,३१-३३, ३८—४०; ८,३२; ६,४ । काण्व. १४,१६—२४,२७—२८,३४—३५,४०—४२; ९,३१; ६,५ । तै. सं. ४,२, ९ । मा. श्रौ. ६,१,७]

यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥ २००
या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिस्सर्वाभी रुचं नो धत्त बृहस्पते ॥ २०१

विराड् ज्योतिरधारयत् स्वराड् ज्योतिरधारयदषाढासि सहमाना सहस्वारातिं सहस्व पृतनायत-
स्सहस्रवीर्यासि सा मा जिन्व ॥ २०२

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ २०३
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यस्सखा ॥ २०४
सरित् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये अग्नेः ॥ २०५

ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वाभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य
चाग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान् ध्रुवासि धरुणा सहस्रदा असि सहस्राय
त्वा ॥१६॥ २०६

आदित्यं गर्भं पयसा समञ्जन् सहस्रस्य प्रतिमां विश्वरूपम् ।
परिवृङ्धि हरसा माभिमंस्थाश्शतायुषं कृणुहि चीयमानः ॥ २०७
वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानं सरिरस्य मध्ये ।
शिशुं नदीनां हरिमद्रिबुध्नमग्ने मा हिंसीः परमे व्योमन् ॥ २०८
अजस्रमिन्द्रमरुषं भुरण्युमग्निमीडे पूर्वचित्तिं नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानस्स गां मा हिंसीरदितिं विराजम् ॥ २०९
वरुत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानां रजसः परस्मात् ।
महीं साहस्रीमसुरस्य मायां तामग्ने हेडः परि ते वृणक्तु ॥ २१०
यो अग्निरग्नेस्तपसोऽधि जातश्शोकात् पृथिव्या उत वा दिवस्परि ।
येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥ २११

---

[**मही द्यौः पृथिवी च०** । ऋ. १,२२,१३; तै. सं ३,३,१०,२; ५,११,३; ४,२,९,३ । **विष्णोः कर्माणि पश्यत०** । ऋ, १,२२,१९; सा. १६७१; अथर्व. ७,२६,६, तै. सं. १,३,६,२ । **सरित् (सम्यक्) स्रवन्ति सरितो०** । ऋ. ४,५८,६; तै. सं. ४,२,९,६]

[१७] मै. २,७,१७(२३९—२४६) । कपि. २५,८ । वा १३,४१ - ४५,४७—५१ । काण्व. १४,४३-४७,४९-५३ । तै. सं. ४,२,९—१० । मा श्रौ ६;१,७]

इमं मा हिँसीद्विपादं पशूनाँ सहस्राक्ष मेध आ चीयमानः ।
मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो निषीद ॥ २१२
मयुं ते क्षुधं द्विष्मस्तं ते शुगृच्छतु ॥ २१३
इमं मा हिँसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ २१४
गौरं ते क्षुधं द्विष्मस्तं ते शुगृच्छतु ॥ २१५
इमँ साहस्रँ शतधारमुत्सं व्यच्यमानँ सरिरस्य मध्ये ।
घृतं दुहानामदितिं जनायाग्ने मा हिँसीः परमे व्योमन् ॥ २१६
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ २१७
गवयं ते क्षुधं द्विष्मस्तं ते शुगृच्छतु ॥ २१८
इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिँसीः परमे व्योमन् ॥ २१९
मेषमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ २२०
मेषं ते क्षुधं द्विष्मस्तं ते शुगृच्छतु ॥ २२१
अजो ह्यग्नेरजनिष्ट शोकात् सो अपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुप मेध्यासः ॥ २२२
शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ २२३
शरभं ते क्षुधं द्विष्मस्तं ते शुगृच्छतु ॥१७॥ २२४

अपां त्वेमन् सादयाम्यपां त्वोद्मन् सादयाम्यपां त्वा भस्मनि सादयाम्यपां त्वा ज्योतिषि साद-
याम्यपां त्वायने सादयाम्यर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने
सादयाम्यपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयाम्यपां त्वा सदने सादयाम्यपां त्वा सधस्थे
सादयाम्यपां त्वा योनौ सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा पाथिषि सादयामि गायत्रेण
त्वा छन्दसा सादयामि त्रैष्टुभेन जागतेनानुष्टुभेन पाङ्क्तेन त्वा छन्दसा सादयामि ॥१८॥ २२५

अयं पुरो भूस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्या गायत्रं
गायत्रादुपाँशुरुपाँशोस्त्रिवृत् त्रिवृतो रथन्तरं वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि

[अजो ह्यग्नेरजनिष्ट० । अथर्व. ४,१४,१, ९,५,१३ ]

[१८] मै. २,७,१८ (१४७)। कपि. २५,९ । वा. १३,५३ । काण्व १४,५५ । तै. सं ४,३,१ । मा. श्रौ. ६,१,८ ।

[१९] मै. २,७,१९; २,८,१ (१४८; १-२) । कपि. २५,९ । वा. १२,५४-५५, १३,५४-५८; १५,५९-६० । काण्व. १३,५५-५६; १४,५६-६५; १६,८०-८१ । तै सं. ४,३,२।

प्रजाभ्योऽयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुब् ग्रैष्मी त्रिष्टुभस्स्वारँ स्वारादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद्बृहद्भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्योऽयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्समम्ऋक्समाच्छुक्रश्शुक्रात् सप्तदशस्सप्तदशाद्वैरूपं जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य इदमुत्तरात् स्वस्तस्य श्रोत्रँ सौवँ शरच्छ्रौत्र्यनुष्टुप् शारद्यनुष्टुभ ऐडमैडान्मन्थी मन्थिन एकविँश एकविँशाद्वैराजं विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्य इयमुपरि मतिस्तस्या वाङ् मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती पङ्क्त्या निधनवन्निधनवत आग्रायण आग्रायणात् त्रिणवत्रयस्त्रिँशौ त्रिणवत्रयस्त्रिँशाभ्याँ शाक्वररैवते विश्वकर्मर्षिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ॥ २२६

लोकं पृण च्छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योना असीषदन् ॥ २२७
ता अस्य सूददोहसस्सोमँ श्रीणन्ति पृश्नयः ।
जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः ॥१९॥ २२८
समिद्धो अद्य मनुषा दुरोणे देवो देवान् यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥ २२९
तनूनपात् पथ ऋतस्य यानान्मध्वा समञ्जन् स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥ २३०
आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिस्सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥ २३१
प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ २३२
व्यचस्वतीरुर्विया विश्रयन्तां पतिभ्यो न जनयश्शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ २३३

---

[ता अस्य सूददोहस० । ऋ. ८,६९,३, तै. सं. ४,२,४,४, तै. ब्रा. ३,११,६,२ ]

[२०] मै. ४,१३,३; ५(११-१२,१४-२१; ३४)। वा. २९,२५-२६,२८-३६। काण्व.३१,३७-३८,४०-४८। [समिद्धो अद्य मनुषो० । ऋ. १०,११०,१; अथर्व. ५,१२,१; तै. ब्रा. ३,६,३,१; नि. ८,५ । तनूनपात्पथ ऋतस्य० । १०,११०,२; अथर्व. ५,१२,२; तै. ब्रा. ३,६,३,१; नि. ८,६ । आजुह्वान ईड्यो० । ऋ. १०,११०,३; अथर्व. ५,१२,३; तै. ब्रा. ३,६,३,२ । नि. ८,८। प्राचीनं बर्हिः प्रदिशा०। ऋ. १०,११०,४; अथर्व. ५,१२,४; तै. ब्रा. ३,६,३,२; नि. ८,९ । व्यचस्वतीरुर्विया० । ऋ. १०,११०,५; अथर्व. ५,१२,५; तै. ब्रा. ३,६,३,३; नि. ८,१०]

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियँ शुक्रपिंशं दधाने ॥ २३४

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ २३५

आ नो यज्ञं भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदँ स्योनँ सरस्वती स्वपसस्सदन्तु ॥ २३६

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥ २३७

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवीँषि ।
वनस्पतिश्शमिता देवो अग्निस्स्वदन्तु हव्यं मधुना घृतेन ॥ २३८

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतँ हविरदन्तु देवाः ॥२०॥ २३९

अग्निर्होता नो अध्वरे वाजी सन् परिणीयते । देवो देवेषु यज्ञियः ॥ २४०

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ २४१

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ २४२

अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यावाट् प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुप प्रेष्य होतर्हव्या देवेभ्यो दैव्याश्शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना मेधपतये मेधं प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता

[आ सुष्वयन्ती यजते० । ऋ. १०,११०,६; अथर्व ५,१२,६; तै. ब्रा. ३,६,३,३; नि. ८,११ । दैव्या होतारा प्रथमा०। ऋ. १०,११०,७; अथर्व. ५,१२.७, तै. ब्रा. ३,६,३,३, नि. ८,१२। आ नो यज्ञं भारती०। ऋ. १०,११०,८, अथर्व. ५,१२,८; तै. ब्रा. ३,६,३,४; नि. ८,१३ । य इमे द्यावापृथिवी० । ऋ. १०,११०, ९; अथर्व. ५,१२,९; तै. ब्रा. ३,६,३,४; नि. ८,१४ । उपावसृज त्मन्या० । ऋ १०,११०,१०, अथर्व. ५, १२,१०; तै. ब्रा. ३,६,३,४, नि. ८,१७ । सद्यो जातो व्यमिमीत० । ऋ. १०,११०,११; अथर्व. ५,१२,११; तै. ब्रा. ३,६,३,४; नि. ८,२१ ]

[२१] मै. ४,१३,४-५(२२-३३)। वा. ११,२५; ४,१०, १,१५; २१,४१ । काण्व. १२,२५; ४,२६, १,२२ २३,४२; तै. ब्रा. ३,६,४,६; ७-९ । [अग्निर्होता नो अध्वरे० । ऋ. ४,१५,१; तै. ब्रा. ३,६,४,१ । परि त्रिविष्ट्यध्वरं० । ४,१५,२; तै. ब्रा. ३,६,४,१ । परि वाजपतिः० । ऋ. ४,१५,३; सा. ३०; तै. सं. ४,१,२,५; तै. ब्रा. ३,६,४,१। अजैदग्निरसद्वाजं । तै. ब्रा. ३,६,५ । स्तृणीत बर्हिः० । ऋ. १,१३,५ ]

संगभ्योंऽनु सखा संयूथ्यः ॥ उदीचीनाँ अस्य पदः कृणुतात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं पृथिवीँ शरीरमेकधास्य त्वचमाच्छयतात् पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वाच्छ्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपेवाँसाच्छिद्रे श्रोणी कवषोरूस्रे कपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठुयोच्च्यावयाद्गात्रं गात्रमस्यानूनं कृणुतादूवध्यगोहं पार्थिवं खनतादस्ना रक्षस्सँसृजताद्वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवदध्रिगो शमीध्वँ सुशमि शमीध्वँ शमीध्वमध्रिगो ॥ २४३--२४४

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनि ॥ २४५

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥ २४६

घृतवन्तः पावक ते स्तोकाश्श्चोतन्ति मेदसः ।
स्वधर्मन् देववीतये श्रेष्ठं नो धेहि वार्यम् ॥ २४७

तुभ्यँ स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।
ऋषिश्श्रेष्ठस्समिध्यसे यज्ञस्य प्राविता भव ॥ २४८

तुभ्यँ श्चोतन्त्यध्रिगो शचीवस्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥ २४९

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान् देवशो विहि ॥ २५०

होता यक्षद्बृहस्पतिं छागस्य वपाया मेदसो जुषताँ हविर्होतर्यज होता यक्षदश्विना छागस्य वपाया मदसो जुषताँ हविर्होतर्यज होता यक्षत् सरस्वतीं मेष्या वपाया मेदसो जुषताँ हविर्होतर्यज होता यक्षदिन्द्रं मेषस्य वपाया मेदसो जुषताँ हविर्होतर्यज ॥२१॥ २५१

[११८९]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामग्निवीशिका नाम षोडशं स्थानकं संपूर्णम् ॥१६॥

---

[ उदीचीनाँ० । ऐ ब्रा. २,६ । जुषस्व सप्रथस्तमं० । ऋ. १,७५,१; तै. ब्रा. ३,६,७,१ । इमं नो यज्ञममृतेषु० । ऋ ३,२१,१, तै. ब्रा. ३,६,७,१ । घृतवन्तः पावक ते० । ऋ. ३,२१,२; तै. ब्रा. ३,६,७,१ । तुभ्यं स्तोका घृतश्चुतो० । ऋ. ३,२१,३; तै. ब्रा. ३,६,७,२ । तुभ्यं श्चोतन्त्यध्रिगो० । ऋ. ३,२१,४; तै. ब्रा. ३,६,७,२। ओजिष्ठं मे मध्यतो० । ऋ. ३,२१,५; तै. ब्रा. ३,६,७,२ ]

अथ सप्तदशं स्थानकम्।

## ध्रुवक्षितिः।

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साध्या।
उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वा॥ १
कुलायिनी घृतवती पुरंधिस्स्योने सीद सदने पृथिव्याः।
अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा॥ २
स्वैर्दक्षैर्दक्षपितेह सीद देवानाँ सुम्ने बृहते रणाय।
पितेवैधि सूनव आ सुशेवस्स्वावेशया तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा॥ ३
अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा॥ ४
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशाम्॥ ५
अधिपत्नीं भुवनानामूर्मिर्द्रप्सो अपामसि।
विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा॥ ६

सजूरृतुभिस्सजूर्विधाभिस्सजूर्देवैस्सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह
त्वा॥ सजूरृतुभिस्सजूर्विधाभिस्सजूर्वसुभिस्सजू रुद्रैस्सजूरादित्यैस्सजूर्विश्वैर्देवैर्वयोनाधैरग्नये त्वा
वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा॥ प्राणं मे पाहि व्यानं मे पाह्यपानं मे पाहि चक्षुर्म उर्विया
विभाहि श्रोत्रं मे श्लोकयापः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात् पाहि दिवो वा वृष्टिमेरय॥१॥
७-९

त्रियविर्वयो गायत्री छन्दो दित्यवाड् वयस्त्रिष्टुप् छन्दः पञ्चाविर्वयो विराट् छन्दस्त्रिवत्सो वय
उष्णिहा छन्दस्तुर्यवाड् वयोऽनुष्टुप् छन्दः पष्ठवाड्वयो बृहती छन्द उक्षा वयः ककुप् छन्दो धेनुर्वयो
जगती छन्दोऽनड्वान् वयः पङ्क्तिश्छन्द ऋषभो वयस्सतोबृहती छन्दो बस्तो वयो युवलं छन्दो
वृष्णिर्वयो विशालं छन्दो व्याघ्रो वयोऽनाधृष्यं छन्दस्सिंहो वयश्छादिश्छन्दः पुरुषो वयस्तन्द्रं छन्दः
क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयोऽधिपतिश्छन्दो मूर्धा वयः प्रजापतिश्छन्दो विश्वकर्मा वयः
परमेष्ठी छन्दः॥२॥ १०

---

[१] मै. २,८,१-२ (३-९)। कपि. २५,१०। वा. १४,१—५,७—८। काण्व. १५,१—८। तै. सं. ४,३,४। मा. श्रौ. ६,२,१।

[२] मै. २,८,२ (९)। कपि. २६,१। वा. १४,९—१०। काण्व. १५,९—१३। तै. सं. ४,३,४—५।

इन्द्राग्नी अव्यथमानामिष्टकां दृँहतं युवम् ।
पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥ ११

राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगाधिपत्न्यसि बृहती दिगायुर्मे पाहि प्राणं मे पाहि व्यानं मे पाह्यपानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि मनो मे पिन्व वाचं मे जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ मा छन्दः प्रमा छन्दः प्रतिमा छन्दोऽस्रीवयश्छन्दः पङ्क्तिश्छन्दः उष्णिहा छन्दोऽनुष्टुप्छन्दो विराट् छन्दो बृहती छन्दो गायत्री छन्दस्त्रिष्टुप् छन्दो जगती छन्दः पृथिवी छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दस्समा छन्दो नक्षत्राणि छन्दो वाक् छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दोऽजा छन्दोऽश्वश्छन्दोऽग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वे देवा देवतेन्द्रो देवता वरुणो देवता बृहस्पतिर्देवता मूर्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरण्यायुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्रीषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ॥३॥ १२

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशोऽभीवर्तस्सविंशो धरुण एकविंशो वर्चो द्वाविंशस्संभरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भाः पञ्चविँश ओजस्त्रिणवः क्रतुरेकत्रिंशः प्रतिष्ठा त्रयस्त्रिंशो ब्रध्नस्य विष्टपं चतुस्त्रिंशो नाकष्षट्त्रिंशो वीवर्तो अष्टाचत्वारिंशो धर्त्रं चतुष्टोमोऽग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोम इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रँ स्पृतं पञ्चदशस्स्तोमो नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रँ स्पृतँ सप्तदशस्स्तोमो मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वातस्पृत एकविंशस्स्तोमो वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विंशस्स्तोम आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भास्स्पृताः पञ्चविंशस्स्तोमोऽदित्या भागोऽसि पूष्ण आधिपत्यमोजस्स्पृतं त्रिणवस्स्तोमो देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यँ समीचीर्दिशस्स्पृताश्चतुष्टोमस्स्तोमो यवानां भागोऽस्ययवानामाधिपत्यं प्रजास्स्पृताश्चतुश्चत्वारिंशस्स्तोम ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तं त्रयस्त्रिंशस्स्तोमः ॥४॥ १३

एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत् तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत् सप्तभिरस्तुवत सप्तर्षयो-

---

[३] मै. २,८,३ (१०—११) । कपि. २६,२ । वा. १४,११,१३,१९—२२ । काण्व. १५,१४,१६—२४ । तै. सं. ४,३,६—७ । मा. श्रौ. ६,२,१ ।

[४] मै. २,८,४—५ (१२—१३) । कपि. २६,३ । वा. १४,२३—२६ । काण्व. १५,२५—३१ । तै. सं. ४,३,८-९। मा. श्रौ. ६,२,१ ।

[५] मै. २,८,६(१४)। कपि. २६,४ । वा. १४,२८—३१ । काण्व. १५,३२-३५ । तै. सं. ४,३,१० । मा. श्रौ ६,२,१।

ऽसृज्यन्त धाताधिपतिरासीन्नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुव-
तार्तवा असृज्यन्तर्तवोऽधिपतय आसँस्त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत्
पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधि-
पतिरासीन्नवदशभिरस्तुवत शूद्रार्यां असृज्येतामहोरात्रे अधिपत्नी आस्तामेकविँशत्यास्तुवतैकशफाः
पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत् त्रयोविँशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत्
पञ्चविँशत्यास्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत् सप्तविँशत्यास्तुवत द्यावापृथिवी व्यैतां
वसवो रुद्रा अनुव्यायँस्त एवाधिपतय आसन्नवविँशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपति-
रासीदेकत्रिँशतास्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतय आसँस्त्रयस्त्रिँशतास्तुवत भूतान्यशा-
म्यत् प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥५॥ १४

अग्ने जातान् प्रणुदा नस्सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमना अहेडञ्शर्मन्ते स्याम त्रिवरूथ उद्भौ ॥ १५

सहसा जातान् प्रणुदा नस्सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमानो वयँ स्याम प्रणुदा नस्सपत्नान् ॥ १६

चतुश्चत्वारिँशस्स्तोमो वर्चो द्रविणँ षोडशस्स्तोम ओजो द्रविणम् ॥ १७

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥ १८

एवश्छन्दो वरिवश्छन्दश्शम्भूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दस्सिन्धु-
श्छन्दस्समुद्रं छन्दस्सरिरं छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यं छन्दोऽङ्कुपं छन्दः क्षुरो भ्रज-
श्छन्दोऽक्षरपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्द आच्छच्छन्दः प्रच्छच्छन्दस्संय-
च्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरं छन्दो निकायं छन्दो वीवधश्छन्दो गिरश्छन्दो भ्राजश्छन्द-
स्सँस्तुप्छन्दोऽनुष्टुप्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विशालं छन्दो विष्प-
र्धाश्छन्दश्छादिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दो अङ्कङ्कं छन्दः ॥६॥ १९

रश्मिरसि क्षयाय त्वा क्षयं जिन्व प्रेतिरसि धर्मणे त्वा धर्म जिन्वान्वितिरसि दिवे त्वा दिवं
जिन्व संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व विष्टम्भोऽसि
वृष्ट्यै त्वा वृष्टिं जिन्व प्रवास्यह्ने त्वाहर्जिन्वानुवासि रात्र्यै त्वा रात्रीं जिन्वोशिगसि वसुभ्यस्त्वा

[६] मै. २,८,७ (१५—१९)। कपि. २६,५। वा. १५,१-५। काण्व. १६,१—८। तै. सं. ४,३,१२। मा. श्रौ. ६,२,२। [अग्ने जातान् प्रणुदा०। अथर्व. ७,३४,१। सहसा जातान् प्रणुदा०। अथर्व. ७,३५,१ ]

[७] मै. २,८,८(२०)। कपि. २६,६। वा. १५,६-७,९। काण्व. १६,९-१२,१४-१५। तै. सं. ४,४,१। मा. श्रौ. ६,२,२।

वसूञ्जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वौजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्व रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वाधिपतिरसि प्राणाय त्वा प्राणं जिन्व धरुणोऽस्यपानाय त्वापानं जिन्व सँसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व त्रिवृदसि त्रिवृते त्वा सवृदसि सवृते त्वा प्रवृदसि प्रवृते त्वानूवृदस्यनूवृते त्वा सँरोहोऽसि विरोहोऽसि प्ररोहोऽस्यनूरोहोऽसि वसुकोऽसि वस्यष्टिरसि वेषश्रीरसि देवस्य सवितुः प्रसवे बृहस्पतये स्तुत ॥७॥ २०

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा स्तोमः पृथिव्याँ श्रयत्वाज्यमुक्थमव्यथाय स्तभ्नातु रथन्तरँ साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्याँ श्रयतु प्रउगमुक्थमव्यथाय स्तभ्नातु बृहत् साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयस्सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्याँ श्रयतु मरुत्वतीयमुक्थमव्यथाय स्तभ्नातु वैरूपँ साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु स्वराडस्युदीची दिङ् मरुतस्ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकविँशस्त्वा स्तोमः पृथिव्याँ श्रयतु निष्केवल्यमुक्थमव्यथाय स्तभ्नातु वैराजँ साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्वधिपत्न्यसि बृहती दिग्विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिँशौ त्वा स्तोमौ पृथिव्याँ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथाय स्तभ्नीतां शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥८॥ २१

अयं पुरो हरिकेशस्सूर्यरश्मिस्तस्य रथकृत्सश्च रथौजाश्च सेनानीग्रामण्यौ पुञ्जिगस्थला च कृतस्थला

---

[८] मै. २,८,९(२१)। कपि २६,७। वा १५,१०—१४। काण्व. १६,१६—३०। तै. सं. ४,४,२। मा. श्रौ. ६,१,२१

[९] मै. २,८,१० (२२)। कपि. २६,८। वा. १५,१५—१९; १६,६४—६६। काण्व. १६,३१—४०; १७,६४। तै. सं ४,४,३। मा. श्रौ. ६,२,२।

चाप्सरसौ यातुधाना हेती रक्षाँसि प्रहेतिस्ते नः पान्तु ते नोऽवन्तु ते यं द्विष्मो यश्च नो
द्वेष्टि तमेषां जम्भे दधाम्ययं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ मेनका
च सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्ते नः पान्तु ते नोऽवन्तु
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्ययं पश्चाद्विद्वसुस्तस्य रथप्रोतश्चासमरथश्च सेनानी-
ग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिस्सर्पाः प्रहेतिस्ते नः पान्तु ते नोऽवन्तु
ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्ययमुत्तरात् संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानी-
ग्रामण्यौ विश्वाची च घृताची चाप्सरसा आपो हेतिर्वातः प्रहेतिस्ते नः पान्तु ते नोऽवन्तु ते यं
द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्ययमुपर्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्या
उर्वशी च पूर्वचित्तिश्चाप्सरसा अवस्फूर्जद्धेतिर्विद्युत् प्रहेतिस्ते नः पान्तु ते नोऽवन्तु ते यं द्विष्मो
यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥९॥ २२

आयोस्त्वा सदने सादयाम्यवतश्छायायां नमस्समुद्राय नमस्समुद्रस्य चक्षसे ॥ २३
प्रोथदश्वो न यवसेऽविष्यन् यदा महस्संवरणे व्यस्थात् ।
आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनमस्तु कृष्णम् ॥ २४

प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय व्यानायापानाय विश्वं
ज्योतिर्यच्छाग्निष्टेऽधिपतिर्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय
व्यानायापानाय विश्वं ज्योतिर्यच्छ वायुष्टेऽधिपतिः परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं
विश्वस्मै प्राणाय व्यानायापानाय विश्वं ज्योतिर्यच्छ सूर्यस्तेऽधिपतिर्मधुश्च माधवश्च वासन्तिका ऋतू
अग्नेरन्तश्श्लेषोऽसि ॥ २५

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥ २६
येऽग्नयस्समनसोऽन्तरा द्यावापृथिवी ।
इमे वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥ २७

शुक्रश्च शुचिश्च ग्रैष्मा ऋतू नभश्च नभस्यश्च वार्षिका ऋतू इषश्चोर्जश्च शारदा ऋतू सहश्च सह-
स्यश्च हैमन्तिका ऋतू तपश्च तपस्यश्च शैशिरा ऋतू अग्नेरन्तश्श्लेषोऽसि ॥ २८

---

[ते नोऽवन्तु० । अथर्व. ३,२७,१—६ ।
[१०] मै. २,८,१२,१४ (१४-२९,३१-३३) । कपि. २६,९ । वा. १३,२४-२५, १४,६,१५-१६,२७, १५,५७-५८, ६२-६५; १७,२—३ । काण्व. १४,१४—१६; १५,५,१५—१६,३१, १६,७९,८३—८५, १८,२—४ । तै. सं. ४,४,११ । मा. श्रौ. ६,६,१ । [प्रोथदश्वो न० । ऋ. ७,३,२, सा. १२२०; तै. सं. ४,४.३,३ ]

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥ २९
येऽग्नयस्समनसोऽन्तरा द्यावापृथिवी ।
इमे शैशिरा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥ ३०

सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोऽसि सहस्राय त्वेमा मे अग्न इष्टका धेनवस्सन्त्वेका च दश च दश च शतं च शतं च सहस्रं च सहस्रं चायुतं चायुतं च प्रयुतं च प्रयुतं च नियुतं च नियुतं चार्बुदं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्च ता मे अग्न इष्टका धेनवस्सन्त्वृतवस्थ ऋतावृध ऋतुष्ठास्थर्तुस्पृशो घृतश्चुतो मधुश्चुत ऊर्जस्वतीस्स्वधायिनीर्विराजो नाम कामदुघास्ता मे अग्न इष्टका धेनवस्सन्तु ॥१०॥ ३१

तत् पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३२
नमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः । उतो त इषवे नमः ॥ ३३
या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशीहि ॥ ३४
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ३५
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नस्सर्वमिज्जगदयक्ष्मँ सुमना असत् ॥ ३६
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहीँश्च सर्वाञ्जम्भय सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ ३७
असौ यस्ताम्रो अरुण उत बभ्रुस्सुमङ्गलः ।
ये चेमे रुद्रा अभितो दिक्षु श्रितास्सहस्रशोऽवैषाँ हेड ईमहे ॥ ३८
असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः ।
उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥ ३९
नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ ४०

---

[ सहस्रं च०...चार्बुदं च । ऋ. परि. ३३,७ (द्वि. पा.) ।
[११] मै. २,९,१—२ (३,१४—२८) । कपि. २७,१ । वा. १६,१—१४ । काण्व. १७,१—१४ । तै.सं. ४,५,१ । मा श्रौ. ६,२,४ । [ यथा नस्सर्वमिज्ज० । ऋ. १०,१४१,४: अथर्व. ३,२०,६ । अहींश्च सर्वाञ्जम्भय० । ऋ १,१९१,८; अथर्व. ४,९,९ ]

प्रमुश्च धन्वनस्त्वमुभयोरात्न्योंज्र्याम् । यांश्च ते हस्त इषवः परा तां भगवो वप ॥ ४१
विज्यं धनुः कपर्दिनो विशल्यो बाणवानुत । अनेशन्नस्येषव आभूरस्य निषङ्गथिः ॥ ४२
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान् विश्वतस्त्वमयक्ष्मेण परिभुज ॥ ४३
परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥ ४४
नमाँसि त आयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ ४५
अवतत्य धनुस्त्वँ सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखँ शिवो नस्सुमना भव ॥ ४६
या त इषुश्शिवतमा शिवँ बभूव ते धनुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ॥११॥ ४७

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमश्शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतस्पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमस्सूतायाहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम आक्रन्दयत उच्चैर्घोषाय सत्त्वानां पतये नमो नमः कृत्स्नवीताय धावते पत्तीनां पतये नमो नमस्सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचराय परिचरायारण्यानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमस्सृकायिभ्यो जिघाँसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः॥१२॥४८

नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमस्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमश्शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमस्सभाभ्यस्सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमो नम उगणाभ्यस्तृँहतीभ्यश्च वो नमो नमो व्रातेभ्यो

[११] मै. २,९,३ (२९)। कपि. २७,३ । वा. १६,१७-२२ । काण्व. १७,१७—२२ । तै. सं. ४,५,२—३ ।
[१२] मै. २,९,४—५ (३०—३१)। कपि. २७,३ । वा. १६,२२—२९ । काण्व. १७,२२—२९ । तै. सं. ४,५,३-५ । मा. श्रौ. ६,२,४ ।

व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमस्सेनाभ्यस्सेनानिभ्यश्च वो नमो नमो रथिभ्यो वरूथिभ्यश्च वो नमो नमो महद्भ्योऽर्भकेभ्यश्च वो नमो नमो युवभ्य आशिनेभ्यश्च वो नमो नमः क्षत्तृभ्यस्संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो नमश्श्वनिभ्यो मृगयुभ्यश्च वो नमो नमश्श्वभ्य-श्श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमश्शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमो व्युप्तकेशाय च कपर्दिने च नमस्सहस्राक्षाय च शतधन्वने च ॥१३॥ ४९

नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृध्वने च नमोऽग्र्याय च प्रथमाय च नम आशवे चाजिराय च नमश्शीभाय च शीघ्र्याय च नम ऊर्म्याय चावस्वन्याय च नमो नाद्याय च द्वीप्याय च नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो बुध्याय च जघन्याय च नमस्सोभ्याय च प्रतिसर्याय च नम आशुषेणाय चाशुरथाय च नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमश्शूराय चावभेदिने च नमश्श्रुताय च श्रुतसेनाय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय खल्याय च नमश्श्लोक्याय चावसान्याय च नमश्श्रवाय च प्रतिश्रवाय च नमो वन्याय च कक्ष्याय च नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमस्स्वायु-धाय च सुधन्वने च ॥१४॥ ५०

नमस्स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमो नाद्याय च वैशन्ताय च नमः कुल्याय च सरस्याय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नमो वीध्र्याय चातप्याय च नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमस्सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमश्शंगवे च पशुपतये च नम उग्राय च भीमाय च नमो हन्त्रे च हनीयसे च नमोऽग्रेवधाय च दूरेवधाय च नमो वृक्षेभ्यो हरि-केशेभ्यो नमस्ताराय नमश्शंभवे च मयोभवे च नमश्शंकराय च मयस्कराय च नमश्शिवाय च शिव-तराय च नमः किंशिलाय च क्षयणाय च नम इरिण्याय च प्रपथ्याय च नमः पुलस्तिने च कपर्दिने च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय

[१४] मै. २,९,५—७ (३१—३३)। कपि. २७,४। वा. १६,२९—३६। काण्व. १७,२९—३६। तै. सं. ४,५,४-८।
[१५] मै. २,९,६—८ (३२—३४)। कपि. २७,५। वा. १६,३७-४६। काण्व. १७,३७-४६। तै. सं. ४,५,६-९। मा. श्रौ. ६,२,४।

चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः फेन्याय च शष्प्याय च नमस्सिकत्याय
च प्रवाह्याय च नमो ह्रदव्याय च निवेष्याय च नमः काट्याय च गह्वरेष्ठाय च नमश्शुष्क्याय च
हरित्याय च नमो लोप्याय चोलप्याय च नमः पाँसव्याय च रजस्याय च नमस्सूर्म्याय चोर्म्याय
च नमः पर्ण्याय च पर्णशादाय च नम आखिदते च प्रखिदते च नमोऽभिघ्नते चापगुरमाणाय च
नम आखिदाय च विखिदाय च ॥१५॥ ५१

नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षीणकेभ्यो नम आनि-
र्हतेभ्यः ॥ ५२

द्रापे अन्धसस्पते दरिद्र नीललोहित। आसां प्रजानामेषां पुरुषाणामेषां पशूनाम्।
मा भेर्मा रोङ् मा नः किंचनाममत् ॥ ५३

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः।
यथा नश्शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ५४

या ते रुद्र शिवा तनूश्शिवा विश्वाह भेषजी।
शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥ ५५

परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥ ५६

मीढुष्टम शिवतम शिवो नस्सुमना भव।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान उच्चर पिनाकं बिभ्रदुच्चर ॥ ५७

विकिरिड विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रँ हेतयोऽन्येऽस्मन्निवपन्तु ताः॥ ५८

सहस्रधा सहस्राणि हेतयस्तव बाह्वोः। तासामीशानो भगवः पराचीना मुखा कुरु ॥ ५९

असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६०

येऽस्मिन् महत्युर्णवेऽन्तरिक्षे भवा अधि।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६१

ये नीलग्रीवाश्शितिकण्ठा दिवं रुद्रा उपश्रिताः।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६२

---

[१६] मै. २,९,९ (३५-५३)। कपि. २७,६। वा. १६,४६-६६। काण्व. १७,४६-६४। तै. सं. ४,५,९-१०। मा. श्रौ. ६,२,४। [ मा भै (भे)र्मा०...ममत्। अथर्व. ६,५७,३। इमा रुद्राय०...नातुरम्। ऋ. १,११४, १। परि णो (नो)रुद्रस्य०। ऋ. २,३३,१४, अथर्व. ४,२१ ७]

ये नीलग्रीवाश्शितिकण्ठाश्शर्वा अधः क्षमाचराः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६३
ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६४
येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६५
ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६६
ये पथीनां पथिरक्षय ऐडमृदा यव्युधः । तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६७
ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६८
य एतावन्तो वा भूयाँसो वा दिशो रुद्रा वितस्थिरे ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६९

नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीची-
र्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे
दधामि । नमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीची-
र्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे
दधामि । नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश
प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां
जम्भे दधामि ॥१६॥ ७०

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि संभृताम् ।
तां न ऊर्जं धत्त मरुतस्संरराणा अश्मन्ते क्षुद्यं द्विष्मस्तं ते शुग्ऋच्छतु ॥ ७१
समुद्रस्य त्वावकयाग्ने परिव्ययामसि ।
अन्याँस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यँ शिवो भव ॥ ७२

---

[ते नो मृडयन्तु (मृडत)०...दधामि(दध्मः)। अथर्व. ३,२६,१--६; २७,१--६]

[१७] मै. २,१०,१ (१--१३)। कपि. २८,१ । वा. १७,१,४--१५; ११,८३; ३६,२० । काण्व. १८,१,५--१५;१२,८४; ३६,२० । तै. ४,६,१ । मा. श्रौ ६,१,४ ।

हिमस्य त्वा जरायुणाग्ने परिव्ययामसि ।
अन्याँस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यँ शिवो भव ॥ ७३
उप ज्मन्नुप वेतसेऽवतर नदीष्वा । अग्ने पित्तमपामसि मण्डूकि ताभिरागहि ।
सेमं नो यज्ञं पावकवर्णँ शिवं कृधि ॥ ७४
अपामिदं न्ययनँ समुद्रस्य निवेशनम् ।
अन्याँस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यँ शिवो भव ॥ ७५
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥ ७६
पावकया यश्चितयन्त्या कृपा क्षामा रुरुच उषसो न केतुना ।
तूर्वो न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ ७७
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्याँस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यँ शिवो भव ॥ ७८
नृषदे वेडप्सुषदे वेड्बर्हिषदे वेड्वनसदे वेट् स्वर्विदे वेट् ॥ ७९
ये देवा देवानां यज्ञिया यज्ञियानाँ संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन् स्वयं पिबन्तु मधुनो घृतस्य ॥ ८०
ये देवा देवेभ्यो अधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य ।
येभ्यो नर्ते पवते धाम किंचन न ते दिवो न पृथिव्या अधि स्नुषु ॥ ८१
प्राणदा व्यानदा अपानदा वर्चोदा वरिवोदाः ।
अन्याँस्ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यँ शिवो भव ॥१७॥ ८२
स आ नो योनिँ सदतु प्रेष्ठो बृहस्पतिर्विश्ववारो यो अस्ति ।
कामो रायस्सुवीर्यस्य तं दात् पर्षन्नो अति सश्चतो अरिष्टान् ॥ ८३
तँ शग्मासो अरुषासो अश्वा बृहस्पतिँ सहवाहो वहन्ति ।
सहश्चिद्यस्य नीलवत् सधस्थं नभो न रूपमरुषं वसानाः ॥ ८४
बृहस्पतिः प्रथमं जायमानः ॥ ८५

---

[ हिमस्य त्वा०...परिव्ययामसि । ऋ. परि. ३०,१; अथर्व. ६,१०६,३ । अपामिदं न्ययन ँ० । ऋ. १०, १४२,७; अथर्व. ६,१०२,२; तै. सं. ४,६,१,३ । अग्ने पावक रोचिषा० । ऋ. ५,२६,१; सा. १५११; तै. सं. १,३,१४,८; ५,५,३; ४,६,१,२ । पावकया यश्चित० । ऋ. ६,१५,५; तै. सं. ४,६,१,०]

१८] वा. १९,१२; २०,५०--५२। काण्व. ३१,२४; २२,३५--३७। [स आ नो योनिँ०। ऋ. ७,९७,४। तँ शग्मासो अरुषासो० । ऋ. ७,९७,६। बृहस्पतिः प्रथमं जायमान ०। ऋ. ४.५० ४; अथर्व. २०,८८,४; तै. ब्रा. २,८,२,७ ]

तमा नो अर्कममृताय जुष्टमिमे धासुरमृतासः पुराजाः ।
शुचिक्रन्दं यजतं पस्त्यानां बृहस्पतिमनर्वाणँ हुवेम ॥ ८६
स हि शुचिश्शतपत्रस्स शुन्ध्युर्हिरण्यवाशीरिषिरस्स्वर्षाः ।
बृहस्पतिस्स स्वावेश ऋष्वः पुरू सखिभ्य आसुतिं करिष्ठः ॥ ८७
एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयँ स्याम पतयो रयीणाम् ॥ ८८
प्र वां दँसाँस्यश्विना अवोचमस्य पतिस्स्याँ सुगवस्सुवीरः ।
उत पश्यन्नश्नुवन् दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ ८९
अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदँसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः ॥ ९०
यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।
तेन नश्शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥ ९१
त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।
पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥ ९२
सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीँ सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥ ९३
सरस्वत्यभि नो नेषि वस्यो मापस्फरीः पयसा मा न आधक् ।
जुषस्व नस्सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥ ९४
इमा जुह्वाना ॥ ९५
पावीरवी कन्या चित्रायुस्सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रँ शरणँ सजोषा दुराधर्षं गृणते शर्म यँसत् ॥ ९६
इन्द्रस्सुत्रामा । तस्य वयम् ॥ ९७

[ तमा नो अर्कममृताय० । ऋ. ७,९७,५ । स हि शुचिश्शतपत्र० । ऋ. ७,९७,७; तै. ब्रा. २,५,५,४ । एवा पित्रे विश्वदेवाय० । ऋ. ४,५०,६; अथर्व. २०,८८,६; तै. सं. १,८,२२,१ । प्र वां दँसाँस्यश्विना० । ऋ. १,११६,२५ । अतारिष्म तमस० । ऋ. ७,७३,१ । यो ह स्य वां रथिरा० । ऋ. ७,६९,५; तै. सं. १,८,७,८ । त्रिब(व)न्धुरेण त्रिवृता० । ऋ. १,११८,२ । सरस्वतीं देवयन्तो हवन्ते० । ऋ. १०,१७,७; अथर्व. १८,१,४१ । सरस्वत्यभि नो नेषि० । ऋ. ६,६१,१४; तै. ब्रा. २,४,३,१ । इमा जुह्वाना० । ऋ. ७,९५,५; तै. ब्रा. २,४,६,१ । पावीरवी कन्या चित्रायु० । ऋ. ६,४९,७; तै. सं. ४,१,११,२ । इन्द्रस्सुत्रामा स्ववाँ० । ऋ. ६,४७,१२; १०,१३१,६; अथर्व. ७,९१,१; २०,१२५,६; तै. सं. १,७,१३,४ । तस्य वयम्० । ऋ. ६,४७,१३; १०,१३१,७; अथर्व. ७,९२,१; २०,१२५,७; तै. सं. १,७,१३,५; नि. ६,७]

त्रातारमिन्द्रमवितारमिन्द्रँ हवे हवे सुहवँ शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रँ स्वस्ति नो मघवा धात्विन्द्रः ॥ ९८
उग्रो जज्ञे वीर्याय स्वधावाश्चक्रिरपो नर्यो यत् करिष्यन् ।
जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित् ॥ ९९
अध स्मा ते चर्षणयो यदेजानिन्द्र त्रातोत भवा वरूता ।
अस्माकासो ये नृतमासो अर्य इन्द्र सूरयो दधिरे पुरो नः ॥ १००
स्वस्तये वाजिभिश्च प्रणेतः ॥१८॥ १०१

युवँ सुराममश्विना नमुचा आसुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ १०२
होता यक्षदश्विना सरस्वतीमिन्द्रँ सुत्रामाणँ सोमानाँ सुराम्णां जुषन्तां व्यन्तु पिबन्तु सोमान् सुराम्णो होतर्यज ॥ १०३
पुत्रमिव पितरा अश्विनोभेन्द्रावतं काव्यैर्दँसनाभिः ।
यत् सुरामं व्यपिबश्शचीभिस्सरस्वती त्वा मघवन्नभिष्णक् ॥ १०४
आ देवो यातु सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयश्च प्रसुवश्च भूम ॥ १०५
अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आगात् ।
शं यत् स्तोतृभ्य आपये भवात्युरुशँसाय सवितर्जरित्रे ॥ १०६
एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।
स नश्शर्म त्रिवरूथं वियँसत् पातं नो द्यावापृथिवी उपस्थे ॥ १०७
तत्त्वा यामि ॥ १०८
यदत्र शिष्टं रसिनस्सुतस्य यस्येन्द्रो अपिबच्छचीभिः ।
तेनाहमद्य मनसा सुतस्य सोमं राजानमिह भक्षयामि ॥ १०९

---

[ **त्रातारमिन्द्रमविता०** । ऋ. ६,४७,११; सा. ३३३; अथर्व. ७,८६,१; तै. सं. १,६,१२,५ । **उग्रो जज्ञे वीर्याय०** । ऋ. ७,२०,१ । **अध स्मा ते चर्षणयो०** । ऋ. ६,२५,७ । **स्वस्तये वाजिभिश्च०** । ऋ. ३,३०,१८ ]

[१९] मै. ३,११,४; ४,१२,५ (३०-३२; ११८-११९) । वा. १०,३३-३४; २०,७६-७७; २१,२,४२; १८,४९; १९,७,३५,४७ । काण्व. ११,४६-४७; २२,६१-६२; २३,२,४३; २०,१९; २१,६,३५,४९ । [ **युवँ सुराममश्विना०** । ऋ. १०,१३१,४; अथर्व. २०,१२५,४; तै ब्रा. १,४,२,१ । **पुत्रमिव पितरा०** । ऋ. १०,१३१,५; अथर्व. २०,१२५,५; तै. ब्रा. १,४,२,१ । **आ देवो यातु०** । ऋ. ७,४५,१; तै. ब्रा. २,८,६,१ । **अस्मभ्यं तद्दिवो अद्भ्यः०** । ऋ. २,३८,११ । **एवा वन्दस्व वरुणं०** । ऋ. ८,४२,२; तै. ब्रा. २,५,८,४ । **तत्त्वा यामि०** । ऋ. १,२४,११; तै. सं. २,१,११,६ ]

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।
अहानीव सूर्यो वासराणि प्रा ण आयुर्जीवसे सोम तारीः ॥ ११०
नाना हि देवैश्चकृपे सदो वां मा सँसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा माँ हिँसिष्टं यत् स्वं योनिमाविशाथः ॥ १११
त्वँ सोम सुरया संविदानः प्रजामन्यः क्षत्रमन्यः पिपर्तु ।
युवं नो अत्र वरिवः कृणुतं वयँ स्याम पतयो रयीणाम् ॥ ११२
इन्द्राग्नी मैतं निर्ह्वेर्था यँ सोमं पपिमा वयम् ।
इहैषो अस्तु भक्षितश्शिवश्शिवाभिरूतिभिः ॥ ११३
द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वं भुवनँ समेति यदन्तरा पितरं मातरं च ॥ ११४

यस्ते राजन् वरुण द्रुहः पाशो गायत्रच्छन्दाः पृथिवीमन्वाविवेश ब्रह्मणि प्रतिष्ठितस्तं त एतद-
वयजे तस्मै स्वाहा यस्ते राजन् वरुण द्रुहः पाशस्त्रिष्टुप् छन्दा अन्तरिक्षमन्वाविवेश क्षत्रे प्रतिष्ठितस्तं
त एतदवयजे तस्मै स्वाहा यस्ते राजन् वरुण द्रुहः पाशो जगच्छन्दा दिवमन्वाविवेश विशि प्रति-
ष्ठितस्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन् वरुण द्रुहः पाशोऽनुष्टुप् छन्दा दिशोऽन्वाविवेश
पशुषु प्रतिष्ठितस्तं त एतदवयजे तस्मै स्वाहा ॥१९॥ ११५

[१४०४]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां ध्रुवक्षितिर्नाम सप्तदशं स्थानकं संपूर्णम् ॥१७॥



[इषिरेण ते मनसा० । ऋ. ८,४८,७; नि. ४,७ । द्वे सृती (स्रुती) अशृणवं० । ऋ. १०,८८,१५; तै. ब्रा. १,४,२,३; २,६,३,५; शत. ब्रा. १४,९,१,४ ]

अथाष्टादशं स्थानकम् ।

## क्षमाः ।

अ॒ग्निस्ति॒ग्मेन॑ शो॒चिषा॒ यँस॒द्विश्वं॒ न्यु॒त्रिण॑म् । अ॒ग्निर्नो॑ वँसते र॒यिम् ॥ १

य॑ इ॒मा विश्वा॒ भुव॑नानि॒ जुह्व॒दृषि॒र्होता॒ न्यसी॑दत् पि॒ता नः॑ ।
स॑ आ॒शिषा॒ द्रवि॑णमि॒च्छमा॑नः परम॒च्छदवराँ॒ आवि॑वेश ॥ २

वि॒श्वक॑र्मा॒ विम॑ना॒ यो व्यो॒मा धा॒ता वि॑धा॒ता प॑र॒मो न संदृक् ।
सँ नो॑ म॒हानि॒ समि॒षो म॒हन्ता॒ यत्र॑ सप्त॒र्षीन् प॒र एक॑मा॒हुः ॥ ३

त॑ आय॑जन्त॒ द्रवि॑णा॒ सम॑स्मा॒ ऋष॑यः॒ पूर्वे॑ जरि॒तारो॒ न भू॒ना ।
अ॒सूर्ता॒ सूर्ते॒ रज॑सि नि॒षत्ते॒ ये भू॒तानि॑ स॒मकृ॑ण्वन्नि॒मानि॑ ॥ ४

यो॑ नः॑ पि॒ता ज॑नि॒ता यो॑ वि॑धा॒ता यो॑ न॒स्सतो॑ अ॒भ्या सन्नि॒नाय॑ ।
यो॑ दे॒वाना॑नां नाम॒धा एक॑ ए॒व तँ संप्र॒श्नं भुव॑ना यन्त्य॒न्या ॥ ५

न तँ वि॑दाथ॒ य इ॒दं ज॒जाना॒न्यद्यु॒ष्माक॒मन्त॑रं बभूव ।
नी॒हा॒रेण॒ प्रावृ॑ता॒ जल्प्या॑ चासु॒तृप॑ उक्थ॒शास॑श्चरन्ति ॥ ६

वि॒श्वक॑र्मा॒ चेद॒जनि॑ष्ट दे॒व आदिद्ग॑न्ध॒र्वो अ॑भवद् द्वि॒तीयः॑ ।
तृ॒तीयः॑ पि॒ता ज॑नि॒तौष॑धीनाम॒पां गर्भं॒ व्य॑दधात् पुरु॒त्रा ॥ ७

प॒रो दि॒वा प॒र ए॒ना पृ॑थि॒व्या प॒रो दे॒वेभि॒रसु॑रै॒र्यदस्ति॑ ।
कँ स्वि॒द्गर्भं॑ प्रथ॒मं द॑ध्र॒ आपो॒ यत्र॑ दे॒वास्स॒मप॑श्यन्त॒ विश्वे॑ ॥ ८

तमि॒द्गर्भं॑ प्रथ॒मं द॑ध्र॒ आपो॒ यत्र॑ दे॒वास्स॒मप॑श्यन्त॒ विश्वे॑ ।
अ॒जस्य॒ नाभा॒वध्येक॒मर्पि॑तं॒ तस्मि॑न्नि॒दं विश्वं॒ भुव॑न॒मधि॑ श्रि॒तम् ॥१॥ ९

---

[ १ ] मै. २,१०,२-३ (१४-१५; २४-३०)। कपि. २८,२। वा. १७,१६-१७,२६-३१। काण्व १८,१६-१७,२६-३२। तै. सं. ४,६,१—२। मा. श्रौ. ६,२,५। [ अग्निस्तिग्मेन शोचिषा० । ऋ. ६,१६,२८; सा. २२; तै. सं. ४,६, १-२। मा. श्रौ. ६,२,५। य इमा विश्वा भुवनानि० । ऋ. १०,८१,१, तै. सं ४,६,२,१। विश्वकर्मा विमना० । ऋ. १०,८२,२; तै. सं. ४,६,२,१; नि. १०,२६। त आयजन्त द्रविणा० । ऋ. १०,८२,४; तै. सं. ४,६,२,२; नि. ६,१५। यो नः पिता जनिता० । ऋ. १०,८२,३; अथर्व. २,१,३; तै. सं. ४,६,२,१, तै. आ. १०,१,४। न तं विदाथ य० । ऋ. १०,८२,७, तै. सं. ४,६,२,२; नि. १४,१०। परो दिवा पर एना० । ऋ. १०,८२,५, तै. सं. ४,६,२,२। तमिद्गर्भं प्रथमं दध्र० । ऋ. १०,८२,६; तै. सं. ४,६,२,३ ]

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदिद् द्यावापृथिवी अप्रथेतामादिदन्ता अददहन्त पूर्वे ॥ १०
किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥ ११
किं स्विदासीदारम्भणमधिष्ठानं कतमत् स्वित् कथासीत् ।
यदिद्भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ १२
यो विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमते सं यजत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ १३
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषा स्वधावस्स्वयं यजस्व तन्वं जुषाणः ॥ १४
विश्वकर्मन् हविषा वावृधानस्स्वयं यजस्व तन्वँ स्वाहिते ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ १५
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ।
तस्मै विशस्समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥ १६
वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्याहुवेम ।
स नो नेदिष्ठँ हवनान्यागमद्विश्वशंभूरवसे साधुकर्मा ॥२॥ १७

उदेनमुत्तरां नयाग्ने घृतेनाहुतः । रायस्पोषेण सँसृज प्रजया च बहुं कृधि ॥ १८
इन्द्रेमं प्रतरं कृधि सजातानामसद्वशी । समेनं वर्चसा सृज देवेभ्यो भागदा असत् ॥ १९
यस्य कुर्मो गृहे हविरग्ने तं वर्धया त्वम् । तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥ २०

---

[२] मै. २,१०,२-३ (१६-२३) । कपि. २८,२ । वा. ८,४५-४६, १७,१८-२५ । काण्व. ८,२६-२८; १८,१८-२५ । तै. सं. ४,६,१-२ । मा. श्रौ. ६,२,५ । [**चक्षुषः पिता मनसा०** । ऋ. १०,८२,१, तै. सं. ४,६,२,४ । **किं स्विद्वनं क उ स०** । ऋ. १०,८१,४; तै. सं ४,६,२,५; तै. ब्रा. २,८,९,६ । **किं स्विदासीदारम्भण०** । ऋ. १०,८१,२, तै. सं. ४,६,२,४ । **यो (विश्वतश्चक्षुरुत)विश्वतो०** । ऋ. १०,८१,३; अथर्व. १३,२,२६; तै. सं. ४,६,२,४; तै. आ. १०,१,३ । **या ते धामानि परमाणि०** । ऋ १०,८१,५; तै. सं. ४,६,२,५ । **विश्वकर्मन् हविषा वावृधान०** । ऋ. १०,८१,६; सा. १५८९, तै. सं. ४,६,२,६, नि. १०,२७ । **वाचस्पतिं विश्वकर्माण०** । ऋ. १०,८१,७, तै. सं. ४,६,२,५ ]

[३] मै २,१०,४-५ (३१-३३, ४४-५५) । कपि. २८,३ । वा. १७,५०-६४; १२,५६; १५,६१ । काण्व. १८,५०--६४; १३,५७; १६,८२ । तै. सं. ४,६,३—४ । मा. श्रौ. ६,२,५ । [**उदेनमुत्तरां नयाग्ने०** । अथर्व. ६,५,१ । **इन्द्रेमं प्रतरं०.. असत्** । अथर्व. ६,५,२ । **तस्मै देवा (सोमो)०** । ऋ. १०,१७३,३ (उत्तरार्धः); अथर्व. ६,५,३, ८७,३ ]

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवस्त्वँ सुप्रतीको विभावसुः ॥ २१
पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥ २२
समिद्धे अग्ना अधि मामहान उक्थपत्र ईड्यो गृभीतः ।
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमशमन्त देवाः ॥ २३
दैव्याय धर्त्रे जोष्ट्रे देवश्रीश्श्रीमनाश्शतपात् परिगृह्य यज्ञमयान् ॥ २४
हरिकेशस्सूर्यरश्मिः पुरस्तात् सविता ज्योतिरुदयानजस्रम् ।
तस्य पूषा प्रसवे याति देवस्संपश्यन् विश्वा भुवनानि गोपाः ॥ २५
देवा देवेभ्यो अध्वरीयन्तो अस्थुर्वीतँ शमितँ शमिता यजध्यै ।
तुरीयो यज्ञो यत्र हव्यमेति ततो वाका आशिषो नो जुषन्ताम् ॥ २६
विमान एष दिवो मध्य आस्त आपप्रिवान् रोदसी अन्तरिक्षम् ।
स विश्वाची अभिचष्टे घृताची अन्तरा पूर्वमपरं च केतुम् ॥ २७
उक्षा समुद्रे अरुणस्सुपर्णः पूर्वस्य योनिं पितुराविवेश ।
मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसः पात्यन्ता ॥ २८
इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानाँ सत्पतिं पतिम् ॥ २९
सुम्नहूर्यज्ञ आ च वक्षत् । यक्षदग्निर्देवो देवाँ आ च वक्षत् ॥ ३०
वाजस्य मा प्रसवेनोद्ग्राभेणोदजीगृभम् ।
अथा सपत्नाँ इन्द्रो मे निग्राभेणाधराँ अकः ॥ ३१
उद्ग्राभश्च निग्राभश्च ब्रह्म देवाँ अवीवृधत् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ॥३॥ ३२
क्रमध्वमग्निना नाकमुख्यँ हस्तेषु बिभ्रतः । दिवः पृष्ठँ स्वर्गत्वा मिश्रा देवेभिराध्वम् ॥ ३३
प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्ने भवेह ।
विश्वा आशा दीद्यद्विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥ ३४

[ हरिकेशस्सूर्यरश्मि (सूर्यरश्मिर्हरिकेशः)० । ऋ. १०,१३९,१ तै. सं ४,६,३,३ । विमान (नृचक्षा) एष दिवो० । ऋ. १०,१३९,२; तै. सं ४,६,३,३ । उक्षा समुद्रे (०द्रो)० । ऋ ५,४७,३; तै. सं. ४,६,३,३। इन्द्रं विश्वा अवीवृधन्० । ऋ. १,११,१. सा. ३४३,८२७ तै. सं ४,६,३,४; तै. ब्रा. २,७,१५,५ ]

[ ४ ] मै. २,१०,६ (५६-६७) । कपि. २८,४ । वा. १७,६५-७६,७९ । कण्व. १८,६५—७६,७९ । तै. सं. ४,६,५ । मा. श्रौ. ६,२,५ । [ क्रमध्वमग्निना० । अथर्व. ४,१४,२ ]

पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥ ३५
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥ ३६
अग्ने प्रेहि प्रथमो देवायतां चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिस्सजोषास्स्वर्यन्तु यजमानास्स्वस्ति ॥ ३७
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः ॥ ३८
अग्ने सहस्राक्ष शतमूर्धञ्छततेजश्शतं ते प्राणास्सहस्रं व्यानाः । त्वं साहस्रस्य राय ईशिषे तस्मै
ते विधेम वाजाय स्वाहा । सुपर्णोऽसि गरुत्मान् । पृष्ठे पृथिव्यास्सीद भासान्तरिक्षमापृण ज्योतिषा
दिवमुत्तभान । तेजसा दिश उद्दृंह ॥ ३९
आजुह्वानस्सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साध्या ।
अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ ४०
तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां पयसा महीं गाम् ॥ ४१
अग्ने विधेम ते परमे जन्मन् विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथ यजा तं प्र त्वे हवींषि जुहुमस्समिद्धे ॥ ४२
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजाः ॥ ४३
सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि ।
सप्त होत्रा अनुविद्वान् सप्त योनीरापृणस्वा घृतेन ॥४॥ ४४
आशुश्शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरश्शतं सेना अजयत् साकमिन्द्रः ॥ ४५

---

[ पृथिव्या अहमुदन्तरिक्ष० । अथर्व. ४,१४,३ । **स्वर्यन्तो नापेक्षन्त०** । अथर्व. ४,१४,४ । **अग्ने प्रेहि प्रथमो०** । अथर्व. ४,१४,५ । **नक्तोषासा समनसा०** । ऋ. १,९६,५; ११३,३; सा. १७५१ (च. पा.)। तै.सं. ४,१,१०,४; ६,५,२; ७,१२,३ । **तां सवितुर्वरेण्यस्य०** । अथर्व. ७,१५,१ । **अग्ने (विधेम)ते परमे०** । ऋ. २,९,३, तै. सं. ४,६,५,४ । **प्रेद्धो अग्ने दीदिहि०** । ऋ. ७,१,३; सा. १३७५; तै. सं. ४,६,५,४ ]

[५] मै. २,१०,४ (३४—४३)। कपि. २८,५ । वा. १७,३३—४१,४३ । काण्व. १८,३३—४१,४३ । तै. ४,६,३,४। मा. श्रौ. ६,२,५ । **आशुश्शिशानो वृषभो०** । ऋ. १०,१०३,१; सा. १८४९; अथर्व. १९,१३,१; तै. सं. ४,६,४,१; नि. १,१५ ]

संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ ४६
स इषुहस्तैस्स निषङ्गिभिर्वशी सँस्रष्टा स युध इन्द्रो गणेन ।
सँसृष्टजित् सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ ४७
बृहस्पते परिदीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभञ्जन् सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४८
बलविज्ञायस्स्थविरः प्रवीरस्सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिषत्वा सहोजिज्जैत्रायणो रथमातिष्ठ गोवित् ॥ ४९
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मा प्रमृणन्तमोजसा ।
इमँ सजाता अनुवीरयध्वमिन्द्रँ सखायमनु संव्ययध्वम् ॥ ५०
अभि गोत्राणि सहसा गाहमानोऽदयो वीरश्शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयुध्योऽस्माकँ सेना अवतु प्र युत्सु ॥ ५१
इन्द्र एषां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥ ५२
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताँ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ५३
अस्माकमिन्द्रस्समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता भरेष्वा ॥५॥ ५४

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च सत्यश्चर्तपाश्चात्यँहा ईदङ् चान्यादङ्

[ संक्रन्दनेनानिमिषेण०। ऋ. १०,१०३,२, सा. १८५०, अथर्व १९,१३,३; तै. सं ४,६,४,१। **स इषुहस्तैः सनिषङ्गिभिः०**। ऋ. १०,१०३,३; सा. १८५१; अथर्व. १९ १३,४; तै सं. ४,६,४,१। **बृहस्पते परिदीया०**। ऋ. १०,१०३,४; सा. १८५२; अथर्व. १९,१३,८; तै सं ४,६,४,१ । **बलविज्ञायस्स्थविरः०**। ऋ १०,१०३, ५; सा. १८५३; अथर्व. १९,१३,५; तै. सं. ४,६,४,२ । **गोत्रभिदं गोविदं०** । ऋ १०.१०३,६; सा. १८५४; अथर्व. ६,९७,३; १९,१३,६, तै.सं ४,६,४,२। **अभि गोत्राणि सहसा०**। ऋ.१०,१०३,७; सा. १८५५, अथर्व. १९,१३,७; तै. सं. ४,६,४,२ । **इन्द्र एषां (आसां) नेता०** । ऋ १०,१०३,८, सा १८५६; अथर्व. १९,१३,९; तै. सं. ४,६,४,३ । **इन्द्रस्य वृष्णो वरुणस्य०** । ऋ. १०,१०३,९; सा. १८५७; अथर्व. १९,१३,१०, तै. सं. ४,६,४,३ । **अस्माकमिन्द्रस्समृतेषु०** । ऋ. १०,१०३,११, सा १८५९, अथर्व. १९,१३,११; तै. सं. ४,६,४,३]

[ ६ ] मै. २,११,१ (१) । कपि. २८,६ । वा. १७,८०—८३,८६ । काण्व. १८,८०—८४.८६ । तै. सं. ४,६,५ । मा श्रौ. ६,२,५ ।

च सदृङ् च प्रतिसदृङ् च मितश्च संमितश्च संभरा ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयं ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्तिमित्रश्च दूरेअमित्रश्च गणं ईदृक्षास एतादृक्षास ऊ षु णस्सदृक्षासः प्रतिसदृक्षास एतन मितासश्च संमितासो नो अद्य संभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥६॥ ५५

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसृतिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे प्राणश्च मे व्यानश्च मेऽपानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूँषि च मे शरीराणि च म आयुश्च मे जरा च मे ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघ्मा च मे वृद्धं च मे वृद्धिश्च मे ॥७॥ ५६

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे क्रीडा च मे मोदश्च मे वशश्च मे त्विषिश्च मे सूक्तं च मे सुकृतं च मे जातं च मे जनिष्यमाणं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे संविच्च मे ज्ञात्रं च मे विश्वं च मे महश्च मे सूश्च मे प्रसूश्च मे सीरं च मे लायश्च मे ॥८॥ ५७

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषाश्च मे सुदिनं च म ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिदं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे ॥ विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मेऽक्षितिश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे नीवाराश्च मे श्यामाकाश्च मेऽणवश्च मे प्रियङ्गवश्च मे गोधूमाश्च मे मसूराश्च मे मुद्गाश्च मे खल्वाश्च मे॥९॥५८-५९

[७] मै. २,११,२ (२)। कपि. २८,७। वा. १८,१-४। काण्व. १९,१३-१६। तै. सं. ४,७,१-२। मा. श्रौ. ६,२,५।
[८] मै. २,११,३ (३)। कपि. २८,८। वा. १८,५,७—८,११। काण्व. १९,१७-२०। तै. सं ४,७,२—३।
[९] मै. २,११,३—४ (३—४)। कपि. २८,९। वा. १८,६,९—१०,१२। काण्व. १९,२१—२४। तै. सं. ४,७,३—४।

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपु च मे श्यामं च मे लोहितायसं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इत्या च मे गतिश्च मेऽग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे समाश्च म इन्द्रश्च मे नक्षत्राणि
च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे ॥१०॥ ६०

अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपांशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रायणश्च मे क्षुल्लकवैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयश्च मे महेन्द्रीयश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोण-कलशश्च मे पूतभृच्च मेऽपूतभृच्च मे ग्रावाणश्च मेऽधिषवणे च मेऽवभृथश्च मे स्वगाकारश्च मेऽग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तां व्रतं चर्तुश्च संवत्सरश्च तपश्चाहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे
च मे यज्ञेन कल्पेताम् ॥११॥ ६१

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाट् च मे पष्ठौही च म उक्षा च मे वशा च मेऽनड्वांश्च मे धेनुश्च म ऋषभश्च मे वेहच्च म एका च मे तिस्रश्च मे तिस्रश्च मे त्रयस्त्रिंशच्च मे चतस्रश्च मेऽष्टौ च मेऽष्टौ च मेऽष्टाचत्वारिंशच्च मे ॥ वाजश्च प्रसवश्चापिजश्च क्रतुश्च वाक्पतिश्च वसुश्च स्वर्मौर्ध्नो मूर्धा वैयशनो व्युश्वाँ आन्त्योऽन्त्यो भौवनो भुवनस्य पतिः प्रजापतिरियं ते राण्मित्रो यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायायुर्यज्ञेन कल्पतां मनो यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा

[१०] मै. २,११,५ (५) । कपि. २८,१० । वा १८,१३—१८ । काण्व. १९,२५—३० । तै. सं. ४,७,५—८ ।
[११] मै. २,११,५—६ (५-६) । कपि. २८,११ । वा. १८,१९-२३ । काण्व. १९,३१—३५ । तै. सं. ४,७,५—११ । मा. श्रौ. ६,२,५ ।
[१२] मै. २,११,६ (६) । कपि. २९,१ । वा. १८,२४—२९ । काण्व. १९,३६—४३ । तै. सं. ४,७,९—११ । मा. श्रौ. ६,२,५ । **बृहच्च रथन्तरं च०** । अथर्व. ८,१०,६ ]

यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामृक् च साम च स्तोमश्च यजुश्च बृहच्च रथन्तरं च स्वर्देवा अगन्म प्रजापतेः प्रजा अभूवन्नमृता अभूम वेट् स्वाहा ॥१२॥ ६२-६३

वाजस्य नु प्रसव इति षट् ॥ ६४

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयस्समिद्धाः ।
विश्वे मा देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजे अस्मिन् ॥ ६५

आ मा वाजस्य वाजस्य नु ॥ ६६

वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः । वाजो मा विश्वैर्देवैर्धनसाता इहावतु ॥ ६७
वाजो मे अद्य प्रसुवाति दानं वाजो देवान् हविषा वर्धयाति ।
वाजस्य हि प्रसवे नन्नमीति विश्वा आशा वाजपतिर्जयेयम् ॥ ६८
वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति ।
वाजस्य हि प्रसवे नन्नमीति सर्वा आशा वाजपतिर्भवेयम् ॥ ६९
सं मा सृजामि पयसा पृथिव्यास्सं मा सृजाम्यद्भिरोषधीभिः ।
सोऽहं वाजं सनाम्यग्ने ॥ ७०
पयः पृथिव्यां पय ओषधीषु पयो दिव्युन्तरिक्षे पयो धाः ।
पयस्वतीः प्रदिशस्सन्तु मह्यम् ॥१३॥ ७१

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदा नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् सुषुम्णस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वड् भुज्युस्सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्स्तवा नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरस एष्टयो नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वडिषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरस ऊर्जो

---

[१३] मै. २,१२,१ (१—६) । कपि. २९,२ । वा. ९,१९; १८,३०—३६ । काण्व. १०,२५; २०,१—७ । तै. सं. ४, ७,१२ । मा. श्रौ. ६,२,५ । [ विश्वे अद्य मरुतो० । ऋ. १०,३५,१३, तै. सं. ४,७,१२,१ । **वाजस्य नु०** । अथर्व. ७,६,४ ]

[१४] मै. २,१२,२—३ (७—८) । कपि. २९,३ । वा. १८,३८—४५ । काण्व. २०,८—१५ । तै. सं. ३,४,७; ४,७, १२—१३ । मा. श्रौ. ६,२,५—६ ।

नाम सं न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् ॥ सं नो भुवनस्य पते यस्य त
उपरि गृहा विराट्पते ॥ अस्मं ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥ समुद्रोऽसि नभस्वा-
नार्द्रदानुश्शंभुर्मयोभूरभि मा वाहि स्वाहा मारुतोऽसि मरुतां गणश्शंभुर्मयोभूरभि मा वाहि स्वाहा-
वस्युरसि दुवस्वाञ्छंभुर्मयोभूरभि मा वाहि स्वाहा ॥१४॥ ७२-७५

अग्निं युनज्मि शवसा घृतेन दिव्यँ सुपर्णं वयसा बृहन्तम् ।
तेन वयं पतेम ब्रध्नस्य विष्टपँ स्वो रुहाणा अधि नाक उत्तमे ॥ ७६
इमौ ते पक्षा अजरौ पतत्रिणो याभ्यां रक्षाँस्यपहँस्यग्ने ।
ताभ्यां वयं पतेम सुकृतामु लोकं यत्रर्षयो जग्मुः प्रथमाः पुराणाः ॥ ७७
इन्दुर्दक्षश्श्येन ऋतावा हिरण्यपक्षश्शकुनो भुरण्युः ।
महान् सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिँसीः ॥ ७८
दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुश्शर्म सप्रथा नमस्पथे विश्वस्य मूर्धन्नधितिष्ठसि श्रितः ॥ ७९
समुद्रे ते हृदयमन्तरायुरुद्रो देह्युदधिं भिन्धि ।
दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो मा वृष्ट्यावं ॥ ॥१५॥ ८०

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशः पृथिव्याः ॥ ८१
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसस्सन्तु मान्ये ॥ ८२
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः ।
सपत्नहाग्ने अभिमातिजित्स्वे गये जागृह्यप्रयुच्छन् ॥ ८३
इहैवाग्ने अधिधारया रयिं मा त्वा निक्रन् पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥ ८४

---

[१५] मै. २,१२,३ (९—१३)। कपि. २९,४। वा. १८,५१—५५। काण्व. २०,२१—२५। तै. सं. ४,७,१२-१३। मा. श्रौ. ६,२,५—६।

[१६] मै. २,१२,५ (२५-३४)। कपि. २९,४। वा. २७,१-१०, २०,२१, ३५,१४, ३८,१४। काण्व. २९,१—१०; ११,६; ३५,४७; ३८,१४। तै. सं. ४,१,७। [ **समास्त्वाग्न ऋतवो०**। अथर्व. २,६,१। **सं चेध्यस्वाग्ने०**। अथर्व. २,६,२। **त्वामग्ने वृणते०**। अथर्व. २,६,३। **इहैवाग्ने अधिधारया०**। अथर्व. ७,८२,३ ]

क्षत्रेणाग्ने स्वेन संरभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमेष्ठेयाय राज्ञामग्ने विहव्यो दीदिहीह ॥ ८५
अति निहो अति स्रिधो अत्यचित्तिमति निर्ऋतिमद्य ।
विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यँ सहवीरं रयिं दाः ॥ ८६
अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ।
विश्वा अमीवाः प्रमुञ्चन्मानुषेभ्यश्शिवेभिरद्य परिपाहि नो वृधे ॥ ८७
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ ८८
उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ८९
बृहस्पते सवितर्बोधयैनँ सँशितं चित्संतरां सँशिशाधि ।
वर्धयैनं महते सौभगाय विश्व एनमनुमदन्तु देवाः ॥ ९०
क्षत्रभृदग्निरनिभृष्टतेजास्सहस्रियो द्योततामिध्यमानः ।
वर्ष्मन् पृथिव्या अधि जातवेदा उदन्तरिक्षमारुहदगन् द्याम् ॥१६॥ ९१
ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥ ९२
तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।
पथो अनक्ति मध्वा घृतेन मध्वा यज्ञं नक्षति प्रीणानः ॥ ९३
नराशँसो अग्ने सुकृद्देवस्सविता विश्ववारः । अच्छायं यन्ति शवसा घृताचीः ॥ ९४
ईडाना वह्निं नमसाग्निँ स्रुचो अध्वरेषु प्रयत्सु । स यक्षदस्य महिमानमग्नेः ॥ ९५
स्तनी मन्द्रस्सुप्रयक्षुः । वसुश्चेतिष्ठो वसुधातमश्च ॥ ९६
द्वारो देवीरन्वस्य विश्वा व्रता ददन्ते अग्नेः । उरुव्यचसो धाम्ना पत्यमानाः ॥ ९७

---

[क्षत्रेणाग्ने स्वेन०। अथर्व. २,६.४। अति निहो अति०। अथर्व. २,६,५। अनाधृष्यो जातवेदा०। अथर्व. ७,८४,१। शिवेभिरद्य०...वृधे०। ऋ. ६,७१,३; तै. सं. १,४,२४,१, तै. ब्रा. २,४,४,७। अमुत्रभूया०...। अथर्व. ७,५३,१। उद्वयं तमसस्परि०। ऋ. १,५०,१०; अथर्व. ७,५३,७; तै. सं. ४,१,७,४; तै. ब्रा. २,४, ४,९; ६,६,४, तै. आ. ६,३,२। बृहस्पते सवित०। अथर्व. ७,१६,१ ]

[१७] मै. २,१२,६ (३५-४६)। कपि. २९,५। वा. २७,११—२२। काण्व. २९,११—२२। तै. सं. ४,१,८। [ ऊर्ध्वा अस्य०। अथर्व. ५,२७,१। तनूनपादसुरो०। अथर्व. ५,२७,१—२। मध्वा यज्ञं०। अथर्व. ५,२७,३। नराशँसो अग्ने०। अथर्व. ५,२७,३—४। ईडाना वह्निं०। अथर्व. ५,२७,४—५। स्तनी (तरी)मन्द्रस्सु (मन्द्रासु)०। अथर्व. ५,२७,६। द्वारो देवीरन्वस्य०। अथर्व. ५,२७,७—८ ]

ते अस्य योषणे दिव्यो न योनिरुषासानक्तामेः । इमं यज्ञमवतामध्वरं नः ॥ ९८
दैव्या होतारोर्ध्वमिममध्वरं नोऽग्नेर्जिह्वयाभिगृणीतम् । कृणुतं नास्स्विष्टग् ॥ ९९
तिस्रो देवीर्बर्हिरेदँ सदन्त्विडा सरस्वती भारती महीर्गृणानाः ॥ १००
तन्नस्तुरीपमद्भुतं पुरुक्षु । त्वष्टः पोषाय विष्य नाभिमस्मे ॥ १०१
वनस्पतेऽवसृज रराणस्त्मना देवेषु । अग्निर्हविश्शमिता सूदयाति ॥ १०२
अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् । विश्वे देवा हविरिदं जुषन्ताम् ॥१७॥ १०३

येनर्षयस्तपसा सत्रमासतेन्धाना अग्निँ स्वराभरन्तः ।
तस्मिन्नहं निदधे नाके अग्निं यमाहुर्मनवस्स्तीर्णबर्हिषम् ॥ १०४
तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥ १०५
आ वाचो मध्यमरुहद्भुरण्युरयमग्निस्सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥ १०६
अयमग्निर्वीरतमो वयोधास्सहस्त्रियो द्योततामप्रयुच्छन् ।
विभ्राजमानस्सरिरस्य मध्य उपप्रयाहि दिव्यानि धामन् ॥ १०७
संप्रच्यवध्वमुप संप्रयाताग्ने पथो देवयानान् कृणुध्वम् ।
पुनः कृण्वन्ता पितरा युवानान्वाताँसीत् त्वयि तन्तुमेतम् ॥ १०८
उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सँसृजेथामयं च ।
अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ १०९
येन सहस्रं वहसि येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥ ११०
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ १११

---

[ ते अस्य (आ सुष्वयन्ती)योषणे० । अथर्व. ५,२७,८ । दैव्या होतारो० (पूर्वार्धः) । अथर्व ५,२७,९ । तिस्रो देवी०(उत्तरार्धः) । अथर्व. ५,२७,९ । तन्नस्तुरीपमद्भुतं० । अथर्व. ५,२७,१० । वनस्पतेऽवसृज० । अथर्व. ५,२७,११ । अग्ने स्वाहा कृणुहि० । अथर्व. ५,२७,१२ ]

[१८] मै. २,१२,३–४ (१५—१९,२१—२४) । कपि. २९,६ । वा. १५,४९—५६, १८,५६—५७,६१—६२, ३,१४; १२.५२ । काण्व. १६,७१—७८; २०,२६-२७,३१—३२, ३,११. १६,४७; ३२,६ । तै सं ४,७,१३। मा. श्रौ. ६,२,६ । [ येन सहस्रं वहासि० । अथर्व. ९,५,१७ । अयं ते योनिर्ऋत्वियो० । ऋ. ३,२९.१०, अथर्व. ३,२०,१; तै. सं. १,५,५,२, ४,२,४,३. ७,१३,५. तै. आ. १,२,१,१६; २,५,८,८ ]

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्वाँ अथर्वभिः ।

इष्टो अग्निराहुतस्स्वाहाकृतः पिपर्तु नः । इष्टँ हविस्स्वगेदं देवेभ्यो नमः ॥१८॥ ११२

जुह्वँ संमार्ष्टि यज्ञमुखं वै जुहूर्यज्ञमुखमेवालभते जुह्वा वै देवा विराजमह्वयँस्तज्जुह्वा जुहूत्वमग्निर्वै विराडग्निमेवैतद्विराजँ ह्वयति च्छन्दाँसि वै देवेभ्योऽपाक्रामन् यज्ञे भागधेयमिच्छमानानि न वो भागधेयानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतं प्रायच्छन्ननुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतेन जुहोति च्छन्दाँस्येव भागधेयवन्ति करोति सावित्राणि जुहोति प्रसूत्या एति वा एतद्यज्ञमुखाद्यदनाग्नेयमग्रे यज्ञस्य क्रियते यदष्टौ कृत्वो गृहीत्वाष्टा एतानि जुहोत्यष्टाक्षरा गायत्री गायत्रोऽग्निस्तेन यज्ञमुखान्नैति प्रसूत्यै सावित्राणि युञ्जते मन इति मनस्वन्ति मनो ह्यग्रे युज्यते मनसा यज्ञस्तायतेऽग्निर्ज्योतिरिति ज्योतिष्मत् सविता वा एतत् पृथिव्या ज्योतिस्समभरद्य-देवास्यात्र न्यक्तं तदेतेन संभरति षड्चो भवन्ति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति द्वे यजुषी द्विपाद्यजमानः प्रतिष्ठित्यै यदि कामयेत देवतां यज्ञयशसेनाहुत्यार्पयेयमित्यृचमन्ततः कुर्याद्देवतामेव यज्ञयशसेनाहुत्यार्पयति यदि कामयेत यजमानं यज्ञयशसेनाहुत्यार्पयेयमिति यजुरन्ततः कुर्याद्यज-मानमेव यज्ञयशसेनाहुत्यार्पयत्यृचा स्तोमँ समर्धयेति समृद्ध्यै गायत्रेण रथन्तरं बृहद्गायत्रवर्तनीतीयं वै रथन्तरमसौ बृहन्नष्ट्या आहुत्या वा अभिक्रममन्वभिक्रम्य यजमानो वसीयान् भवत्याहुत्या अपक्रमम-न्वपक्रम्य पापीयान् भवति सकृत् सर्वाण्यनुद्रुत्योत्तमेन जुहुयादाहुत्या एवाभिक्रममन्वभिक्रामति वसीयान् भवत्येकैकेन जुहुयाद्यदि कामयेत सदङ् यजमानस्स्यादिति यजूँष्येव नाना वीर्याणि करो-त्यष्टा एतानि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखँ संपादयति त्रिवृद्धि यज्ञमुखमूर्ध्वस्तिष्ठञ्जुहो-त्यूर्ध्वो हि तिष्ठन् वीर्यावत्तरः पूर्णया स्रुचा जुहोति पूर्णः प्रजापतिः प्रजापतिमेवाप्नोति ॥१९॥ ११३

त्वँ ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।

त्वँ सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ ११४

अधा होता न्यसीदो यजीयानिडस्पद इषयन्नीड्यस्सन् ।

तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनुग्मन् ॥ ११५

वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिं जागृवाँसो अनुग्मन् ।

रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवाँसम् ॥ ११६

---

[१९] मै ३,१,१ (१) । कपि. २९,७ । तै. सं. ५,११ । श. ब्रा. ६,३,१,१ । वा. ५,१४; ११,४; ३७,२ । काण्व. ५,१०, १२,४; ३७,२ । [ युञ्जते मन० । ऋ. ५,८१,१, तै सं १,२,१३,१; ४,१,१,१; तै. आ. ४,२,१ ]

[२०] मै ४,१३,६(४७—५१) । तै ब्रा. ३,६,१० । [ त्वँ ह्यग्ने प्रथमो० । ऋ. ६,१,१; तै. ब्रा. ३,६,१०,१ । अधा होता न्यसीदो० । ऋ. ६,१,२; तै ब्रा. ३,६,१०,१ । वृतेव यन्तं बहुभिः० । ऋ. ६,१,३, तै. ब्रा. ३,६,१०,१ ]

पदं देवस्य नमसा व्यन्तश्श्रवस्यवश्श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ ११७
त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुष्याणाम् ॥ ११८
सपर्येण्यस्स प्रियो विक्ष्वग्निर्होता मन्द्रो निषसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ ११९
तं त्वा वयं सुध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ १२०
विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणाम् ॥ १२१
सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् ।
य आहुतिं परि वेदा नमोभिर्विश्वेत् स वामा दधते त्वोतः ॥ १२२
अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम ॥ १२३
आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्युस्तरुत्रः ।
बृहद्भिर्वाजैस्स्थविरेभिरस्मे रेवद्भिरग्ने वितरं विभाहि ॥ १२४
नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ १२५
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन् वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥२०॥ १२६

होता यक्षद्बृहस्पतिं छागस्य हविष आवयदद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घसन्नूनं घासे अज्राणां यवसप्रथमानाँ सुमत्क्षराणाँ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतश्श्रोणितश्शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेवं बृहस्पतिर्जुषताँ हविर्होतर्यज होता

[ पदं देवस्य नमसा० । ऋ ६,१,४. तै आ ३,६,१०,१, नि. ४,१९ । त्वां वर्धन्ति क्षितयः० । ऋ. ६,१,५. तै आ ३,६,१०,२ । सपर्येण्यस्स प्रियो० । ऋ. ६,१,६ तै आ ३,६,१०,२ । तं त्वा वयं सुध्यो० । ऋ ६,१,७; तै. आ ३,६,१०,३ । विशां कविं विश्पतिं ० । ऋ ६,१,८ तै. आ ३,६,१०,३ । सो अग्न ईजे० । ऋ ६,१,९, तै. आ. ३,६,१०,४ । अस्मा उ ते महि० । ऋ. ६,१,१० तै आ . ३,६,१०,४ । आ यस्ततन्थ० । ऋ ६,१,११; तै आ ३,६,१०,५ । नृवद्वसो सदमिद्धे० । ऋ ६,१,१२; तै. आ ३,६, १०,५ । पुरूण्यग्ने पुरुधा० । ऋ. ६,१,१३, तै. आ ३,६,१०,५]

[२१] मै ४,१३,७ (२१-२७) । का १९,४३ ४७ १२,५२ । वा २१,४४-४६; २३,४२ । तै ब्रा. ३,६,११-१२।

यक्षदश्विना छागस्य हविष आत्तां घस्तां करत एवमश्विना जुषेतां हविर्होतर्यज होता यक्षत् सरस्वतीं मेष्या हविष आवयद् घसत् करदेवं सरस्वती जुषतां हविर्होतर्यज होता यक्षदिन्द्रं मेषस्य हविष आवयद् घसत् करदेवमिन्द्रो जुषतां हविर्होतर्यज ॥ १२७

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूयर्तस्य वक्षि पथिभी रजिष्ठैः ॥ १२८

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित यत्र बृहस्पतेश्छागस्य हविषः प्रिया धामानि यत्राश्विनोश्छागस्य हविषः प्रिया धामानि यत्र सरस्वत्या मेष्या हविषः प्रिया धामानि यत्रेन्द्रस्य मेषस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतान् प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयस इव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥ १२९

वनस्पते रशनयाभिधाय पिष्टतमया वयुनानि विद्वान् ।
वहा देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः ॥ १३०

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ १३१

होता यक्षदग्निं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाड् बृहस्पतेश्छागस्य हविषः प्रिया धामान्ययाडश्विनोश्छागस्य हविषः प्रिया धामान्ययाट् सरस्वत्या मेष्या हविषः प्रिया धामान्ययाडिन्द्रस्य मेषस्य हविषः प्रिया धामान्ययाड्वनस्पतेः प्रिया पाथांस्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत् स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वराञ्जातवेदा जुषतां हविर्होतर्यज ॥ आ देवानामिडामग्ने ॥ १३२-१३३

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेडय जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥२१॥ १३४[१५३८]

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां चमा नामाष्टादशं स्थानकं संपूर्णम् ॥१८॥

॥ संपूर्णा च इठिमिका ॥



[ देवेभ्यो वनस्पते० । तै. ब्रा. ३,६,११,२ । देवो वनस्पतिर्जुषतां० । तै. ब्रा. ३,६,११,४ । वनस्पते रशनया० । ऋ. १०,७०,१०; तै. ब्रा. ३,६,१२,१; नि. ६,७ । पिप्रीहि देवाँ० । ऋ. १०,२,१; तै. सं. ४,३, १३,४; तै. ब्रा. ३,५,७,५; ६,११,४; काठ. २,१५; २०,१५ । आ देवानाम्० । ऋ. ३,१,१७; १०,२,३; ७०,२; अथर्व. १९,५९,३; तै. सं. १,१,१४,३ । इडा(ळा)मग्ने० । ऋ. ३,१,२३; ५,११; ६,११; ७,११; १५,७. २२,५; २३,५, मा. ७६; तै. सं. ४,२,४,३ । अग्निं सुदीतिं० । ऋ. ३,१७,४, तै. ब्रा. ३,६,९,१ ]

# अथ मध्यमिका।

एकोनविंशं स्थानकम्।

## सावित्रा।

सावित्रैरग्निमादत्ते प्रसूत्या इयं वै गायत्र्यन्तरिक्षं त्रिष्टुब् द्यौर्जगती दिशोऽनुष्टुप् छन्दोभिरेवैनामेभ्यो लोकेभ्य आवर्तयत्युभयतःक्ष्णुद्भवत्यन्यतःक्ष्णुतन्वै फालेनेयदन्नं क्रियतेऽन्नमर्कोऽर्कोऽग्निरन्नस्यार्कस्यावरुद्ध्या अरत्निमात्रीं कुर्यात् पुरुषेण वै यज्ञस्संमितो यज्ञपुरुषासंमितां व्याममात्रीं कुर्यादेतावद्वै पुरुषे वीर्यं वीर्येण संमितामपरिमितां कुर्यादपरिमितस्यावरुद्ध्यै यो वृक्षः फलग्रहिस्तस्य कुर्यादेष वै वनस्पतीनां वीर्यावत्तमस्सवीर्यत्वाय कल्माषीं वैणवीं सुषिरां कुर्यादग्निर्वै देवेभ्योऽपाक्रामत् स वेणुं प्राविशत् स एतानि वर्माण्यनह्यत यानि पर्रूष्येतं लोकमन्वचरयत् सुषिस्स यत्र यत्रावसत् तन्निरदहत् तत् कल्मषमभवद्यत् कल्माषी वैणवी सुषिरा भवति सा ह्याग्नेयीतमा समृद्ध्या अथो यदेवास्यात्र न्यक्तं तस्यावरुद्ध्यै ॥१॥ १

अग्निर्वै देवेभ्योऽपाक्रामत् स यत्र यत्रागच्छत् तं प्रजापतिरन्वपश्यत् प्राजापत्योऽश्वो यदश्वेन यन्त्यग्नेरेवानुख्यात्या एतेन वै देवा असुरानुत्तममभ्यभवन् यदश्वेन यन्ति भ्रातृव्यस्याभिभूत्या एतं वै रक्षाँसि नातरन् यदश्वेन यन्ति रक्षसामतीर्त्या अश्वं पूर्वं नयन्ति गर्दभमपरं पापवसीयसस्य व्यावृत्त्यै तस्मात् पुण्यं पूर्वं यन्तं पापीयान् पश्चादन्वेति गर्दभेन संभरति तस्मादेष समावत् पशूनां रेतो दधानानां कनिष्ठोऽग्निर्ह्यस्य रेतो निरदहद्यदेतेनास्यामूर्जमर्कं संभरति तस्मादेषोऽस्यां जीवितमः ॥ प्रतूर्तं वाजिन्नाद्रव युञ्जाथां रासभं युवमित्यश्वगर्दभयोरेवैष योगे योगे तवस्तरं वाजे वाजे हवामहे सखाय इन्द्रमूतय इत्यूत्यै हि वाजायाग्निश्चीयते प्रतूर्वन्नह्यवक्रामन्नशस्तीरिति बहुर्वै भवतो भ्रातृव्यो भवत्येष योऽग्निं चिनुते वज्रयश्वः पाप्माशस्तिर्भ्रातृव्यो वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति रुद्रस्य गाणपत्ये मयोभूरेहीति रौद्रा वै पशवो रुद्रमेव पशून्निर्याच्यात्मने कर्म कुरुत उर्वन्तरिक्षं वीहित्यन्तरिक्षदेवत्यो ह्येष एतर्हि पूष्णा सयुजा सहेति पूषा वा अध्वनाँ संनेता समष्ट्यै॥ पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरेति पुरीषायतनो वा अग्निराङ्गिरस एतमग्रे देवताभिस्समभरन् सायतनमेवैनं देवताभिस्संभरत्यग्निं पुरीष्यमङ्गिरस्वदच्छेम इति ब्रूयाद्येन संगच्छेत सर्वो वै पुरुषोऽग्निमान्वाजमेवास्य वृङ्क्ते प्रजापतये प्रोच्याग्निश्चेतव्यो राज्ञे प्रोच्य स हि प्राजापत्यतम इयं वाव

[१] मै. ३,१,२ (२)। कपि. २९,८। शत. ब्रा. ६,३,१,३०।

[२] मै. ३,१,३ (३)। कपि. २९,८। वा. ११,१२—१६,१८। काण्व. १२,१२—१६,१८। तै, सं. ५,१,२। शत. ब्रा. ६,३,१; ३,१—५। [योगे योगे तवस्तरं०। ऋ. १,३०,७; सा. १६३,७४३; अथर्व. २०,२६,१; तै.सं. ४,१,२,१]

प्रजापतिस्तस्या एष कर्णो यद्वल्मीको यद्वल्मीकवपामुद्धृत्याभिमन्त्रयते प्रजापतय एव प्रोच्याग्निं चिनुते श्रृण्वन्त्येनमग्निं चिक्यानमसा अग्निमच्छेति कर्णौ हि कर्णायाह ॥२॥ २-४

अन्वग्निरुषसामग्रमख्यदित्यनुख्यात्या आगत्य वाज्यध्वानँ सर्वा मृधो विधूनुत इति मृध एवैतयापहत आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वमित्यैच्छद्वा एतं पूर्वया प्रजापतिरविन्ददुत्तरयेच्छत्येव पूर्वया विन्दत्युत्तरया द्यौस्ते पृष्ठं पृथिवी सधस्थमिति वज्री वा अश्वः प्राजापत्यो लोमाभिरुभयादतः पशूनति दद्भिरन्यतोदतो वज्रेणैव भ्रातृव्यमवगृह्णाति यत्र वै यज्ञस्यानुरूपं क्रियते तत् पशवोऽनुरूपा जायन्ते ॥ उत्क्रामोदक्रमीदित्यनुरूपाभ्यामुत्क्रमयति तस्मात् पशवोऽनुरूपा जायन्ते द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै यां वा अनग्ना अध्वर्युराहुतिं जुहोत्यन्धोऽध्वर्युर्भवति रक्षाँसि यज्ञं घ्नन्त्यग्निर्वै वरुणानीरभ्यकामयत तस्य तेजः परापतत् तद्धिरण्यमभवद्यद्धिरण्यमुपास्य जुहोत्यग्निमत्येव जुहोति समृद्ध्यै नान्धोऽध्वर्युर्भवति रक्षाँसि यज्ञं घ्नन्ति जिघर्म्यग्निं मनसा घृतेनेति मनो वै वाचः क्षेपीयो मनसैवाहुतिमाप्नोति प्रतिक्षियन्तं भुवनानि विश्वेति तस्मादेष सर्वाः प्रजाः प्रत्यङ् क्षियते व्यचिष्ठमन्नं रभसं विदानमित्यन्नमेवास्मै स्वदयत्या त्वा जिघर्मि वचसा घृतेनेति पूर्वमेवोदितमनुवदत्यरक्षसा मनसा तज्जुषेथा इति रक्षसामपहत्यै मर्यश्रीस्स्पृहयद्वर्णो अग्निरित्यपचितिमेवास्मिन् दधाति द्वाभ्यां जुहोति द्विपाद्यजमानः प्रतिष्ठित्यै ॥ यज्ञमुखे यज्ञमुखे वै यज्ञं रक्षाँसि जिघाँसन्ति यत् परिलिखति रक्षसामपहत्यै तिसृभिः परिलिखति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षाँस्यपहन्ति परि वाजपतिः कविरिति गायत्र्या परिलिखति ब्रह्म वै गायत्री ब्रह्मणैवैनं परिगृह्णाति परि त्वाग्ने पुरं वयमित्यनुष्टुभा वाग्वा अनुष्टुप् सर्वाणि छन्दाँसि परिभूर्वाचैव सर्वाणि छन्दाँसि परिगृह्णाति त्वमग्ने द्युभिरिति त्रिष्टुभा वीर्यं वै त्रिष्टुब् वीर्येणैवैनं परिगृह्णात्यनुष्टुभा मध्यतः परिलिखति वाग्वा अनुष्टुब् वाचमेव मध्यतो दधाति तस्मान्मध्यतो वाग्वदति तेजो वै गायत्री यज्ञोऽनुष्टुबिन्द्रियं त्रिष्टुप् तेजसा चैवेन्द्रियेण च यज्ञमुभयत आत्मन् परिगृह्णाति ॥३॥ ५-७

सावित्राभ्यां खनति प्रसूत्यै धूममेव पूर्वेण विन्दति ज्योतिरुत्तरेण द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्या अपां पृष्ठमसि योनिरग्नेरिति पुष्करपर्णमादत्तेऽपाँ ह्येतत् पृष्ठं योनिरग्नेः पुष्करपर्णेन संभरति

---

[३] मै. ३,१,४ (४—६)। कपि. ३०,१। वा ११,१७—२७। काण्व. १२,१७--२७। [अन्वग्निरुषसा०। अथर्व. ७,८२,४; १८,१,२७-२८। आ त्वा (जिघर्म्यग्निं)०। ऋ. २,१०,४; तै सं. ४,१,२४। आ विश्वतः प्रत्यञ्चं०। ऋ २,१०,५. तै. सं. ४,१,२,५। परि वाजपति०। ऋ. ४,१५,३; सा. ३०; तै. सं. ४,१,२,५; तै. ब्रा. ३,६,४,१। परि त्वाग्ने पुरं वयं०। ऋ. १०,८७,२२; अथर्व. ७,७१,१, ८,३,२२; तै. सं. १,५,६,४; ४,१,२,५। त्वमग्ने द्युभिस्त्वमा०। ऋ २,१,१, तै. सं ४,१,२,५. तै. आ. १०,७६,१; नि. ६,१; १३,१]

[४] मै. ३,१,५ (७)। कपि. ३०,२। वा ११,२९—३४। काण्व. १२,२९—३४। तै. सं. ६,१,४—५। शत. ब्रा. ६,४,१,६

स्वेनैवैनं योनिना संभरति शान्त्या अनुद्दाहाय कृष्णाजिनेन संभरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञँ संभरत्यस्कन्दाय न हि यज्ञे यज्ञस्स्कन्दत्येतद्वै ब्रह्मणो रूपं यत् कृष्णाजिनं ब्रह्मणा चैवैन-मृक्सामाभ्यां च संभरति शर्म च स्थो वर्म च स्थ इति सँस्तृणातीयं वै पुष्करपर्णमसौ कृष्णाजिनमिमे एवैतत् सँस्तृणात्यच्छिद्रे बहुले उभे इत्यच्छिद्रे हीमे बहुले उभे व्यचस्वती इति तस्मादिमे व्यचस्वती भर्तमग्निं पुरीष्यमिति पुरीष्यो ह्येष संवसाथाँ स्वर्विदौ समीची उरसा त्मनेति तस्मादिमे नाना सती समीची अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमिदिति ज्योतिरेवास्मिन्नजस्रं दधाति पुरीष्योऽसि विश्वभरा इति पुरीष्यो ह्येष विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्न इति प्रजापतिर्वा अथर्वा प्रजापतिरेतमग्रेऽमन्थत् प्रजापतिरेवैनं जनयति तमु त्वा दध्यङ्ङृषिरिति दध्यङ् वा आथर्वण-स्तेजस्व्यासीत् तेनैवैनँ संभरति तमु त्वा पाथ्यो वृषेति पूर्वमेवोदितमनुवदति चतसृभिस्संवपति चत्वारि वै छन्दाँसि च्छन्दोभिरेवैनँ संवपति गायत्रीभिर्ब्राह्मणस्य संवपेद्गायत्रो हि ब्राह्मणस्त्रिष्टुभ्भी राजन्यस्य त्रैष्टुभो हि राजन्यो जगतीभिर्वैश्यस्य जागतो हि वैश्यो यथाछन्दसमेवोभयीभिस्संवपेद्य कामयेत वसीयान् स्यादिति तेजो वै गायत्रीन्द्रियं त्रिष्टुप् तेजश्चैवास्मिन्निन्द्रियं च समीची दधात्य-ष्टाभिस्संवपत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तँ संभरति सीद होतरिति देवता एवास्मिन् सँसादयति नि होतेति मनुष्यानेव सँसीदस्वेति वयाँस्येव जनिष्ट हि जेन्यो अग्रे अह्नामिति देव-मनुष्यानेवास्मिन् सँसन्नान् प्रजनयति॥४॥ ८

अपो देवीरुप सृज मधुमतीरित्योषधीनां प्रतिष्ठित्यै तासामास्थानादुज्जिहतामोषधयस्सुपिप्पला इति तस्मादोषधयः फलं गृह्णन्ति सं ते वायुर्मातरिश्वा दधात्विति तस्माद्वायुर्वृष्टिं वहति प्राणो वै वायुः प्राणमेवास्मिन् दधाति तस्मै देव वषडस्तु तुभ्यमिति षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मादृतुमृतुं वर्षति यत् प्रत्यक्षं वषट् कुर्याद्यातयामा वषट्कारस्स्याद्यन्न वषट् कुर्याद्रक्षाँसि यज्ञँ हन्युस्तस्मै देव वषडस्तु तुभ्यमिति परोक्षं न यातयामा वषट्कारो भवति न रक्षाँसि यज्ञं घ्नन्ति ॥ यदाज्येन जुहुयाच्छुचा पृथिवीमर्पयेदपो निनयति शान्त्या अनुद्दाहाय सुजातो ज्योतिषेत्येतर्हि वा एष जायते यर्हि संभ्रियते जात एवास्मिञ्ज्योतिर्दधाति शर्म वरूथमासदत् स्वरिति ब्रह्म वै शर्म वरूथं ब्रह्मण्येवैनं प्रतिष्ठापयति वासो अग्ने विश्वरूपँ संव्ययस्व विभावस इति च्छन्दाँसि वा अग्ने-र्वासश्छन्दोभिरेवैनं परिदधात्यनुष्टुब् वा अग्नेः प्रिया तनूः प्रिययैवैनं तन्वा परिदधाति वेदुको वासो

---

[ तमु त्वा दध्यङ् ऋषिः० । ऋ. ६,१६,१४; तै. सं. ३,५,११,३; ४,१,३,२ । तमु त्वा पाथ्यो० । ऋ. ६,१६,१५; तै. सं. ३.५,११,४; ४,१,३,३]

[ ५ ] मै. ३,१,५-६ (७-८) । कपि. ३०,३ । वा. ११,३८-५१; ३६,१४-१६ । काण्व. १२,३८-५३; ३६,१४-१६ । तै. सं. ५,१,५-६; ६,१,४-५ । शत. ब्रा. ६,४,१,६; ४,३ ।

भवति य एवं वेद ॥ वरुणमेनिर्वा एष उपनद्ध उदुतिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इत्यूर्ध्वामेव वरुणमेनिमुत्सुवति द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै स जातो गर्भो असि रोदस्योरितीमे वै रोदसी अनयोरेष गर्भोऽनयोरेवैनं प्रतिष्ठापयत्यग्ने चारुर्विभृत ओषधीष्विति तस्मादग्निस्सर्वा अन्वोषधीः प्र मातृभ्यो अधि कनिक्रदद्गा इत्योषधयो वा एतस्य मातरस्ताभ्य एवैनमधिप्रणयति स्थिरो भव वीड्वङ्ग इति गर्दभ एव स्थेमानं दधाति तस्मादेष पशूनां भारभारितमश्शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर इत्यभि वा एष एतर्हि प्रजाश्शोचयति शान्त्यै ॥ मा द्यावापृथिवी अभि शुचो मान्तरिक्षं मा वनस्पतीनित्येभ्य एवैनं लोकेभ्यश्शमयति प्रैतु वाजी कनिक्रददिति समष्ट्यै मा पाद्यायुषः पुरेत्यायुरेवास्मिन् दधाति तस्माद्गर्दभस्सर्वमायुरेति तस्माद्गर्दभे प्रमीते बिभ्यति वृषाग्निं वृषणं भरन्निति वृषा ह्येष वृषाणं भरत्यपां गर्भँ समुद्रियमित्यपाँ ह्येष गर्भस्समुद्रियोऽग्न आयाहि वीतय इत्याग्निना वै देवा इदमग्रे व्यायन् वीत्यै प्रच्युतो वा एष एतर्ह्यायतनादगतः प्रतिष्ठाँ स यजमानं चैवाध्वर्युं च ध्यायत्यृतँ सत्यमृतँ सत्यमितीयं वा ऋतमसौ सत्यमनयोरेवैनं प्रतिष्ठापयत्योषधयः प्रतिगृह्णीताग्निमेतँ शिवमायन्तमभ्यत्र युष्मानित्योषधयो वा एतस्य भागधेयं ताभिरेवैनँ सम्यञ्चं दधात्यथो याभ्य एनं प्रच्यावयति तास्वेनं प्रतिष्ठापयति ॥ पुष्पवतीस्सुपिप्पला इति तस्मादोषधयः फलं गृह्णन्ति द्वाभ्यामुपावहरति द्विपाद्यजमानः प्रतिष्ठित्यै वि पाजसेति वि स्रंसयति वरुणमेनिमेव विष्यत्यापो हि ष्ठा मयोभुव इत्यप उपसृजत्यापश्शान्ताश्शान्ताभिरेवास्य शुचँ शमयति तिसृभिस्त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचँ शमयत्यजलोमैस्सँसृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तन्वा सँसृजति शर्कराभिर्धृत्या अग्र्यैः कपालैस्सँसृजत्यारण्यानेव पशूञ्शुचार्पयति यद्ग्राम्यैस्सँसृजेद् ग्राम्यान् पशूञ्शुचार्पयेत् तस्मादेते समावत् पशूनां प्रजायमानानां कनिष्ठाश्शुचा ह्येत ऋताः ॥५॥

९-१३

मित्रस्सँसृज्य पृथिवीमिति वरुणमेनिर्वा एषा मित्रेणैव वरुणमेनिमुपैति रुद्रस्सँसृज्य पृथिवीँ सँसृष्टां वसुभी रुद्रैरित्येताभिर्वा एतां देवताभिः प्रजापतिस्समसृजत् ताभिरेवैनाँ सँसृजति प्रान्यैर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनमेव करोत्यथो मध्यत एव यज्ञस्याशिषमवरुन्द्धे मखस्य शिरोऽसीति

---

[ उदुतिष्ठ स्वध्वरावा० । ऋ. ८,२३,५; तै. सं. ४,१,४,१ । ऊर्ध्व ऊ षु ण० । ऋ. १,३६,१३; सा. ५७; तै. सं. ४,१,४,२; तै. ब्रा. ३,६,१,२ । स जातो गर्भो० । ऋ. १०,१,२; तै. सं. ४,१,४,२ । अग्न आयाहि वीतये० । ऋ. ६,१६,१०; सा. १,६६० । तै. सं. २,५,७,३; ८,१; तै. ब्रा. ३,५,२,१ । आपो हि ष्ठा० । ऋ. १०,९,१, सा १८३७, अथर्व. १,५,१; तै. सं. ४,१,५,१; ५,६,१,४· ७,४,१९,४; तै. आ. ४,४२,४; १०,१, ११; नि. ९,२७]

[ ६ ] मै. ३,१,६—७ (८-९) । कपि. ३०,४ । वा. ११,५३--६० । काण्व. १२,५४-६१ । तै. सं. ५,१,६--७ । शत. ब्रा. ६,४,३३; ६,५,१,२ ।

यज्ञो वै मखो यज्ञस्यैव शिरः करोति वसवस्त्वा कुर्वन्तु गायत्रेण च्छन्दसेत्येताभिर्वा एतां देवताभिः प्रजापतिरकरोत् ताभिरेवैनां करोति त्र्युद्धिं करोति त्रय इमे लोका इमानेव लोकानाप्नोति पञ्चोद्धिं करोति पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे ॥ धारया मयि प्रजामित्याशीरेवैषा छन्दसां दोहोऽरत्निमात्रीं कुर्यात् पुरुषेण वै यज्ञस्संमितो यज्ञपुरुषासंमितां यावद्बाहुभ्यां पर्याप्नुयात् तावतीं कुर्यादेतावद्वै पुरुषे वीर्यं वीर्येण संमितां प्रादेशमात्रीं कुर्यादेतावद्वै मुखं मुखं देवानामग्निर्मुखेन संमितामपरिमितां कुर्यादपरिमितस्यावरुद्ध्यै चतुस्स्तनां कुर्याददित्या दोहाय षट्स्तनामृतूनां दोहायाष्टास्तनां गायत्र्या दोहाय द्विस्तनां द्यावापृथिव्योर्दोहाय नवाश्रिमभिचरणीयां कुर्यात् त्रिवृद्वज्रो वज्रमेव भ्रातृव्याय प्रहरत्यदित्या रास्नास्यदितिस्ते बिलं गृह्णात्विति यजुषा बिलं करोत्ययजुषा हि मनुष्याः कुर्वन्ति मानुषेणैवैनां पात्रेण व्यावर्तयन्ति यद्वा एषा पुरा पक्तोर्भिद्येतार्तिं यजमान आर्छेद्धन्येतास्य यज्ञः कृत्वाय सा महीमुखामिति देवताभ्य एवैनाँ संप्रयच्छति वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसेत्ये-ताभिर्वा एतां देवताभिः प्रजापतिरधूपयत् ताभिरेवैनां धूपयत्यश्वशकेन धूपयति प्राजापत्यो वा अश्वो यज्ञः प्रजापतिस्सयोनित्वाय सप्तभिर्धूपयति शिरो वा एतद्यज्ञस्य यदुखा सप्त प्राणाश्शीर्षन्नेव प्राणान् दधाति तस्मात् सप्त शीर्षण्याः प्राणाः ॥६॥　　१४-१५

अदितिस्त्वा देवी विश्वदेव्यावतीतीयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरंकाराय न हि स्वस्स्वँ हिनस्ति देवानां त्वा पत्नीरिति देवानां वा एतां पत्नीरग्रेऽत्रादधुस्ताभिरेवैनां दधाति धिषणास्त्वेति विद्या वै धिषणा विद्ययैवैनामभीन्द्धे वरुत्रीस्त्वेति होत्रा वै वरुत्रीर्होत्राभिरेवैनाँ श्रपयति ग्नास्त्वेति च्छन्दाँसि वै ग्नाश्छन्दोभिरेवैनां पचति जनयस्त्वाच्छिन्नपत्रा इति देवानां वै पत्नी-र्जनयस्ता एतामग्रेऽपचँस्ताभिरेवैनां पचति ॥ द्विष्पचन्त्वित्याह तस्माद् द्विस्संवत्सरस्य सस्यं पच्यते षड्भिः पचति षड्वा ऋतव ऋतुभिरेतां देवानां पत्नीरपचँस्तैरेवैनां पचति वरुणमेनिर्वा एषाभीद्धा मित्रस्य चर्षणीधृत इति मित्रेणैव वरुणमेनिमुपैति देवस्त्वा सवितोद्वपत्विति सावित्र्योद्वपति प्रसूत्या अव्यथमाना पृथिव्यामाशा दिश आपृणेति तस्मादग्निस्सर्वा दिशो विभात्युत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमिति दृँहत्येवैनां यद्वा एषा भिद्येतार्तिं यजमान आर्छेद्धन्येतास्य यज्ञो मित्रैतां त उखां परिददामीति ब्रह्म वै मित्रो ब्रह्मण एवैनां परिददाति ॥ यदि भिद्येत तैः कपालैस्सँसृज्यान्यां कुर्यात् सैव ततो यज्ञस्य निष्कृतिर्वसवस्त्वाच्छृन्दन्तु गायत्रेण च्छन्दसेति च्छन्दोभिर्वा एषा क्रियते छन्दोभिर्धूप्यते छन्दोभिः पच्यते ॥ छन्दाँस्येव च्छन्दोभिराच्छृन्दन्ति स्वेनायतनेनासुर्यं वै पात्रम-

[७] मै. ३,१,८ (१०-१२) । कपि. ३०,५ । वा. ११,६१--६५ । काण्व. १२,६२--६६ । तै. सं. ५,१,७ । शत. ब्रा. ६,५,४ । [मित्रस्य चर्षणी० । ऋ. ३,५९,६; तै. सं. ३,४,११,५; ४,१,६,३; तै. आ. ४,३,१]

नाच्छृणं यदाच्छृणत्ति देवत्रैव करोत्यजक्षीरेणाच्छृणत्ति सा ह्याग्नेयीतमा समृद्ध्या अथो परमेणैव पयसा ॥७॥ १६-१९

अथैतेऽग्निभ्यः कामेभ्यः पशव आलभ्यन्ते कामा वा अग्नयस्सर्वानेवैतैः कामानभिजयति सर्वान् कामान् स्पृणोति यत् पशून्नालभेतानवरुद्धा अस्य पशवस्स्युर्यत् संस्थापयेद्यातयामानि शीर्षाणि स्युर्यन्न सँस्थापयेद्यज्ञं विच्छिन्द्याद्यद् पशूनालभते तेनैव पशूनवरुन्द्धे यत् पर्यग्निकृतानुत्सृजति शीर्ष्णामयातयामत्वायैकेन सँस्थापयति यज्ञस्य संतत्या अविच्छेदाय प्राजापत्येन यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रतिष्ठापयति न यज्ञं विच्छिनत्त्यैन्द्रा वा एते पशवो ये मुष्करा यदैन्द्रास्सन्तोऽग्निभ्य आलभ्यन्ते देवताभ्यस्समदं करोत्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्यादैन्द्रीर्वै त्रिष्टुभस्तेनैवैन्द्राः क्रियन्ते न देवताभ्यस्समदं करोत्यथैष वायव्यश्श्वेतस्तूपरस्सर्वान् वा एष पशून् प्रत्यालभ्यते यत्तूपरोऽश्वं तेन पशूनां प्रत्यालभ्यते यच्छ्मश्रुणः पुरुषं तेन यदष्टाशफोऽष्टाशफान् पशूँस्तेन नियुत्वती याज्यानुवाक्ये कुर्याद्यजमानस्य धृत्या अनुन्मादाय यन्न नियुत्वती स्यातामुद्वा माद्येद्यजमानः प्र वा पतेद्वायुमती शुक्रवती वायुर्वा अग्नेस्तेजस्तस्माद्यग्रङ्वातो वाति तदग्निरन्वेति स्वमेव तत् तेजोऽन्वेति वायुर्वै पशूनां प्रियं धाम प्राणो वायुर्यद्वायव्य एतमेवैनमभिसंजानानाः पशव उपतिष्ठन्ते वायव्या कार्या३ प्राजापत्या३ इति मीमाँसन्ते यद्वायव्यां कुर्यात् प्रजापतेरियाद्यत् प्राजापत्यां वायोरियाद्य एव कश्चाग्नौ पशुरालभ्यते तस्याग्नये वैश्वानराय पुरोडाशं कुर्याद्यद्वायव्यः पशुस्तेन वायोर्नैति यत् प्राजापत्यः पुरोडाशस्तेन प्रजापतेर्नैति यद् द्वादशकपालो द्वादशमासस्संवत्सरस्संवत्सरोऽग्निर्वैश्वानरस्तेन वैश्वानरत्वान्नैति ॥८॥ २०

आग्नावैष्णवमेकादशकपालं निर्वपत्यग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभते मुखं वै देवानामग्निः परोऽन्तो विष्णुर्यज्ञस्यैवान्तौ समग्रहीदथादित्येभ्यो घृते चरुरादित्या वा इत उत्तमा अमुं लोकमायन्नादित्या इमाः प्रजा आदित्यानां नेदिष्ठिनीस्स्वामेव देवतामुपैति घृते भवति घृतभागा ह्यादित्या अथाग्नये वैश्वानराय द्वादशकपालस्संवत्सरो वा अग्निर्वैश्वानरो द्वादशमासस्संवत्सरस्संवत्सरस्याप्त्यै ॥ योऽयोनिमग्निं चिनुते यजमानस्य योनिमनु प्रविशति स एनं निर्दहति संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरोऽग्नेर्योनिर्यदग्नये वैश्वानराय योनिमन्तमेवैनं चिनुत एषा वा अग्नेः प्रिया तनूर्या वैश्वानरी यदग्नये वैश्वानराय प्रियाया एवास्य तन्वे हविष्कृत्वा प्रियां तन्वमादत्ते कामो वा अग्निर्वैश्वानरो यदग्नये वैश्वानराय निर्वपत्यश्नुते तं कामं यस्मै कामाय दीयते यद् द्वादशकपालो द्वादशमासस्संवत्सरो या वै प्रजा भ्रँशन्ते संवत्सरात् ता भ्रँशन्ते याः प्रतितिष्ठन्ति संवत्सरे ताः प्रतितिष्ठन्ति संवत्सर एव प्रतिष्ठायाग्निं बिभर्ति ॥९॥ २१-२२

[८] मै ३,१,१० (१५-१६)। कपि. ३०,६। तै. सं. ५,१,८,१। [९] मै. ३,१,१० (१६)। कपि. ३०,७।

षडाधीतयजूँषि जुहोति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयत्यृतुभिरस्या वीर्यमुद्यच्छते सप्तैतानि जुहोति सप्त प्राणाः प्राणैरेवैनं दीक्षयति नाना जुहोति तस्मान्नानावीर्याः प्राणाश्चक्षुश्श्रोत्रं वागनुष्टुभोत्तमं जुहोति वाग्वा अनुष्टुब् वाचमेवोत्तमां दधाति तस्माद्वाक् प्राणानामुत्तमा विहितं वदत्यनुष्टुब् वै सर्वाणि च्छन्दाँसि पशवश्छन्दाँस्यन्नं पशवः पशूनेवान्नाद्यमवरुन्द्धे यज्ज्योतिषि प्रवृणक्ति भूतं तेनावरुन्द्धे यदङ्गारेषु भविष्यत् तेनाङ्गारेषु प्रवृज्या भविष्यद्धि भूयो भूतान्मा सु भित्था मा सु रिष इति दृँहत्येवैनामरिष्टा त्वमुदिहि यज्ञे अस्मिन्निति समष्ट्यै द्वाभ्यां प्रवृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ॥ परीध्या बुभूषतो गर्भो दीक्षितोऽत इव वा एष भवत्यत एवैनं जनयति मथित्वा गतश्रेयवदध्याद्भूतो हि स स्वामेव देवतामुपैत्यन्यत आहृत्यावदध्याद्यं कामयेत भ्रातृव्यमस्मै जनयेयमिति भ्रातृव्यमेवास्मै जनयति भृज्जनादवदध्यादन्नकामस्य भृज्जने वा अन्नं क्रियते सयोन्येवान्नमवरुन्द्धे यो वृक्ष उपरि दीप्येत तस्यावदध्यात् स्वर्गकामस्यैष वा अग्नीनाँ स्वर्ग्यस्स्वर्गस्य लोकस्य समष्ट्यै द्रुन्नस्सर्पिरासुतिरिति क्रुमुकं लिखितं घृतेनाक्त्वावदधात्यग्नेर्वै प्रिया तनूस्तया क्रुमुकं प्राविशत् तेजो घृतं प्रियामेवास्य तन्वं तेजसा समनक्ति मुञ्जानवदधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपिदधाति परस्या अधि संवत इत्यौदुम्बरीमूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपिदधाति परमस्याः परावत इति वैकङ्कतीमग्नेर्वै सृष्टस्य विकङ्कतं भा आर्छत् तदेवावरुन्द्धे यदग्ने कानि कानि चेति न ह स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मा एताभिः प्रयोग ऋषिरस्वदयद्यदेताभिस्समिध आदधातीध्ममेवास्मै स्वदयति स्वदितमस्यान्नं भवति य एवं वेद च्छन्दाँसि वा अग्नेर्योनिर्यच्छन्दोभिरादधाति स्वेनैवैनं योनिनानुबिभर्ति रात्रीं रात्रीमप्रयावं भरन्त इत्याशिषमेवाशास्ते नाभा पृथिव्यास्समिधानो अग्निमिति पृतना एवैतया जयति ॥ यास्सेना अभीत्वरीरित्यग्निं वै जातं रक्षाँस्यजिघाँसँस्ते देवा एता ऋचोऽपश्यँस्ताभिरस्माद्रक्षाँस्यपाघ्नन् यदेताभिस्समिध आदधाति रक्षसामपहत्या अथैतन्मालिम्लवं देवाश्च वा असुराश्चास्पर्धन्त ते देवा एतन्मालिम्लवमपश्यँस्तेनासुरानभ्यभवन् यदेतेन समिध आदधाति भ्रातृव्यस्याभिभूत्यै तस्माद्याँ समामग्निं चिन्वन्ति ग्राहुकास्स्तेनं भवन्ति यास्सेना अभीत्वरीरित्यौदुम्बरीं देवा वै यत्रोर्जं व्यभजन्त तत उदुम्बरोऽजायत जातायैवास्मा ऊर्जमपिदधाति दँष्ट्राभ्यां मलिम्लूनग्न इत्याश्वत्थीमेष वै वनस्पतीनाँ सपत्नसाहो विजित्यै यर्हि दँष्ट्राभ्यामिति ब्रूयाद्यं द्विष्यात् तं मनसा ध्यायेन्मनो वै वाचः क्षेपीय आहुतिमेवैनं भूतामग्नयेऽपिदधाति ये जनेषु मलिम्लव इति वैकङ्कतीमग्नेर्वै सृष्टस्य विकङ्कतं भा आर्छत् तदेवावरुन्द्धे यो अस्मभ्यमरातीयादिति

---

[१०] मै. ३,१,९ (१३--१४)। कपि. ३०,८। वा. ११,६८-८२। काण्व. १२,६९--८३। तै. सं. ५,१,९--१०। शत. ब्रा. ६,६,१,१५। [द्रुवन्नस्सर्पिरा०। ऋ. २,७,६, तै. सं. ४,१,९,२। परस्या अधि०। ऋ. ८,७५,१५; तै. सं. २,६,११,३; ४,१,९,२। यदग्ने कानि कानि०। ऋ. ८,१०२,२०; अथर्व. १९,६४,३; तै. सं. ४,१,१०,१। सँशितं मे०। अथर्व. ३,१९,१।

शमीमयीँ शान्त्यै निन्दाद्यो अस्मान् दिप्साचेति तस्मादग्निचितो नाश्लीलं कीर्तयेत् सँशितं मे ब्रह्मेति ब्रह्मणैव क्षत्रँ सँश्यति क्षत्रेण ब्रह्म तस्माद्ब्रह्मपुरोहितं क्षत्रमत्यन्यानि क्षत्राणि तस्माद्ब्रह्म क्षत्रवदत्यन्यान् ब्राह्मणानुदेषां बाहू अतिरमुद्वर्चो अथो बलमित्याशिषमेवाशास्ते क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ अहमिति यथायजुः ॥१०॥ २३–२५

दृशानो रुक्म उर्विया व्यद्यौदिति रुक्मं प्रतिमुञ्चेत मृत्युर्वा अग्निरमृतँ हिरण्यममृतेनैव मृत्योरन्तर्धत्त एकविँशतिनिर्बाधो भवति प्रतिष्ठित्या एकविँशतिर्देवलोकास्तेभ्य एव भ्रातृव्यं निर्बाधते बहिष्टान्निर्बाधं कुर्यादस्मादेवैनं लोकान्निर्बाधत उभयतः पर्यस्यति प्रतिमुञ्चमान उभाभ्यामेवैनं लोकाभ्यां निर्भजति नक्तोषासेत्यहोरात्राभ्यामेवैनं परिगृह्णाति देवा अग्निं धारयन् द्रविणोदा इति प्राणा वै देवा द्रविणोदाः प्राणैरेवैनं दाधार षड्द्यामँ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनं परिगृह्णाति द्वादशोद्यामं भवति द्वादश मासास्संवत्सरस्संवत्सरेणैवैनं परिगृह्णाति मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैनं परिगृह्णाति ॥ नाधोनाभि बिभृयादग्निरस्य रेतो निर्दहेदूर्ध्वं नाभ्या बिभृयादूर्ध्वं नाभ्यास्सदेवमग्निस्सर्वा देवतास्सदेव एव देवता बिभर्ति विश्वा रूपाणीति सावित्र्या प्रतिमुञ्चते प्रसूत्या आसीनः प्रतिमुञ्चते तस्मादासीनाः प्रजाः प्रजायन्ते सुपर्णोऽसि गरुत्मानित्यग्नेर्वा एते संभारा अग्निमेवैतैस्संभरत्येतद्वा अग्नेः प्रियं धाम तदेवावरुन्द्धे दिवं गच्छ स्वः पतेति स्वर्गस्य लोकस्य समष्ट्या असुराणां वा इमे लोका आसँस्ते देवा विष्णुमब्रुवन् यावदयं कुमारो विक्रमते तावन्नो दत्तेति स सकृदेवेमां व्यक्रमत गायत्रीं छन्दस्सकृदन्तरिक्षं त्रिष्टुभं छन्दस्सकृद्दिवं जगतीं छन्दस्सकृद्दिशोऽनुष्टुभं छन्दस्ते देवा इमांल्लोकानसुराणामविन्दन्त ततो देवा अभवन् परासुरा अभवन् य एवं विद्वान् प्रक्रमान् प्रक्रामतीमानेव लोकान् भ्रातृव्यस्य विन्दते भवत्यात्मना परास्य भ्रातृव्यो भवत्यक्रन्ददग्निरित्येतया वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं धामावारुन्द्धाग्नेरेवैतया प्रियं धामावरुन्द्धेऽग्नेऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येति पुनरेति तस्माद्ग्राम्याः पशवस्सायमरण्याद्ग्राममायान्ति चतसृभिश्चतुष्पादा हि पशवो दक्षिणा पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तर आ त्वाहार्षमित्या ह्येनँ हरति विशस्त्वा सर्वा वाञ्छन्त्वस्मे राष्ट्रमधिश्रयेति यं कामयेत राष्ट्रँ स्यादिति तं

[११] मै. ३,२,१ (१) । कपि. ३२,१ । वा. १०,२४; १२,१-१६,२१,२५,३३,४०-४१; १७,७०। काण्व. ११,३४; १३,१-१५,२२,२६,३४,४१-४२, १८,७० । तै. सं. ५,१,९-१०। शत. ब्रा. ६,६,४; ७,२। [दृशानो रुक्म०। ऋ. १०,४५,८; तै. सं. १,३,१४,५; ४,१,१०,४; २,१,४ । नक्तोषासा समनसा०। ऋ. १,९६,५; १,११३, ३ (च.पा.); तै. सं. ४,१,१०,४; ६,५,२, ७,१२,३ । विश्वा रूपाणि० । ऋ. ५,८१,२; अथर्व. ७,७३,६; तै. सं. ४,१,१०,४; नि. १२,१३ । अक्रन्ददग्नि० । ऋ. १०, ४५,४; तै. सं. १,३,१४,२; ४,२,१; २,१,२ । पुनरूर्जा सह रय्या० । सा. १८३२-१८३३ । आ त्वाहार्ष०। ऋ. १०,१७३,१; अथर्व. ६,८७,१; तै. सं. ४, २,१,४; तै. ब्रा. २,४,२,८ ]

मनसा ध्यायेद्राष्ट्रमेव भवत्युदुत्तमं वरुण पाशमस्मदिति शुनश्शेपो वा एतामाजीगर्तिर्वरुणगृहीतोऽपश्यत् तया वै स वरुणपाशादमुच्यत वरुणपाशमेवैतया प्रमुञ्चतेऽग्ने बृहन्नुषसामूर्ध्वो अस्थादिति पाप्मा वै तमः पाप्मानमेवैतयापहते हँसश्शुचिषदिति साम्रान्येवैतया प्रीणाति सदित्यभिपूर्वमेवैनँ सति प्रतिष्ठापयत्यासन्द्याँ सादयति सूयते वा एषोऽग्नीनां य उखायां भ्रियते तस्मादासन्द्याँ सादयति यदधस्सादयेत् प्रपादुका गर्भास्स्युरुपरि सादयति गर्भाणां धृत्या अप्रपादाय तिसृभिरुपतिष्ठते त्रयः प्राणाः प्राणो व्यानोऽपानस्तानेव यजमाने दधाति त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥११॥
२६-२७

अथैतद्वात्सप्रमेतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं धामावारुन्द्धाग्नेरेवैतेन प्रियं धामावरुन्द्ध एतेन वै स ऋषीणामधिवादमपाजयत् पाप्मानमेवैतेनाधिवादमपजयत्येतेन वै सोऽभिशस्तीरजयदभिशस्तीरेव जयति य एवं विद्वानेतेनोपतिष्ठते यत् प्रक्रमान् प्रक्रामति यामं तेन दाधार यदुपतिष्ठते क्षेमं तेन पूर्वेद्युः प्रक्रामत्यपरेद्युरुपतिष्ठते तस्माद्यामेऽन्यासां प्रजानां मनः क्षेमेऽन्यासां तस्माद्यायावरः क्षेमस्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यत्येकादशं भवत्येकादशाक्षरा त्रिष्टुब् वीर्यं त्रिष्टुब् वीर्यमेवावरुन्द्धे ॥ एकेषं वै पुरान आसीत् तत एतदपयोऽग्नये द्वीषमाधानमपश्यँस्तस्माद् द्वीषमग्नय आधानं कुर्वन्ति तामिदमनुकृतिं द्वीषमनः क्रियत उदु त्वा विश्वे देवा इति प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छते मनुष्या वै विश्वे देवा मनुष्यैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरिति यस्मा एवैनं चित्तायोद्यच्छते तेनैनँ समर्धयति प्रेदग्ने ज्योतिष्मान् याहीत्यभि वा एष एतर्हि प्रजाश्शोचयति शान्त्या अक्रन्ददग्निरित्यनुमन्त्रयेत यदि क्ष्वेदेत्क्रन्दतव ह्यनसा वहन्ति तस्मादनस्वी च रथी चातिथीनामपचिततमा अन्नपते अन्नस्य नो देहीत्यन्नमेवास्मै स्वदयत्यनमीवस्य शुष्मिण इत्ययक्ष्मस्येत्येवैतदाह प्र प्रदातारं तारिष ऊर्जं नो देहि द्विपदे चतुष्पद इत्याशिषमेवाशास्ते समिधाग्निं दुवस्यतेति घृतेनाक्त्वा समिधमादधाति यथा ब्राह्मणायातिथये सर्पिष्वन्तं पचत्येवमेव तद्गायत्र्या ब्राह्मणस्यादध्याद्गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यो जगत्या वैश्यस्य जागतो हि वैश्यो यथाछन्दसमेवापो देवीः प्रतिगृह्णीत भस्मैतदित्यप्सु भस्म प्रवपत्यापो वा अग्नेर्योनिस्स्वमेवैनं योनिं

---

[ उदुत्तमं वरुण०। ऋ. १,२४,१५; अथर्व. ७,८३,३; १८,४,६९, सा. ५८९; तै सं. १,५,११,३; ४,२,१,३; नि. २,१३। अग्ने बृहन्नुषसा०। ऋ. १०,१,१; तै. सं. ४,२,१,४। हँसश्शुचिषद्०। ऋ. ४,४०,५; तै.सं. १,८,१५,२; ४,२,१,५; तै. आ. १०,१०,२]

[१२] मै. ३,२,२ (२)। कपि. ३२,२। वा. ११,८३; १२,६,९—१०,२१,३०—३३,३५,३८—४३; ३,१। काण्व. १२,८४; १३,७,१०-११,२२,३१-३४,३६,३९--४४; ३,१। तै सं. ५,२,१--२। शत. ब्रा. ६,७,४; ६,६,४। [ अक्रन्ददग्नि०। ऋ. १०,४५,४, तै. सं. १,३,१४,२; ४,१,१; २,१,२। समिधाग्निं दुवस्यत०। ऋ. ८,४४,१; तै. सं. ४,१,३,१; तै. ब्रा. १,२,१,९ ]

गमयति तिसृभिस्त्रिवृद्वा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति परा वा एषोऽग्निं वपति योऽप्सु भस्म प्रवपति सँसृज्य मातृभिष्ट्वं ज्योतिष्मान् पुनरासद इति ज्योतिरेवास्मिन् दधात्यूर्जा वा एष पशुभिर्व्यृध्यते योऽप्सु भस्म प्रवपति पुनरूर्जा सह रय्येति पुनरेवोर्जं पशूनवरुन्द्धे बोधा मे अस्य वचसो यविष्ठेति तस्मात् प्रजास्सुषुपुषीः प्रबुध्यन्ते स बोधि सूरिर्मघवेति तस्मात् पशवः प्रेत्वान-श्चरित्वा पुनरेत्य यथालोकं निषीदन्ति द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै ॥१२॥ २८-२९

देवं बर्हिस्सुदेवं देवैस्स्यात् सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान् राया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज देवीर्द्वारस्संघाते वीड्वीर्यामञ्छिथिरा ध्रुवा देवहूतौ वत्स ईमेनास्तरुण आमिमीयात् कुमारो वा नवजातो मैना अर्वा रेणुककाटः प्रणग्वसुवने वसुधेयस्य व्यन्तु यज देवी उषासानक्ताद्यास्मिन् यज्ञे प्रयत्यह्वेतामपि नूनं दैवीर्विशः प्रायासिष्टाँ सुप्रीते सुधिते वसुवने वसु-धेयस्य वीतां यज देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषाँसि यूयवदान्या वक्षद्वसु वार्याणि यज-मानाय वसुवने वसुधेयस्य वीतां यज देवी ऊर्जाहुती इषमूर्जमन्या वक्षत् सग्धिं सपीतिमन्या नवेन पूर्वं दयमानास्स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज-देवा दैव्या होतारा पोतारा नेष्टारा हताघशँसा आभरद्वसू वसुवने वसुधेयस्य वीतां यज देवीस्ति-स्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य व्यन्तु यज देवो नराशँसस्त्रिशीर्षा षडक्षश्शतमिदेनँ शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्स्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग्द्यामग्रेणास्पृक्षदान्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृँहीद्वसुवने वसुधेयस्य वेतु यज देवं बर्हिर्वारितीनां निधेधासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्वदेना बर्हिषान्या बर्हीँष्यभिष्याम वसुवने वसुधेयस्य वेतु यज देवो अग्निस्स्विष्टकृत्सुद्रविणा मन्द्रः कविस्सत्ययजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपिप्रेर्ये ते होत्रे अमत्सत तान् समनैषीर्होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमँ स्विष्टकृच्चाग्ने होता-भूर्वसुवने वसुधेयस्य नमोवाके वीहि यजाग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशान् बध्नन् बृहस्पतये छागं सूपस्था अद्य देवो वनस्पतिरभवद्बृहस्पतये छागेन बध्नन्नश्विभ्यां छागँ सूपस्था अद्य देवो वनस्पतिरभवत् सरस्वत्यै मेष्या बध्नन्निन्द्राय मेषँ सूपस्था अद्य देवो वनस्पतिरभवदिन्द्राय मेषेणाक्षँस्तान्मेदस्तः प्रतिपचताग्रभीषतावीवृधन्त पुरोडाशैस्त्वामद्यर्षे

[ पुनरूर्जा सह रय्या० । सा. १८३२-१८३३ । बोधा मे अस्य० । ऋ. १,१४७,२; तै. सं. ४,२,३,४; नि. ३,२० । स बोधि सूरिर्मघवा० । ऋ. २,६,४, तै. सं. ४,२,३,४ ]

[१३] मै. ४,१३,८-९ (६८--६९) । वा. २१,४८--६१; २८,३५--४६ । काण्व. २३,४७--६०; ३०,१२--२३,३५--४६ । तै. ब्रा. १२-२३,३,५,१०; ३,६,१३; १५ ।

आर्षेयर्षीणां नपादवृणीतायं यजमानो बहुभ्य आ संगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषस्सूक्तवाकाय सूक्तं ब्रूहि ॥१३॥ ३०

अग्न आयूँष्यग्ने पवस्वाग्ने पावक रोचिषा ॥ ३१

स नः पावक दीदिवोऽग्ने देवाँ इहावह । उप यज्ञँ हविश्च नः ॥ ३२

अग्निश्शुचिव्रततम उदग्ने शुचयस्तव सुत्रामाणं महीमू षु ॥ ३३

तँ हि शश्वन्त ईडते स्रुचा देवं घृतश्च्युता । अग्निँ हव्याय वोढवे ॥ ३४

अग्निं दूतं पुरो दधे ॥ ३५

स हव्यवाडमर्त्य उशिग् दूतश्चनोहितः । अग्निर्धिया समृण्वति ॥ ३६

अग्निँ स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ ३७

प्रेद्धो अग्न इमो अग्ने ॥ ३८

पीपिवाँसँ सरस्वतस्स्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषम् ॥ ३९

ये ते सरस्वन्नूर्मयो मधुमन्तो घृतश्च्युतः । तेभिर्नोऽविता भव ॥ ४०

दिव्यँ सुपर्णं वायसं बृहन्तमपां पतिं वृषभमोषधीनाम् ।
अभीपतो वृष्ण्या तर्पयन्तँ सरस्वन्तमवसे जोहवीमि ॥ ४१

---

[१४] मै. १,३,८६; ५,८,१०-१२, २,१०,६,६६. ६,१५; ३,११,१०; ४,१०,१७,२३,२५-२६,२८ ३०,३८,६०; ११,९६ । वा १९,३८, ३५,१६, ८,३८; १७,८-९,७६, २२,१५-१७ । काण्व. ८,१९-२०; २१,४०. २९, ३७-३८, ३५,४८, १८,९-१०,७६; २४.१९-२०,११ । [अग्न आयूँषि० । ऋ ९,६६,१९; सा ६२७,१४६४, १५१८; तै. सं १३,१४,७; ४,२९,१; ५,५,१; ६,६,२, तै ब्रा. २,६,३,४; तै आ. २,५,१ । अग्ने पवस्व० । ऋ. ९,६६,२१; सा १५२०, तै. सं. १,३,१४,८; ५,५,२, ६,६,२, तै.ब्रा. २,६,३,४, तै आ २,५,१ । अग्ने पावक रोचिषा० । ऋ. ५,२६,१; सा. १५२१; तै. सं १,३,१४,८; ५,५,३, ४,६,१,२ । स न पावक दीदिवो० । ऋ. १,१२,१०. तै सं. १,३,१४,८, ५,५,३; ४,६,१,३ । अग्निश्शुचिव्रततम० । ऋ.८,४४,२१. तै सं १,३,१४, ८, ५,५,३ । उदग्ने शुचयस्तव० । ऋ. ८,४४,१७, सा १५३४; तै. सं. १,३,१४,८, ५.५,३, २,४,१४,४ । सुत्रामाणं० । ऋ. १०,६३,१०; अथर्व. ७,६,३, तै. सं. १,५,११,५ । महीमू षु० । अथर्व ७,६,२; आ. सृ. २,१ । तँ हि शश्वन्त ईड(ळ)ते० । ऋ ५,१४,३. तै. सं. ४,३,१३,८ । अग्निं दूतं पुरो दधे० । ऋ. ८,४४,३ । स हव्यवाड(ळ)मर्त्य० । ऋ. ३,११,२; तै. सं. ४,१,११,४ । अग्निं स्तोमेन० । ऋ. ५,१४,१; तै. सं. ४,१,११ ४ । प्रेद्धो अग्न० । ऋ. ७,१,३; सा. १३७५, तै सं. ४,६,५,४ । इमो अग्ने० । ऋ. ७,१, १८; तै. सं. ४,३,१३,६ । पीपिवांसं० । ऋ ७,९६,६; तै. सं. ३,१,११,२ । ये ते सरस्वन्नूर्मयो० । ऋ. ७,९६,५; तै. सं. ३,१,११,३; नि. १०,२४ । दिव्यँ सुपर्णं वायसं० । ऋ. १,१६४,५२, अथर्व. ७,३९,१. तै. सं. ३.१.११.३ ]

यस्य व्रतमुपतिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे ।
यस्य व्रते पुष्टिपतिर्निविष्टस्तँ सरस्वन्तमवसे जोहवीमि ॥१४॥ ४२
[१५८०]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां सावित्रा नामैकोनविंशं स्थानकं संपूर्णम् ॥१९॥

---

अथ विंशं स्थानकम् ।

## अपेतवीतम् ।

अपेत वीत वि च सर्पतात इति देवयजनमध्यवस्यति यो वा अस्या अधिपतिं देवयजनमनिर्याच्याग्निं चिनुते यमाय तेऽग्नयश्चीयन्ते यमोऽस्या अधिपतिर्यममेवास्या अधिपतिं देवयजनं निर्याच्यात्मनेऽग्निं चिनुत इष्वग्रेण ह वा अस्या अनामृतमिच्छन्तो न विविदुर्यदेतेन देवयजनमध्यवस्यत्यस्या एवानामृतेऽग्निं चिनुत उवाच ह सनाच्छव एतन्मा कतिपयथं यजुरायतनादचुच्यवदिति दिवः प्रिये धामन्नग्निश्चेतव्य ऊषा वै दिवः प्रियं धाम यदूषानुपवपति दिव एव प्रिये धामन्नग्निं चिनुत इष्टका वा एता वैश्वानरीरपरिमिता यत् सिकता यत् सिकता उपवपति ता एवावरुन्द्धेऽग्नेर्वा एषा वैश्वानरस्य प्रिया तनूर्यत् सिकता यत् सिकता उपवपति तामेवावरुन्द्धेऽयँ सो अग्निरित्येतद्विश्वामित्रस्य सूक्तमेतेन वै विश्वामित्रोऽग्नेः प्रियं धामावारुन्द्धाग्नेरेवैतेन प्रियं धामावरुन्द्धे चतस्रः प्राचीरुपदधाति चत्वारि वै च्छन्दाँसि छन्दोभिर्देवास्स्वर्गं लोकमायँस्तेषां दिशस्समव्लीयन्त त एता दिश्या अपश्यँस्ताभिर्दिशोऽदृँहन् यद् द्वे पुरस्तात् समीची उपदधाति द्वे पश्चाद्दिशां विधृत्या अष्टा एता उपदधात्यष्टाक्षरा गायत्री गायत्री स्वर्गं लोकमञ्जसा वेद स्वर्गस्य लोकस्य प्रज्ञात्या अष्टा एता उपदधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टा एता उपधाय त्रयोदश लोकंपृणयोपदधाति ता एकविँशतिस्संपद्यन्त एकविँशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठा गार्हपत्य एकविँशस्यैव प्रतिष्ठामनु गार्हपत्येन प्रतितिष्ठति प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो वै यज्ञः पाङ्क्ताः पशवो यज्ञं चैव पशूँश्चावरुन्द्धे त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेष्वृध्नोत्येकचितीकं चिन्वीतोत्तमं चिन्वान एकवृदेव स्वर्गं लोकमेति पञ्च चितयः पञ्च पुरीषाणि तद्दश दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठत्यस्थि वा इष्टका माँसं पुरीषं यदिष्टकां पुरीषेणाभ्यूहति तस्मादस्थि माँसेन च्छन्नं न दुश्चर्मा भवति

---

[ यस्य व्रतमुपातिष्ठत० । अथर्व. ७,४०,१ ]

[ १ ] मै ३,२,३ (३)। कपि. ३१,३ । वा. १२,४५,५७,६१ । काण्व. १३,४६,५८,६२ । [ अपेत वीत वि० ऋ. १०,१४,९; अथर्व १८,१,५५, तै. सं. ४,२,४,१; तै. ब्रा. १,२,१,१६; तै. आ. १,२७,५, ६,६,१ ]

य एवं वेद समितँ संकल्पेथामिति संनिवपति क्षत्रं वा एता अग्नीनां यश्चोखायां भ्रियते यश्च चीयते ब्रह्मणा क्षत्त्रँ समेति ब्रह्म यजुर्ब्रह्मणैवैनौ संनिवपति चतुर्भिस्संनिवपति चत्वारि वै छन्दाँसि च्छन्दोभिरेवैनौ संनिवपत्येषा वा अग्नेः प्रिया तनूर्यच्छन्दाँसि प्रिययैवैनौ तन्वा सँशास्ति यत्संन्युप्य विहरति तस्माद्ब्रह्मणा क्षत्त्रँ समेति ब्रह्मणा व्येति मातेव पुत्रं पृथिवी पुरीष्यमित्यृतुभिरेवैनं दीक्षयित्वर्तुभिर्विमुञ्चति प्रजापतिर्विश्वकर्मा विमुञ्चत्विति प्रजापतिमेवास्या विमोक्तारं करोति ॥१॥ १

अथैता नैर्ऋतीस्तिस्रः कृष्णास्तुषपक्वा यत् कृष्णा एष हि तं वर्णस्सचते यं निर्ऋतिर्गृह्णात्येतद्वै निर्ऋत्या भागधेयं यत्तुषा रूपेण चैव भागधेयेन च निर्ऋतिं निरवदयते यदस्य पारे रजस इति वैश्वानर्यादत्ते स्वदयत्येवेमां दिशँ हरन्त्येताँ हि तं दिशँ हरन्ति यं निर्ऋतिर्गृह्णात्येषा वै निर्ऋत्या दिक् स्वायामेव दिशि निर्ऋतिं निरवदयते स्वकृत इरिण उपदधात्येतद्वा अस्या निर्ऋतिगृहीतं यत्रैवास्या निर्ऋतिगृहीतं निर्ऋतिं निरवदयते ॥ पराचीरुपदधाति पराचीमेव निर्ऋतिं निरवदयते तिस्र उपदधाति त्रेधाविहितो वै पुरुषो यावानेवास्यात्मा तस्मान्निर्ऋतिं निरवदयते यं ते देवी निर्ऋतिराबबन्धेति शिक्यमधिन्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेवैनं मुञ्चति पितृलोकं वा एते निगच्छन्ति ये दक्षिणा नैर्ऋतीभिश्चरन्ति देवलोक आहवनीयो यदाहवनीयमुपतिष्ठते देवलोकमेवोपावर्तते त्रिष्टुभोपतिष्ठते वीर्यं वै त्रिष्टुब् वीर्यमेवास्मिन् दधात्येकयैकधैवास्मिन् वीर्यं दधाति ॥२॥ २-३

यावान् पुरुष ऊर्ध्वबाहुस्तावता वेणुना विमिमीत एतावद्वै पुरुषे वीर्यं वीर्येणैवैनं विमिमीते त्रीन् पुरुषान् प्राञ्चं मिमीते चतुरस्तिर्यञ्चं तस्मात् सप्त पुरुषानभ्यग्निचिदन्नमत्ति त्रीन् परस्तात् त्रीनवस्तादात्मा सप्तमोऽरत्निमात्रं पक्षयोरुपदधाति प्रादेशमात्रं पुच्छे पुरुषेण वै यज्ञस्संमितो यज्ञपुरुषासंमितं तस्मात् पक्षप्रवयाँसि वयाँसि षड्गवेन कृषति षड्वा ऋतव ऋतुभिरेव तिस्रस्तिस्रस्सीतास्संपादयति त्रिवृद्ध्यग्निस्ता द्वादश संपद्यन्ते ॥ द्वादश मासास्संवत्सरस्संवत्सरस्यैव विधामनुविधीयतेऽथो ऋतुभिरेव कृष्ट्वा संवत्सरे प्रतितिष्ठतीयं वा अग्नेरतिदाहादबिभेत् सैतद् द्विगुणं कृष्टं चाकृष्टं चाकुरुत यत् कृष्टं चाकृष्टं च भवत्यस्या अनतिदाहायाथो द्विगुणेनैवास्या वीर्यमुद्यच्छत एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तानेतदग्नौ प्रतिदधाति यदुदीच उत्सृजेद्रुद्राय पशूनपिदध्यादपशुस्स्याद्यद्दक्षिणा पितृभ्यो निधूवेद्यत् प्रतीचो रक्षाँसि हन्युर्दक्षिणा प्राचस्सूर्यमभ्युत्सृजति सूर्यो वै पशूनां प्राणः प्राणमेवैनानभ्युत्सृजत्योषधीनामृग्भिरोषधीनां फलानि वपति रूपेणैवान्नमवरुन्द्धेऽन्नस्यान्नस्य वपति सर्वमेवान्नमवरुन्द्धे यस्य न वपति तेन व्यृध्यते यस्य न वपेत् तन्मनसा ध्यायेत् तेनैव तदवरुन्द्धे

---

[२] मै. ३,२,४ (४-६)। कपि. ३२,४। वा. १२,६५। काण्व. १३,६६। तै. सं. ५,२,४-५। [यं ते देवी०। अथर्व. ६,६३,१]

[३] मै. ३,२,४-५ (६-७)। कपि. ३२,५। तै. सं. ५,२,५-६।

चतुर्दशभिर्वपति सप्त वै ग्राम्या ओषधयस्सप्तारण्यास्ता एवोभयीरवरुन्द्धेऽन्नमर्कोऽर्कोऽग्निरर्क एवैत-
दर्कश्चीयते कृष्टे वपति कृष्टे ह्याशिष्ठमोषधयः प्रतितिष्ठन्त्यनुसीतं प्रजात्यै द्वादशसु सीतासु वपति द्वादश
मासास्संवत्सरस्संवत्सरेणैवास्मा अन्नं पचति ॥३॥ ४–५
दिग्भ्यो लोष्टान् समस्यति दिग्भ्य ऊर्जँ संभरत्यूर्ज्यैवाग्निं चिनुते यां जनतां द्विष्यात् तस्या
दिश आहरेदिषमूर्जमहमित आदीतीषमेवास्या ऊर्जमादत्ते क्षोधुका भवत्युत्तरवेदिं निवपत्युत्तरवेद्याँ
ह्यग्निश्चीयतेऽथो यज्ञपरुरेव नान्तरेति पशवो वा उत्तरवेदिः पशूनेवावरुन्द्धेऽग्ने तव श्रवो वय इति
षडृचेन निवपति षड्वा ऋतवस्संवत्सरस्संवत्सरोऽग्निर्वैश्वानरो रूपेणैव वैश्वानरमवरुन्द्धेऽष्टाक्षरा प्रथमा-
ष्टाशफाः पशवः पशूनेवावरुन्द्ध ऊनातिरिक्ता मिथुनाः प्रजात्यै समुद्रं वै नामैतत् प्रजापतेश्छन्द-
स्समुद्रात् पशवः प्रजायन्ते पशूनां प्रजात्या इन्द्रो वै वृत्राय वज्रं प्राहरत् स त्रेधाभवत् स्फ्य-
स्तृतीयं यूपस्तृतीयं रथस्तृतीयं यदशीर्यत ताश्शर्कराः पशुर्वा अग्निर्वज्रश्शर्करा यच्छर्कराभिः परि-
मिनोति वज्रेणैवास्मै पशून् परिगृह्णाति तस्मात् पशवो वज्रेण विधृतास्तस्मात् स्थेयानस्थेयसो नादत्ते
दशभिर्दशभिः परिमिनुयादन्नकामस्य दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति नवभि-
र्नवभिरभिचरतस्त्रिवृद्वज्रो वज्रमेव भ्रातृव्याय प्रहरति सप्तभिस्सप्तभिः पशुकामस्य सप्त प्राणाः
प्राणेभ्योऽधि पशवः प्रजायन्ते पशूनां प्रजात्या अपरिमित्य शर्करास्सिकता व्यूहेद्यं कामयेतापशु-
स्स्यादित्यपरिगृहीतमेवास्य रेतः परासिञ्चत्यपशुर्भवति परिमित्य शर्करास्सिकता व्यूहेद्यं कामयेत
पशुमान् स्यादिति परिगृहीतमेवास्मै रेतस्सिञ्चति पशुमान् भवति च्छन्दाँसि वा अग्नेर्योनिस्सोमो
रेतोधा यच्छन्दोभिर्न्युप्य सौम्य व्यूहति योना एव रेतो दधाति व्यूहति तस्माद्योनौ गर्भा वर्धन्ते
समानप्रभृतयो भवन्ति नानोदर्कास्तस्मात् समानाद्योनेर्नानारूपाः प्रजायन्ते गायत्र्या ब्राह्मणस्य
व्यूहेद्गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यो जगत्या वैश्यस्य जागतो हि वैश्यो
यथाछन्दसमेव ॥४॥ ६
उपाँश्वन्वाहानिरुक्तो वा एतर्ह्यग्निर्यर्ह्यव्यावृत्तस्तस्मादुपाँश्वन्वाह च्छन्दाँस्यन्वाह च्छन्दोभिर्वा
अग्निरुत्तरवेदिमानशे तस्माच्छन्दाँस्यन्वाह सूर्यस्य वा एतदध्वानं यन्ति यदश्वं प्राञ्चं च प्रत्यञ्चं
चाक्रमयन्ति तस्मादसा आदित्यः प्राङ् चैति प्रत्यङ् च प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजा-
पतिनैवैनं चिनुतेऽपां पृष्ठमसि योनिरग्नेरिति पुष्करपर्णमुपदधाति स्व एवैनं योनौ चिनुते शान्त्या
अनुद्दाहाय ॥ वर्धमानो महाँ आ च पुष्कर इति वर्धते ह्येष यो भवति दिवो मात्रया वरिणा

---

[४] मै. ३,२,५ (७)। कपि. ३१,६। वा. ११,१०६। काण्व. १३,१०५। तै. सं. ५,१,५,६। [अग्ने तव श्रवो०। ऋ. १०,१४०,१; सा. १८१६, तै. सं. ४,२,७,२]

[५] मै ३,२,६ (८)। कपि ३१,७। वा. ११,२९; १३,१-५, २३,१; २५,१०। काण्व. १२,२९; १४,१-५; २५,१; २७,१४। तै. सं. ५,१,६-८]

प्रथस्वेति प्रथयत्येव ब्रह्म जज्ञानं प्रथमं पुरस्तादिति रुक्ममुपदधाति ब्रह्ममुखाभिर्वै प्रजापतिः प्रजाभिरार्ध्नोदृद्ध्या एकविंशतिनिर्बाधो भवति प्रतिष्ठित्या एकविंशतिर्देवलोकास्तेभ्य एव भ्रातृव्यं निर्बाधतेऽधस्तान्निर्बाधान् कुर्याद्भ्रातृव्यस्य निगृहीत्यै न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्यो यत् पृथिव्यां चिन्वीतौषधीश्शुचा निर्दहेद्यदन्तरिक्षे वयाँसि यद्दिवि दिवममृतँ हिरण्यं यद्रुक्ममुपदधात्यमृत एवाग्निं चिनुते ॥ हिरण्यगर्भस्समवर्तताग्र इति पुरुषँ हिरण्ययमुपदधाति यजमानलोकमेवैतेन दधाराथो मध्येज्योतिषमेवाग्निं चिनुते द्रप्सश्चस्कन्देत्यभिमृशति होत्रास्वेवैनँ सत्ये प्रतिष्ठापयति सर्पशीर्षैरुपतिष्ठते मृत्यव एवैनं परिदधात्यथो या सर्पे त्विषिस्तामेवावरुन्द्धे यदुपदध्यात् प्रमायुकस्स्याद्यत् समीचीनमितरैश्शीर्षैरुपदध्याद्ग्राम्यान् पशून् दँशुकास्स्युर्यद्विषूचीनमारण्यान् यजुरेव वदेत् तेनैव तां त्विषिमवरुन्द्धे तेन शान्तमेतस्माद्ध वै पुराग्निचितमादिदृक्षन्त सर्वा ह्येतास्त्विषीरवारुद्ध याग्नौ या सर्पे या सूर्येऽथैतद्वामदेवस्य राक्षोघ्नं यज्ञमुखे यज्ञमुखे वै यज्ञं रक्षाँसि जिघाँसन्ति रक्षसामपहत्यै पश्चचं पाङ्क्तोऽग्निर्यावानेवाग्निस्तस्माद्रक्षाँस्यपहन्ति सर्वा दिशोऽनुपरिचारं जुहोति दिग्भ्य एव रक्षाँसि हन्ति स्रुचा उपदधातीमे एवैतदुपधत्ते तूष्णीमुपदधाति न हीमे यजुषाप्तुमर्हत्यात्मा वै पुरुषो बाहू स्रुचौ यत् स्रुचा उपदधाति सात्मत्वाय दक्षिणतो वै देवानां रक्षाँस्याहुतीर्निष्कावमादँस्तानि कार्ष्मर्येणान्तरदधत यत् कार्ष्मर्यमयीर्दक्षिणत उपदधाति रक्षसामन्तर्हित्यै ॥ घृतेन पूरयति वज्रो वै कार्ष्मर्यो वज्रो घृतं वज्र एव वज्रं दधाति गायत्र्योपदधाति गायत्रो वा अग्निर्गायत्रच्छन्दास्स्वेनैवैनं छन्दसा समर्धयति दध्नौदुम्बरीं पूरयत्यन्नं वै दध्यूर्गुदुम्बरोऽन्न एवोर्जं दधाति त्रिष्टुभोपदधात्यैन्द्री वै त्रिष्टुबन्नमिन्द्रियमिन्द्रियमेवान्नाद्यमवरुन्द्ध इयं वै कार्ष्मर्यमय्यसा औदुम्बरी यदौदुम्बरीमुत्तरामुपदधाति तस्मादसा अस्या उत्तरा मूर्धन्वती मूर्धवैताभ्यां क्रियते विराज्यग्निश्चेतव्यस्स्रुग्वै विराड् यत् स्रुचा उपदधाति विराज्येवाग्निं चिनुते ॥५॥　　७-१०

यां वा अविद्वानध्वर्युरिष्टकां प्रथमामुपदधाति तया यजमानस्य प्राणमपिदधाति प्रजायाश्च पशूनां च स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुख्यात्यै प्राजापत्योऽश्वो यदश्वमुपघ्रापयति प्रजापतिनैवैनं चिनुत इयं वै स्वयमातृण्णेमामेवैतदुपधत्ते यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति प्राचीमुदूहेद्य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्तमनया प्रणुदते यदि मन्येत पश्चान्मे भ्रातृव्य इति प्रतीचीमपोहेद्य एवास्य पश्चाद्भ्रातृव्यस्तमनयापनुदते प्र श्रेयाँसं भ्रातृव्यं नुदते प्रति पापीयाँसं नुदते॥ यदि

[ ब्रह्म जज्ञानं प्रथमं० । अथर्व ४,१,१, ५,६,१ । हिरण्यगर्भस्समवर्तताग्र० । ऋ. १०,१२१,१; अथर्व. ४,२,७, तै सं ४.१,८,३, २,८,२. ताण्ड्य ब्रा. ९,९,१२, नि. १०,२३ । द्रप्सश्चस्कन्द पृथिवी० । ऋ. १०,१७,११; अथर्व १८,४,२८, तै. सं. ३,१,८,३; ४,२,८,२; ९,५: तै. आ. ६,६,१]

[ ६ ] मै ३,२,६-७ (८—९) । कपि ३२.८ । वा १३,२० । काण्व. १४,२० । तै. सं ५,२,६-९ ।

मन्येत सदृङ् मयेति विचालयेद्या वा इयं प्रजा व्यधूनुत परा ता अभवन्नियमेवैनं विधूनुतेऽथैषा दूर्वेष्टका पशुर्वा अग्निर्न पशव आयवसे रमन्ते पशुभ्य एवैतदायतनं करोति पशूनां धृत्यै काण्डात् काण्डात् प्ररोहन्तीति प्रतिष्ठित्यै सहस्रेण शतेन चेति सहस्रवती प्रजापतिना संमिता गच्छति साहस्रीं पुष्टिं पशूनां य एवं विद्वानेतामुपधत्तेऽथैषा वामभृदेतया वै देवा असुराणां वामं पशूनवृञ्जत वाममेवैतया पशून् भ्रातृव्यस्य वृङ्क्ते द्वियजुर्भवति भ्रातृव्यलोकमेव द्वियजुषा वृङ्क्ते द्वितीये हि लोके भ्रातृव्यो हिरण्यशीर्ष्णी भवति हिरण्यज्योतिरेव स्वर्गं लोकमेति ॥ प्रबाहुक्काचा आहतौ भवतस्तस्मात् प्रबाहुगक्ष्या अथैते रेतस्सिचा असौ वै स्वराडियं विराडुत्तानायाँ स्त्रियां पुमान् रेतास्सिञ्चत्यसा अस्यां रेतस्सिञ्चतीयं प्रजनयत्यग्निरग्नि सरेतसमग्निं चिनुते प्रजायतेऽन्यन्नं य एवं विद्वानेते उपधत्ते स्वराडसीति दक्षिणत उपदधाति तस्माद्दक्षिणतः पुमान् स्त्रियमुपशये यदि पूर्ववयसे चिन्वीतोभे सह प्रथमायां चित्यामुपदध्यात् समीची एवास्मै रेतस्सिञ्चतोऽन्यतरामुपदध्याद्यं द्विष्यात् तस्य रेतसैवैनं व्यर्धयति यद्युत्तरवयसे चिन्वीत प्रथमायामन्यां चित्यामुपदध्यादुत्तमायामन्यां रेत एव सिक्तमाभ्यां परिगृह्णात्यृतव्ये उपदधात्यृतूनां विधृत्यै द्वे द्वे उपदधाति द्वौ द्वौ ह्यृतवोऽथैषा त्र्यालिखिता देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतां त्र्यालिखितामपश्यँस्तामुत्तरलक्ष्माणमुपादधत तदसुरा नान्ववायँस्ततो देवा अभवन् परासुरा अभवन् य एवं विद्वानेतामुत्तरलक्ष्माणमुपधत्ते भ्रातृव्यस्यानन्ववायाय भवत्यात्मना परास्य भ्रातृव्यो भवत्यधरलक्ष्माणमुपदध्याद्यं द्विष्यात् तस्यासुरयोनिमेवैनमनुपराभावयतीमे वै लोकास्त्र्यालिखितेमानेवैतया लोकानाप्नोति यस्या मृद उखां कुर्वन्ति तस्या एतां कुर्यात् तेनैवास्य सर्वा इष्टका ज्योतिष्मतीर्यजुष्मतीर्भवन्ति ॥६॥ ११-१३

मेधो वा एष पशूनां यत् कूर्मो यत् कूर्ममुपदधात्येतमेवैनं मेधमभिसंजानानाः पशव उपतिष्ठन्ते जीवन्तमुपदधाति स हि मेध्यश्चतुष्पाद्भवति चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति मही द्यौः पृथिवी च न इति द्यावापृथिव्योरेवैतया रूपे दाधार दध्ना च मधुना चाभ्यनक्त्यपां वा एष ओषधीनां रसो यन्मधु यन्मधुनाभ्यनक्त्यपामेवौषधीनां रसमवरुन्द्धे मेधो वा एष पशूनामूर्ग्दधि यद्दध्नाभ्यनक्ति पशूनामेव मेध ऊर्जं दधातीष्टकाचिद्वा अन्योऽग्निः पशुचिदन्यो यज्जीवन्तं कूर्ममुपदधाति तेनैवैनं पशुचितं करोत्येष वै स्वर्गस्य लोकस्योत्तमपदी यथा क्षेत्रवित् प्रजानन्नञ्जसान्यान्नयत्येवमेवैनमेष स्वर्गं लोकमभिनयति ॥ विष्णोर्नाभा अग्निश्चेतव्यो योऽनाभिमग्निं चिनुते यजमानस्य नाभिमनुप्रविशति स एनं निर्दहत्येषा वै विष्णोर्नाभिर्यदुलूखलमुपदधाति विष्णोरेव नाभा अग्निं चिनुत औदुम्बरं

---

[७] मै. ३,२,७ (९)। कपि. ३१,९। वा ८,३२; १३,३२। काण्व. ९,३१; १४,३४। तै. सं. ५,२,९।
[मही द्यौः पृथिवी०। ऋ १,२२,१३; तै सं. ३,३,१०,२; ५,११,३; ४,२,९,३ ]

भवत्यूर्ग्वा उदुम्बर ऊर्जमेव मध्यतो दधाति यजमाने च प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयति ॥ प्रादेशमात्रं भवत्येतावती हि विष्णोर्नाभिर्वैष्णव्या कर्मण्यभ्योपदधाति कर्म ह्येतत् क्रियतेऽथैषोखौजो वा एतद्वीर्यँ संभ्रियते यदुखौज एव वीर्यमवरुन्द्ध एषां वा एतल्लोकानां ज्योतिरवरुन्द्धे ज्योतिर्मध्यतो दधाति मध्येज्योतिषमग्निं चिनुते तस्मान्मध्यतो ज्योतिरुपासते सिकताभिः पूरयति स्वेनायतनेनाग्नेर्वा एतद्वैश्वानरस्य भस्म यत् सिकता रूपेणैव वैश्वानरमवरुन्द्धे यदूनामुपदध्यात् क्षोधुको यजमानस्स्यात् पूर्णमुपदधात्यक्षोधुको यजमानो भवत्यनुपदस्वदन्नमत्ति घृतेन पूरयत्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्धयति ॥७॥ १४-१६

एकविंशतिं माषान् प्रतिन्युप्य पुरुषशीर्षमाहरत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्येनैवामेध्यं क्रीणात्येकविंशतिर्भवन्त्येकविंशो वै पुरुषो यावानेवास्यात्मा तं क्रीणाति सप्तधातृण्णां वल्मीकवपां प्रतिनिदधाति व्यृद्धं वा एतत् प्राणैस्सप्त शीर्षण्याः प्राणाः प्राणैरेवैनत् समर्धयति यमगाथा गायति यमलोकादेवैनद्वृङ्क्ते तिस्रो गायति त्रय इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते तस्माद्गायते न देयं गाथा ह्येव तद्वृङ्क्तेऽप वा एतस्मादिन्द्रियं क्रामति प्राणाश्शीर्षन् वीर्यं चक्षुश्श्रोत्रं वाग्व्यृद्धेन्द्रियं वा एतदमेध्यं मृतशीर्षमिति वा एतदाहुर्मेध्यँ हिरण्यं यद्धिरण्यशल्कैः प्रत्यस्यति मेध्यमेवैनद्यज्ञियं करोत्युखायामपिधाय प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैस्समर्धयति सहस्रदा असि सहस्राय त्वेति पुरुषशीर्षमुपदधाति पुरुषो ह त्वै सहस्रं पशून् यच्छति सहस्रमन्ये पशवो यन्मध्ये पुरुषशीर्षमुपदधाति सयत्वायाथैतानि पशुशीर्षाण्येता ह वै साहस्रीरिष्टकास्सोमदक्षः कौश्रेयश्श्यामपर्णायोपदधौ ततो वै साहस्रीं पुष्टिं पशूनां जगाम गच्छति साहस्रीं पुष्टिं पशूनां य एवं विद्वानेता उपधत्ते पुरस्तात् प्रतीचीनमश्वस्य शिर उपदधाति पश्चात् प्राचीनमृषभस्य गोअश्वानेवास्मिन् समीचो दधाति समीचीनान्युपदध्याद्यं कामयेत पशुमान् स्यादिति समीच एवास्मिन् पशून् दधाति विषूचीनान्युपदध्याद्यं कामयेतापशुस्स्यादिति विमुखानेवास्मात् पशून् करोति ॥ नान्तरा पशुशीर्षाणि व्यवेयादध्वर्युर्यविष्ठो वै नामैषोऽग्निः प्राणानस्य युवेत प्रमीयेतैकमुपधायैतैस्सर्वैरुपतिष्ठेत तद्वा सर्वतोऽनुपरिहारँ सादयेत् तेनैव सर्वाण्युपधीयन्ते नार्तिमार्छेत्यध्वर्युर्न श्रेयं न्येत्येतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तानेतच्छुचार्पयत्यमुमारण्यमनु ते दिशामीति ग्राम्येभ्य एव पशुभ्य आरण्यान् पशूञ्छुचमनूत्सृजति तस्मादेते समावत् पशूनां प्रजायमानानां कनिष्ठाश्शुचा ह्येत ऋताः ॥८॥ १७-१८

पशुर्वा अग्निः पशोरेषं योनिर्विक्रियते रेतोऽपस्या यदपस्या उपदधाति योना एवं रेतो दधाति यदा वै पशुस्संवर्ततेऽथ जायते पशवश्छन्दस्या यदपस्या अनु च्छन्दस्या उपदधाति

[८] मै. ३,२,७ (९)। कपि. ३२,१०। तै. सं. ५,२,९।

[९] मै. ३,२,८ (१०)। कपि. ३२,११। तै. सं. ५,२,९-१०।

पशूनां प्रजात्यै पञ्चोपदधाति पाङ्क्ताः पशवो यावानेव पशुस्तं प्रजनयतीयं वा अग्नेरतिदाहा-दबिभेत् सैता अपस्या असृजत तां उपाधत्त यदपस्या उपधीयन्तेऽस्या अनातिदाहायोवाच हेयमदर्दित्सं ब्रह्मणान्नं यस्यैता उपधीयन्त इत्यत्ति ब्रह्मणान्नं य एवं विद्वानेता उपधत्ते पञ्च पुरस्तात् प्रतीचीरुपदधाति तस्मात् पुरस्तात् प्रत्यङ् पशुर्जायते पञ्च दक्षिणत उदीचीस्तस्मा-द्दक्षिणतः पुमान् स्त्रियमुपशये ॥ पञ्च पश्चात् प्राचीस्तस्मात् पश्चात् प्राचीनं रेतो धीयते पञ्चोत्त राच्छन्दस्याः पशवो वै छन्दस्या उत्तरादायतनाः पशवः पशूनेव प्रजातान् स्वमायतनमभिपर्यूहति पशूनामहिंसायै नोत्तरादपस्या उपदध्याद्यदुपदध्यादभीपतः प्रजा वरुणो गृह्णीयादपस्या अनु प्राण भृत उपदधाति रेतस्येव सिक्ते प्राणं मनश्चक्षुश्श्रोत्रं वाचं दधाति तस्मात् प्राणन् पश्यञ्छृण्वन् वदन् पशुर्जायतेऽयं पुरो भूरिति याः प्राणवतीस्ताः पुरस्तादुपदधाति प्राणमेव पुरस्ताद्दधाति तस्मात प्राङ् पशुः प्राणित्ययं दक्षिणा विश्वकर्मेति या मनस्वतीस्ता दक्षिणतो मन एव दाक्षिणतो दधाति तस्माद्दाक्षिणोऽर्धो मनस्वितरस्तस्माद्दक्षिणतो मन उपचरन्त्ययं पश्चाद्विश्वव्यचा इति याश्चक्षुष्मतीस्ता पश्चाच्चक्षुरेव पश्चाद्दधाति तस्मात् प्राङ् पशुः पश्यतीदमुत्तरात् स्वरिति याश्श्रोत्रवतीस्ता उत्तरा च्छ्रोत्रमेवोत्तराद्दधाति तस्मादुत्तरात् पशुर्भूयश्शृणोतीयमुपरि मतिरिति या वाङ्मतीस्ता मध्ये वाचमेव मध्यतो दधाति तस्मान्मध्यतो वाग्वदत्यक्ष्णयोपदधाति तस्मादक्ष्णयाङ्गानि पशवो हरन्त यन्ति याः पुरस्तादुपादधात् ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणतस्ताभिर्भरद्वाजो याः पश्चात् ताभि र्जमदग्निर्या उत्तरात् ताभिर्विश्वामित्रो या मध्ये ताभिर्विश्वकर्मा य एवमेतासामृद्धिं वेदर्ध्नोति य एव मासां क्लृप्तिं वेद कल्पतेऽस्मै य एवमासां बन्धुतां वेद बन्धुमान् भवति य एवमासां निदानं वे निदानवान् भवति य एवमासामायतनं वेदायतनवान् भवति य एवमासां प्रतिष्ठां वेद गच्छति प्रतिष्ठां निदानवानायतनवान् भवति य एवं वेद ॥९॥ १९-२०

अथैता आश्विनीरुत्सन्नयज्ञो वा एष यदग्निः को ह तद्वेद यावदेतस्य न क्रियते यावन्न चीय तदेताभिः कल्पयति तद्भिषज्यति पञ्चैता उपदधाति पाङ्क्तोऽग्निर्यावानेवाग्निस्तस्मै भेषजं करोत्य ग्नेरेवैताभिर्दिशः कल्पयत्यदित्यास्त्वा पृष्ठे सादयामीतीमानेवैतया लोकान् दाधारर्तव्या उपदधात्यृ तूनां क्लृप्त्यै पञ्चोपदधाति पञ्च वा ऋतवो यावन्त एवर्तवस्तान् कल्पयति समानप्रभृतयो भवन्ति समानोदर्कास्समानप्रभृतयो ह्यृतवस्समानोदर्का एकया व्याहृत्या व्यावर्तयति तस्मादृतवो व्यावर्तन्ते तस्मात् समानस्य संवत्सरस्य नानारूपाण्याश्विनीरन्वृतव्या उपदधाति रेतस्येव हित ऋतूनुपदधाति तस्माद्रेतो हितमृतूननु प्रजायत ऋतव्या अनु वायव्या उपदधात्यृतुष्वेव प्राणं दधाति तस्मादृ समानाः परियन्तो न जीर्यन्ति तस्मादृतूननु वायुरावरीवर्त्ति वायव्या अन्वपस्या उपदधाति

[१०] मै. ३,२,९ (११) । कपि. ३१,१२ । वा. १४,५ । काण्व. १५,५ । तै. सं. ५,३,१-२ ।

तस्माद्वायुर्वृष्टिं वहति वृष्टिमेवैताभिरवरुन्द्धे यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारँ सादयति तस्माद्दतुमृतुं वर्षत्यपस्या अनु वयस्या उपदधाति पशवो वै वयस्या यदपस्या अनु वयस्या उपदधाति तस्मात् पशवो नानामनसो नानाव्रता अप एवाभि समनसोऽपस्या उपधाय वयस्या उपदध्याद्यं कामयेत पशुमान् स्यादिति संज्ञानं वा एतत् पशूनां यदापः पशूनामेव संज्ञानेऽग्निं चिनुते पशुमान् भवति वयस्या उपधायापस्या उपदध्याद्यं कामयेतापशुस्स्यादिति पशूनामेवासंज्ञानेऽग्निं चिनुतेऽपशुर्भवति॥ चतस्रः पुरस्तादुपदधाति तस्मात् पुरस्तात् पशुरणीयाँस्तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे मूर्धन्वतीस्तस्मात् पुरस्तात् पशूनां मूर्धा पञ्च पश्चाभितः पशोस्सयत्वाय तस्मात् प्राङ् पशुः प्रवणो बस्तो वय इति दक्षिणत उपदधाति वृष्णिर्वय इत्युत्तरादँसा एवास्योपदधाति व्याघ्रो वय इति दक्षिणे पक्षे सिँहो वय इत्युत्तरस्मिन् पक्षयोरेव वीर्यं दधाति व्याघ्रो वय इति पूर्वाँ सिँहो वय इत्यपरां तस्मात् पुरो व्याघ्रो जायते पश्चात् सिँहः पुरुषो वय इति मध्ये तस्मात् पुरुषः पशूनामधिपतिः ॥१०॥　　२१-२३

इन्द्राग्नी अव्यथमानामिष्टकां दृँहतं युवमित्योजो वै वीर्यमिन्द्राग्नी अन्तरिक्षमेषा चितिश्शिथिलमिवान्तरिक्षं प्रजा अन्तरिक्षं प्रजास्वेवौजो वीर्यं दधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुक्शात्यै प्राजापत्योऽश्वो यदश्वमुपघ्रापयति प्रजापतिनैवैनं चिनुतेऽथैता दिश्या देवानां वै स्वर्गं लोकं यतां तेषां दिशस्समव्लीयन्त त एता दिश्या अपश्यँस्ताभिर्दिशोऽदृँहन् यदेता उपधीयन्ते दिशां विधृत्यै राज्ञ्यसि प्राची दिगिति तस्मादेषा दिशां राज्ञी विराडसि दक्षिणा दिगिति तस्मादेषा दिशां विराजति सम्राडसि प्रतीची दिगिति तस्मादत्र साम्राज्यँ स्वराडस्युदीची दिगिति तस्मादत्र स्वाराज्यमधिपत्न्यसि बृहती दिगिति तस्मादेषा दिशामधिपत्न्येतान्येव सर्वाणि भवति य एवं विद्वानेता उपधत्त आयुर्मे पाहीति दश पुरस्तादुपदधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेवास्मिन् दधाति ज्योतिर्मे यच्छेत्युत्तमां ज्योतिरेवोत्तमं दधाति तस्माद्वाक् प्राणानां ज्योतिरुत्तमं दशैता उपदधाति दशाक्षरा विराड्विराट् छन्दसां ज्योतिश्चक्षुर्ज्योतिश्चक्षुरेव प्रजानां पुरस्ताद्दधाति मा छन्द इति दक्षिणत उपदधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति पश्चात् प्रतिष्ठित्या अग्निर्देवतेत्युत्तरादोजो वा अग्निरोज एवोत्तराद्दधाति तस्मादुत्तरादभिप्रयायी जयति द्वादश दक्षिणत उपदधाति द्वादश पश्चाद् द्वादशोत्तरात् ताष्षट्त्रिँशत् संपद्यन्ते षट्त्रिँशदक्षरा बृहती बृहती छन्दसाँ स्वाराज्यमानशे स्वाराज्यं गच्छति य एवं विद्वानेता उपधत्ते षट्त्रिँशदेताष्षट्त्रिँशदक्षरा बृहती बार्हताः पशवोऽन्तरिक्षमेषा चितिः पशवोऽन्तरिक्षं पशुष्वेव पशून् दधात्यादित्यधामानो वा

---

[११] मै. ३,२,९ (११) । कपि. ३२,१३ । वा. १४,११,१३,१७-२२; १५,१०-१४ । काण्व. १५,१४,१६-२४, १६, १६-२८ । तै. ५,३,१-२ ।

अन्ये प्राणा अङ्गिरोधामानोऽन्ये ये पुरस्तात् त आदित्यधामानो ये पश्चात् तेऽङ्गिरोधामानो मूर्धासि राडिति पुरस्तादुपदधाति य आदित्यधामानः प्राणास्ताँस्तद्दाधार यन्त्री राडिति पश्चाद्येऽङ्गिरोधामानः प्राणास्ताँस्तद्दाधार सप्त पुरस्तादुपदधाति सप्त पश्चात् तस्मादधरः प्राण उत्तरेषां प्राणानामर्धभाक् प्रजापतिः प्रजास्सृष्ट्वा तासामकामयत मूर्धा स्यामिति स एता मूर्धन्या अपश्यत् ताभिर्निरजिहीत तासां मूर्धाभवत् तन्मूर्धन्यानां मूर्धन्यात्वं मूर्धैव समानानां भवति य एवं विद्वानेता उपधत्ते ॥११॥ २४

आशुस्त्रिवृदिति पुरस्तादुपदधाति यज्ञमुखं वै त्रिवृद्यज्ञमुखमेव पुरस्ताद्वियातयति व्योमा सप्तदश इति दक्षिणतोऽन्नं वै सप्तदशस्सप्तदशँ संवत्सरमन्नमनुप्रजायतेऽन्नमेव दक्षिणतो भवति तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति यत् सप्तदशवतीर्दक्षिणत उपदधाति तस्माद्दक्षिणं पक्षं वयाँस्यनुपरिप्लवन्त एकविँशवतीं पश्चात् प्रतिष्ठित्यै पश्चाद्धि वयाँसि प्रतितिष्ठन्ति पञ्चदशवतीमुत्तरादोजो वै पञ्चदश ओज एवोत्तराद्धाति तस्मादुत्तरादभिप्रयायी जयत्यग्नेर्भागोऽसि दीक्षाया आधिपत्यमिति पुरस्ताद् द्वौ त्रिवृता अभिपूर्वमेव यज्ञमुखे वियातयति पञ्चदशवतीर्दक्षिणतस्सप्तदशवतीमुत्तरात् पक्षयोस्सयत्वा-यान्नं वै सप्तदशो यत् सप्तदशवतीमुभयत उपदधात्यन्नमेवोभयतो दधाति तस्मादुभाभ्याँ हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्त्येकविँशवती भवति प्रतिष्ठित्या अग्नेर्भागोऽसि दीक्षाया आधिपत्यमित्येतदेतद्वै देवा एताभिरस्पृण्वन्नेतदेतदेवैताभिस्स्पृणोति ता एतास्स्पृतयो नामेष्टका एकयास्तुवत प्रजा अधी-यन्तेत्येतदेतद्वै देवा एताभिरसृजन्तैतदेवैताभिस्सर्वमवरुन्द्धेऽकर्यस्य वा एषा विधामनु विधीयतेऽन्न-मर्कोऽर्कोऽग्निरत्त्यन्नं यस्यैषैवं विदुषो विधीयते ॥१२॥ २५

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतां चतुर्थीं चितिमपश्यँस्तामन्यथानूच्यान्यथोपादधत तदसुरा नान्ववायँस्ततो देवा अभवन् परासुरा अभवन् य एवं विद्वानेतां चतुर्थीं चितिमुपधत्ते भ्रातृव्यस्यानन्ववायाय भवत्यात्मना परास्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति पुरस्तादुपदधाति यज्ञमुखं वै त्रिवृद्यज्ञमुखमेव पुरस्ताद्धाति व्योमा सप्तदश इति दक्षिणतोऽन्नं वै सप्तदशोऽन्नमेव दक्षिणतोऽवरुन्द्ध एकविँशवतीं पश्चात् प्रतिष्ठित्यै पञ्चदशवती-मुत्तरादोजो वै पञ्चदश ओज एवोत्तराद्धाति तस्मादुत्तरादभिप्रयायी जयति प्रतूर्तिरष्टादश इति पुरस्ताद् द्वौ त्रिवृता अभिपूर्वमेव यज्ञमुखे दधात्यभीवर्तस्सविँश इति दक्षिणतोऽन्नं वै सविँशोऽन्नमेव दक्षिणतोऽवरुन्द्धे वर्चो द्वाविँश इति पश्चाद्यद् द्वे द्विपाद्यजमानः प्रतिष्ठित्यै यद्विँशतिर्द्वे विराजा अन्नं विराड् विराज्येवान्नाद्ये प्रतितिष्ठति तपो नवदश इत्युत्तरात् तस्मात् सव्यो हस्तयोस्तपस्वितरो बाहुकुवनं

[१२] मै. ३,२,१० (१२)। कपि. ३१,१४। वा. १४,२३--२४,२८। काण्व. १५,२५--१७,३१। तै. सं. ५,३,३--५।
[१३] मै ३,२.१० (१२)। कपि. ३१,१५। वा. १४,२३। काण्व. १५,२५--२६। तै. सं. ५,३,३--५।

निगच्छति योनिश्चतुर्विंश इति पुरस्ताद्यज्ञमुखं वै चतुर्विंशो यज्ञमुखमेव पुरस्ताद्दधाति गर्भाः पञ्चविंश इति दक्षिणतोऽन्नं वै पञ्चविंशोऽन्नमेव दक्षिणतोऽवरुन्द्धे यद्दश दशाक्षरा विराडन्नं विराज्येवान्नाद्ये प्रतितिष्ठति ॥ यत् पञ्चदश यज्ञः पञ्चदशो वज्रमेवोपरिष्टाद्दधाति रक्षसामपहत्या ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रतितिष्ठति संभरणस्त्रयोविंश इत्युत्तरात् तस्मात् सव्यो हस्तयोस्संभार्यतरः क्रतुरेकत्रिंश इति पुरस्ताद्वाग्वा एकत्रिंशो वाचमेव यज्ञमुखे दधाति ब्रध्नस्य विष्टपं चतुस्त्रिंश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमसा आदित्यो ब्रह्मवर्चसमेव दक्षिणतोऽवरुन्द्धे प्रतिष्ठा त्रयस्त्रिंश इति पश्चात् त्रयस्त्रिंशद्देवता देवतास्वेव प्रतितिष्ठति नाकष्षट्त्रिंश इत्युत्तरात् स्वर्गो वै लोको नाकस्स्वर्ग एव लोके यजमानं प्रतिष्ठापयति ॥१३॥
२६-२७

एह्यू षु ब्रवाणि ते ॥ २८

यत्रो क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसे ॥ २९

नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसे ॥ ३०

आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतिः ॥ ३१

स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतः ॥ ३२

स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत् ततन्थ भानुना ॥ ३३

अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ ३४

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ ३५

अग्निर्वृत्राणि जङ्घनदग्निनाग्निस्समिध्यतेऽग्निं स्तोमेन बोधयाग्निर्मूर्धा प्रेद्धो अग्नेऽग्निं होतारं मन्ये ॥ ३६

---

[१४] मै ४,१०,१--२; १२,१ (२३,३०,३७--४४; ३) । वा. २६,१३; ११,४६, २२,१५, ३३,९, ३,१२; १३,१४; १५,२०,४५–४७; १७,७६ । क.०व. १२,४७; २४,१९, ३२,९; ३,१८, १४,१४, १६,४१,६७--६९; १८,७३ । [ एह्यू षु ब्रवाणि० । ऋ. ६,१६,१६; सा. ७, ७०५ । यत्रो (यत्र) क्व च ते मनो० । ऋ. ६,१६,१७; सा. ७०६ । नहि ते पूर्तमक्षिप० । ऋ. ६,१६,१८; सा. ७०७ । आग्निरगामि भारतो० । ऋ ६,१६,१९ । स हि विश्वाति० । ऋ. ६,१६,२० । स प्रत्नवन्नवीयसाग्ने० । ऋ. ६,१६,२१; तै. सं. २,२,१२,१, तै ब्रा. २, ४,८,१ । अग्न आयाहि वीतये० । ६,१६,१०; सा. १, ६६०; तै. सं. २,५,७,३; ८.१, तै. ब्रा. ३,५,२,१ । अग्निं दूतं वृणीमहे० । ऋ. १,१२,१; सा. ३, ७९०; अथर्व. २०,१०१,१; तै. सं. २,५,८,५, तै. ब्रा. ३,५,२.३। अग्निर्वृत्राणि जङ्घनद्० । ऋ. ६,१६,३४; सा. ४, १३९६; तै. सं. ४,३,१३,१; तै. ब्रा. ३,५,६,१ । अग्निनाग्निस्समिध्यते० । ऋ. १,१२,६; सा. ८४४; तै. सं १,४,४६,३; ३,५,११,५; तै. ब्रा. २,७,१२,३ । अग्निं स्तोमेन बोधय० । ऋ. ५,१४,१; तै. सं. ४,१,११,४ । अग्निर्मूर्धा दिवः० । ऋ. ८,४४,१६; सा.२७, १५३२, तै. सं. १,५,५,१; ४,४,१,१; तै. ब्रा. ३,५,७,१ । प्रेद्धो अग्ने० । ऋ. ७,१,३; सा. १३७५; तै. सं ४,६,५,४ । अग्निं होतारं मन्ये० । ऋ. १.१२७.१; सा. ४६५, १८१३; अथर्व. २०,६७,३; तै सं ४,४,४,८; नि. ६,८ ]

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः । अग्ने विश्वेभिस्सुमना अनीकैः ॥ ३७
अध ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ ३८
अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः । भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥ ३९
अग्नेस्स्तोमं मनामहे सिध्रमद्य दिवस्पृशः । देवस्य द्रविणस्यवः ॥१४॥ ४०

वैश्वानरो न ऊतये ॥ पृष्टो दिवि ॥ ४१-४२
पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु ॥ ४३
इदं वचः पर्जन्याय स्वराजे हृदो अस्त्वन्तरं तज्जुजोषत् ।
मयोभुवो वृष्टयस्सन्त्वस्मै सुपिप्पला ओषधीर्देवगोपाः ॥ ४४

समिधो अग्न आज्यस्य व्यन्तु तनूनपादग्न आज्यस्य वेत्विडो अग्न आज्यस्य व्यन्तु बर्हिरग्न आज्यस्य वेतु दुरो अग्न आज्यस्य व्यन्तु दुरो अग्न आज्यस्य व्यन्त्विडो अग्न आज्यस्य व्यन्तु बर्हिरग्न आज्यस्य वेतु दुरो अग्न आज्यस्य व्यन्तूषासानक्ताग्न आज्यस्य वीतां दैव्या होताराग्न आज्यस्य वीतां तिस्रो देवीरग्न आज्यस्य व्यन्तु ॥ स्वाहाग्निँ स्वाहा सोमँ स्वाहाग्निँ स्वाहा सोमँ स्वाहा सवितारँ स्वाहा सरस्वतीँ स्वाहा पूषणँ स्वाहा मरुतस्स्वतवसस्स्वाहा विश्वान् देवान् स्वाहा द्यावापृथिवी स्वाहाग्निँ होतारँ स्वाहा देवा आज्यपा जुषाणा आज्यस्य व्यन्तु त्वमग्ने सप्रथा असि त्वँ सोम महे भगमग्निर्मूर्धा भुवो यज्ञस्य वृषा सोम या ते धामानि तद्विश्वा रूपाणि पावका न

[एभिर्नो अर्कैर्भवा० । ४,१०,३; सा. १७७९; तै. सं. ४,४,४,७ । अध (अधा) ह्यग्ने क्रतोर्भद्रस्य० । ऋ. ४,१०,२; सा. १७७८; तै. सं. ४,४,४,७ । अग्ना यो मर्त्यो दुवो० । ऋ. ६,१४,१ । अग्नेस्स्तोमं मनामहे० । ऋ. ५,१३,२; सा. १४०५ ]

[१५] मै. ३,१६,४; ४,१०,१-३,६; ११,१; १२,५ (६४-६५; ३-४,१०;४५-४६; ७२,७४,७६,७९-८४,८९-९०, १३२; १०,१५,३३-३४, १३६) । वा. १८,७२-७३; २६,८; २१.१०-१६,२९—४०,४८—५८; ३,११;१३, १४—१५,३२; १५,२३,४०; ४,३७; १२,३; २०,८४; ८,३२; ३४,४५; २८,१२—२२,३५—४५; ९,१६, १८ । काण्व. २०,४१—४२; २८,८; २३,१०,१२—१७,३०—४१,४७—५७; ३,१८; १४,१४—१५,३४; १६,४१,४४; ४,४९; १३,३; २२,६९; ०,३१; ३३,३३; ३०,११—२२,३४—४५; १०,१२,१४ ।[वैश्वानरो न ऊतये० । अथर्व. ६,३५,१; आ श्रौ. सू. २,११ । पृष्टो दिवि० । ऋ. १,९८,२; तै. सं. १,५,११,१; ४, ४,१२,५; तै. ब्रा. ३,११,६,४ । पर्जन्याय प्रगायत० । ऋ. ७,१०२,१; तै. ब्रा. २,४,५,५; तै. आ. १,२९,१। इदं वचः पर्जन्याय० । ऋ. ७,१०१,५; तै. आ. १,२९,१ । त्वमग्ने सप्रथा असि० । ऋ. ५,१३,४; सा. १४०७; तै. ब्रा २,४,१,६; नि. ६,७ । त्वँ सोम महे० । ऋ. १,९१,७; तै. ब्रा. २,४,५,३ । अग्निर्मूर्धा० । (चतुर्दशानुवाके द्रष्टव्यम्)। भुवो यज्ञस्य० । ऋ. १०,८,६; तै. सं. ४,४,४,१; तै. ब्रा. ३,५,७,१ । वृषा सोम०। ऋ. ९,६४,१; सा. ५०४, ७८१; तै. सं. ४,२,११,३; ३,१३,३ । या ते धामानि० । ऋ. १,९१,४,१९; १०, ८१,५; तै. सं. १,२,१०,१; २,३,१४,१; ४,६,२,५; तै. ब्रा. २,८,३,१ । विश्वा रूपाणि० । ऋ. ५,८१,२; तै. सं. ४,१,१०,४; नि. १२,१३ । पावका नः० । ऋ. १,३,१०; सा. १८९; तै. ब्रा. २,४,३,१; नि. ११,२६ ]

आ नो दिवः पूषा गा अन्वेतु नश्शुक्रं ते अन्यत् ॥ ४५-४६
इहेह वस्स्वतवसो मरुतस्सूर्यत्वचः । शर्मा सप्रथा आवृणे ॥ ४७
प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहाँसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः ॥ ४८
विश्वे देवा ये के च ज्मा मही द्यौर्घृतवती पिप्रीहि देवाना देवानां देवं बर्हिर्वसुवने वसुधेयस्य वेतु देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु देवी उषासानक्ता वसुवने वसुधेयस्य वीतां देवी जोष्ट्री वसुवने वसुधेयस्य वीतां देवी ऊर्जाहुती वसुवने वसुधेयस्य वीतां देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां देवीस्तिस्रास्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु देवो नराशँसो वसुवने वसुधेयस्य वेतु देवो अग्निस्स्विष्टकृच्छं नो भवन्तु वाजे वाजे ॥१५॥ ४९
[१६२९]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायामपेतवीतं नाम विंशं स्थानकं संपूर्णम् ॥२०॥



अथैकविंशं स्थानकम् ।

## पञ्चचूडम् ।

अग्नेर्भागोऽसि दीक्षाया आधिपत्यमिति पुरस्तादुपदधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्दधाति नृचक्षसां भागोऽसि धातुराधिपत्यमिति दक्षिणतो ये वै विद्वाँसस्ते नृचक्षसोऽन्नं धाता प्रजननँ सप्तदशः प्रजाभ्य एव प्रजाताभ्योऽन्नमपिदधाति तस्माज्जातोऽन्नमभ्यायच्छति मित्रस्य भागोऽसि वरुणस्याधिपत्यमिति पश्चात् प्राणो वै मित्रोऽपानो वरुणः प्राणापाना एव यजमाने दधातीन्द्रस्य भागोऽसि विष्णोराधिपत्यमित्युत्तरादोजो वा इन्द्र ओजो विष्णुरोजः पञ्चदश ओज एवोत्तराद्दधाति तस्मादुत्तरादभिप्रयायी जयति ॥ वसूनां भागोऽसि रुद्राणामाधिपत्यमिति पुरस्ताद्यज्ञमुखं वै वसवो यज्ञमुखं रुद्रा यज्ञमुखं चतुर्विंशो यज्ञमुखमेव पुरस्ताद्धा-

[आ नो दिवः० । ऋ. ५,४३,११; तै. सं. १,८,२२,१ । पूषा गा अन्वेतु नः० । ऋ. ६,५४,५; तै. स. ४,१, ११,२; तै. ब्रा. २,४,१,५ । शुक्रं त अन्यत्० । ऋ ६,५८,१; सा. ७५; तै. सं. ४,१,११,२; तै. आ. १,२,४; १०,१; ४,५,६; नि. १२,१७ । इहेह वस्स्वतवसो० । ऋ. ५,५९,११; तै. आ १,४,३ । प्र चित्रमर्कं गृणते० । ऋ. ६,६६,९; तै. सं. ४,१,११,३; तै. ब्रा. २,८,५,५; नि. ३,२१ । विश्वे देवा० । ५,५१,१३; ६,९,५; ५२, १०,१४; १०,२४,५; तै. सं. २,४,१४,५ । ये के च ज्मा० । ऋ. ६,५२,१५ । मही द्यौः० । ऋ. १,२२,१३; तै. सं ३,३,१०,२; ५,११,३; ४,२,९,३ । घृतवती० । ऋ. ६,७०,१; सा. ३७८ । पिप्रीहि देवाना (देवाँ)० । ऋ. १०,२,१; तै. सं. ४,३,१३,४; तै. ब्रा. ३,५,७,५; ६,११,४ । शं नः भवन्तु० । ऋ. ७,३८,७, तै. सं. १, ७,८,३; नि. १२,४४ । वाजे वाजे० । ऋ. ७,३८,८; तै. सं. १,७,८,२; ४,७,१२,१ ]

[१] मै. २,८,५ ३,२,१० (१३; १२) । कपि. ३१,१६ । वा. १४,२४-२६ । काण्व. १५,२७-३१ । तै सं. ५,३,४ ।

त्यादित्यानां भागोऽसि मरुतामाधिपत्यमिति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं पञ्च-विँशोऽन्नमेव दक्षिणतोऽवरुन्द्धेऽदित्या भागोऽसि पूष्ण आधिपत्यमिति पश्चात् प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यमित्युत्त-राद्ब्रह्म वै बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तराद्दधाति सवितृमती भवति तस्मादुदीची ब्राह्मणेभ्यस्सनिः प्रसूता धत्रं चतुष्टोम इति पुरस्ताद्यज्ञमुखं वै चतुष्टोमो यज्ञमुखमेव पुरस्ताद्दधाति ॥ यवानां भागोऽस्ययवानामाधिपत्यमिति दक्षिणतो मासा वै यवा अन्नं मासा अन्नमेव दक्षिणतोऽवरुन्द्ध ऋभूनां भागोऽसि विश्वेषां देवानामाधिपत्यमिति पश्चात् त्रयस्त्रिँशद्देवता देवतास्वेव प्रतितिष्ठति वीवर्तो अष्टाचत्वारिँश इत्युत्तरात् तस्माद्धस्तौ समावद्वीर्या अर्क्यस्य वा एषा विधामनु विधीयतेऽन्नमर्कोऽर्कोऽग्निरत्त्यन्नं यस्यैषैवं विदुषो विधीयते या मुख्यास्ताः पुरस्तादुपद-धात्यास्य मुख्यो जायते य एवं वेद या अन्नवतीस्ता दक्षिणत आस्यान्नादो जायते य एवं वेद याः प्रतिष्ठावतीस्ताः पश्चाद्गच्छति प्रतिष्ठां य एवं वेद या ओजस्वतीस्ता उत्तरादास्य बली जायते य एवं वेद य एवमेतासामृद्धिं वेदर्ध्नोति ॥१॥ १-३

अग्ने जातान् प्रणुदा नस्सपत्नानिति पुरस्तादुपदधाति य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्तं तया प्रणुदति सहसा जातानिति पश्चाद्य एवास्य पश्चाद्भ्रातृव्यस्तं तयापनुदते प्र श्रेयाँसं भ्रातृव्यं नुदते प्रति पापीयाँसं नुदते चतुश्चत्वारिँशस्स्तोम इति दक्षिणतष्षोडशस्स्तोम इत्युत्तराद्वज्रो वै षोडशो वज्रस्त्रिष्टुप् त्रैष्टुभश्चतुश्चत्वारिँशस्सव्यापग्रहणो वज्रो दक्षिणाविसर्जनो भ्रातृव्यमेव पराणुद्य तस्मै वज्र-मनुविसृजति चतुश्चत्वारिँशस्स्तोम इति दक्षिणत उपदधाति ब्रह्मवर्चसं वै चतुश्चत्वारिँशो ब्रह्मवर्चस-मेव दक्षिणतोऽवरुन्द्धे षोडशस्स्तोम इत्युत्तरादोजो वै षोडश ओज एवोत्तराद्दधाति तस्मादुत्तराद-भिप्रयायी जयति ॥ पृथिव्याः पुरीषमसीति मध्ये पुरीषं वा आत्मनो मध्यँ सात्मानमेवाग्निं चिनुते ता एता अभ्रातृव्या नामेष्टका नास्य भ्रातृव्यो भवति य एवं विद्वानेता उपधत्तेऽथैता विराजो विराजमेव पशुषूत्तमां दधाति तस्मात् पशुमानुत्तमां वाचं वदति दश दशोपदधाति सयत्वाय देवा वै स्वर्गं लोकं यन्तस्तेषां यानि च्छन्दाँस्यनिरुक्तानि स्वर्ग्याण्यासँस्तैस्सह स्वर्गं लोकमायँस्तानृषयो-ऽनुप्राजिज्ञासन्त तानीष्टकाभिर्निरमिमत तानीमानि च्छन्दाँसि यान्ययज्ञवाहानि यान्येव देवानां छन्दाँस्यनिरुक्तानि स्वर्ग्याणि तैस्सह स्वर्गं लोकमेति य एवं विद्वानेता उपधत्ते ॥ अथैते स्तोम-भागा बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामाहरद्यदेत उपधीयन्ते यज्ञस्य प्रतिष्ठित्यै बृहस्पतिर्वा एतत् तेजो यज्ञस्य समभरद्यदेत उपधीयन्ते सतेजसमेवाग्निं चिनुते प्रजापतिः प्रजा असृजत तास्स्तोमभागै-

---

[१] मै. ३.२,१०; ३,१ (१२,१)। कपि. ३१,१७। वा. १५,१—३। काण्व. १६,१—३। तै. सं. ५,३,३–५।
[अग्ने जातान् प्रणुदा०। अथर्व. ७,३४,१। सहसा जातान्०। अथर्व. ७,३५,१]

रेवासृजत यदेत उपधीयन्ते प्रजननाय दक्षिणतो वै देवानां यज्ञोऽल्लीयत तँ स्वोमभागैः प्रत्युदस्तभ्नुवन् यदेते दक्षिणत उदञ्च उपधीयन्ते यज्ञस्य प्रत्युत्तब्ध्यै सप्त सप्तोपदधाति सवीर्यत्वाय त्रीन्मध्ये प्रतिष्ठित्या अथैता नाकसदो नाकसद्भिर्वै देवास्स्वर्गं लोकमायन् यदेता उपधीयन्ते स्वर्गस्य लोकस्याभिजित्यै ॥ न वा अमुं लोकं जग्मुषे किश्चनाकं तन्नाकसदां नाकसत्त्वं ता एतास्सर्वपृष्ठा नामेष्टका यदेव किञ्च पृष्ठा नामेष्टका यदेव किञ्च पृष्ठानां तेजस्तदवरुन्द्धे य एवं विद्वानेता उपधत्ते-ऽथैताः पञ्चचूडा यजमानायतनं वै पत्न्यो यन्नाकसत्सु पञ्चचूडा उपदधाति नाक एव यजमानं प्रतिष्ठापयत्यप्सरसो वा एता एतद्रूपं कृत्वा पत्न्यो भूत्वामुष्मिंल्लोके यजमानमुपशेरते पश्चात् प्राचीमेकामुपदधाति तस्माद् पश्चात् प्राची पत्न्यन्वास्ते तनूपानीर्वा एता यजमानस्य सर्वमायुरेति य एवं विद्वानेता उपधत्ते एता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता वै देवता अभिचरणीया यं द्विष्यात् तं ब्रूयादमुं वो जम्भे दधामीत्येताभ्य एवैनं देवताभ्य आवृश्चति ताजक् प्रधन्वति ॥२॥

४--७

आयोस्त्वा सदने सादयामीत्यायुरेवोत्तमं दधाति तस्मादायुः प्राणानामुत्तमँ स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुख्यात्यै प्राजापत्योऽश्वो यदश्वमुपघ्रापयति प्रजापतिनैवैनं चिनुते-ऽथैषा विकर्णी देवानां वा एषा विक्रान्तिर्यद्विकर्णी देवानामेवैनं विक्रान्तिमनु विक्रमयति वायुमती प्राणो वै वायुरायुस्स्वयमातृण्णायुश्चैवास्मिन् प्राणं च समीची दधाति सं वा एनमेतदिन्द्धे यच्चिनोति दीपयति वायुमत्या संवत्सरमुख्यं भृत्वाग्निं चिन्वीत ॥ संवत्सरो वा अग्निर्वैश्वानरस्तस्याहोरात्राणीष्टका आप्तेष्टकमेवैनं चिनुत ऋध्नोति यन्नैवं चिनुयात् प्रिययैनं तन्वा व्यर्धयेद्यदेवं चिनुते प्रिययैवैनं तन्वा समर्धयति सतनूरेवैतद्वैश्वानरश्चीयत ऋतव्या उपदधात्यृतूनां विधृत्यै द्वे द्वे उपदधाति द्वौ द्वौ ह्यृतवश्चतस्रो मध्यमायां चित्यामुपदधात्यन्तरिक्षमिव वा एषा या मध्यमा चितिश्शिथिलमिवान्तरिक्षं चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठत्यृतुभ्यो वा एता देवा निरमिमत तदृतव्यानामृतव्यात्वमायन्तमायन्तमृतुं प्रतितिष्ठति य एवं विद्वानेता उपधत्ते ॥ नानाप्रभृतयो भवन्ति समानोदर्कास्तस्मात् समानस्य संवत्सरस्य नाना रूपाण्यवकामुपधायेष्टकामुपधात्यग्नेर्वा एषा वैश्वानरस्य योनिर्यदवका स्व एवैना योना उपदधाति शान्त्या अनुदाहायर्ध्नोति य एवं विद्वानेता उपधत्तेऽथैता विश्वज्योतिषः प्राणभृतो वा एता यजमानस्य प्राणमेव प्रथमया दाधार व्यानं द्वितीययापानं तृतीययैता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता वै देवता ज्योतिष्मतीरग्निरेवास्यास्मिंल्लोके ज्योतिर्भवति वायुरन्तरिक्षे सूर्यो दिवि सर्वेऽस्मा इमे लोका ज्योतिष्मन्तो भवन्त्यधिपतिवतीर्भवन्त्याधिपत्यमेवैताभि-

---

[३] मै. १,८,१४; ३,२,८ (१४,१०)। कपि. ३२,१८। वा. १२,५४—५५; १५,५९—६०, ६३। काण्व. १३, ५५—५६: १६ ८०—८१.८४। तै. सं ५.३.७।

गच्छति लोकं पृण च्छिद्रं पृणेति यदेवास्योनं यच्छिद्रं तदापूरयत्यथो सीद ध्रुवा त्वमिति दृँहत्ये-वैनामिन्द्राग्नी त्वा बृहस्पतिरित्योजो वै वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येण चिनुते ता अस्य सूद-दोहस इति तस्मात् परुषि परुषि सूदस्सोमँ श्रीणन्ति पृश्नय इत्यन्नं पृश्न्यन्नमेवावरुन्द्धे त्रिष्वारोचने दिव इति त्रीणि सवनानि सवनेष्वेवैनं चिनुतेऽनुष्टुबनुचरा भवति प्राणो वा अनुष्टुप् तस्मात् प्राण-स्सर्वाण्यङ्गान्यनुसंचरति वाग्वा अनुष्टुब् यदेवास्यात्र न क्रियते यन्न चीयते तद्वाचा कल्पयति तद्भिषज्यति ॥३॥ ८-१०

या आग्नेयीर्गायत्रीर्मूर्धन्वतीस्ताभिस्तिसृभिस्तिस्रः पूर्वार्धे उपदधात्यथ त्रिष्टुब्भिरथ जगतीभि-रथानुष्टुब्भिरथ पङ्क्तिभिरथ यत् किञ्चाग्नेयं छन्दस्तिस्र एकेन च्छन्दसा तिस्र एकेन सर्वमग्निमनूप-दधात्येताँ ह वै यज्ञसेनश्चैत्रश्चितिं विदांचकार तया ह वै स आनर्धप्नोति य एवं विद्वानेता उपधत्ते पशवो वै छन्दाँसि वामं देवानां पशूनेव वामं भ्रातृव्यस्य वृङ्क्ते ॥ आत्मा वा आहवनीयो भ्रातृव्यो धिष्ण्यो यद्गार्हपत्य उपदध्याद्भ्रातृव्ये वामं पशून् दध्यादाहवनीय उपदधात्यात्मन्नेव वामं पशून् धत्ते सैषोत्तरवेदिर्नाम चितिस्तस्मादेता उत्तमायां चित्यामुपधीयन्त उत्तमस्समानानां भवति य एवं विद्वानेता उपधत्ते पशुर्वा अग्निरग्निमुखान् प्रजापतिः पशूनसृजत यत् पञ्च चितय-स्तस्मात् पाङ्क्ताः पशव उच्यन्ते यत् तिस्रस्त्रिवृद्ध्यग्निर्यद् द्वे द्विपाद्यजमानः प्रतिष्ठित्यै त्र्यक्षरं लोम त्र्यक्षरं चर्म त्र्यक्षरं माँसं त्र्यक्षरमस्थि त्र्यक्षरो मज्जा तद्दश दशाक्षरं विराट् तस्माद्वैराजाः पशव उच्यन्ते यो जानुदघ्नस्स गायत्रचिद्यो नाभिदघ्नस्स त्रिष्टुप् चिद्यः पुरुषमात्रस्स जगच्चिच्छ्येनचितं पक्षिणं चिन्वीत स्वर्गकामश्श्येनो वै वयसां क्षेपिष्ठस्स्वर्गस्य लोकस्य समष्ट्या अलजचितं पक्षिणं चतुस्सीतं चिन्वीत प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति ॥ कङ्कचितँ शीर्षण्वन्तं चिन्वीत यः कामयेत सशीर्षामुष्मिंल्लोके स्यामिति सशीर्षैवामुष्मिंल्लोके भवति ॥ प्रउगचितं चिन्वीत यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति प्रउगचिता वै देवा असुरान् प्राणुदन्त य एनान् पूर्वेऽतिक्रान्ता आसन् य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्तं तेन प्रणुदत उभयतःप्रउगं चिन्वीत यदि मन्येत पश्चान्मे भ्रातृव्य इति य एवास्य पश्चाद्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयाँसं भ्रातृव्यं नुदते प्रति पापीयाँसं नुदते ॥ रथचक्रचितं चिन्वीताभिचरन् रथचक्रचितं ह स्म वै देवा असुरेभ्यो वज्रमियद्ध्यस्त्वेत्य-भ्यवसृजन्ति वज्रमेव भ्रातृव्याय प्रहरति स्तृणुत एनँ समूह्यं चिन्वीत पशुकामः पशवो वै पुरीषं पशूनेवास्मै समूहति सर्वत उत्तरवेदिं निर्वपति पशवो वा उत्तरवेदिः पशूनेवावरुन्द्धे ॥ परिचाय्यं चिन्वीत सजातकामः परीव वै सजाता विशन्ति सजातैरेवैनं परिचिनोति ॥ द्रोणचितं चिन्वीता-

[ता अस्य सूददो० । ऋ. ८,६९,३; तै. सं. ४,२,४,४; तै. ब्रा. ३,११,६,२]

[४] मै. ३,३,१—३; ३,४,७ (१—३; ७) । कपि. ३२,१९—२० । तै. सं. १,८,११—१२; ५,४,११ ।

अकामः पात्रेण वा अन्नमद्यते तेनैव मुखेनान्नमत्ति ॥ श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति श्मशानचिता वै यमोऽमुष्मिंल्लोक आर्ध्नोत् पितृलोक एवर्ध्नोति ॥ गायत्रचितं पक्षिणं चिन्वीत स्वर्गकामोऽग्निर्वै तत् पक्षी भूत्वा स्वर्गं लोकमपतद्यदाहुर्गायत्री पक्षिणी भूत्वा स्वर्गं लोकमपतदिति स्वर्गस्य लोकस्य समष्ट्या अन्येऽग्नय ऊर्ध्वाश्चीयन्ते न्यञ्चोऽन्ये य ऊर्ध्वाश्चीयन्ते तेऽमुष्मै लोकाय ये न्यञ्चस्तेऽस्मै यदूर्ध्वस्तिष्ठन् हिरण्यशल्कैः प्रोक्षति तेनैवैनमूर्ध्वं चिनुते स्वर्गस्य लोकस्य समष्ट्यै ॥४॥ ११-१९

दीक्षया विराडाप्तव्या तिस्रो रात्रीर्दीक्षितस्स्यात् त्रिपदा विराड्विराजमेवाप्नोति षड् रात्रीर्दीक्षितस्स्यात् षड्वा ऋतव ऋतवस्संवत्सरस्संवत्सरो विराड्विराजमेवाप्नोति दश रात्रीर्दीक्षितस्स्याद्दशाक्षरा विराड्विराजमेवाप्नोति द्वादश रात्रीर्दीक्षितस्स्याद् द्वादश मासास्संवत्सरस्संवत्सरो विराड्विराजमेवाप्नोति त्रयोदश रात्रीर्दीक्षितस्स्यात् त्रयोदश मासास्संवत्सरस्संवत्सरो विराड्विराजमेवाप्नोति पञ्चदश रात्रीर्दीक्षितस्स्यात् पञ्चदशार्धमासस्य रात्रयोऽर्धमासशस्संवत्सरं आप्यते संवत्सरो विराड्विराजमेवाप्नोति चतुर्विंशतिं रात्रीर्दीक्षितस्स्याच्चतुर्विंशतिस्संवत्सरस्यार्धमासा अर्धमासशस्संवत्सरं आप्यते संवत्सरो विराड्विराजमेवाप्नोति मासं दीक्षितस्स्याद्यो वै मासस्स संवत्सरस्संवत्सरो विराड्विराजमेवाप्नोति चतुरो मासो दीक्षितस्स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमाजयन् गायत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाजयँस्त्रिष्टुभं छन्दो द्वादशादित्यास्ते दिवमाजयञ्जगतीं छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानां तस्माद् द्वादश मासो भृत्वाग्निं चिन्वीत द्वादश मासास्संवत्सरस्संवत्सरोऽग्निर्वैश्वानरस्तस्याहोरात्राणीष्टका आप्तेष्टकमेवैनं चिनुत ऋध्नोति व्यावृतमेव गच्छति श्रैष्ठ्यँ समानानां गायत्रं पुरस्ताद्गायति शिरो वै देवानां गायत्रं गायत्रोऽग्निस्तस्माद्गायत्रं पुरस्ताद्गायत्याग्निपावमान्यामयँ वाव यः पवते स प्राणो मुखं देवानामग्निर्मुखत एव प्राणं दधाति तस्मान्मुखतः प्राणो रथन्तरमुत्तराद्गायति बृहद्दक्षिणतः पक्षा एवास्योपदधातीयं वै रथन्तरमसौ बृहदाभ्यामेवैनं परिगृह्णाति यज्ञायज्ञीयं पुच्छे गायति श्रोण्या वामदेव्यमात्मा वै यज्ञायज्ञीयं तनूर्वामदेव्यँ सात्मानमेवैनँ सतनूं चिनुते हृदयमपिकक्षे तस्मादपिकक्षे हृदयमनूचं भवति तस्मादनर्थकं हृदयमर्क्यैः परिगायत्यर्को वा अग्निरर्कमेवार्क्यैः परिगायति शान्त्यै ॥५॥ २०

संवत्सरो वा अन्तरा तमस्स्वर्गं लोकं ज्योतिष्मतीरेतास्साहस्रीरिष्टका यद्धिरण्यशल्कैः प्रोक्षति ज्योतिषैवास्मै संवत्सरं विवासयति सहस्रस्य प्रमासि सहस्रस्य प्रतिमासीति सहस्रसंमिता ह्यीमे लोका घ्नन्ति वा एतदग्नेर्यदस्यात्र न क्रियते यन्न चीयतेऽमृतँ हिरण्यं यद्धिरण्यशल्कैः प्रोक्षत्यमृतेनैवास्य

[ ५ ] मै. ३,३,५ (७) । कपि. ३१,२० ।
[ ६ ] मै. ३,३,४ (४) । कपि. ३१,२१ । वा. १५,६५; १७,२-३ । काण्व. १६,८५; १८,२—४ ।

तन्वं पृणक्तीमा मे अग्न इष्टका धेनवस्सन्त्विति धेनूरेवैना: कुरुते ता एनं कामदुघा अमुष्मिंल्लोक उपतिष्ठन्ते रुद्रं वै देवा यज्ञान्निरभजन् स देवानायतयाभिपर्यावर्तत ते देवा एतच्छतरुद्रियमपश्यँस्तेनैनमशमयन् यच्छतरुद्रियं जुहोति तेनैवैनँ शमयति ॥ जानुदघ्नेऽग्रे जुहोत्यस्या एव रुद्रमवयजतेऽथ नाभिदघ्नेऽन्तरिक्षादेव रुद्रमवयजतेऽथ पुरुषमात्रेऽमुष्या एव रुद्रमवयजत इत एवोर्ध्वं रुद्रमवयजतेऽथ पुरुषमात्रेऽथ नाभिदघ्नेऽथ जानुदघ्नेऽमुत एवार्वाञ्चं रुद्रमवयजते तत् षट् संपद्यते षड्वा ऋतव ऋतुभ्य एव रुद्रं निरवयजते गवीधुकासक्तुभिर्वा जर्तिलैर्वा कुसयसर्पिषा वा मृगक्षीरेण वा जुहोति यद्ग्राम्येण जुहुयाद्ग्रामावचारिणं रुद्रं कुर्यादारण्येनैवारण्यमभि रुद्रं निरवयजतेऽर्कपर्णेन जुहोत्यर्को वा अग्निरर्केणैवैनमर्कादधि निरवयजत उत्तरस्य पक्षस्य या चरमेष्टका तस्यां जुहोत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं प्रतिहृत्यावयजते पशुर्वा अग्निरेतर्हि वा एष जायते यर्हि चीयते यथा वत्सो जातस्स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति स यजमानं चैवाध्वर्युं च ध्यायति यच्छतरुद्रियं जुहोति भागधेयेनैवैनँ शमयत्यङ्गिरसो वै स्वर्गं लोकं यन्तस्तेऽजायां घर्मं प्रासिञ्चन् सा शोचन्ती पर्णं परामृशत् सोऽर्कोऽभवत् तदर्कस्यार्कत्वं यदर्कपर्णेन जुहोति सयोनित्वाय यं द्विष्यात् तस्य संचरे पशूनां न्यस्येद्यः प्रथमः पशुराक्रामति स आर्तिमार्छति या उत्तमास्ता यजमानं वाचयेदेता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता वै देवता अभिचरणीया यं द्विष्यात् तं ब्रूयादमुं वो जम्भे दधामीत्येताभ्य एवैनं देवताभ्य आवृश्चति ताजक् प्रधन्वति ॥६॥ २१–२२

अश्मन्नूर्जं पर्वते शिश्रियाणामित्यद्भिः परिषिञ्चति प्रजापतेर्वा एष रसो यदापः प्रजापतेरेवैनं रसेन तर्पयति स एनं तृप्तः प्रीतोऽक्षुध्यन्नुपतिष्ठतेऽश्मन्ते क्षुधं द्विष्मस्तं ते शुगृच्छत्विति यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति त्रिः परिषिञ्चति त्रय इमे लोका एभ्य एवैनं लोकेभ्यश्शमयति त्रिः पुनरपरिषिञ्चन् पर्येति तत् षट् संपद्यते षड्वा ऋतव ऋतुभ्य एवैनँ शमयति यद्यभिचरेत् त्रिः पुनरपरिषिञ्चन् परीत्य या दक्षिणा श्रोणिस्तस्यां प्रक्षिणीयादिदमहममुमामुष्यायणममुष्य पुत्रं प्रक्षिणामीति यैवाग्नौ शुक्तामादाय तयैनमर्पयति तं भिद्यमानमन्वार्तिमार्च्छति यन्नाम गृह्णाति मूलमेवास्य च्छिनत्ति ॥ वरुणमेनिर्वा एष संचितो मण्डूकेन विकर्षति मण्डूकस्यायुषा व्येति न ग्राम्यान् पशून् हिनस्ति नारण्याँस्तस्मादेतं वसन्ता च प्रावृषि चाभिगच्छति शुचा ह्येष ऋतोऽवकया च वेतसशाखया च विकर्षत्यपां वा एतच्छरो यदवकापामेतत् पुष्पं यद्वेतस आपश्शान्ताश्शान्ताभिरेवास्य शुचँ शमयति तिसृभिस्त्रिवृद्धा अग्निर्यावानेवाग्निस्तस्य शुचँ शमयति प्रजापतिः प्रजा असृजत ता अक्षुध्यँस्ताभ्योऽन्नं प्रायच्छत् ता अब्रुवन्नोऽभूदित्यन्नं पावकं यत् पावकवतीर्भवन्त्यन्नाद्याय

[७] मै. ३,३,५—६ (५—८)। वा. १७,१—१५; ३६,२०। काण्व. १८,१—१५; ३६,२०। तै. सं. ५,४,४—५।

कमसा अग्निश्चिक्यानाय भवति सप्तभिर्विकर्षयति सप्त वै छन्दाँसि च्छन्दोभिरेवास्य शुचँ शमयत्यष्टाभिर्विकर्षत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्य शुचँ शमयति ॥ संलुप्योत्करेऽध्यस्यत्येषा वा अस्याँ शुक्छुच्येवास्य शुचं दधाति यं द्विष्यात् तमभ्यस्येच्छुचैवैनमर्पयति पञ्चगृहीत आज्ये पञ्च हिरण्यशल्कानवास्यति तेजो वै हिरण्यमायुर्घृतं तेजसैवास्यायुर्व्याघारयत्यथो पङ्क्त्यैवाहुत्याग्निमालभते नमस्ते हरसे शोचिष इत्यधिक्रामति नमस्कृत्य हि श्रेयाँसमुपचरन्त्यक्ष्णया व्याघारयत्यजामित्वाय नृषदे वेडिति प्रतिष्ठित्यै हुतादो वा अन्ये देवा अहुतादोऽन्येऽग्निचिदस्त्वैतानुभयानवरुन्द्धे यज्जुहोति चाव चोक्षति तानेव प्रीणाति तानवरुन्द्धे तेऽस्योभये प्रीता यज्ञे भवन्ति ॥ गुरुमुष्टिनावोक्षति स हि प्राजापत्यतमस्तेनास्य न हुतं भवति नाहुतं कृष्णाजिनस्योपानहौ कुरुते ब्रह्मणो वा एतद्रूपं यत् कृष्णाजिनं मृत्युरग्निर्ब्रह्मणैव मृत्योरन्तर्धत्तेऽन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादन्यतरामुपानहं कुर्वीतान्तर्मृत्योर्धत्तेऽवान्नाद्यं रुन्द्धे प्राणैर्वा एष पशुभिर्व्यृध्यते योऽग्निं चिनुते तं प्रथमोऽधिक्रामति प्राणदा व्यानदा इति प्राणैरेवैनँ समर्धयति वर्चोदा वरिवोदा इति प्रजा वै वर्चः पशवो वरिवः प्रजया चैवैनं पशुभिश्च समर्धयति प्राणदा अपानदा इत्यवरोहति रूपेणैव द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै ॥७॥ २३-२६

इन्द्रो वै वृत्रमहँस्तँ हतष्षोडशभिर्भोगैरसिनात्सोऽग्निना पाप्मनो भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनो निरमुच्यत यदाग्नेय्या जुहोत्यग्निनैव पाप्मनो भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनो निर्मुच्यत एकैकया जुहुयाद्यदि कामयेत चिरं पाप्मनो मुच्येतेति चिरमेव पाप्मनो मुच्यते सकृत् सर्वाननूद्द्रुत्योत्तमया जुहुयाद्यदि कामयेताजिरं पाप्मनो मुच्येतेत्यजिरमेव पाप्मनो मुच्यते ॥ षोडशं भवति षोडशकलः पुरुषो यावानेवास्यात्मा तं पाप्मनो मुञ्चत्यथो षोडशभिर्हि स तं भोगैरसिनाःस्नानासृक्ताभ्यां जुहोति सृक्तयोर्नानावीर्यत्वाय समिध आदधाति भागधेयमेवास्मा अपिदधाति यथा जनमेष्यतेऽवसं करोत्येवमेवैतदग्नय आतिथ्यं क्रियते तिस्र आदधाति त्रिवृद्ध्यग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यौडुम्बरीर्भवन्त्यूर्ग्वा उडुम्बर ऊर्जमेवास्मा अपिदधाति घृतेनानक्त्येतद्वा अग्नेः प्रियं धाम यद् घृतं प्रियमेवास्मै धामातिथ्यं करोत्युदु त्वा विश्वे देवा इति प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छते मनुष्या वै विश्वे देवा मनुष्यैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरिति यस्मा एवैनं चित्तायोद्यच्छते तेनैनँ समर्धयति ॥ पञ्च दिश इति दिश एवैनमनुप्रणयति द्वे परिगृह्यवती भवतो रक्षसामपहत्यै हरिकेशस्सूर्यरश्मिरिति सावित्री प्रसूत्यै देवा

---

[ नमस्ते हरसे शोचिषे० । श्रौ. सू २,१२ ]

[८] मै ३,३,७—८ (९—१०) । वा. १२,३१,५६; १५,६१; १७,५३—६४ । काण्व. १३,३२,५७, १६,८२, १८, ५३—६४ । [ हरिकेशः सूर्यरश्मि० (सूर्यरश्मिर्हरि०)० । ऋ. १०,१३९,१, ते. सं. ४,६,३,३ ]

देवेभ्यो अध्वरीयन्तो अस्थुरित्याशिषामेवैष दोहो विमान एष इति स्वर्गस्यैवैष लोकस्य विमान उक्षा समुद्रो अरुणस्सुपर्ण इत्यश्मानमाग्नीध्रे सादयत्यनारम्भणमिव वा एतदनायतनमिव यदन्तरिक्षमन्तरिक्षमाग्नीध्रं यदाग्नीध्रे सादयत्यायतनमेव करोति मध्ये दिवो निहितः पृश्निरश्मेत्यन्नं पृश्न्यन्नमेवावरुन्द्धे द्वाभ्याँ सादयति द्विपाद्यजमानः प्रतिष्ठित्यै ॥ षड्भिराग्नीध्राद्यन्ति षड्वा ऋतव ऋतुभिरेव चतसृभिरा पुच्छाच्चत्वारि वै छन्दाँसि च्छन्दोभिरेवेन्द्रमितीन्द्रियमेवावरुन्द्धेऽवीवृधन्निति वृद्धिमेवोपैति वाजा इत्यन्नं वै वाजा अन्नमेवावरुन्द्धेऽनुष्टुभा वैश्वदेव्या यन्ति वाग्वा अनुष्टुब् वैश्वदेवी वाक् सर्वाणि वा एषा रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये क्रियन्ते तस्मादेतया यन्ति सुम्नहूरिति यज्ञो वै सुम्नं यज्ञमेवावरुन्द्धे वाजस्य मा प्रसवेनोद्ग्राभेनोदजीगृभमिति ब्रह्म वा उद्ग्राभो ब्रह्म निग्राभोऽसा आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन्निग्राभो ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यमवगृह्णात्यथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यतामित्योजो वै वीर्यमिन्द्राग्नी ओजसैव वीर्येण भ्रातृव्यं विनुदते ॥८॥ २७-३०

क्रमध्वमग्निना नाकमिति स्वर्गस्य लोकस्याक्रमः प्राचीमनु प्रदिशं प्रेहि विद्वानिति देवलोकमेवोपावर्तते विश्वा आशा दीद्यद्विभाहीति तस्मादग्निस्सर्वा दिशो विभाति पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमित्येषामेवैते लोकानाँ संक्रमास्स्वर्यन्तो नापेक्षन्त इति स्वर्गस्य लोकस्य समष्ट्या अग्ने प्रेहि प्रथमो देवायतामिति देवेषु चैव मनुष्येषु च चक्षुर्दधातीयक्षमाना भृगुभिस्सजोषा इति स्वर्गमेवैनं लोकं गमयति पञ्चभिरधिक्रामति पाङ्क्तोऽग्निर्यावानेवाग्निस्तस्मै नमस्कृत्याधिक्रामति ॥ नक्तोषासाग्ने सहस्राक्षेति सँहिताभ्यां जुहोत्यहोरात्रे एव संदधाति तस्मादहोरात्रे सँहिते कृष्णायाश्श्वेतवत्साया जुहोत्यह्नैवास्मै रात्रीं प्रदापयति नानारूपा वै पशवो नानाव्रतास्त एतदेव प्रत्तिमरूपयत् पयसा जुहोत्येतदेवैनमभिसंजानानाः पशव उपतिष्ठन्ते दध्ना स्वयमातृण्णायां जुहोत्यसौ वै स्वयमातृण्णोर्ग्दध्यमुष्यामेवोर्जं दधाति तस्मादमुतोऽर्वाचीमूर्जमुपजीवन्ति सुपर्णोऽसि गरुत्मानिति गायत्र्या सादयत्यस्यामेवैनमाक्रमयति भासान्तरिक्षमापृणेति त्रिष्टुभान्तरिक्षमेवैनमाक्रमयत्याजुह्वानस्सुप्रतीकः पुरस्तादिति जगत्यामुष्यामेवैनमाक्रमयत्येताभिरेवैनं देवताभिस्सयुजं कृत्वा

---

विमान एष०। ऋ १०,१३९,२; तै. सं ४,६,३,३ उक्षा समुद्रो अरुणः । ऋ ५,४७,३; तै. सं. ४,६,३,३। इन्द्रं विश्वा अवीवृधन्० । ऋ. १,११,१; सा. ३४३,८२७; तै. सं. ४,६,३,४, तै. ब्रा. २,७,१५,५ ]

[ ९ ] मै. ३,३,९ (११) । वा. १७,६५—७६,७९; १२,२,४ । काण्व. १८,६५—७६,७९; १३,२,४ । तै. सं. ५,४,७। [ क्रमध्वमग्निना० । अथर्व. ४,१४,२ । पृथिव्या अहमुदन्तरिक्ष० । अथर्व. ४,१४,३ । स्वर्यन्तो नापेक्षन्त० । अथर्व. ४,१४,४ । अग्ने प्रेहि प्रथमो० । अथर्व. ४,१४,५ । नक्तोषासा समनसा० । ऋ. १,९६,५; ११३,३ (च. पा.); सा. १७५१; तै. सं. ४,१,१०,४; ६,५,२, ७,१२,३ ]

प्रतिष्ठापयति तिसृभिस्त्रिवृद्धा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति ॥ ताँ सवितुरिति सावित्र्या-दधाति प्रसूत्या औदुम्बरीमूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपिदधात्यग्निं वा ह वा अग्निचिद्दुहेऽग्निर्वाग्नि-चितं दुहे कण्वो ह वा एतस्य श्रायसो दोहं विदांचकार यथा गां प्रत्तां दुह एवमेवैतयाग्निमग्नि-चिद्दुहेऽग्ने विधेम त इत्यृद्ध्यै वैकङ्कतीमग्नेर्वै सृष्टस्य विकङ्कतं भा आर्छत् तदेवावरुन्द्धे प्रेद्धो अग्ने दीदिहि पुरो न इति शमीमयीँ शान्त्यै विराजैषा वै सूर्मी कर्णकवत्येताँ ह वै सोमदक्षः कौश्रेयस्स-त्रिणः पप्रच्छ विद यूयँ सूर्मी३ङ्कर्णकवती३मिति यैवारण्ये तां विद्मेति पशवो वा एतस्याः कर्णाः पशूनेवावरुन्द्धे ॥ एताँ ह स्म वै देवा असुरेभ्यो वज्रँ शतघ्नीमियद्भ्यस्त्वेत्यभ्यवसृजन्ति वज्रमेव भ्रातृ-व्याय प्रहरति स्तृण्वत एनं सप्त ते अग्ने समिध इति साप्तान्येवैतया प्रीणाति पूर्णया स्रुचा जुहोति यथा वत्साय जाताय स्तनमपिदधात्येवमेवास्मा एतद्भागधेयमपिदधाति दध्ना पुरस्ताज्जुहोत्याज्ये-नोपरिष्टादूर्ग्वै दधि तेज आज्यमूर्जं चैवास्मिँस्तेजश्च समीची उत्तमे दधात्यथो इमे एवास्मै प्रदाप-यति ॥९॥ ३१-३४

अथैतदप्रतिरथमेतेन वै देवा असुरानप्रत्यभ्यजयँस्तदप्रतिरथस्याप्रतिरथत्वमप्रत्येवैतेन भ्रातृव्य-मभिजयत्येषा वै गायत्री ज्योतिष्पक्षा तयैव स्वर्गं लोकमेति दशर्चं भवति दशाक्षरा विराडन्नं विराज्येवान्नाद्ये प्रतितिष्ठत्येतेन ह स्म वै भरद्वाजः प्रतर्दनँ संनह्यन्नेति ततो वै स राष्ट्रमभवद्यं कामयेत राष्ट्रँ स्यादिति तमेतेन संनह्यन्नियाद् राष्ट्रमेव भवति तदेतद्भुवनच्यवं नाम हविरास्थानादास्थाना-देवैतेन भ्रातृव्यं नुदते संग्रामे कुर्यात् तैजनो वा बान्धुको वेध्मस्स्याद्यद्यङ्गाराः प्रतिवेष्टन्ते प्रत्य-मित्राणाँ सेना वेष्टतेऽथाग्नये वैश्वानराय द्वादशकपालस्संवत्सरो वा अग्निर्वैश्वानर एषा संवत्सरस्य प्रिया तनूर्या वैश्वानरी यदग्नये वैश्वानराय प्रियाया एवास्य तन्व आतिथ्यं करोति ॥ क्षत्रं वैश्वानरो विण्मरुतो यद्वैश्वानरं मारुता अनुहूयन्ते क्षत्रायैव विशमनुनियुक्त्युच्चैर्वैश्वानरस्य यजत्युपाँशु मारुता-ञ्जुहोति तस्मात् क्षत्रं विशमतिवदति पशुर्वा अग्निरग्निमुखान् प्रजापतिः पशूनसृजत पशवो मरुतो यद्वैश्वानरं मारुता अनुहूयन्ते पशूनां प्रजात्यै यत् प्राङ् पर्यावर्तेत देवविशा मुह्येद्यद्दक्षिणा पितृदेवत्य-स्स्याद्यत् प्रत्यङ् रक्षसाँ स्याद्यदुदङ् मानुषस्स्यादृजुः प्रतिष्ठितो होतव्यो यजमानस्य प्रतिष्ठित्या अथैते मारुतास्सप्त सप्तकपालास्सप्त सप्त हि मरुतो सप्तधा गणा गणेन गणमनूद्द्रुत्य जुहोति गणश एव मरुतस्तर्पयति ॥ योऽरण्येऽनुवाक्यो गणस्तेन मध्ये जुहोति क्षत्रं वा एष मरुतां विडितरे क्षत्रमेव विशो मध्यमेष्ठं करोति यदि कामयेत विशा क्षत्रँ हन्यामिति योऽरण्येऽनुवाक्यो गणस्तमितरैर्गणै-र्मोहयेद्विशैव क्षत्रँ हन्ति यदि कामयेत क्षत्रेण विशँ हन्यामिति त्रिष्टुभौ याज्यानुवाक्ये कुर्यादोजो

[ताँ सवितुर्वरेण्यस्य० । अथर्व. ७,१५,१ । विधेम ते० । ऋ २,९,३; तै. सं. ४,६,५,४ । प्रेद्धो अग्ने० । ऋ. ७,१,३; सा. १३७५ तै. सं. ४,६,५,४]

[१०] मै. ३,३,७; १० (९,१२) । वा. १९,६०; १७,८६ । काण्व ३१,४९; १८,८६ । तै. सं. ५,४,७-८ ।

वै वीर्यं त्रिष्टुबोज एव वीर्यं विश आदाय तां क्षत्रायापिदधाति यं कामयेत क्षत्रान्नुदेयेति योऽरण्ये-ऽनुवाक्यो गणस्तेनाग्निष्ठं रथवाहनं विचालयेदेतद्वै राजन्यस्य क्षत्रं बिभर्ति क्षत्रमेव मरुतां क्षत्रेणैवैनं क्षत्रान्नुदत इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान इत्येतद्वै देवानामनुवर्त्म देवानामेवानुवर्त्मना यजमाना-यानुवर्त्म करोति सं वा एनमेतदिन्द्धे यच्चिनोति दीपयति मरुन्नामैः ॥१०॥ ३५–३७

वसोर्धारां जुहोति वसोर्मे धारासदिति वा एषा हूयते घृतस्य वा एषा धारामुष्मिंल्लोके यजमान-मुपतिष्ठते संततं जुहोत्यन्नाद्यस्य संतत्या अविच्छेदाय यं द्विष्यात् तस्य विच्छिन्द्यादन्नाद्यमेवास्य विच्छिनत्ति घृतेन जुहोति तेजो वै घृतं तेजो वसोर्धारा तेजस्येव तेजो दधात्यक्लृप्तस्य वा एषा क्लृप्त्यै हूयतेऽनवरुद्धस्यावरुद्ध्या अनभिजितस्याभिजित्यै प्राणश्चापानश्चेति प्राणापाना एव यजमाने दधात्यन्नं च चक्षुश्चेत्येतद्वा अन्नस्य रूपं रूपेणैवान्नमवरुन्द्धे द्वादशैतानि द्वादशानि जुहोति द्वादश मासास्संवत्सरस्संवत्सरेणैवान्नाद्यमवरुन्द्धे ॥ अग्निश्चापश्चेत्येषा वा अन्नस्य योनिस्सयोन्येवा-न्नमवरुन्द्धेऽर्धेन्द्राणि जुहोति देवतानामवरुन्द्ध्यै यदर्धेन्द्राणि जुहोति तस्मादिन्द्रो देवतानां भूयिष्ठ-भागिन्द्रमुत्तरं करोतीन्द्रिय एव यजमानं प्रतिष्ठापयत्यँशुश्च रश्मिश्चेति यज्ञमुखं वा अँशुश्च रश्मिश्च यज्ञमुखमेवावरुन्द्धे स्रुचश्च चमसाश्चेत्येतानि वै यज्ञस्य रूपाणि रूपैरेव यज्ञमवरुन्द्धेऽवभृथश्च स्वगा-कारश्चेति प्रतिष्ठित्या अग्निश्च घर्मश्चेतद्वा अग्नेर्ब्रह्मवर्चस्यं तदेवावरुन्द्धे त्रियविश्च त्रियवी चेत्येतावन्ति वै पशूनां वयाँसि सवयस एव पशूनवरुन्द्ध एका च तिस्रश्चेति मनुष्यच्छन्दसं वा एका च तिस्रश्च मनुष्यच्छन्दसमेवावरुन्द्धे चतस्रश्चाष्टौ चेति देवच्छन्दसं वै चतस्रश्चाष्टौ च देवच्छन्दसमेवावरुन्द्धे ॥ युग्मदयुजौ स्तोमौ मिथुनौ प्रजात्यै मिथुनमेव अुत्तरेण करोति प्र चतुरुत्तरेण जनयत्येका च तिस्रश्चेत्या त्रयस्त्रिँशतो जुहोति त्रयस्त्रिँशद्देवता देवता एवावरुन्द्धे चतस्रश्चाष्टौ चेत्यष्टाचत्वारिँशतोऽष्टाचत्वारिँ-शदक्षरा जगती जागताः पशवः पशूनेवावरुन्द्धेऽस्मिन्नेव लोके मनुष्यच्छन्दसेनर्ध्नोत्यमुष्मिन् देव-च्छन्दसेनोभौ लोका आजयति वाजश्च प्रसवश्चेति त्रयोदशैता व्याहृतयस्त्रयोदशमासस्संवत्सरोऽन्तत एव संवत्सरं रोहत्यायुर्यज्ञेन कल्पतामिति यज्ञस्यैवैषा क्लृप्तिर्ऋक् च साम चेत्यन्नाद्यं वै वसोर्धारा-न्नाद्यमेव वसोर्धारयावरुध्यान्नादो भूत्वा स्तोमश्च यजुश्चेति देवक्षत्रं वै स्तोमश्च यजुश्चान्तत एव देवक्षत्रं प्रावस्यति ॥११॥ ३८–४०

देवा वै वाजप्रसव्यु आजिमयुस्तंदग्निरुदजयद्यद्वाजप्रसव्यं जुहोत्यन्नाद्यस्योज्जित्या अन्नस्यान्नस्य जुहोति सर्वमेवान्नमवरुन्द्धे यस्य न जुहोति तेन व्यृध्यते यस्य न जुहुयात् तदिध्मेऽपि प्रोक्षेत् तेनैव

[११] मै. ३,४,१—२ (१—२)। वा. १८,१—१४,१९,२१—२२,२४—२७,२९। काण्व. १९,१३—२६,३१, ३३—३४,३६—३८,४१—४३। तै. सं. ५,४,८।

[१२] मै. ३,४,३—४ (३—४)। वा. १७,६०. १८,३०,४५। काण्व. १८,६०; २१,१,१५। तै. सं. ५,४,९।

तदवरुन्द्ध औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्जैवान्नाद्यमवरुन्द्धेऽग्नेर्वा एषोऽभिषेकस्तस्मादग्नि-
चिद्वर्षति न धावेद्यद्धावत्यन्नाद्याद्धावत्यथैते राष्ट्रभृतः क्षत्रं वा एषोऽग्नीनां यच्चीयत एते वा एतस्य
राष्ट्रं बिभ्रति तद्राष्ट्रभृतां राष्ट्रभृत्त्वं तैरेवास्मै राष्ट्रं संप्रयच्छति षडेते षड्वा ऋतव ऋतुभिरेवास्मै राष्ट्रं संप्र-
यच्छत्यथो ऋतुष्वेव प्रतितिष्ठति ॥ मिथुना आहुतयः प्रजात्यै द्वादश द्वादश मासास्संवत्सरस्संवत्सरेणै-
वास्मै राष्ट्रं संप्रयच्छत्यथो संवत्सर एव प्रतितिष्ठति रथमुखे त्रयोदशीं जुहोति वज्रो वै रथो वज्रेणैव
दिशोऽभिजयति ता दिशोऽभिजिता रथेनेयते वातहोमाञ्जुहोति वातमेवावरुन्द्धेऽग्निचितं ह त्वा एषो-
ऽमुष्मिल्लोकेऽभिपवते त्रिर्जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमवरुन्द्ध इमेऽस्मै लोका वातं
धुन्वन्त्यञ्जलिना जुहोति हस्तावदानो वै वायुर्न वै वायुमवदानैराप्तुमर्हत्येकधैवैनमाप्नोति समुद्रोऽसि
नभस्वानित्येतानि वै वातस्य रूपाणि रूपैरेव वातमवरुन्द्धे ॥ प्राणो वै गायत्री गायत्रं हविर्धानं
व्यानस्त्रिष्टुप् त्रैष्टुभमाग्नीध्रमपानो जगती जागतं सदो मध्ये दिवो निहितः पृश्निरश्मेत्यसुर्वाव
स पृश्निरश्मासुमेव प्राणापानयोर्व्यवदधाति प्राणापानयोर्विधृत्या एकविंशतिं होत्रीय उपदधात्येक-
विंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठित्या एकादश ब्राह्मणाच्छंस्य एकादशाक्षरा त्रिष्टुब् वीर्यं त्रिष्टुब्
वीर्यमेवावरुन्द्धेऽष्टा अष्टा इतरेष्वष्टाक्षरा गायत्री गायत्र्यामेव प्रतितिष्ठति षण्मार्जालीये षड्वा ऋतव
ऋतव एतं दक्षिणा पर्यहरन् पितर ऋतवस्तस्मादत्र षडुपधीयन्ते ॥१२॥ ४१-४३

इयं वामस्य मन्मनश्शुचिं नु स्तोमं मरुतो यद्ध वो दिवो या वश्शर्मेमं मे वरुण तत्त्वा यामि
कया नश्चित्रः ॥ ४४

कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु काचिदृष्वः ।
पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे ॥ ४५

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत । अवाधमानि जीवसे ॥ ४६

---

[पृश्निरश्मे दिवा (मध्ये दिवो०) । ऋ. ५,४७,३; तै. सं. ४,६,३,३]

[१३] मै. १,२,११८, २,७,१०२; ३,४,१६: ४,१०,४९—५०,१०२-१०४,१०६,१०८—१०९,११२,११४-११५, ११७—११८,१२२—१२३,१२५—१२६,१२९, ११,९,७७,९६—९८; १३,३९; १४,१०४,२५२—२५४, २६३ । वा. २१,१—४; १८,४९; २७,३९, ३६,४, १२,१२, ३३,३५, १७,२२—२३, ८,४५ । काण्व. २३, १—४; २०,१९; २९,४४, ३६,४; १३,१३; ३२,६५, ८,२६-२७, १८,२२-२३ । [इयं वामस्य मन्मनः०। ऋ. ७,९४,१; सा. ९१६ । शुचिं नु स्तोमं० । ऋ ७,९३,१; तै सं. १,१४,१, तै. ब्रा. २,४,८,३ । मरुतो यद्ध वो दिवः । ऋ. ८,७,११; तै. सं. १,५,११,४ । या वश्शर्म० । ऋ १,८५,१२, तै. सं. १,५,११,५, तै. ब्रा. २,८,५,६ । इमं मे वरुण० । ऋ १,२५,१९; सा. १५८५; तै. ब्रा. २,१,११,६ । तत्त्वा यामि ब्रह्मणा०। ऋ. १,२४,११; तै. सं, २,१,११,६ । कया नश्चित्र० । ऋ. ४,३१,१; सा. १६९,६८२, अथर्व. २०,१२४,१; तै. सं. ४,२,११,२, तै. आ. ४,४२,२ । कया तच्छृण्वे शच्या० । ऋ. ४,२०,९ । उदुत्तमं मुमुग्धि नो० । ऋ. १,२५,२१; तै. ब्रा. २,४,२,६ ]

उदुत्तमं वरुण पाशमस्मत् त्वं नो अग्ने स त्वं नो अग्ने ॥ ४७
अनेकवन्तमूतयेऽग्निं धीभिर्हवामहे । स नः पर्षदति द्विषः ॥ ४८
सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठस्स्वस्ति ।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥ ४९
सांतपना इदँ हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः ॥ ५०
यो नो मर्तो मरुतो दुर्हृणायुस्तिरश्चित्तानि वसवो जिघाँसति ।
द्रुहः पाशं प्रति षु मुचीष्ट तपिष्ठेन तपसा हन्तना तम् ॥ ५१
गृहमेधा रिशादसो मरुतो मापभूतन । प्रमुञ्चन्तो नो अँहसः ॥ ५२
प्र बुध्न्या व ईरते महाँसि प्र नामानि प्रयज्यवस्तिरध्वम् ।
सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ॥ ५३
क्रीडं वश्शर्धो मारुतमनर्वाणं रथेशुभम् । कण्वा अभिप्रगायत ॥ ५४
अत्यासो न ये मरुतस्स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।
ते हर्म्येष्ठाश्शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः ॥ ५५
इन्द्राग्नी श्नथद्वृत्रमा तू न इन्द्र त्वं महाँ इन्द्र ॥ ५६
विश्वकर्मन् हविषा वावृधानस्स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ५७
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्याहुवेम ।
स नो नेदिष्ठँ हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा ॥१३॥ ५८

---

[ **उदुत्तमं वरुण०**। ऋ. १,२४,१५; अथर्व. ७,८३,३; १८,४,६९; तै. सं. १,५,११,३; ४,२,१,३; नि. २,१३। **त्वं नो अग्ने०**। ऋ. ४,१,४; तै. सं. २,५,१२,३। **स त्वं नो अग्ने०**। ऋ. ४,१,५; तै. सं. २,५,१२,३। **अने(नी)कवन्तमूतये०**। ऋ. परि. ३५,१; २६,७(च. पा)। **सैनानीकेन सुविदत्रो०**। ऋ. १,९,६; तै. सं. ४,३,१३,२। **सांतपना इदँ हवि०**। ऋ. ७,५९,९; अथर्व. ७,७७,१; तै. सं. ४,३,१३,३। **यो नो मर्तो(मरुतो)०**। ऋ. ७,५९,८; अथर्व. ७,७७,२; तै. सं. ४,३,१३,३। **गृहमेधा (०स)रिशादसो०**। ऋ. ७,५९,१०; तै. सं. ४,३,१३,५। **प्र बुध्न्या व ईरते०**। ऋ. ७,५६,१४; तै. सं. ४,३,१३,६। **क्रीडं(०ळं) वश्शर्धो०**। ऋ. १,३७,१, तै. सं. ४,३,१३,६; नि. ७,२। **अत्यासो न ये०**। ऋ. ७,५६,१६; तै. सं. ४,३,१३,७। **इन्द्राग्नी नवतिं पुरो०**। ऋ. ३,१२,६; सा. १५७६, १७०४; तै. सं. १,१,१४,१। **श्नथद्वृत्रम्०**। ऋ. ६,६०,१; तै. सं. ४,२,११,१; तै. ब्रा. ३,५,७,३। **आ तू न इन्द्र०**। ऋ. १,१०,११; ३,४१,१; ४,३२,१; ८,८१,१, सा. १६७, १८१, ७२८; अथर्व. २०,२३,१। **त्वं महाँ इन्द्र०**। ऋ. १,६३,१; ४,१७,१। **विश्वकर्मन् हविषा वावृधानः०**। ऋ. १०,८१,६; सा. १५८९; तै. सं. ४,६,२,६; नि. १०,२७। **वाचस्पतिं विश्वकर्माणं०**। ऋ. १०,८१,७; तै. सं. ४,६,२,५]

उशन्तस्त्वा हवामह उशन्तस्समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे ॥ ५९
त्वँ सोम प्रचिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ ६०
त्वया हिं नः पितरस्सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीँरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ ६१
त्वँ सोम पितृभिस्संविदानोऽनु द्यावापृथिवी आततन्थ ।
तस्मै त इन्दो हविषा विधेम वयँ स्याम पतयो रयीणाम् ॥ ६२
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा नश्शं योररपो दधात ॥ ६३
आहं पितॄन् सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ६४
उपहूताः पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ६५
अग्निष्वात्ताः पितर एह गच्छत सदस्सदस्सदत सुप्रणीतयः ।
अत्ता हवीँषि प्रयतानि बर्हिष्यथा रयिँ सर्ववीरं दधातन ॥ ६६
अग्निष्वात्ता ऋतावृधः पितरो मृडता सु नः । प्रमुञ्चन्तु नो अँहसः ॥ ६७
अग्निष्वात्तानृतुमतो हवामहे नराशँसे सोमपीथँ य आनशुः ।
त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ६८
स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन् मनूनाम् ।
विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन् द्रविणोदाः ॥ ६९

---

[१४] मै. १,३,१००-१०१, १०,४३ २,७,१५४, ४,९,१८९,२०१, १०,१३०,१३३-१३८,१४१-१४३,१४५, १४८-१४९, १४,५६ । वा १९,५२-५७,५९,६१,६५,७०; २७,२७,३१; १२,६७, ७,४१-४२, ८,४१; ३३, ३१, १३,४६ । काण्व. २१,५२-५८,६१,६५,७०; २९,२५-२६, १३,६८; ८,२३-२४, ९,६-७; ३२,३१, १४,४८ । [ **उशन्तस्त्वा ( नि धीमहि ) हवामह०** । ऋ. १०,१६,१२, अथर्व १८,१,५६; तै. सं २,६,१२, १ । **त्वँ सोम प्रचिकितो०** । ऋ. १,९१,१; तै. सं. २,६,१२,१ । **त्वया हि न०** । ऋ. ९,९६,११, तै. सं. २,६,१२,१ । **त्वँ सोम पितृभिः०** । ऋ. ८,४८,१३; तै.सं २,६,१२,२ । **बर्हिषदः पितर०** । ऋ. १०,१५,४, अथर्व. १८,१,५१; तै. सं. २,६,१२,२; नि ४,२१ । **आहं पितॄन् सुविदत्रा०** । ऋ १०,१५,३. अथर्व. १८, १,४५; तै. सं. २,६,१२,३ । **उपहूताः पितर०** । ऋ. १०,१५,५; अथर्व. १८,३,४५; तै. सं. २,६,१२,३ । **अग्निष्वात्ताः पितर०** । ऋ. १०,१५,११; अथर्व. १८,३,४४, तै. सं. २,६,१२,२ । **स पूर्वया निविदा०** । ऋ. १,९६,२ ]

यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः । प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ ७०

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।
त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥ ७१

वायुरग्रेगाः प्र याभिर्यासि ॥ ७२

सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा इन्द्राय सुम्नया ॥ ७३

शुनँ हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ७४

उदु त्यँ चित्रँ देवानाम् ॥ ७५

इन्द्रं वयँ शुनासीरमस्मिन् यज्ञे हवामहे । इह देवँ सुराधसम् ॥ ७५

इन्द्रं वयँ धनपतिँ स्वनुमन्वारभामहे । स नः पितेव पुत्रेभ्य ईशानश्शर्म यच्छतु ॥१४॥ ७७

[१७०६]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां पञ्चचूडं नामैकविंशं स्थानकं संपूर्णम् ॥२१॥

---

[ यो अग्नि कव्यवाहनः० । ऋ. १०,१६,११ । त्वदग्ने काव्या० । ऋ. ४,११,३ । **प्र याभिर्यासि०** । ऋ. ७,९२,३; तै सं. २,२,१२,७ । **सीरा युञ्जन्ति कवयो०** । ऋ. १०,१०१,४. अथर्व. ३,१७,१; तै. सं. ४,२,५,५ । **शुनँ हुवेम मघवा०** । ऋ. ३,३०,२२; ३१,२२; ३२,१७; ३४,११; ३५,११; ३६,११; ३८,१०, ३९,९, ४३,८; ४८,५, ४९,५; ५०,५; १०,८९,१८; १०४,११; सा. ३२९; अथर्व. २०,११,११; तै. ब्रा. २,४,४,३ । **उदु त्यं जातवेदसं०** । ऋ. १,५०,१; सा. ३१; अथर्व. १३,२,१६; २०,४७,१३; तै. सं. १, २,८,२; ४,४३,१; नि. १२,१५ । **चित्रं देवानाम्०** । ऋ. १,११५,१; अथर्व. १३,२,३५; २०,१०७,१४; तै. सं. १,४,४३,१; २,४,१४,४; तै. ब्रा. २,८,७,३; ऐ. आ. ३,९; तै. आ. १,७,६; २,१३,१; नि. १२,१६ ]

अथ द्वाविंशं स्थानकम्।

## स्वर्गम्।

स्वर्गाय वै लोकाय देवरथो युज्यते कामाय मनुष्यरथोऽग्निं युनज्मि शवसा घृतेनेति देवरथमेव युनक्ति स एनं युक्तस्स्वर्गं लोकमभिवहति यत् सर्वाभिर्युञ्ज्याद्युक्तोऽस्याग्निस्स्यादप्रतिष्ठिता आहुतय- स्तिसृभिर्युनक्ति त्रिवृद्धा अग्निर्यावानेवाग्निस्तं युनक्ति तस्मिन् युक्ते यज्ञस्समाधीयते द्वाभ्यां नापि- युनक्त्याहुतीनां प्रतिष्ठित्यै द्वाभ्यां यज्ञायज्ञीयस्य स्तोत्रेऽभिमृशत्येतावान् वै यज्ञो यावानेवाग्निष्टोमो भूमा त्वा अस्यात ऊर्ध्वं क्रियते यावानेव यज्ञो यावानग्निष्टोमस्तमन्ततस्स्वर्गं लोकमनुसमारोहति ॥ सं वा एतमेता अग्नी तपतो यश्चाग्निष्टोमो यश्च वैश्वानरोऽपस्वतीभ्यामभिमृशति शान्त्यै द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै समास्त्वाग्न ऋतवो वर्धयन्त्विति समाभिरेवर्तूंन्वर्धयत्यृतुभिस्संवत्सरँ सं दिव्येन दीदिहि रोचनेनेति तस्मादग्निस्सर्वा दिशो विभाति प्रत्यौहतामश्विना मृत्युमस्मादित्याम- याविन एतान् कुर्यान्मृत्युमेवास्मात् प्रतिनुदत्युद्वयं तमसस्परीति पाप्मा वै तमः पाप्मानमेवैतया- पहते ज्योतिष्पश्यन्त उत्तरमित्यसौ वा आदित्यो ज्योतिरुत्तमममुष्यैवादित्यस्य सायुज्यं गच्छति ॥ या अपस्वतीस्ताः कुर्याच्छान्त्यै चतुर्विंशतिं चतुर्विंशतिस्संवत्सरस्यार्धमासा न वै संवत्सरस्तिष्ठते नास्य श्रीस्तिष्ठते यस्यैताः क्रियन्तेऽथैता आप्रियः प्रजापतिः प्रजास्सृष्ट्वा स रिरिचान इवामन्यत स एता आप्रीरपश्यत् ताभिरात्मानमाप्रीणीत यज्ञः प्रजापतिर्यदाप्रियो भवन्ति यज्ञमेवाप्रीणात्यूना- तिरिक्ता मिथुनाः प्रजात्यै लोमशं वै नामैतत् प्रजापतेश्छन्दो लोमशाः पशवः प्रजायन्ते पशूनां प्रजात्यै सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये क्रियन्ते तस्मादेता अग्नेश्चित्यस्य भवन्ति ॥१॥ १-३

यथा वै पुनराधेय एवं पुनश्चितिर्यो वा अग्न्याधेयेन नर्ध्नोति पुनराधेयँ स आधत्ते यद्यग्निना चित्येन नर्ध्नुयात् पुनश्चितिं चिन्वीतर्ध्नोत्येवात्मा वै प्रथमा चितिः प्रजा द्वितीया नपात् तृतीया तृतीयमग्निं चिन्वानो मध्यमायामेताश्चित्यामुपदध्यादनुसंतत्यै नपात् को वै नामैषोऽग्निरचयन्न य एवं विद्वानेता उपधत्तेऽष्टा एता उपदधात्यष्टाक्षरा गायत्री गायत्र्यामेव प्रतितिष्ठति यां वा अनि- ष्टकेऽग्निचिदाहुतिं जुहोति स्रवति सा ताँ स्रवन्तीं यज्ञोऽनु परास्रवति यज्ञं यजमानो यदेता उपधी- यन्त आहुतीनां प्रतिष्ठित्यै ॥ ताः प्रतितिष्ठन्तीर्यज्ञोऽनु प्रतितिष्ठति यज्ञं यजमानोऽष्टा उ ता उपदधा-

---

[१] मै. ३,४,४; ६(४,६)। वा. १८,५१; २०,२१; २७,१,१०; ३५,१४; ३८,२४। काण्व. २०,२१, २२,६; २९,१, १०; ३५,४७; ३८,२४। तै. सं. ५,४,१०। [समास्त्वाग्न ऋतवो०। अथर्व. २,६,१। उद्वयं तमसस्परि०। ऋ. १,५०,१०; अथर्व. ७,५३,७; तै. सं. ४,१,७,४; तै. ब्रा. २,४,४,९, ६,६,४; तै आ. ६,३,२]

[२] मै. ३,४,५ (५)। तै. सं. ५,४,१०।

त्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टा एता उपधाय पुरीषेणाभ्यूहत्यष्टाक्षरा गायत्री ब्रह्म गायत्री ब्रह्मणैवैनं चिनुते गायत्र्या छन्दसैकादश लोकंपृणयोपधाय पुरीषेणाभ्यूहत्ये-कादशाक्षरा त्रिष्टुब् वीर्यं त्रिष्टुब् वीर्येणैवैनं चिनुते त्रिष्टुभा छन्दसा द्वादश लोकंपृणयोपधाय पुरीषे-णाभ्यूहति द्वादशाक्षरा जगती जागताः पशवः पशुभिरेवैनं चिनुते ॥ जगत्या छन्दसा तिस्र-श्चितयस्त्रीणि पुरीषाणि तत् षट् संपद्यते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति तदाहुरुत्तरवेदिर्वावैषा योऽस्य पूर्वोऽग्निश्चितस्स्यात् तमन्ववसाय यजेतेति यथा दीप्यमाने भूयोऽभ्यादधात्येवमेवास्मिं-स्तदधि पूर्वं तेजो दधाति तदाहुः कश्श्रेयाँसं विपुसं बोधयितुमर्हतीति यद्यजत आहुत्यैवैनं वर्धयति गृहान् वा एतत् कुरुते यदग्निं चिनुते यद्वा अन्यतो विन्दते गृहाँस्तदाहरति यदीष्ट्या यजेत यदि पशुना यदि सोमेन योऽस्य पूर्वोऽग्निश्चितस्स्यात् तमन्ववसाय यजेत यथान्यतो वित्त्वा गृहानाहर-त्येवमेव तत् ॥२॥ ४-६

संवत्सरमुख्यं भृत्वा द्वितीये संवत्सरे पर्येत आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं तृतीये संवत्सरे पर्येतेऽभिजिता यजेत यदष्टाकपालो-ऽष्टाक्षरा गायत्र्याग्नेयं गायत्रं प्रातस्सवनं प्रातस्सवनमेव तेन दाधार गायत्रीं छन्दो यदेकादशकपाल एकादशाक्षरा त्रिष्टुबैन्द्रं त्रैष्टुभं माध्यन्दिनँ सवनं माध्यन्दिनमेव तेन सवनं दाधार त्रिष्टुभं छन्दो यद् द्वादशकपालो द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधार जगतीं छन्दो यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्म वै तेन दाधार यद्वैष्णवो यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यदभिजिता यजतेऽभिजित्यै यत् संवत्सरमुख्यं बिभर्तीमं तेन लोकँ स्पृणोति यद् द्वितीयं चिनुते-ऽन्तरिक्षं तेन स्पृणोति यद्यजतेऽमुं तेन लोकँ स्पृणोत्येतं वै पर आट्णारः कक्षीवाँ औशिजस्त्रसदस्युः पौरुकुत्सः प्रजाकामा अचिन्वत ततो वै ते सहस्रँ सहस्रं पुत्रानविन्दन्त प्रथत एव तं भूमानं गच्छति यं तेऽगच्छन् य एवं विद्वानेतं चिनुते ॥३॥ ७

प्रजापतिर्वा एतमग्रेऽग्निमचिनुतर्तुभिस्संवत्सरं वसन्तेन पूर्वार्धं ग्रीष्मेन दक्षिणं पक्षं वर्षाभिरुत्तरँ शरदा पुच्छँ हेमन्तेन मध्यं ब्रह्मणा वावास्य तत् पूर्वार्धमचिनुत क्षत्रेण दक्षिणं पक्षं विशोत्तरं पशुभिः पुच्छमाशया मध्यमेतावद्वावास्ति यावदेवास्ति तत् स्पृणोति शृण्वन्त्येनमग्निं चिक्यानमत्यन्नं रोचते का प्रथमा चितिः किं पुरीषमित्याहुर्ब्रह्मवादिन इयं वाव प्रथमा चितिरोषधयः पुरीषमन्तरिक्षं द्वितीया वयाँसि पुरीषं द्यौस्तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषमात्मा पञ्चमी प्रजा पुरीषं यद् त्रिचितीकं चिन्वीत यज्ञं दक्षिणामात्मानं प्रजामन्तरियात् तस्मात् पञ्चचितीकश्चेतव्यो

---

[३] तै. सं ५,६,५। [४] मै. ३,४,८ (१३,१७)। तै. सं. ५,६,१०।

यत् तिस्रश्चितयस्त्रिवृद्धयाग्निर्यद् द्वे द्विपाद्यजमानस्त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥४॥ ८

सजूरब्द आयवोभिस्सजूरुषा अरुणीभिस्सजूस्सूर एतशेन सजोषा अश्विना दँसोभिस्सजूर्वैश्वानर इडया घृतेन स्वाहा ॥ ९

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥ १०
युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यस्सदः ॥ ११
अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः ॥ १२

अग्नेर्यान्यस्यग्नेरग्नियान्यसि वायोर्यान्यसि वायोर्वायुयान्यसि देवानां यान्यसि देवानां देवयान्यस्यन्तरिक्षस्य यान्यस्यन्तरिक्षस्यान्तरिक्षयान्यस्यन्तरिक्षसदस्यन्तरिक्षे सीद ॥ यवा आयवा ऊमा एवा अब्दस्सगरस्सुमेकस्सलिलाय त्वा मृदीकाय त्वा सतीकाय त्वा केताय त्वा प्रचेतसे त्वा दिवे त्वा ज्योतिषे त्वा विवस्वते त्वादित्येभ्यस्त्वर्चे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा सूर्याय त्वा पुरोवातसनिरस्यभ्रसनिरसि विद्युत्सनिरसि स्तनयित्नुसनिरसि वृष्टिसनिरसि प्राच्या त्वा दिशाग्निना देवतया गायत्रेण च्छन्दसाग्नेश्शिर उपदधामि गायत्रेण च्छन्दसा छन्दसाग्नेश्शीर्ष्णाग्नेश्शिर उपदधामि ॥ दक्षिणया त्वा दिशेन्द्रेण देवतया त्रैष्टुभेन च्छन्दसाग्नेः पार्श्वमुपदधामि त्रैष्टुभेन च्छन्दसा छन्दसाग्नेः पार्श्वेनाग्नेः पार्श्वमुपदधामि प्रतीच्या त्वा दिशा सवित्रा देवतया जागतेन च्छन्दसाग्नेः पुच्छमुपदधामि जागतेन च्छन्दसा छन्दसाग्नेः पुच्छेनाग्नेः पुच्छमुपदधाम्युदीच्या त्वा दिशा मित्रावरुणाभ्यां देवतयानुष्टुभेन च्छन्दसाग्नेः पार्श्वमुपदधाम्यानुष्टुभेन च्छन्दसा छन्दसाग्नेः पार्श्वेनाग्नेः पार्श्वमुपदधाम्यूर्ध्वया त्वा दिशा बृहस्पतिना देवतया पाङ्क्तेन च्छन्दसाग्नेः पृष्ठमुपदधामि पाङ्क्तेन च्छन्दसा छन्दसाग्नेः पृष्ठेनाग्नेः पृष्ठमुपदधामि ॥ संयच्च प्रचेताश्चाग्नेस्सोमस्य सूर्यस्य ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्युग्रा च भीमा च पितॄणां यमस्येन्द्रस्य ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ध्रुवा च पृथिवी च सवितुर्मरुतां वरुणस्य ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि यन्त्री च यमनी च

---

[५] मै. २,१२,३; १३,१२; ३ ४,४ (८, ८९. ४) । वा. १२,७४, ७,४२ १३,३६-३७,३९,४६; ३३,४; ५,२६; ६,१,२५, ३७,१९; १६,६४-६६ । काण्व १३,७५; ८,२४. ९,७, १४,३८-३९,४८; ३२,४; ५,३३; ६,१,३६, ३७,१८; १७,६४ । तै. सं ४,४,६। [ **चित्रं देवानां०** । ऋ. १,११५,१, अथर्व. १३,२,३५; २०,१०७,१४; तै. सं. १,४,४३,१; २,४,१४,४, तै. ब्रा. २,८,७,३; ऐ आ. ३,९; तै आ. १,७,६, २,१३,१; नि. १२,१६। **युक्ष्वा हि देवहूतमाँ०** । ऋ ८,७५,१; तै सं. २,६,११,१ । **अग्ने युक्ष्वा हि ये०** । ऋ. ६,१६,४३; सा. २५; १३८३; तै. सं. ४,२,९,५१ **यं द्विष्मो यश्च नो०** । अथर्व. ३,२७,१-६]

मित्रावरुणयोर्मित्रस्य धातुस्ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि प्राची च प्रतीची च वसूनां रुद्राणामादित्यानां ते तेऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥५॥ १३–१६

सजूरब्द आयवोभिरिति संवत्सरो वा अब्दो मासा आयवा उषा अरुणीस्सूर एतश इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः पशव इडा पशवो घृतँ संवत्सरं पशवोऽनु प्रजायन्ते संवत्सरादेवास्मै पशून् प्रजनयति दर्भस्तम्बे जुहोति यद्वा अस्या अनामृतं यद्वीर्यं तदेतदुत्सर्पति यदेवास्या अनामृतं यद्वीर्यं तस्मिञ्जुहोति नाग्निं चिक्यानः प्रमीयते यस्यैवं जुह्वति चित्रं देवानामुदगादनीकमिति पुरुषशीर्षे जुहोत्यहर्वै मित्रो रात्री वरुण एतावद्वावास्ति यावदेवास्ति तत् स्पृणोति सौर्यर्चा जुहोति तस्मात् पुरुष एवँ सूर्यं प्रत्यङ् पशूनां न्यञ्चोऽन्ये यत् समान्यर्चा द्विर्जुहोति तस्मात् समानस्य पुरुषस्य द्वौ पादौ ॥ यो ह वा अग्निं योग आगते न युनक्ति न युञ्जानेषु युङ्क्ते युक्ष्वा हि देवहूतमाँ अग्ने युक्ष्वा हि ये तवेत्यग्निमेवैतद्योग आगते युनक्ति युङ्क्ते युञ्जानेषु य एवं वेद द्वाभ्यां युनक्त्यस्थूरि द्वयं यो ह वा अग्निं विमोक आगते न विमुञ्चति न विमुञ्चमानेषु विमुञ्चते मातेव पुत्रं पृथिवी पुरीष्यमित्यग्निमेवैतद्विमोक आगते विमुञ्चति वि विमुञ्चमानेषु मुञ्चते य एवं वेदाथैतास्संयानीरेता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येषा वै गायत्री ज्योतिष्पक्षा तयैव स्वर्गं लोकमेति ॥ यथा नावोदकादुदकमभिसंयात्येवं वा एताभिरग्निचिदमुत्र यथालोकँ संयाति तत् संयानीनाँ संयानीत्वमथैतान्यृतुनामान्यृतूनेवावरुन्द्धे सुमेक इति संवत्सरो वै सुमेकस्संवत्सरमेवावरुन्द्धेऽथैता आदित्येष्टका आदित्या वा एतस्य तेज आदद्ते योऽग्निं चिक्यानो नेव रोचते यदेता उपधीयन्ते यथा दीप्यमाने भूयोऽभ्यादधात्येवमेवास्मिँस्तदधि पूर्वं तेजो दधाति नास्यादित्यास्तेज आददते यथासौ देवेष्वेवं मनुष्येषु भवत्यथैता घृतेष्टकास्तेजो वा अग्निस्तेजो घृतं तेजस्येव तेजो दधात्यथैता वृष्टिसनयो वृष्टिमेवैताभिरवरुन्द्ध एताभिर्वा अग्निचितेऽमुत्र यथाकामं वर्षति तद्वृष्टिसनीनां वृष्टिसनित्वमथैता आत्मैतद्ध वा उवाच शङ्ख कौष्यः पुत्रमग्निं चिकिवाँसमचैरग्नी३मित्यचैषँ ही३त्यथ कथा न सर्वात्मागा इति तद्धि नूनं न विदांचकर्मेति यदेता उपधीयन्ते सात्मानमेवाग्निं चिनुते पुनर्नितुन्ना भवन्ति प्राण एव प्राणमुपसंदधात्यथैषा षष्ठी चितिर्योऽग्निं चिक्यानो नेव प्रतितिष्ठेत् स एतां षष्ठीं चितिमुपदधीत षड्वा ऋतवस्संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठत्येता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता वै देवता अभिचरणीया यं द्विष्यात् तं ब्रूयादमुं वै जम्भे दधामीत्येताभ्य एवैनं

---

[६] मै. २,१२,३; ३,४,४–५ (८; ४–५)। कपि. ३४। वा. ११,६१,७४, ७,४२; १३,३६–३७,४६; ३३,४। काण्व. १३,६२,७५; ८,२४; ९,७; १४,३८–३९,४८; ३२,४। तै. सं ५,६,४। [चित्रं देवानां०। युक्ष्वा हि०। अग्ने युक्ष्वा०। (पञ्चमानुवाके द्रष्टव्यम्)]

देवताभ्य आवृश्चति ताजक् प्रधन्वति ॥६॥ १७-१९

अग्निना वै देवास्स्वर्गं लोकमायँस्तान् पराच आवृत्तान् पश्चादन्ववेत्य रक्षाँस्यजिघाँसँस्ते देवा एता वितृण्णीरपश्यँस्ताभी रक्षाँस्यपाघ्नत यद् द्वे पुरस्तादुपदधाति द्वे पश्चाच्चक्षुरेवोभयतो दधाति रक्षसामपहत्यै स्वयमातृण्णा भवन्ति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुख्यात्यै चतस्रस्तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे स्वर्गाय वै लोकायाग्निश्चीयते यदेकादशिनीं कुर्याद्वज्रेण पुरस्तादवगृह्णीयादस्वर्ग्यस्स्याद्यदनेकादशिनीमनवरुद्धा अस्य पशवस्स्युरेकयूप एकादश पशूनालभेत तेनैव स्वर्ग्यस्तेन पशूनवरुन्द्धे ॥ न पक्षसंमितां मिनुयाद्यत् पक्षसंमितां मिनुयात् कनीयाँसं यज्ञक्रतुमुपेयात् पापीयस्यस्यात्मनः प्रजा स्यादेतद्ध वा उवाच जातश्शाकायन्यश्शङ्खं कौष्यं पक्षसंमितामेकादशिनीममेष्टेति श्रुत्वा कनीयाँसं यज्ञक्रतुमुपागात् पापीयस्यस्यात्मनः प्रजा भविष्यतीति ततो वै तं पराभूतं मन्यन्ते वेदिसंमितां मिनुयाज्ज्यायाँसमेव यज्ञक्रतुमुपैति नास्यात्मनः प्रजा पापीयसी भवति कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेदन्निति वा अग्निश्चीयते य एवं विद्वानग्निं चिनुते विदुरेनं देवाः कस्मै कमग्निश्चीयत इत्याहुर्गृही मेऽसन्निति वा अग्निश्चीयते य एवं विद्वानग्निं चिनुते गृहवान् भवति कस्मै कमग्निश्चीयत इत्याहुरन्नमदानीति वा अग्निश्चीयते य एवं विद्वानग्निं चिनुतेऽत्त्यन्नं व्रतं चरेदग्निं चित्वा प्रथमं चित्वा न रामामुपेयाद् द्वितीयं चित्वा नान्येषाँ स्त्रियस्तृतीयं चित्वा न काञ्चन रेतो वा एतन्निधत्ते यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येत तदाहुर्ये एवामू रेतस्सिचा इष्टके ते अग्निचितो रेतो बिभृतस्तस्मादुपेत्येति सहस्रेष्टकं चिन्वीत प्रथमं चिन्वानस्सहस्रसंमितो ह्ययं लोको द्वे सहस्रे द्वितीयं चिन्वानोऽन्तरिक्षेण संमितं त्रीणि सहस्राणि तृतीयं चिन्वानस्त्रय इमे लोका एभिर्लोकैस्संमितं प्रजापतिर्वा उभयमग्निमविभस्तेन प्रजा असृजत ता अनुप्राविशत् सोऽब्रवीत् स एव मे प्रजानामृध्नवद्यो मेतस्संचिनवदित्यग्निः प्रजापतिर्यदग्निं चिनुते प्रजापतिमेव संचिनोत्यृध्नोति तच्चित्यस्य चित्यत्वं तं वसुभ्यः प्रायच्छत् तेन वसवस्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्त ते वसवो रुद्रेभ्यः प्रायच्छँस्तेन रुद्रास्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्त तं रुद्रा आदित्येभ्यः प्रायच्छँस्तेनादित्यास्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्तोखा सहस्रतमी य एवमुखाँ सहस्रतमीं वेद गच्छति साहस्रीं पुष्टिं पशूनाम् ॥७॥ २०-२१

यथारूपमग्निश्चेतव्यो यो वै यथारूपमग्निं चिनुते नास्यापरूपं जायते गायत्र्या प्रथमां चितिँ संचितामभिमृशेत् त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथारूपमेवाग्निं चिनुते नास्यापरूपं जायते प्राणो वै प्रथमा चितिर्व्यानो द्वितीयापानस्तृतीया प्राणापानैरेवैनँ

[७] मै. ३,४,८; ९,७ (१३,१७; १७)। कपि. ३५,१। तै. सं. ५,५,७।

[८] मै. ३,४,८। कपि. ३५,२। वा. ७,४२; १३,४६। काण्व. ८,२४; ९,७; १४,४८। तै. सं. ५,५,७ ]

समिन्द्ध इडाया वा एषा विभक्तिः पशव इडा पशुभिरेवैनं चिनुते प्रजापतये प्रोच्याग्निश्चेतव्यो यो वै प्रजापतयेऽप्रोच्याग्निं चिनुत आर्तिमार्छत्यश्वा अभितस्तिष्ठेताँ श्याव उत्तराच्छ्वेतो दक्षिणतस्ता आलम्बमिष्टकामिष्टकामुपदध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः प्रजापतय एवं प्रोच्याग्निं चिनुते नार्तिमार्छति ॥ हिरण्यपात्रं मधोः पूर्णं ब्रह्मणं ददाति मधव्यो भवति शतमानँ शतायुर्वै पुरुषश्शतवीर्य आयुरेव वीर्यमवरुन्द्धे चित्रं देवानामुदगादनीकमिति चित्रवत्यावेक्षते चित्रमेव भवति मध्यन्दिनेऽश्वमवघ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वः प्रत्यक्षमेवैनमृध्नोति योऽग्नेराप्तिं वेदाप्नोति तं कामं यस्मै कामायाग्निश्चीयते प्रयास्यन्नग्निं चितमुपतिष्ठेत दीक्षया त्वापं तपसा त्वापँ सुत्यया त्वापमवभृथेन त्वापं वशया त्वापमिति तत् पञ्च संपद्यते पञ्च वा ऋतव ऋतवस्संवत्सरस्संवत्सरोऽग्निर्वैश्वानर आप्नोति तं कामं यस्मै कामायाग्निश्चीयते ॥ एकेष्टकेत्याहुर्ब्रह्मवादिनो वागेवैकेष्टकेति ब्राह्मण एवैकेष्टकेतीम एव लोका एतद्ध स्म वा आहुश्शर्कराख्यातिस्र एव वयमिष्टका अग्निं चित्यं विद्मेमानेव लोकानिति ससत्योऽग्निश्चेतव्यो भूरिति प्रथमां वितृण्णीमाभिमृशेद्भुवरिति द्वितीयाँ स्वरिति तृतीयामेतद्वै वाचस्सत्यँ ससत्यमेवाग्निं चिनुते ससत्यमाग्निमचेष्टा३मुपसत्या३मित्याहुर्ब्रह्मवादिनस्स ह त्वै ससत्यं चिनुते य एवं चिनुते कस्यै देवताया अग्निश्चीयत इत्याहुर्ब्रह्मवादिनः प्रजापतय एव तस्य किँ हविरित्यात्मैव ॥८॥ २२-२४

आपो वा इदमासन् सलिलमेव स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलीयत स प्रतिष्ठां नाविन्दत स एतमपां कुलायमपश्यत् स एतं प्रजापतिरपां मध्येऽग्निमाचिनुत सेयमभवत् ततः प्रत्यतिष्ठदियं वावाग्निस्तस्माद्यदस्यां खनन्त्यभीष्टकां तृन्दन्त्यभि शर्करां यां पुरस्तादुपादधात् तच्छिरोऽभवत् सा प्राची दिग्यां दक्षिणत उपादधात् स दक्षिणः पक्षोऽभवत् सा दक्षिणा दिग्यां पश्चादुपादधात् तत् पुच्छमभवत् सा प्रतीची दिग्यामुत्तरादुपादधात् स उत्तरः पक्षोऽभवत् सोदीची दिग्यां मध्य उपादधात् तत् पृष्ठमभवत् सोर्ध्वा दिगियं वावाग्निः पञ्चेष्टको य एवं वेद प्रजायते गच्छति प्रतिष्ठामाग्नेयो वै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्वर्धुकँ स्वाँ ह्येव दिशमन्वेति सर्वा ह वा इयं वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वयाँसि नक्तं नाध्यासतेऽपां वा एष कुलायस्तस्मादेतमापः प्रहारुका अपाँ ह्येष कुलायः ॥९॥ २५

यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति बहिष्पवमानस्य पुरस्तादष्टौ लोकंपृणयोपदध्यान्माध्यन्दिनस्य पवमानस्य पुरस्तादेकादशार्भवस्य पवमानस्य पुरस्ताद् द्वादशायं वाव यः पवते स पवमानो वायुरग्नेस्तेजो य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्तं तेजसा प्रणुदते यदि मन्येत पश्चान्मे

---

[ चित्रं देवानां० । (पञ्चमानुवाके द्रष्टव्यम्) ]

[९] कपि. ३५,३ । तै सं ५,६.४ । [१०] कपि. ३५,४ । वा. ३,२२; १८,६७ । काण्व. ३,३०; २०,३६]

भ्रातृव्य इति पश्चादेतेषां पवमानानामुपदध्यादयं वाव यः पवते स पवमानो वायुरग्नेस्तेजो य एवास्य पश्चाद्भ्रातृव्यस्तं तेजसापनुदते प्र श्रेयाँसं भ्रातृव्यं नुदते प्रति पापीयाँसं नुदते ॥ स एष सवनचित् प्रजापतिर्वा उख्यमग्निमबिभस्तस्य शिरः प्रावर्तत तेन देवा अश्राम्यँस्तस्यैतच्छिरः प्रत्यदधुर्यदुखा तत् संवत्सरमरोहदग्निः प्रजापतिर्यत् संवत्सरमुख्यं बिभर्ति प्रजापतेरेव शिरः प्रतिदधाति तस्मात् संवत्सरमुख्यो भर्तव्यो यदर्वाक् संवत्सरादरुश्चिदेव सः ॥ २६-२७

येन देवा ज्योतिषोर्ध्वा उदायन् येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानस्स्वस्ति ॥ २८

इति घृतेनाक्त्वा समिधमादधाति समिद्धिरेवैषाथो यजमानायैवैतत् स्वस्त्ययनं क्रियते ॥ २९

येऽग्नयः पुरीषिण आविष्टाः पृथिवीमनु । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥ ३०

इति स्वमग्निं चितमुपतिष्ठेत सर्वमायुरेत्युप त्वाग्ने दिवे दिव इत्येतेन त्रिच्यृचेनान्येषामाशीरेव सा ॥१०॥ ३१

यर्हि धिष्ण्या उपधीयन्ते तर्हि बार्हस्पत्याभिस्तिसृभिस्तिस्रो दक्षिणत उपदधात्यथ यामीभिस्तिसृभिस्तिस्रः पूर्वा अथ रौद्रीभिस्तिसृभिस्तिस्र उत्तरादक्षिणतः पशुश्रपणस्याथ वारुणीभिस्तिसृभिस्तिस्रोऽवभृथे दक्षिणतो वै देवानां यज्ञं रक्षाँस्यजिघाँसँस्तानि ब्रह्मणापाघ्नत ब्रह्म बृहस्पतिर्यद्बार्हस्पत्या दक्षिणत उपधीयन्ते रक्षसामपहत्या अथ यामीरेताभिर्वा असिताय देवलायेमे लोका अर्वाञ्चश्च पराञ्चश्च प्राभुर्यस्यैता उपधीयन्ते समस्मा इमे लोका अर्वाञ्चश्च पराञ्चश्च भान्त्यथ रौद्रीरेप वै रुद्रः पशुश्रपण एवेश्वरो वा एष एतमतोऽनूत्थाय हन्तोर्यद्रौद्रीरुपदधाति तेनैव रुद्रं शमयत्यथ वारुणीरापो वै वरुण ईश्वरो वा एष एतमवभृथादनूदेत्य वरुणो ग्रहीतोर्यद्वारुणीरुपदधाति निर्वरुणत्वाय ॥११॥ ३२

यद्युख्ये भ्रियमाणेऽयं देवः प्रजा अभिमन्येत या आग्नेयीर्भिषग्वतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यादेष वावैतत् प्रजा अभिमन्यते यद्भिषग्वतीभिरादधाति भेषजमेव करोति शान्तिरेव सा यद्युख्ये भ्रियमाणे कामयेत वर्षेदिति यास्सौरी रश्मिवतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यादेष वावैतत् प्रजाश्शुचार्पयति यर्हि पर्जन्यो न वर्षति यद्रश्मिवतीभिरादधाति वृष्टिमेव निनयति ताजक् प्रवर्षति ॥ यद्युख्ये भ्रियमाणे कामयेत न वर्षेदिति यास्सौरीर्भ्राजस्वतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्याद्भ्राज एव करोति न ताँ समां वर्षति यद्युख्ये भ्रियमाणे नश्येदेताभिश्चतसृभिरुपतिष्ठेताग्नेऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येति विन्दत्येव ॥१२॥ ३३-३४

[ उप त्वाग्ने दिवे दिवे० । ऋ.१,१,७; सा. । १४; तै. सं. १,५,६,२ ]   [११] कपि. ३५,५ ।
[१२] कपि.३५,६। वा.१२,७-१०,४०-४१। काण्व.१३,८-११,४१-४२। [पुनरूर्जा सह रय्या०। सा.१८३२-१८३३]

प्राचीनवँशं कुर्वन्ति प्राची वै देवानां दिग्देवलोकमेवोपावर्तते पुर आदित्योऽसा अमुमेवादित्य-
मुपोत्क्रामति परिश्रिते याजयन्ति देवलोकमेव परिगृह्य तस्मिन्नेनं दीक्षयन्त्येति वा एषोऽस्माल्लोका-
द्योऽमुं लोकं गच्छत्यन्तर्हित इव वा इतोऽसौ लोकस्स्रक्तिष्वतीरोकान् कुर्यात् तेनास्माल्लोकान्नैत्या-
ग्नावैष्णवमेकादशकपालं निर्वपत्यग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्य दीक्षामुपैति
पवित्रं वा अग्निर्यज्ञो विष्णुः पवित्रपूत एव यज्ञमालभते यदष्टाकपालस्तेनाग्नेयो यत् त्रिकपालस्तेन
वैष्णवस्तेनोभयस्मान्नैत्याग्नावैष्णवमेकादशकपालं निर्वपत्यग्निर्वै देवानामवमो विष्णुः परमो यथा
तेजन्या अन्तौ संगृह्णात्येवमेवैतदुभयतस्संगृह्य मध्यतो देवता आवपते पुरोडाशस्स्याद्ब्रह्मवर्चस-
कामस्य शिरो वा एतद्यज्ञस्य यत् पुरोडाशो ब्रह्मवर्चसं पुरोडाशो ब्रह्मवर्चसी भवति चरुर्घृते स्यात्
प्रजाकामस्य वा पशुकामस्य वा मिथुनं वा एतद्यद्धृतं च तण्डुलाश्च धेन्वा घृतं पयोऽनडुहस्तण्डुला
मिथुनमेव यज्ञमुखे दधाति प्रजननाय यतो वा एतद्रूपं यच्चरुरेजतेव ह्येति दीक्षितोऽमुं लोकममुं
ह्येष लोकमभिदीक्षते यच्चरुर्भवति समृद्ध्या आङ्क्तेऽभ्युङ्क्तेऽश्नाति वासः परिधत्त एता वै पुरुषस्य
तन्वस्सर्वतनूरेव भूत्वा दीक्षामुपैति च्छिद्रो वै पुरुषोऽन्तरादमेध्यो यदश्नाति मेध्यत्वायैवाच्छिद्र-
त्वायैवामिव वा अमुष्मिंल्लोके यथा दीक्षमाणो यथा मन्येतेत्थं मे नोपतप्स्यतीति तथा व्रतयेदथो
यतः कनीयो दीक्षितस्सन् व्रतयिष्यन् स्यात् तथा प्राश्नीयात् केशश्मश्रु वपते नखान्निकृन्तते दतो
धावतेऽमृतं वा एतत् पुरुषस्यामेध्यममेध्यमेवापहत्य मेधमुपैति स्नात्यङ्गिरसो वा अप्सु दीक्षां
निधाय स्वर्गं लोकमायन् यत् स्नाति तामेव दीक्षामालभते ग्रीवादघ्ने स्नेयं ग्रीवादघ्ने हि ते तां
निधायायन् यावत्येव कियति चाद्भिश्चेत् स्नाति तेनैव तां दीक्षामालभते न वहन्तीभिस्स्नायाद्य-
द्वहन्तीभिस्स्नायात् क्षत्रं यश ऋच्छेन्न कूप्याभिस्स्नायाद्यत् कूप्याभिस्स्नायाद्विशं यश ऋच्छेत्
स्थावराभिस्स्नेयमेता वा अपां दीक्षिताः पशुमतीर्यास्स्थावरा लोमशास्संतता लोमशाः पशवो
यजमानमेव यशसार्पयति तीर्थे स्नेयं तीर्थमेव समानानां भवति॥१३॥ ३५

समिद्दिशामाशया नस्स्वर्विन्मधुरतो माधवः पात्वस्मान् ।
अग्निर्देवो दुष्टरीतुरदब्ध इदं ब्रह्म जिवन्तु पात्वस्मान् ॥ ३६
रथंतरँ सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा ।
त्रिवृद्धिष्ठया स्तोमो अह्नाँ समुद्रो वात इदमोजः पिपर्तु ॥ ३७

---

[१३] मै. ३,६,१ (१) । कपि. ३५,६ । तै. सं. ६,१,१-२ ।

[१४] मै. ३,१६,४; २,७,१९८; १३,११०-१११; ३,१२,१८; २०; (५०-६१,६३-६७) । वा. १३,४; १८,७२-७३; २३,१,३; २५,१०-११; २६,८; ३४,८ । काण्व. १४,४, २०,४१-४२; २,५,१,३; २७,१४-१५; २८,८; ३३,३ । तै. सं. ४,४,१२ ]

उग्रा दिशामभिभूतिर्वयोधाश्शुचिश्शुक्रो अहन्योजस्ये ।
इन्द्राधिपत्यैः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदम् ॥ ३८
बृहत् साम क्षत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजश्शुभितमुग्रवीरम् ।
इन्द्र स्तोमेन पञ्चदशेनौज इदं वातेन सगरेण रक्ष ॥ ३९
प्राची दिशाँ सहाशया नो विश्वे देवाः प्रावृषाह्नाँ स्वर्वित् ।
इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टँ सहस्रियँ सहस्वत् ॥ ४०
वैरूपेण साम्ना तच्छकेयं जगत्यैनं विक्ष्वावेशयामि ।
विश्वे देवास्सप्तदशेन मध्यमिदं क्षत्रँ सलिलं वातमुग्रम् ॥ ४१
यन्त्री दिशां क्षत्रमिदं दाधारोपस्थाशा मित्रवतीदमोजः ।
मित्रावरुणा शरदाह्नां जिगत्नू अदब्धक्षत्रमिदमस्त्वोजः ॥ ४२
वैराजे सामन्नधि मे मनीषानुष्टुभा संभृतं दुष्टरँ सहः ।
इदं क्षत्रं मित्रवदार्द्रदान्वोजो मित्रावरुणा रक्षतमाधिपत्यैः ॥ ४३
सम्राड् दिशाँ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया पिपर्तु नः ।
अवस्युवाता बृहती न शक्करीमं यज्ञमवतु या घृताची ॥ ४४
स्वर्वती सुदुघा या पयस्वतीमं यज्ञमवतु या घृताची ।
त्वं नो गोपा अवितोत यन्ता बृहस्पते याम्यां युङ्ग्धि वाचम् ॥ ४५
ऊर्ध्वा दिशां रन्तिराशौषधीनाँ संवत्सरेण सविता नो अह्नाम् ।
रेवत् सामातिच्छन्दा उ च्छन्दोऽजातशत्रुस्सुहवो न एधि ॥ ४६
स्तोम त्रयस्त्रिंशे भुवनस्य पत्नि विवस्वद्वाते अभि नो गृणीहि ।
घृतवती सवितुराधिपत्ये पयस्वती रन्तिराशा नो अस्तु ॥ ४७

हिरण्यगर्भो यः प्राणतः ॥ ४८

विराड् दिशां विष्णुपत्न्यघोरास्येशाना सहसो या मनोता ।
विश्वव्यचा इषयन्ती सुभूता शिवा नो अस्त्वदितिरुपस्थे ॥ ४९
विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना सहसो विष्णुपत्नी ।
बृहस्पतिर्मातरिश्वोत वायुस्संध्वाना वाता अभि नो गृणन्तु ॥ ५०

---

[ हिरण्यगर्भस्समवर्तताग्ने० । ऋ. १०,१२१,१; अथर्व. ४,२,७; तै. सं ४,१,८,३; २,८,२; ताण्ड्य. ब्रा. ९,९,१२; नि. १०,२३। यः प्राणतो निमिषतो० । ऋ. १०,१२१,३; अथर्व. ४,२,२; तै सं. ४,१,८,४; ७,५, १६,१ । विष्टम्भो दिवो धरुणः० । ऋ. ९,८९,६ ]

वैश्वानरो न ऊतये पृष्टो दिव्यन्विदनुमते त्वं यत् ते नाम ॥१४॥ ५१

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवस्समिन्धते ।
विश्वस्यां विशि प्रविविशानमीमहे स नो मुञ्चत्वँहसः ॥ ५२
यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वँहसः ॥ ५३
इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो वृत्रघ्नस्स्तोमा उप मामिहागुः ।
यो दाशुषस्सुकृतो हवमुप गन्ता स नो मुञ्चत्वँहसः ॥ ५४
यस्संग्रामं जयति सं वशी युधा यः पुष्टानि सँसृजति त्रयाणि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वँहसः ॥ ५५
वायोस्सवितुर्विदथानि मन्महे या आत्मन्वद्भिभृथो यौ च रक्षथः ।
यौ विश्वस्याधिपा बभूवथुस्तौ नो मुञ्चतमागसः ॥ ५६
उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् ।
स्तौमि वायुं सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ ५७
मन्वे वां मित्रावरुणा तस्य वित्तँ सत्यौजसा दृहणा यं नुदेथे ।
या राजाना सरथं याथ उग्रा तौ नो मुञ्चतमागसः ॥ ५८
यो वां रथ ऋजुरश्मिस्सत्यधर्मा मिथूचरन्तमुपयाति दूषयन् ।
स्तौमि मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ ५९
रथीतमौ रथीनाँ हुव ऊतये शुभं गमिष्ठा सुयमेभिराशुभिः ।
ययोर्वां देवौ देवेष्वनिषितमोजस्तौ नो मुञ्चतमागसः ॥ ६०
यद्यातं वहतुँ सूर्यायास्त्रिचक्रेण सँसदमिच्छमानौ ।
स्तौमि देवा अश्विना नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ ६१

---

[ **वैश्वानरो न ऊतये०** । अथर्व. ६,३५,१; आ. श्रौ. सू. २,११ । **पृष्टो दिवि०** । ऋ. १,९८,२; तै. सं. १,५,११,१; तै. आ. ३,११,६,४ । **अन्विदनुमते त्वं०** । ऋ. परि. ३,४; अथर्व. ७,२०,२ ]

[१५] मै. ३,१६,५ (७०—८३, ८५—८६) । वा. १८,७२—७३; २६,८; ३४,८ । काण्व. २०,४१—४२; २८,८; ३३,३ । तै. सं. ४,७,१५ । [ **अग्नेर्मन्वे प्रथमस्य०** । अथर्व. ४,२३,१ । **यस्येदं प्राणन्निमिष०** । अथर्व. ४,२३,७ । **इन्द्रस्य मन्वे०** । अथर्व. ४,२४,१ । **यस्संग्रामं जयति०** । अथर्व. ४,२४,७ । **वायोस्सवितुः०** । अथर्व. ४,२५,१ । **उप श्रेष्ठा न०** । अथर्व. ४,२५,७ । **मन्वे वां मित्रावरुणा०** । अथर्व. ४,२९,१-२ । **यो वां रथ०** । अथर्व. ४.२९,७ । **रथीतमौ (प्र सुमतिं) रथीनाँ०** । अथर्व. ४,२५,६ । **स्तौमि देवा (भवाशर्वौ)०** । अथर्व. ४,२८,७ ]

मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ।
आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ ६२
तिग्ममायुधमीडितँ सहस्वद्दिव्यँ शर्धः पृतनासु जिष्णु ।
स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ ६३
विश्वेषां देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ।
आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ ६४
यदिदमभिदासति पौरुषेयाद्दैव्यादेवेष्टिरस्तु द्विपदश्चतुष्पदः ।
स्तौमि विश्वान् देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥ ६५
अन्विदनुमते त्वं यत् ते नाम वैश्वानरो न ऊतये पृष्टो दिवि ॥ ६६
ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनाम् । ते नो मुञ्चतमँहसः ॥ ६७
उर्वी रोदसी वरिवः कृणुतं क्षेत्रस्य पत्नी अधिवोचतं नः ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमँहसः ॥१५॥ ६८

[१७७४]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां स्वर्गं नाम द्वाविंशं स्थानकं संपूर्णम् ॥२२॥



[ मरुतां (देवानां) मन्वे० । अथर्व. ४,२७,१ । तिग्ममायुधमीडितँ० । अथर्व. ४,२७,७ । विश्वेषां (मरुतां) देवानां० । अथर्व. ४,२७,१ । यदिदमभि० । अथर्व. ४,२६,७ । अन्विदनुमते० । ऋ. परि. ३,४ । अथर्व. ७,२०,२ । वैश्वानरो न ऊतय० । अथर्व. ६,३५,१; आ. श्रौ. सू. २,११ । पृष्टो दिवि० । ऋ. १,९८, २; तै. सं. १,५,११,१; तै. ब्रा. ३,११,६,४ । ये अप्रथेताममि० । अथर्व. ४,२६,१-२]

अथ त्रयोविंशं स्थानकम् ।

## दीक्षितम् ।

हविर्वै[1] दीक्षितो न हविरनभिघृतं मेधमश्नुते यदभ्यनक्त्यभ्युवैनं धारयति मेध्यत्वाय घृतं देवानां निष्पक्वं मनुष्याणामायुतं गन्धर्वाणाँ स्वयंविलीनमादित्यस्य नैतद्देवत्रा न मनुष्यत्रा यन्नवनीतं नैष देवत्रा न मनुष्यत्रा यो दीक्षितः प्रच्युतोऽस्माल्लोकादप्राप्तोऽमुं यन्नवनीतेनाभ्यङ्क्ते समृद्ध्यै वासः परिधत्तेऽग्नेस्तूषः पितृणां नीविरोषधीनां प्रघातो वायोर्वातपा विश्वेषां देवानामोतवश्च तन्तवश्च नक्षत्राणामतीरोकास्सर्वदेवत्युं वासस्सर्वदेवत्यो दीक्षितस्सर्वाभिरेवैनं देवताभिस्सम-र्धयत्याङ्क्त इन्द्रं वै वृत्रं जघ्निवाँसं रक्षाँस्यसचन्त तान्यञ्जनगिरिणान्तरधत्त रक्षाँस्येतँ सचन्ते यो दीक्षते भवति हि यदाङ्क्ते रक्षसामन्तर्हित्या इन्द्रो वै वृत्रमहँस्तस्य चक्षुः परापतत् तत् त्रिककुभं प्राविशद्यदाङ्क्ते तस्यैव चक्षुषोऽवरुद्ध्यै द्विर्दक्षिणमाङ्क्ते सकृत् सव्यं चिवृद्यज्ञो मुखत एव यज्ञ-मालभते त्रिर्दक्षिणमाङ्क्ते द्विस्सव्यं पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे दक्षिणं पूर्वमाङ्क्ते सव्यँ हि पूर्वं मनुष्या आञ्जते व्यावृत्त्यै यजुषाङ्क्तेऽयजुषा हि मनुष्या आञ्जते व्यावृत्त्यै पराचीनमानक्ति न निधावत्याचपराचँ हि मनुष्या आञ्जते व्यावृत्त्या इषीकयाङ्क्ते शलल्या हि मनुष्या आञ्जते व्यावृत्त्यै ॥ संतूला भवति मैत्री वै संतूला वारुणी परिशीर्णा मैत्रो दीक्षितस्समृद्ध्या ऊनमिव वा एतच्छिद्रमिव यच्चक्षुर्यदाङ्क्ते तदेवापूरयत्यच्छिद्रत्वाय पावयतीन्द्रो वै वृत्रमहँस्तमप्स्वेवाध्यहँस्तासां या यज्ञिया मेध्या आसँस्ता उदक्रामँस्ता ओषधयोऽभवन् यत् तेजस्ते दर्भास्तस्मात् ते पवित्रं तस्माद्दर्भैरपः पुनन्ति यद्दर्भपिञ्जूलैः पावयत्यपामेवैनमोषधीनां तेजसा पावयति द्वाभ्यां पावयति द्वे सत्यं चानृतं च सत्येनैवास्यानृतं पावयति द्वौ प्राणश्चापानश्च त्रिभिः पावयति त्रिषत्या हि देवा अथो त्रयो हि प्राणाः प्राणो व्यानोऽपानस्तानेव यजमाने दधाति पञ्चभिः पावयति पाङ्क्तः पुरुषो यावानेवास्यात्मा तं पावयति सप्तभिः पावयति सप्त वै छन्दाँसि च्छन्दो-भिरेवैनं पावयति नवभिः पावयति नव प्राणाः प्राणैरेवैनं पावयत्यैकविंशत्या पावयत्ये-कविँशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविँशो यावानेवास्यात्मा तं पावयति चित्पतिस्त्वा पुनात्विति ब्रह्म वै चित्पतिर्ब्रह्मणैवैनं पावयति वाक्पतिस्त्वा पुनात्विति स हि पावयिता देवस्त्वा सविता पुनात्विति सवितृप्रसूत एवैनं देवताभिः पावयत्यच्छिद्रेण पवित्रेणेत्य-च्छम्बट्कारमेवैनं पावयति सूर्यस्य रश्मिभिरित्यादित्यस्यैवैनं तन्वा पावयति तस्य ते पवित्रपते पवित्रेणेति यज्ञो वै पवित्रपतिर्यज्ञायैवैतत् पुनीते यस्मै कं पुने तच्छकेयमिति यज्ञँ शकेयमित्येवै-तदाहान्वञ्चं पावयत्यन्वङ्वै पुरुषं प्राणो यदा वै प्राणास्तिर्यङ् भवत्यथ प्रमीयते यत् तिर्यञ्चं पावयेत्

[१] मै. ३,६.२—३ (२ –५) । कपि. ३५,७ । वा. ४,४ । काण्व. ४,५ । तै. सं. ६,१,१ ।

तिर्यञ्चमस्य प्राणं कुर्यात् प्रमीयेतान्वात्ममेवास्य प्राणं करोति बर्हिष्पावयति मनुष्यलोक एवैनं पावयित्वा पूतं देवलोकं प्रणयति ॥१॥ १–२

गर्भो दीक्षितो योनिर्दीक्षितविमितमुल्बं दीक्षितवसनं जरायु कृष्णाजिनमेतस्माद्वै योनेरिन्द्रोऽजायत कुलायमेवैतदासीवनं कृत्वोपचरति तस्माद्दीक्षितं नान्यत्र दीक्षितविमितात् सूर्योऽभिनिम्रोचेन्नान्यत्राभ्युदियात् स्वादेव योनेः प्रजायत आकूत्यै प्रयुजे अग्नये स्वाहेत्याकूय वै यज्ञः प्रयुज्यते यत्रैव यज्ञमाकुर्वते तदेनमालभते मेधायै मनसे अग्नये स्वाहेति मेधया वै मनसाभिगच्छति यजतां स्य इति यज्ञमेवालभते दीक्षायै तपसे अग्नये स्वाहेति दीक्षया वै तपसा यज्ञं प्राप्नोति यज्ञमेवावरुन्द्धे सरस्वत्यै पूष्णे अग्नये स्वाहेति वाग्वै सरस्वती पशवः पूषा वाचा पशुभ्यो यज्ञ आलभ्यते वाचैव पशुभ्योऽधि यज्ञमालभत आपो देवीर्बृहतीर्विश्वशंभुव इत्यापो वै यज्ञो दिवि यज्ञोऽन्तरिक्षे पृथिव्यां ब्रह्म बृहस्पतिरत्रात्र वै यज्ञो यत्र यत्रैव यज्ञस्तत एनं ब्रह्मणालभते पञ्चैतानि जुहोति पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे यज्ञस्य वा एते संभारा यदेतानि यजूंषि यदेतानि न जुहुयादसंभृतोऽस्य यज्ञस्स्याद्यदेतानि जुहोति यावानेव यज्ञस्तं संभरत्यदीक्षितो वा एकयाहुत्यादन्ति ह स्म वा एतस्य पुरान्नं यस्यैतानि न हूयन्ते यदेतानि जुहोति दीक्षितत्वायैव द्वितीयत्वायाग्नये स्वाहाग्नये स्वाहेति जुहोत्यग्निस्सर्वा देवतास्सर्वा एव देवता अवरुन्द्धे पञ्चैतानि जुहोत्यौद्ग्रभणं षष्ठं षडृतव ऋतुष्वेव प्रतितिष्ठति ॥ यज्ञस्सृष्टः प्र यजुरव्लिनात् प्र साम तमृगेवायच्छन्नव सामानि द्वादश यजूंषि तस्मान्नवभिर्बहिष्पवमानं स्तुवन्त्यृचौद्ग्रभणं जुह्वति यदृचौद्ग्रभणं जुहोति यज्ञमेव सृष्टं प्रत्युदृचा यच्छति द्वादशभिर्ह स्म वै कारुद्वेषिण औद्ग्रभणं जुह्वत्येतदेव स द्वादशगृहीतं कृत्वा जुहुयात् तेनैव तदाप्नोति पूर्णया स्रुचा जुहोति पूर्णः प्रजापतिः प्रजापतिमेवाप्नोति यदूनया जुहुयाद्भ्रातृव्याय लोकं कुर्यात् कामर्तं वै पूर्णं यं हि कामं कामयते तं पूर्णस्य कुरुते यमेव कामं कामयते तमवरुन्द्धे ॥ स्वे छन्दसि यज्ञः प्रतिष्ठाप्योऽनुष्टुब् वै प्रजापतेस्स्वं छन्दो यज्ञः प्रजापतिर्यदनुष्टुभौद्ग्रभणं जुहोति स्व एव च्छन्दसि यज्ञं प्रतिष्ठापयति च्छन्दःप्रतिष्ठानो वै यज्ञस्सं यथाछन्दसं छन्दस्सु प्रतिष्ठाप्यस्सैषानुष्टुप् तस्यास्सप्ताक्षरमेकं पदमष्टाक्षराणि त्रीणि तेषां सप्तानां यानि त्रीणि तान्यष्टा उपयन्ति तान्येकादश सा त्रिष्टुब् यानि चत्वारि तान्यष्टा उपयन्ति तानि द्वादश सा जगती यान्यष्टौ सा गायत्र्यविभक्तानुष्टुप् स्वाहाकारेण पङ्क्तिरेतावन्ति वै छन्दांसि यज्ञमेव यथाछन्दसं छन्दस्सु प्रतिष्ठापयति ॥ यज्ञस्सृष्टो देवताभिरालभ्यो विश्वो देवस्य नेतुरिति यन्नेतृमती तेन सावित्री मर्त इति पितृदेवत्या विश्व इति वैश्वदेवी द्युम्नमिति बार्हस्पत्या पुष्यत्विति

[२] मै. ३,६,४–५ (६–७)। कपि. ३५,८। वा. ४,७–८; ११,६७; २२,२१। काण्व. ४,८–९; १२,६८, २४,१९। तै. सं. ६,१,२। [ विश्वो देवस्य नेतु०। ऋ. ५,५०,१; तै. सं. १,२,२,१; ४,१,९,१ ]

पौष्णीं सारस्वतंस्स्वाहाकारं एतावतीर्वै देवता यज्ञमेवं सृष्टं देवताभिरालभते यज्ञस्सृष्टस्त्रेधा प्राविशदृचं तृतीयेन साम तृतीयेन यजुस्तृतीयेन तस्य या प्रिया तनूरासीत् तया यजुः प्राविशत् तस्माद्यजुषो नोच्चैः कीर्तयितव्यं यज्ञस्य प्रियां तन्वमुदूर्णोत्यब्रह्मवर्चसी भवति नग्नंभावुकः ॥२॥
३–६

यज्ञो वै देवेभ्योऽपाक्रामत् कृष्णो भूत्वा तस्मात् पुनरुपावर्तमानादृक्सामे अपाक्रामतां ते कृष्णं प्राविशतां यज्ञं मन्यमाने शुक्लं साम कृष्णमृग्यत् कृष्णाजिनेन दीक्षत ऋक्सामे एवालभतेऽहोरात्रे वै मिथुनँ समभवतां तयोरोजो वीर्यमपाक्रामत् तत् कृष्णं प्राविशद्यत् कृष्णाजिनेन दीक्षतेऽहोरात्रयोरेवौजो वीर्यमालभते द्यावापृथिवी वै मिथुनँ समभवतां तयोस्तेजो यज्ञियमपाक्रामत् तत् कृष्णं प्राविशद्यत् कृष्णाजिनेन दीक्षते द्यावापृथिव्योरेव तेजो यज्ञियमालभत ऋक्सामयोश्शिल्पे स्थ इत्यृक्सामे एवालभते यथा नावा तरिष्यँस्ते एनँ संपारयत ओर्दचश्शर्मासि शर्म मे यच्छेति देवताश्च वा एष यज्ञं चाभ्यारोहति यत् कृष्णाजिनमारोहति यदा वै श्रेयान् कामयतेऽथ पापीयाँसं प्रतिनुदते देवताभ्यश्चैवं यज्ञाय च नमस्करोत्यप्रतिनोदायाशुमवन्ति वा अन्यानि च्छन्दाँस्यासन्ननाशुमवन्त्यन्यानि तान्याजिमयुर्यान्याशुमवन्त्यासँस्तानि प्रधक्ष्यामह इति भीषा कृष्णं प्राविशँस्तानीमानि यज्ञं वहन्ति यान्यनाशुमवन्त्यासँस्तानिमान्वक्ष्यामह इति भीषा कृष्णं प्राविशँस्तानीमानि च्छन्दाँसि यान्ययज्ञवाहानि तानि स्वाराज्यमगच्छन् स्वाराज्यं गच्छति य एवं वेद यत् कृष्णाजिनेन दीक्षत आशुमवन्ति चैवानाशुमवन्ति चोभयानि च्छन्दाँस्यवरुन्द्धे ॥ होत्रा वै देवेभ्योऽपाक्रामँस्तद्वषट्कारोऽप्यचरत् कृष्णो भूत्वास्कन्नं वै वषट्काराद्धविस्तस्मात् कृष्णाजिने हविष्पिँषन्ति हविर्वै दीक्षितस्तस्मात् कृष्णाजिनमध्यास्ते तस्मान्न निष्ठीवति हविषोऽस्कन्दाय बर्हिष्टाद्वै पशूनां यज्ञश्च देवताश्चान्तरान्मेदो यद्बर्हिर्लोमं कृष्णाजिनं कुर्यादन्तर्हितो यजमानो यज्ञाच्च देवताभ्यश्च स्याद्यदन्तर्लोममन्तर्हितो यज्ञो देवताभ्यो द्वे समस्येदन्तर्मांसे बर्हिर्लोम्नी यद्येकँ स्यात् पादं प्रतिषीव्येदनन्तर्हितो यजमानो यज्ञाच्च देवताभ्यश्च भवत्यनन्तर्हितो यज्ञो देवताभ्यो विष्णोश्शर्मासि शर्म यजमानस्येति विष्णुर्वै यज्ञो वैष्णवो यजमानो विष्णुनैवं यज्ञेनात्मानमुभयतस्सयुजं कुरुते यज्ञो यदसृज्यत तस्योल्बमन्ववेष्टत तद्दीक्षितवसनमभवद्गर्भो दीक्षितो यद्दीक्षितवसनं परिधत्ते स्वेनैवं योनिनात्मानमोर्णुते तस्मान्महत् कार्यमेवमिव ह्युल्बेन गर्भ आवृत इव च्छन्न इव न प्रत्यक्षं वदेद्वाचोऽयातयामत्वाय ॥३॥
७–८

अङ्गिरसो वै स्वर्गं लोकं यन्तस्ते मेखलास्संन्युकिरँस्ततश्शरं उदतिष्ठद्यच्छरमयी मेखला भवति

[ ३ ] मै. ३,६,६—७ (८—११) । कपि. ३५,९ । वा. ४,९—१० । काण्व. ४,१०-११ । तै. सं. ६,१,३ ।
[ ४ ] मै. ३,६,७-८ (११-११) । कपि. ३६,१ । तै. सं. ६,१,३,३ ।

तामेव मेखलामालभते देवा वै यत्रोर्जं व्यभजन्त ततश्शर उदतिष्ठद्यच्छरमयी मेखला भवति तामेवोर्जमालभत ऊर्ग्वै मेखला मध्यं प्रति परिव्ययत्यूर्जमेव मध्यतो दधाति यजमाने च प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयति नाभिं प्रति परिव्ययत्यूर्ध्वं वै पुरुषस्य नाभ्या मेध्यमवाचीनममेध्यं मेध्यस्य चामेध्यस्य च व्यावृत्त्यै त्रिवृद्भवति त्रिवृता वै स्तोमेन प्रजापतिः प्रजा असृजत त्रिवृद्वज्रो वज्रमेव भ्रातृव्याय प्रहरतीन्द्रो वै वृत्राय वज्रं प्राहरत् तस्य यत् प्राशीर्यत स शरोऽभवत् तच्छरस्य शरत्वं वज्रो वै शरो यच्छरमयी मेखला भवति वज्रमेव भ्रातृव्याय प्रहरति स्तृणुत एनं यं द्विष्यात् तं परिव्ययन् ध्यायेद्वज्रेणैवैनँ समर्पयति मेखला पुंसो भवति योक्त्रँ स्त्रियास्स्त्री वै मेखला पुमान् योक्त्रं मिथुनमेव यज्ञमुखे विपर्यूहेते प्रजननाय वज्रो वै मेखला क्षुदुदारं पाप्मा भ्रातृव्यो यन्मेखलां परिव्ययते वज्रेणैव पाप्मानं भ्रातृव्यमपहते ॥ यज्ञो वै देवेष्वासीद्दक्षिणा पितृषु स यज्ञो दक्षिणामभ्युकामयत तं पितरोऽब्रुवन् देवेषु नो भागधेयमिच्छेति तेऽब्रुवँस्तृतीयसवनभागा आसन्निति तस्मात् पितृभ्यस्तृतीयसवनं क्रियते तमह्वयत् ताँ हूतोऽधावत् तस्मात् पुमान् स्त्रिया हूतो धावति तस्माच्छ्रोत्रियस्स्त्रीकामतमस्स हि यज्ञस्य नेदिष्ठी ताँ संभवत् तदिन्द्रोऽचायत् सोऽमन्यत यो वा इतो जनिष्यते स एवेदं भविष्यतीति तं योनिं प्राविशत् तस्मादजायत स पुनः प्रत्यवैक्षत सोऽमन्यत यो वा इतोऽपरो जनिष्यते स मे सपत्नो भविष्यतीति तमनुहाय निर्वेष्टयाच्छिनत् सा विषाणाभवद्यद्विषाणा भवति यज्ञस्यैव रेत इन्द्रस्य योनिं दक्षिणाया योनिमालभते पञ्चावृद्भवति पञ्चभिर्हि स तां निर्वेष्टयाच्छिनदिन्द्रस्य योनिरसीतीन्द्रस्य ह्येषा योनिः कृष्यै त्वा सुमनस्याया इति तस्मात् कृष्टं पच्यत उत्कृधीति तस्मादूर्ध्वा ओषधय उत्पच्यन्ते यजुषा कण्डूयतेऽयजुषा हि मनुष्याः कण्डूयन्ते व्यावृत्त्यै यदयजुषा कण्डूयेत वरुणवत् कण्डूयेतापि गर्भाः पामना जायेरन् वाग्वै देवान् मनुष्यान् प्रविशन्त्यैत्तस्या यदत्यरिच्यत तद्वनस्पतीन् प्राविशत् सैषा वनस्पतिषु वाग्वदति या दुन्दुभौ या नाड्यां या तूणवे यद्दण्डो भवति वाच एवातिरिक्तमवरुन्द्धे तं मैत्रावरुणाय प्रयच्छति वाचमेवास्मै तत् प्रयच्छति ताँ शश्वदृत्विग्भ्यो विभजति तस्मादस्य वाङ् नोपदस्यत्यास्यदघ्नः कार्युस्तावती ह्यियं वाग्वदत्यथो एतावति हि वाचा वीर्यं क्रियते यो वृक्षः फलग्रहिस्तस्य कुर्यात् फलग्रहिरसानीति ॥४॥                    ९–१०

स्वाहा यज्ञं मनस इति मनसा वै यज्ञ आलभ्यते वातयोनिर्यज्ञो दिवि यज्ञोऽन्तरिक्षे पृथिव्यामत्रात्र वै यज्ञो यत्र यत्रैव यज्ञस्तत एनं मनसालभते तं यत्वास्ते यज्ञमेव तद्यत्वास्ते यद्विसृजेद्यज्ञं विसृजेद्यदि विसृजेत् पुनर्दीक्षयेद्यत् पुनर्दीक्षयेदाहुतीरभिरेचयेद्गायत्रीं वैष्णवीमनुब्रूयाद्गायत्री

[५] मै. ३,६,८—९ (१७—२०)। कपि. ३६,२। वा. १,५; २,१८; ४,६, ११,१४,१६। काण्व. १,८, २,५३; ४,७,१४—१६,१९,२१। तै. सं. ६,१,४ ]

यज्ञो विष्णुर्वाचैव यज्ञँ संतनोति बार्हस्पत्यामुत्तरामनुब्रूयाद्ब्रह्म वै बृहस्पतिर्ब्रह्मणा यज्ञस्यार्तं नि-ष्क्रियते ब्रह्मणैव यज्ञस्यार्तं निष्करोति त्वमग्ने व्रतपा असीत्यग्नये व्रतपतयेऽनुब्रूयाद्व्रतपतिं वा एतस्य व्रतं गच्छति यो दीक्षितस्सन्न व्रतं चरत्यग्निर्देवानां व्रतपतिर्व्रतपतेरेवाधि व्रतमालभतेऽदीक्षिष्टाय-मसा आमुष्यायण इति त्रिरुपाँश्वाह त्रिरुच्चैर्देवेभ्यश्चैव मनुष्येभ्यश्च यज्ञं प्राह नक्षत्रं दृष्ट्वा वाचं विसृजते दिवा वै मनुष्या यज्ञेन चरन्ति नक्तं देवा अह्नैव रात्रीमभिसंतत्य देवेभ्यो यज्ञँ संप्रयच्छति गोपीथाय व्रतं कृणुतेति यज्ञं कुरुतेत्येवैतदाह पाङ्क्त्येषा व्याहृतिः पाङ्क्तो यज्ञो वाच एवैतत् सम्यगुद्यते नोत्तानो दीक्षितश्शयीत यदुत्तानश्शयीत देवलोकमुपावर्तेत न न्यङ् शयीत यन्न्यङ् शयीत पितृलोकमुपावर्तेत ॥ जनो वा इतः पितरो दूरे जनादागच्छति प्रमायुकस्स्यात् तिर्यङ्ङिव शयीतान्तरिक्षदेवत्यो वै दीक्षितस्स्वमेव लोकँ स्वमायतनमुपावृत्य शये नाग्नेः पराङ् शयीताग्निस्सर्वा देवता देवताभ्य आवृश्च्येताग्निमेवाभ्यावृत्य शयीताग्निस्सर्वा देवता देवता एवाभ्यावृत्य शये दैवीं धियं मनामह इति मार्जयते ब्रह्मणा सतेजस्त्वायाथो आपो मे नेद्दीक्षामवमुष्णानित्यन्नं वै मनुष्येभ्य उदबीभत्सत तद्देवा अयियँसँस्ता आपोऽब्रुवन्नुपावर्तस्व वयं त एतान् स्वदयिष्याम इति तदुपावर्तत यद्दीक्षितो मार्जयतेऽन्नाद्यस्यावरुद्ध्यै ॥ तस्माद्ब्राह्मण आहार्य आहृते हस्ता अवनेनिजीतान्नाद्यस्या-वरुद्ध्यै न वा एतेन हुतं व्रतयितव्यं नाहुतं यो दीक्षितो ये देवा मनुजाता इति व्रतयति प्राणा वै देवा मनुजातास्स्वायामेव देवतायाँ हुतं व्रतयति तेनास्य न हुतं भवति नाहुतमग्ने त्वँ सु जागृहीति स्वप्स्यन्नग्निमभिमन्त्रयेत बहु वा एष सुप्तो व्रत्यं निगच्छत्यग्निर्देवानां व्रतपतिर्व्रतपतय एव व्रतँ संप्रदाय काममृधते त्वमग्ने व्रतपा असीति प्रबुध्याग्निमभिमन्त्रयेत व्रतपतये वा एष व्रतँ संप्रयच्छ-त्यग्निर्देवानां व्रतपतिर्व्रतपतेरेवाधि व्रतमालभते ॥५॥ ११-१३

न दीक्षितेन होतव्यँ हविर्वै दीक्षितो रुद्रोऽग्निर्यज्जुहुयाद्धविर्भूतमात्मानं रुद्रायापिदध्याद्यन्न जुहुयाद्यज्ञं विच्छिन्द्यात् तदेतद्व्रतमपरस्मिन्नग्नौ अधिश्रित्य पूर्वमग्निमभिसंचरति तेनैव यज्ञँ संतनोति यथा वि गौरूधः कुरुत एवमेष देवेभ्यो यज्ञँ संभरति यो दीक्षते यज्जुहुयाद्यज्ञं विदुह्यात् स्रवयेद्य-थोपधीते स्रुत एवं तद्यदुपरि जुहोति सकृदेव याम आगते देवेभ्यो यज्ञं दुहे सर्वं वा एतस्य हवि-र्भूतं यो दीक्षितो निरादिश्य हि दीक्षते तस्य योऽन्नमत्ति यज्ञं गिरति तस्य यज्ञेनैव प्रायश्चित्तिः ॥ पाशेन वा एषोऽभिहितो यो दीक्षितो वरुण्यः पाशस्तस्य योऽन्नमत्ति वरुण एनं ग्राहुको भवति तस्माद्बद्धस्य निगस्य चान्नं नाद्याद्देवानां वा एतत् परिषूतं यो दीक्षितो मनुष्याणामिन्न्वै परिषूतँ सुरभ्यवायं तस्माद्दीक्षितस्यान्नं नाद्यात् त्रेधा वा एतस्य पाप्मानं विभजन्ते यो दीक्षितो योऽन्नमत्ति

[त्वमग्ने व्रतपा असि०। ऋ. ८,११,१ अथर्व. १९,५९,१; तै. सं. १,१,१४,४; २,३,१]

[६] मै. ३,६,९—१० (२०—२१)। कपि. ३६,३। वा. ४,१,१६; ६,२७। काण्व. ४,१,१२; ६,३९, १०,८। तै. सं. ६,१,४; ३,१,१,४।

स तृतीयं योऽश्लीलं कीर्तयति स तृतीयं यो नाम गृह्णाति स तृतीयं तस्मादीक्षितस्य नाम्न-मद्यान्नाश्लीलं कीर्तयेन्न नाम गृह्णीयाद्दानाय वा एष दीक्षतेऽथैतदनृतं करोति यत् प्रतिगृह्णाति गर्भो दीक्षितो हिनस्ति गर्भं प्रतिगृहीतं पूषा सनीनाँ सोमो राधसामिति पूषा हि सनीनामीशे सोमो राधसां रास्वेयत् सोमेति सोमो वा एतदेतस्मै रासते यद्वनुत आ भूयो भरेत्यागमे ह्येनं भूयो देवस्सविता वसोर्वसुदावेति सवितृप्रसूत एव प्रतिगृह्णात्यात्मनोऽहिँसायै देवेभ्यो वै यज्ञो न प्राभवत् तं दक्षिणाभिस्समभावयन् यद्दीक्षितो भृतिं वनुते यज्ञमेव संभावयति तस्माद् द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत यावानेव यज्ञस्तं संभावयति॥ देवेभ्यो वा अन्या दक्षिणा नीयन्ते मनुष्येभ्योऽन्यास्ता एता अनुदिशति वायवे त्वेति या नश्यति निर्ऋत्यै त्वेति यावसीदति रुद्राय त्वेति यां रुद्रो हन्ति या सँशीर्यते वरुणाय त्वेति याप्सु या श्लेष्केण यमाय त्वेति यान्येन मृत्युनैता वै देवेभ्यो नीयन्ते मनुष्येभ्य इतरास्ता एताः पुण्यब्राह्मण एताभिर्भूय उपर्ध्नोत्यृध्नोति य एवं वेद देवीरापो अपां नपादि-त्यपोऽतिगाहते यदेवासां यज्ञियं यद्धविष्यं तत् परिवृणक्त्यनवक्लेशायाग्निर्वै दीक्षितश्शमयन्त्यग्निमापो यजुषातिगाहते शान्त्यै शान्तिर्ह्यापोऽथो तेज एवात्मन् भूयस्समाधत्ते यदयजुषातिगाहेत विह्लादिनी-रापस्स्युर्यजुषातिगाहते ॥ तस्मादापस्संतता अविच्छिन्ना धावन्ति यदि नाव्यां तरेदरणी च रथं चाधाय तरेदग्निर्वै सर्वा देवता यज्ञो रथो देवताभिश्चैव यज्ञेन च सह तरत्या पाराद्रन्तोर्लोष्टं विमृणन्नासीत तेनास्या नैते सख्येह्ययं ते योनिर्ऋत्वियि इति यथायजुरेदमगन्म देवयजनं पृथिव्या इति देवयजनमध्यवस्य-त्यृक्सामाभ्याँ संतरन्तो यजुर्भिरित्यृक्सामाभ्यां चैव देवताभिश्च देवयजनमभिसंतरति॥६॥ १४-१७

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वताग्निहोत्रं दर्शपूर्ण-मासौ चातुर्मास्यान्येष वाव तर्हि यज्ञ आसीत् ते देवा एतँ सौम्यमध्वरमपश्यँस्तमाहरँस्तेऽदीक्षँस्ते-ऽग्निहोत्रं व्रतमकुर्वताग्निहोत्रं वाव व्रतं तस्माद्याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिस्सा व्रतस्य स्कन्नस्य प्रायश्चित्तिस्तस्माद् द्विव्रतो दीक्षितस्स्याद् द्विर्ह्यग्निहोत्रं जुह्वति तेषां यत् पौर्णमासमासीत् तमग्नी-षोमीयं पशुमकुर्वत यः पूर्वेद्युरालभ्यते यद्दार्शं तमाग्नेयं योऽनुसवनमालभ्यते वैश्वदेवं प्रातस्सवनम-कुर्वत वरुणप्रघासान्माध्यन्दिनँ सवनँ साकमेधाँस्तृतीयसवनं तृतीयसवने पितृयज्ञमत्राकल्पयँस्तृतीय-सवने त्र्यम्बकाँस्तेऽसुरा अपक्रामन्तोऽब्रुवन्न वा इमे ध्वर्तवा अभूवन्निति तदध्वरस्याध्वरत्वं ततो देवा अभवन् परासुरा अभवन् य एवं विद्वान् दीक्षते यमेवं विद्वान् दीक्षयति भवत्यात्मना परास्य भ्रातृव्यो भवति ॥७॥ १८

स्वर्गं वा एतेन लोकं प्रयन्ति यत् प्रायणीयं तत् प्रायणीयस्य प्रायणीयत्वं छिद्यते वा एषो-

[७] मै. ३,६,१० (७१)। कपि. ३६,४। वा. ४,११। काण्व. ४,१४।
[८] मै ३,७,१ (१)। कपि. ३६,५। तै सं. ६,१,५।

ऽस्माल्लोकाद्योऽमुं लोकं गच्छति यदादित्यमुदयनीयं भवत्यस्मिन्नेव लोके प्रतितिष्ठति देवा वा असुरान् हत्वा वैरदेयादीषमाणास्ते दिशोऽमोहयन्नेन्न इदमन्योऽनु प्रजानादिति तदाहुस्साध्या वै नाम देवा आसन् पूर्वे देवेभ्यस्ते दिशो मोहयित्वा स्वर्गं लोकमायन्नेन्न इमं लोकमन्योऽनु प्रजानादिति ता इमेऽवरे देवा अनु प्राजिज्ञासन्त ता न प्राजानन् सादितिरब्रवीद्वार्यं वृणा अहं व इमा दिशः प्रवक्ष्यामि मत्प्रायण एव यज्ञोऽसन्मदुदयन इति तस्मादादित्यं प्रायणीयं भवत्यादित्यमुदयनीयं वार्यवृतँ ह्यस्याः पथ्याँ स्वस्ति यजतेत्यब्रवीत् तया प्राचीं दिशं प्रज्ञास्यथेत्यग्निं यजतेत्यब्रवीत् तेन दक्षिणाँ सोमं यजतेत्यब्रवीत् तेन प्रतीचीँ सवितारं यजतेत्यब्रवीत् तेनोदीचीमहमेवेमा उभौ लोकौ वेदेत्यब्रवीदियमदितिस्तस्या इयमूर्ध्वा दिगूर्ध्वा एव तेन स्वर्गं लोकमायँस्ता एता एवं देवता इज्यन्ते दिशां क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै पथ्यया वै स्वस्त्या देवाः प्राचीं दिशं प्राजानन्नग्नीषोमा अनुसमपश्यतां सविता प्रासुवदियमदितिरस्यामधि यज्ञं प्राश्रमतन्वत ॥ यज्ञमुखं वा एतत् संभ्रियते यत् प्रायणीयं वाक्पथ्या स्वस्तिर्यत् पथ्याँ स्वस्ति यजति वाचमेव तत् संभरयति प्राणापाना एवाग्नीषोमाभ्याँ संभरति प्रसवायैव सवितेयमदितिरस्यामधि यज्ञमुखँ संभरयति क्लृप्त्यै वा एतन्निरूप्यते यत् प्रायणीयं मरुतां देवविशा देवविशां वै कल्पमानां मनुष्यविशानुकल्पते यन्मरुत्वद्याज्यायाः पदं भवति स्वस्ति राये मरुतो दधातनेति देवविशामेव कल्पयति तां कल्पमानां मनुष्यविशानुकल्पते पथ्याँ स्वस्ति यजति तस्मादसा आदित्योऽच्छिन्नं पुर उदेति पश्चान्निम्रोचति पथ्याँ ह्येष स्वस्तिमनुसंचरत्यग्निं यजति तस्माद्दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्त्याग्नेया ह्योषधयस्सोमं यजति तस्मादापः प्रतीचीर्भूयिष्ठा धावन्ति सौमीर्ह्यापस्सवितारं यजति तस्मादयमुत्तराद्भूयिष्ठं पवते सवितृप्रसूतो ह्येष पवतेऽदितिं यजति तस्मादियमुपरिष्टात् प्रजाभ्यो वर्षति पञ्चैता देवता यजति पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धेऽग्नये षष्ठमवद्यति षड्ऋतव ऋतुष्वेव प्रतितिष्ठति दश याज्यानुवाक्या भवन्ति दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति स्विष्टकृतौ द्वादशी भवतो द्वादश मासास्संवत्सरस्संवत्सरस्याप्त्यै सप्तदश सामिधेन्यो भवन्ति सप्तदशो वै संवत्सरः पञ्चर्तवो द्वादश मासा एष वाव स संवत्सरस्संवत्सरादेवाधि यज्ञमुखं प्रतनुते ॥८॥

१९-२०

पथ्याँ स्वस्तिं यजति वाग्वै पथ्या स्वस्तिर्वाचमेव तदात्मनस्स्पृणोत्यग्निं यजति यदेवास्य शुष्कमाग्निदाह्यं तत् तेन स्पृणोति सोमं यजति यदेवास्यार्द्रमात्मनोऽनग्निदाह्यं तत् तेन स्पृणोति प्रसवायैव सविता समिष्ट्यै प्रतिष्ठित्या अदितिः पथ्यया स्वस्त्या प्रयन्ति पथ्यया स्वस्त्योद्यन्ति वाग्वै पथ्या स्वस्तिर्वाचैव प्रयन्ति वाचोद्यन्त्यादित्यं प्रायणीयं भवत्यादित्यमुदयनीयमस्मिँश्चैव

[९] मै. ३,७,१ (२)। कपि. ३६,६। तै. सं. ६.१,५।

लोकेऽमुष्मिंश्च यज्ञमुखेन प्रतितिष्ठति दिशो वै स्वर्गो लोक एतद्देवत्या दिशो यत् प्रायणीयेन यजते दिश एव स्वर्गं लोकमभ्यातिष्ठति यथा वै तेजन्यूयत एवं यज्ञ ऊयते यदादित्यं प्रायणीयं भवत्यादित्यमुदयनीयं वर्सा एवैता अन्ततो नह्यति द्रढिम्नेऽप्रस्रँसाय याः प्रायणीयस्यानुवाक्यास्ता उदयनीयस्य याज्या या याज्यास्ता अनुवाक्या येनैव प्रयन्ति तेनोद्यन्ति प्रतिपदत्वाय प्रतिप्रज्ञात्यै व्यतिषजेद्याज्यानुवाक्या यं द्विष्यात् तस्य प्रैनमस्माल्लोकाच्च्यावयति नामुं प्रापयति यथा पथ उदेत्येवं तदुभयत एवैनं छिनत्त्यननुयाजं प्रायणीयँ स्यादप्रयाजमुदयनीयँ समानं वा एतद्धविस्सं-तत्या आत्मा वै प्रयाजाः प्रजानुयाजा यदेवं कुर्यादात्मानं च प्रजां चान्तरियादप्रजाः प्रमीयेत प्रयाजवती एवानुयाजवती स्यातां समानं वा एतद्धविस्समानी देवता समानं मेक्षणं तेनैव यज्ञँ संतनोति नात्मानं न प्रजामन्तरेति ॥ सँस्थाप्या३न्न सँस्थाप्या३मिति मीमाँसन्ते स्रवति वै यज्ञोऽसँस्थितस्तँ स्रवन्तं यजमानोऽनु परास्रवति प्रजया च पशुभिश्च सँस्थाप्यमेव पत्नीं तु न संयाजयेदमेध्या वा एषापूता नेश्वरा स्वर्गं लोकं गन्तोस्तामुदयनीये संयाजयति यथा प्रवासी स्वमायतनमागच्छत्येवमेवैतत् पत्नीं यजमानोऽस्मिंल्लोकेऽभि प्रतितिष्ठति दीक्षितान्नँ हि वा ईजाना अदन्त्यथ न वसीयाँसो भवन्ति दीक्षितो वै तर्हि यर्हि प्रायणीयेन यजते दीक्षितस्तर्हि यर्ह्यवभृथादुदेति प्रायणीयस्य निष्काष उदयनीयमभिनिर्वपत्युदयनीयस्यैव नाश्नीयाद्दीक्षितान्नमेव परिवृणक्ति वसीयान् भवति ॥९॥ २१-२२

कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेतां सा कद्रूस्सुपर्णीमात्मरूपमजयदियं वै कद्रूर्द्यौस्सुपर्णी छन्दाँसि वै सौपर्णानि सा कद्रूस्सुपर्णीमब्रवीत् तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति सा सुपर्णी छन्दाँस्यब्रवीदेतस्मै वै पितरौ पुत्रान् बिभृत ईदृशान् मा स्पृणवानितो मा निष्क्रीणीतेति सा जगत्युदपतच्चतुर्दशाक्षरा सती सा प्राप्य न्यवर्तत तस्या द्वे अक्षरे अहीयेतां सा पशूँश्च दीक्षां चादायापतत् तस्मात् पशुमन्तं दीक्षोपनमति तस्मादाहुर्जगती छन्दसां पशव्यतमेति सा त्रिष्टुबुदपतत् त्रयोदशाक्षरा सती साप्राप्य न्यवर्तत तस्या द्वे अक्षरे अहीयेतां सा दक्षिणां च तपश्चादायापतत् तस्मात् त्रिष्टुभो लोके दक्षिणा नीयन्त एतद्वाव तपो यत् स्वं ददाति तस्मादाहुर्माध्यन्दिनँ सवनानां तपस्वितममिति सा गायत्र्युदपतच्चतुरक्षरा सती साजया कर्णगृह्योदपतत् तमस्या अजाभ्यारुणत् तदजाया अजात्वँ सा तानि च चत्वार्यक्षराणि सोमं चादायापतत् साष्टाक्षराभवद्ब्रह्मवादिनो वदन्ति कस्माद्गायत्री कनिष्ठा छन्दसाँ सती यज्ञमुखं परीयाय कस्मात् तेजस्विनितमेति यदेवादस्सोममाहरत् तस्माद्गायत्री यज्ञमुखं तस्मात् तेजस्विनितमा सा पद्भ्यां द्वे सवने आहरन् मुखेन तृतीयं यन्मुखेनाहरत् तदधयत् तस्माद् द्वे सवने शुक्रवती धीतमिव तृतीयसवनं

[१०] मै. ३,७,३ (३)। कपि. ३७,१। तै. सं. ६,१,६।

तस्मादृजीषं तृतीयसवनेऽभिषुण्वन्ति यत् तृतीयसवन आशिरमवनयन्ति तृतीयसवनमेव तत् सं-
भरन्तो मन्यन्ते ॥१०॥ २३

इन्द्राग्नी श्नथद्वृत्रमिन्द्रावरुणयोरहं नू न इन्द्रावरुणा सं वां कर्मणोभा जिग्यथुरस्मे इन्द्राबृह-
स्पती बृहस्पतिं नः ॥ २४

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः ।
परा शृणीतमचितो न्योषतं हतं नुदेथां निशिशीतमत्रिणः ॥ २५

इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु चरुरग्निमाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥ २६

इन्द्रा नु पूषणा वयँ सख्याय स्वस्तये । हुवेम वाजसातये ॥ २७

यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः । तत्र पूषाभवत् सचा ॥ २८

इन्द्रापर्वता बृहता रथेन वामीरिष आवहतँ सुवीराः ।
वीतँ हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥ २९

ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् ।
शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥ ३०

ऋभुर्ऋभुभिरभि वस्याम विभ्वो विभुभिश्शवसा शवाँसि ।
वाजो अस्माँ अवतु वाजसाता इन्द्रेण युजा तरुषेम वृत्रम् ॥ ३१

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम् ।
शच्या हरी धनुतरा अतष्टेन्द्रवाहा ऋभवो वाजरत्नाः ॥ ३२

वधीं वृत्रं भूरि चकर्थ विश्वाहेन्द्र एनाङ्गुषेण ॥११॥ ३३

---

[११] मै. २,४,२७; ४,१०,१२५—१२६; ११,८५,८६; १२,२,८६,१२७—१२८,१६३ । [ इन्द्राग्नी नवर्तिं० । ऋ. ३,१२,६; सा. १५७६, १७०४; तै. सं. १,१,१४,१ । श्नथद्वृत्रं० । ऋ. ६,६०,१; तै. सं. ४,२,११,१; तै. ब्रा. ३,५,७,३ । इन्द्रावरुणयोरहं० । ऋ. १,१७,१. तै. सं २,५,१२,२ । नू न इन्द्रावरुणा० । ऋ. ६,६८,८ । सं वां कर्मणा० । ऋ. ६,६९,१; तै. सं. ३,२,११,१ । उभा जिग्यथुर्नः० । ऋ. ६,६९,८; अथर्व. ७,४४,१; तै. सं. ३,२,११,२; ७,१,६,७ । अस्मे इन्द्राबृहस्पती० । ऋ. ४,४९,४; तै. सं. ३,३,११,१ । बृहस्पतिं (०स्पतिर्नः) नः० । ऋ. १०,४२,११, ४३,११; ४४,११; अथर्व. ७,५१,१; २०,१७,११; ८९,११; ९४,११; तै. सं. ३,३,११,१ । इन्द्रासोमा तपतं० । ऋ. ७,१०४,३; अथर्व. ८,४,१ । इन्द्रासोमा समघशंसं० । ऋ. ७,१०४,२; अथर्व. ८,४,२; नि. ६,११ । इन्द्रा नु पूषणा० । ६,५७,१; सा. २०२ । यदिन्द्रो अनयद्रितो० । ऋ. ६,५७,४; सा. १४८ । इन्द्रापर्वता बृहता० । ऋ. ३,५३,१; सा. ३३८ । ममत्तु नः परिज्मा० । ऋ. १,१२२,३; तै. सं. २,१,११,१ । ऋभुर्ऋभुभिरभि वस्याम० । ऋ. ७,४८,२; नि. ५,२ । शच्याकर्त पितरा० । ऋ. ४,३५,५ । वधीं वृत्रं० । ऋ. १,१६५,८; तै. ब्रा. २,८,३,६ । भूरि चकर्थ० । ऋ. १,१६५,७; नि. ६,७ । विश्वाहेन्द्र (०हेन्द्रो)० । ऋ १,१००,१९; १०२,११ । एनाङ्गुषेण० । ऋ १,१०५,१९; नि.५,११ ]

त्वमग्ने बृहद्वयो ददासि देव दाशुषे । कविर्गृहपतिर्युवा हव्यवाडग्निरजरः ॥ ३४

पितरो विभुर्विभावा सुदृशीको अस्मे सुगार्हपत्यास्समिषो दीदिह्यस्मद्र्यक्संमिमीहि श्रवाँसि य इमा
विश्वा जातानि विश्वा रूपाणि ॥ ३५

त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः ॥ ३६

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणाँ स्वधितिर्वनानाँ सोमः पवित्रमत्येति रेभन् ॥ ३७

उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः ।
गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन् ॥ ३८

हँसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाँ अगायत् ॥ ३९

त्वँ सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो ॥ ४०

भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नॄँश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ ४१

मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसि । सत्यं चित्रश्रवस्तमम् ॥ ४२

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवद्विधेम ॥ ४३

प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षते व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमँहो अश्नोत्यन्तितो न दूरात् ॥ ४४

---

[१२] मै. १,५,४०; २,७,७०,९५; ४,९,३१; १२,१६५,१६७—१६८,१७१—१७५,१७७—१८१ । वा. ११,६१; १२,३; १६,१६; १७,१७ । काण्व. १२,६४; १३,३; १७,१६; १८,१७ । [ त्वमग्ने बृहद्वयो० । ऋ. ८,१०२, १, तै. सं. ३,४,११,१ । य इमा विश्वा जाता।नि० । ऋ. ५,८२,९ । विश्वा रूपाणि प्रति० । ऋ. ५,८१,२; तै. सं. ४,१,१०,४, नि. १२,१३। त्वं च सोम नो वशो० । ऋ. १,९१,६, तै. सं. ३,४,११,१ । ब्रह्मा देवानां पदवीः० । ऋ. ९,९६,६; सा. ९४४; तै. सं. ३,४,११,१, तै. आ. १०,१०,१; नि. १४,१३ । उदप्रुतो न वयो० । ऋ. १०,६८,१; अथर्व. २०,१६,१; तै. सं. ३,४,११,३ । हँसैरिव सखिभिः० । ऋ. १०,६७,३; अथर्व. २०,९१,३; तै. सं. ३,४,११,३ । त्वँ सुतस्य पीतये० । ऋ. १,५,६; अथर्व. २०,६९,४; तै. सं. ३,४, ११,४ । भुवस्त्वमिन्द्र ब्रह्मणा० । ऋ. १०,५०,४; तै. सं. ३,४,११,४ । मित्रस्य चर्षणी० । ऋ. ३,५९,६; तै. सं. ३,४,११,५; ४,१,६,३; तै. आ. ४,३,२ । मित्रो जनान्यातयति० । ऋ. ३,५९,१; तै. सं. ३,४, ११,५; तै. ब्रा. ३,७,२,३; नि. १०,२२ । प्र स मित्र मर्तो० । ऋ. ३,५९,२, तै. सं. ३,४,११,५; नि. २,१३ ]

यत्किंचेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ ४५
कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता विष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥ ४६
यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥ ४७
मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥१२॥ ४८
[१८२२]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां दीक्षितं नाम त्रयोविंशं स्थानकं संपूर्णम् ॥२३॥

---

अथ चतुर्विंशं स्थानकम् ।

## साक्षीति ।

या श्येताक्षी कृष्णवाला कृष्णशफा न तया क्रीणीयाद्धुतं वा अस्या एतत् परिपिष्टं पितृदेवत्या सा प्रमायुकस्स्याद्या द्विरूपा न तया क्रीणीयाद्वार्त्रघ्नी सा जिनाति वा जीयते वोत तया राजन्यस्य क्रीणीयान्न हि तस्यान्तरास्ति जिनाति वा हि स जीयते वा याधीलोधकर्णी तया षोडशिनं क्रीणीयादतिरिक्तं वा एतद्रूपाणामतिरिक्तष्षोडश्यतिरिक्तेनैवातिरिक्तमाप्नोति या बभ्रुरेकहायनी तया क्रीणीयाद्वाग्वै सोमक्रयणी पुरुषो वाग्यदेकहायन्या क्रीणाति तस्मादेकहायनः पुरुषो वाचं वदति यज्ज्यायस्या क्रीणाति तस्माज्ज्यायान् वदति ॥ छन्दाँसि वा अमुष्माल्लोकात् सोममाहरन् गायत्री श्येनो भूत्वा तं गन्धर्वा अन्तरा पर्यमुष्णन् विश्वावसुस्स तिस्रो रात्रीरुपहृतोऽवसत् तस्मात् तिस्रो रात्रीस्सोमः क्रीतो वसति तं देवाः पुनरयाचन्त तमेभ्यो न पुनरददुस्तेऽब्रुवन् गवा निष्क्रीणामेति तेऽमन्यन्त यज्ञेन विक्रेष्यामहे यद्गवा निष्क्रेष्याम इति तेऽब्रुवन् स्त्रीकामा वै गन्धर्वा वाचँ स्त्रियं कृत्वा मायामुपावासृजँस्तेऽमन्यन्त प्रजया व्यक्रेष्महि ये वाचा व्यक्रेष्महीति तेऽन्वार्तीयन्तास्माकँ सोमोऽस्माकँ सोमक्रयणीति ते गन्धर्वा अब्रुवन् विह्वयामहा इति ते ब्रह्म गन्धर्वा अवदन्नगायन् देवास्सा देवान् गायत उपावर्तत तस्माद्गायन्तँ स्त्री कामयते न ब्रह्म वदन्तमद्रुह्याद्धि सा ब्रह्मणे

---

[यत्किंचेदं वरुण० । ऋ. ७,८९,५; अथर्व. ६,५१,३; तै. सं. ३,४,११,६ । कितवासो यद्रिरिपुर्न० । ऋ. ५,८५,८; तै. सं. ३,४,११,६ । यथा नो अदितिः० । ऋ. १,४३,२; तै. सं. ३,४,११,२ । मा नस्तोके तनये० । ऋ. १,११४,८; तै. सं. ३,४,११,२; ४,५,१०,३ ]

[ १ ] मै. ३,७,३—४ (३—६) । कपि. ३७,१ । वा. ४,३४ । काण्व. ४,४६ । तै. सं. ६,१,६ ।

तस्मादाहुरक्रीता सोमेन सोमक्रयण्यस्ति देवान् हि सा पुनरुपावर्ततेति तेऽब्रुवन् स्त्रीकामा वै गन्धर्वा बहु वै गन्धर्वेषु मिथुनीभवन्ती संभरन्त्यचारीरपः प्रविश्योदेहीति तस्या यद्भूतं परिपिष्टमासीत् तज्जरती कूटा भूत्वोदैत् तेऽब्रुवन् पितृदेवत्या वा इयमिति तस्मात् तां पितृभ्यो घ्नन्ति तेऽब्रुवन् पुनः प्रविश्योदेहीति सा पष्ठौही वार्त्रघ्नी द्विरूपा भूत्वोदैत् सा तेन रूपेणापास्पृणुत तस्मात् सा वरोऽतिवरेण्यो नैनं वरो हिनस्ति य एवं विद्वान् वरं वृणीते तेऽब्रुवन् पुनः प्रविश्योदेहीति सा बभ्रुरेकहायनी भूत्वोदैत् तयाक्रीणँस्तस्मात् सा सोमक्रयणी तदस्या रूपम् ॥१॥ १-२

सोमक्रयण्या तृतीयसवनमवरुध्यं पशवो वै तृतीयसवनं यद्गवा क्रीणाति तेनैव तृतीयँ सवनमवरुन्द्धे रोहिते चर्मन् मिमीते तस्माद्रोहितरूपं पशवो भूयिष्ठा न विचेतवा अनुमन्येत न विचीयमानस्योपद्रष्टा स्यात् सोम ओषधीनामधिराजो ग्रसितमस्य निष्खिदति क्षोधुको भवति तस्मात् सोमविक्रयी क्षोधुकोऽपामन्ते क्रीणाति सरसमेवैनं क्रीणाति हिरण्येन क्रीणाति सतेजसमेवैनं क्रीणात्यजया क्रीणाति सतपसमेवैनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यनडुहा क्रीणाति वह्वयेव यज्ञस्यावरुन्द्धे वत्सतरेण च वत्सतर्या च क्रीणाति मिथुनमेवास्य क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवैनं क्रीणाति तदाहुः प्रजापतिना वा एष विक्रीणीते यदृषभेण विक्रीणीत इति य एव कश्च साण्डस्स्यादरेतास्तेन क्रीणीयात् तेनैव सेन्द्रं क्रीणाति न प्रजापतिना विक्रीणीते दशभिः क्रीणाति दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति ॥२॥ ३

जूरसीति वाग्वै सोमक्रयणी जवते हि वाचेत्थं चेत्थं च पश्यन् सोमक्रयणीं जुहोति वाग्वै सोमक्रयणी पश्यन्नेवैनां यच्छति धृता मनसेति मनसा हि वाग्धृता जुष्टा विष्णव इति यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहेति यो वा एतस्यास्तन्वो यन्त्रमश्नुते भवति स सवितृत एवास्यास्तन्वो यन्त्रमश्नुते स्वाहाकारेणैवैनां यच्छत्यमुष्मा आदित्याय प्रोच्य सोमः क्रेतव्यो देव सूर्य सोमं क्रेष्याम इत्यमुष्मा एवादित्याय प्रोच्य सोमं क्रीणाति ॥ चिदसीति वाग्वै सोमक्रयणी शास्त्येवैनां तस्माच्छिष्टाः प्रजा जायन्ते मना असीति मनसा हि वाग्धृता धीरसीति ध्यायते हि वाचेत्थं चेत्थं च दक्षिणासीति दक्षिणा ह्येषा यज्ञियासीति यज्ञिया ह्येषा क्षत्रियासीति क्षत्रिया ह्येषाथो यँ ह्येषा जुषते स क्षत्रियो भवत्यदितिरस्युभयतश्शीर्ष्णीत्यदितिर्ह्येषोभयतश्शीर्ष्ण्युभयतो ह्येषा यज्ञं परिभूरादित्यं प्रायणीयं भवत्यादित्यमुदयनीयँ सा मा सुप्राची सुप्रतीची भवेति सुप्राचीमेवैनाँ सुप्रतीचीं कुरुते मित्रस्त्वा पदि बध्नात्विति

[२] मै. ३,७,४ (६)। कपि. ३७,३। तै. सं. ६,१,९—१०।

[३] मै. ३,७,५-६ (७-८)। कपि. ३७,४। वा. ४,१७-२०, ६,९। काण्व. ४,२३-२७; ६,१०। तै. सं. ६,१,७।

यत् पदि बद्धा स्यात् पितृदेवत्या स्याद्वाग्वै सोमक्रयणी वरुण्यः पाशो वाग्वरुणगृहीता न वदेद्यत्
कर्णगृहीता स्याद्वार्त्रघ्नी स्याद्यदनालब्धायता ॥ मित्रस्त्वा पदि बध्नात्विति ब्रह्म वै मित्रो ब्रह्मणैवैनं
पदि बध्नाति पूषाध्वनस्पात्वितीयं वै पूषास्या एवैनां परिददातीन्द्रायाध्यक्षायेतीन्द्रो वै देवाना-
मोजिष्ठस्तमेवास्या अध्यक्षं करोत्यनु त्वा माता मन्यतामनु पितेति पिता च ह्येतस्या माता चानु-
मन्तारौ सा देवि देवमच्छेहीन्द्राय सोममिति देवी ह्येषा देवमच्छैतीन्द्राय सोमं रुद्रस्त्वावर्तयत्विति
रुद्रो वै देवानां क्षेपिष्ठस्तमेवास्याः परस्तात् करोत्यपरानशाय स्वस्ति सोमसखा पुनरेहीति पुन-
रेवास्या आवृत्तायै स्वस्ति करोति ॥३॥ ४–६

दक्षिणेन पदा दक्षिणानि पदान्यनुनिक्रामति तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरष्षट् पदान्य-
नुनिक्रामति षड्वृतव ऋतुष्वेव प्रतितिष्ठति षट् पृष्ठानि तान्येवावरुन्द्धे सप्तमं पदमभिगृह्णाति सप्त
ग्राम्याः पशवस्तानेवावरुन्द्धे सप्तधेयं वाग्वदति तामेवाप्नोति वस्व्यसि रुद्रासीति देवनामानि वा
एषैतानि प्रपद्यत इयमसीयमसीत्येवैतदाह यद्यद्धवत्यथो वाचं एवैतत् सम्यगुद्यते बृहस्पतिस्त्वा
सुम्ने रम्णातु रुद्रो वसुभिराचक इति ब्रह्म वै बृहस्पती रुद्रो देवानामोजिष्ठो या एव देवानामोजिष्ठौ
ताभ्यामेनामन्ततो यच्छति ॥ पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इत्येषं हि पृथिव्या मूर्धा
यद्देवयजनमिडायास्पदे घृतवति स्वाहेतीडा वा एषा तस्या एतद्घृतवत् पदं स्वाहाकारेणैवैनां यच्छ-
तीदमहं रक्षसो ग्रीवा अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति स्फ्येन पदं
परिलिखति वज्रो वै स्फ्यः पशवः पदं वज्रेणैवास्मै पशून् परिगृह्णाति यावद् घृतं विधावेत् तावद-
भिपरिलिखेत् पशवो वै घृतं पशूनेवावरुन्द्धे स्थाल्यां पदं संवपत्यादित्या वै पशवः पृथिव्यदितिः
पृथिव्यास्स्थाली संभृता स्व एवैनान् योनौ दधात्यस्मे रमस्वास्मे ते राय इति यत् त्वे राय इति
ब्रूयादितरस्मै पशून् संप्रयच्छेदध्वर्युरपशुस्स्यान्मे राय इत्यात्मन्नेव पशून् यच्छते ॥ व्यृद्धा वा एषा-
हुतिर्यामनग्नौ जुहोति यद्धिरण्यमुपास्य जुहोत्यग्निमत्येव जुहोति समृद्ध्या अनग्नौ वा एतामाहुतिं
जुहोति तामीश्वराणि रक्षांस्यनूदय्य हन्तोर्यदपो निनयति शान्त्या एवं रक्षसामपहत्या अयोनीन्वा
एतत् पशूञ्छुचार्पयति यदेषां पदं परिखायाहरति यदपो निनयति पशूनेव शुचो मुञ्चति सोम-
क्रयण्या पत्नीं संख्यापयति पत्न्या एवैष यज्ञस्यान्वारम्भोऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय
त्वष्टृमन्तस्त्वा सपेमेत्यतो ह्रीमाः प्रजाः प्रजायन्ते प्रजननाय ॥४॥ ७–९

हस्ते हिरण्यं कृत्वा मिमीते सत्यं वै हिरण्यं सत्येनैवैनं मिमीतेऽमृतं वै हिरण्यममृतेनैवैनं मिमीत

---

[४] मै. ३,७,६–७ (८–११)। कपि. ३७,५। वा. ४,२१–२२; ५,२२,२६; ६,१। काण्व. ४,२८–२९; ५,२८,३३; ६,१। तै. सं. ६,१,८।

[५] मै. ३,७,४ (६)। कपि. ३७,६। वा. ४,२४–२५। काण्व. ४,३३–३५। तै. सं. ६,१,९।

आस्माकोऽसीति स्वमेवैनं कुरुते शुक्रस्ते ग्रह इति शुक्रमेवास्य गृह्णात्यभि त्यं देवं सवितारमिति सवितृप्रसूत एवैनं देवताभिर्मिमीतेऽतिच्छन्दसा मिमीते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनो गमयति यज्ञं च यजमानं चैकैकया मिमीत आसामेव वीर्याण्याप्नोति तस्मादिमाः कामं न्यंचामः कामं प्रसारयामो यत् सर्वाभिस्सह मिमीत हस्तमासां वीर्यमभिसंमियादङ्गुष्ठेन प्रतिमिमीते तस्मादेष एतासां वीर्याणि प्रत्युदेव सृजेन्न न्युचेयंन्यचेत् पाशं कुर्याद्वरुण्युः पाशो वरुण एनं ग्राहुकस्स्याद्यदुत्सृजति वरुणपाशादेवात्मानं परिवृणक्ति ॥ द्विर्मिमीते द्वे हि शुक्रिये सवने दश कृत्वो मिमीते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति यत् परिमितं मिमीत परिमितं जीवनं स्यादपरिमितं मिमीते तस्मादिदमपरिमितं जीवनं यत् परिमितं मिमीत यजमानायैव स्यादपरिमितं मिमीते तेन सदस्येभ्योऽपि क्रियते प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्त्विति प्रजा वा अंशवः प्रजास्वेव प्राणं दधाति चतुर्गृहीतमाज्यं भवति चतुष्पादः पशवः पशूनेवास्मै गृह्णात्येतद्रूपा वै पशवो यद् घृतं सरूपानेव पशूनवरुन्द्धे ॥ इयं ते शुक्र तनूरिदं वर्च इति हिरण्यं घृतेऽवदधात्येषा वा अग्नेः प्रिया तनूर्यद् घृतं तेजो हिरण्यं प्रियामेवास्य तन्वं तेजसा समर्धयति रेतो वै हिरण्यं पशवो घृतं यद्धिरण्यं घृतेऽवदधाति पशुष्वेव रेतो दधाति तस्मादनस्थकाद्रेतसोऽस्थन्वन्तो गर्भाः प्रजायन्ते बद्ध्वावदधाति गर्भाणां धृत्या अप्रपादाय निष्टक्र्यं बध्नाति तस्माद्योनेर्गर्भा मुच्यन्ते यदनिष्टक्र्यं बध्नीयान्न योनेर्गर्भा मुच्येरन् यजुषावदधाति यजुषोद्धरति यजुषैव युनक्ति यजुषा विमुञ्चति तस्मात् पराचीः प्रजा रेतो दधतेऽर्वाचीः प्रजायन्ते ॥५॥　　　　१०-१२

न पूर्वस्मिन् पदमुपवपेद्देवानां वा एष प्रदग्धाहुतीनां रुद्रोऽग्निः पशवः पदं रुद्राय पशूनपिदध्यादपशुस्स्याद्गार्हपत्य उपवपति गार्हपत्यं वै पशवोऽनूपतिष्ठन्त एष पशूनां योनिस्स्व एवैनान् योनौ दधाति यत्र शान्तमिवानङ्गारं स्यात् तदुपवपेच्छान्त्या अनुद्दाहाय सोमं ते क्रीणामीति सोमस्यैवैतद्राज्ञो वीर्याणि महिमानं व्याचष्टे न कलाशः पणेत यत् कलाशः पणते सोमस्य राज्ञो वीर्यमवतिरति यजमानस्यावर्तिं व्याचष्टे क्षोधुको भवतीयमिति ब्रूयात् तस्या आत्मा तस्या रूपं तस्याः प्रजा तस्याः पय इति न सोमस्य राज्ञो वीर्यमवतिरति न यजमानस्यावर्तिं व्याचष्टेऽक्षोधुको भवति ॥ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेनेति शुक्रमेवास्य शुक्रेण क्रीणाति चन्द्रं चन्द्रेणामृतममृतेन शक्म यत् ते गोरस्मे ते चन्द्राणीत्यात्मन्नेवास्य वीर्यं धत्ते तेन निर्वीर्येण भूतेन विक्रीणीते तपसस्तनूरसीति तपसो ह्येषा तनूः प्रजापतेर्वर्ण इत्यग्निर्वै प्रजापतेरग्निजा अजास्सहस्रपोषं पुष्यन्तीत्येषा हि पशूनां सहस्रपोषं पुष्यत्यतो ह्येष त्रीञ्जनयत्यथो द्वौ परमेण पशुना क्रीयस इति

[ अभि त्यं देवं० । अथर्व. ७,१४,१; श्रौ. सू ४,६]

[६] मै. ३,७,७-८ (१०-१४)। कपि. ३७,७। वा. ४,२६-३२। काण्व ४,३६-४४। तै. सं. ६,१,१०-११]

परमो ह्येषा पशूनामस्मे ते बन्धुरित्यात्मन्नेवास्या वीर्यं धत्ते तया निर्वीर्यया भूतया विक्रीणीते ॥ छन्दाँसि वा अमुष्माल्लोकात् सोममाहरँस्तत् तमोऽन्तराधीयत सा गायत्र्यजया ज्योतिषोदपतत् सास्यै प्रारोचयदेतर्हि वा एष एतस्मा आह्रियते यर्हि क्रीयते तम इदमन्तरा यदजया क्रीणाति प्रैवास्मै रोचयति मित्रो न एहि सुमित्रधा इति वरुणो वा एष भूत्वा यजमानमभ्यैति मित्रमेवैनं कुरुतेऽपोर्णुते यथा श्रेयाँसमायान्तं पापीयान् प्रत्यपोर्णुत एवमेव तादिन्द्रस्योरुमाविश दक्षिण-मितीन्द्रो वा एतमग्र ऊरा आधत्तैन्द्रो यजमानस्स्व एवैनं योनौ दधाति स्वान्नभ्राडिति सोमक्रयणा-ननुदिशत्येते वा एतद्गन्धर्वा अगोपायन्नमुष्मिंल्लोके तं गायत्र्याहरन्नेष्टापोत्रोः प्रति गोपीथं तस्मादेते होत्रे व्यृद्धे व्यृद्धसोमपीथे तस्मान्न नेष्ट्रा न पोत्रा भवितव्यं तस्मादेतौ सँसचन्ता इव यजतस्तमेते-ऽन्वायन्नेते वा एतस्य गन्धर्वाः पुष्टिँ हरन्ति तस्मात् सोमविक्रयी न पुष्यति यदि कृच्छ्रायेतोपैव हरेत् तेभ्यो ह्येष गन्धर्वेभ्योऽधि क्रीयत उदायुषेति यथायजुरुर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष एतर्ह्यपि पन्थामगन्महीति रक्षाँसि वा एतमेतर्हि सचन्ते प्रच्युतमितोऽप्राप्तमदो रक्षाँस्येव वृञ्जान एत्यनसाच्छ यान्ति महिमानमेवास्याच्छ यन्त्यनसा वहन्ति तस्मादनोवाह्यमोषधयः पच्यन्ते यच्छीर्ष्णा हरेयुश्शीर्षहार्यमोषधयः पच्येरन्नदित्यास्त्वगस्यदित्यास्सदने सीदेत्यादित्यो वै सोमः पृथिव्यदितिः पृथिव्या अनस्संभृतँ स्व एवैनं योनौ दधाति वारुणो वै सोमस्तं देवतया व्यर्धयति यन्मित्रं करोति यद्वारुण्या सादयति स्वयैवैनं देवतया समर्धयति वनेषु व्यन्तरिक्षं ततानेति वाससा पर्यानह्यति सर्वदेवत्यं वै वासस्सर्वाभिरेवैनं देवताभिस्समर्धयति सूर्यस्य चक्षुरारुहमिति कृष्णाजिनं पुरस्तात् प्रत्यानह्यन्ति रक्षाँसि वा एतमेतर्हि जिघाँसन्ति स्वर्गं लोकमभ्यारोहन्तमसा आदित्यो-ऽपरिपरः पन्थास्तमेवैनमभ्यारोहयति स्वर्गस्य लोकस्य समष्ट्यै ॥६॥ १३–१५

प्रच्यवस्व भुवनस्पत इति भूतानाँ ह्येष पतिर्विश्वान्यभि धामानीति देवता वै विश्वा धामानि देवता एवैनमभि प्रच्यावयति श्येनो भूत्वा परापतेति श्येनो वै वयसां क्षेपिष्ठश्श्येनमेवैनं कृत्वा रक्षाँस्यतिसृजति यजमानस्य नो गृहे सँस्कृतमिति यजमानायतनमेवैनं करोत्यथो यजमानस्यैव गृहे देवताभिस्सँस्कृतं कुरुते नमो मित्रस्य वरुणस्य चक्षस इति वरुणो वा एष भूत्वा यजमानमभ्येति मित्रमेवैनं कुरुत आसन्दीमुद्गृह्णन्ति यथा मनुष्यराजायावस्थितायासन्दीमुद्गृह्णन्त्येवमेव तदग्निना प्रतितिष्ठतेऽग्निस्सर्वा देवता देवताभिरेवैनं प्रतितिष्ठतेऽग्नीषोमौ वा एतर्हि यजमानमभि संधत्तो यत् पशुना प्रतितिष्ठते तमेवाभ्यामपिदधात्यग्नीषोमाभ्यां वा एष आत्मानं मेधायालभते यो दीक्षते यत्

---

[वनेषु व्यन्तरिक्षं० । ऋ, ५,८५,२, तै सं. १,२,८,१]

[७] मै. ३,७,८ (१४) । कपि. ३७,८ । वा. ४,३४--३५ । काण्व. ४,४६--४७ । तै. सं. ६,१,११ । [नमो मित्रस्य वरुणस्य० । ऋ. १०,३७,१; तै. सं. १,२,९,१]

पशुमालभत आत्मानं तेन निष्क्रीणाति यस्तूपरश्श्मश्रुणो द्विदेवत्यस्य रूपं लोमशः पीवा पुरुषरूपस्तमालभेत तस्य योऽश्नाति पुरुषमत्ति तस्मात् तस्य नाशितव्यं क्षुध्यति वै दीक्षितः क्षुध एष निष्क्रयण आलभ्यते तस्य योऽश्नाति क्षोधुको भवति तस्मात् तस्य नाशितव्यमग्नीषोमाभ्यां वै वीर्येणेन्द्रो वृत्रमहन् स एष वार्त्रघ्नः पशुर्विजित्या आलभ्यते तस्मादस्याशितव्यं देवता वा एनं पूर्वेद्युरालभ्यमानं नाभिप्राच्यवन्त परस्माद्यज्ञक्रतोर्निररिष्याम इति तमग्नीषोमा एवाभिप्राच्यवेतां पराचीरितरा यज्ञमभ्यत्यसृजन्त तस्मादेषोऽग्नीषोमीय आलभ्यते तस्मादग्नीषोमाभ्यां ग्रहो न गृह्यते॥ तौ देवानुपावर्तमानौ तयोर्यत् प्रियं धामासीत् तदपन्यदधातां तद्देवा अन्वेष्टुमध्रियन्त ते प्रबाहुगिच्छन्त आयँस्ते नवं वा इदँ सृप्तमित्यभ्यवायन्यन्नवमित्यब्रुवँस्तन्नवनीतस्य नवनीतत्वं यत् सृप्तमिति तत् सर्पिषस्सर्पिष्ट्वं यदजोऽविन्दत् तदाज्यस्याज्यत्वं स घृङ्ङकरोत् तद् घृतस्य घृतत्वं तस्मादजो घृङ्ङ्कारिक्रश्चरति तत् पशूनन्वाकुर्वँस्तत् पशवस्समभरँस्तेनैतेन पशुभ्योऽधिजायन्ते ता अब्रुवतां वार्यं वृणावहा अयमेव नौ भागधेयमस्तु यो नौ प्रियं धामाविन्ददिति तस्मादेषोऽग्नीषोमीय आलभ्यते तस्मादस्याशितव्यं वार्यवृतो हि ॥७॥ १६--१७

विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं निरुप्यते यज्ञस्य संतत्या अविच्छेदाय यदुभौ विमुक्तौ स्यातां पितृदेवत्यँ हविस्स्याद्विच्छिन्नो यज्ञोऽसंततोऽनवरुद्धो यदुभा अविमुक्तौ वार्त्रघ्नँ हविस्स्यात् संततो यज्ञोऽविच्छिन्नोऽवरुद्धो यद्विमुक्तोऽन्यो भवत्यविमुक्तोऽन्यो वार्त्रघ्नँ हविर्भवत्यपितृदेवत्यँ संततो यज्ञोऽविच्छिन्नोऽवरुद्धः पत्नीमन्वारम्भयित्वा निर्वपति पत्नी वै पारीणह्यस्येशेऽनुमतमेव प्रसूतं देवेभ्यो हविर्निर्वपति पत्न्या एवैष यज्ञस्यान्वारम्भोऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय ॥ यावन्तो वै पुण्यमन्वायन्ति सर्वेभ्यस्तेभ्य आतिथ्यं क्रियते छन्दाँसि सोमं राजानं क्रीतमन्वायन्त्यग्नेस्तनूरसि विष्णवे त्वेति गायत्र्यैतान्निर्वपति सोमस्य तनूरसि विष्णवे त्वेति त्रिष्टुभैतान्निर्वपत्यतिथेरातिथ्यमसि विष्णवे त्वेति जगत्यैतान्निर्वपत्यग्नये त्वा रायस्पोषदे विष्णवे त्वेत्यनुष्टुभैतन्निर्वपति श्येनाय त्वा सोमभृते विष्णवे त्वेति गायत्र्यैतन्निर्वपति गायत्री वा एतमाहरदमुष्माल्लोकात् तस्मात् सा पुनर्याम्णी तस्मात् पुनः प्रयुज्यते यच्छन्दोभिर्निर्वपति च्छन्दाँस्येव भागधेयवन्ति करोति पञ्च कृत्वो निर्वपति पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे विष्णवे त्वा विष्णवे त्वेति विष्णुर्वा एतर्हि यज्ञो यद्यनिरुक्तस्तस्माद्वैष्णवः पुरोडाशो भवति त्रिकपालः कार्यस्स हि वैष्णवो यन्नवकपालस्तेनैव त्रिकपालस्त्रयो हि ते त्रिकपाला नवकपालो भवति नव प्राणाः प्राणैरेव यज्ञमुखे प्रैत्यथो तेज एव त्रिवृतं यज्ञमुखेऽधिवियातयति यत् त्रिकपालस्तेन वैष्णवो यत् षट् तेन च्छन्दसां तेनोभयस्मान्नैति ॥ पशुरालभ्यस्सोमाय राज्ञ इत्याहुर्मनुष्य-

[८] मै. ३,७,९ (१५) । कपि. ३८,१ । वा. ५,१ । काण्व ५,१ । तै. सं. ६,२,१ ।

राजायेत्यै पशुरालभ्यत इत्यग्निं मन्थन्त्याग्नेया वै पशवस्तद्देवास्मै पशुमालभतेऽग्निस्सर्वा देवतास्सर्वा एव देवतास्सोमाय च च्छन्दोभ्यश्चागतेभ्यो जनयत्याश्ववालः प्रस्तारो भवत्यैक्षवा उद्यावा अश्व इव वै प्रजापतिरासीत् तस्यैते वाला आसन् यदश्ववाला एतौ बाहू या उद्यावौ तं देवा अन्वारभ्य स्वर्गं लोकमायन् यदाश्ववालः प्रस्तारो भवत्यैक्षवा उद्यावौ प्रजापतिमेवान्वारभते स्वर्गस्य लोकस्य समष्ट्यै प्रजापतेर्वा एतानि पक्ष्माणि येऽश्ववाला यदाश्ववालः प्रस्तारो भवति प्रजापतेरेवाधि यज्ञमुखं प्रतनुते ॥ रक्षाँसि वै देवानां यज्ञमजिघाँसँस्तानि कार्ष्मर्येणापाघ्नत यत् कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै यद्यद्वै देवा एतेनाकुर्वत तेनार्ध्नुवँस्तदस्य कर्मण्यत्वं कर्मण्यो वै नामैष यज्ञमुख एवैतेनर्ध्नोति सप्तदश सामिधेन्यो भवन्ति सप्तदशो वै संवत्सरः पञ्चर्तवो द्वादश मासा एष वाव स संवत्सरस्संवत्सरादेवाधि यज्ञमुखं प्रतनुते ॥ शिरो वा एतद्यज्ञस्य यदातिथ्यं ग्रीवा उपसदो यत् सँस्थापयेन्मुखतो यज्ञे सँस्थापयेच्छिरो ग्रीवाभ्यो यज्ञस्यावच्छिन्द्यादिडान्तं भवति शिर एव ग्रीवासु यज्ञस्य प्रतिदधाति नवकपालो भवति तस्मान्नवधा पुरुषस्य शिरो विष्यूतमुपसदो वा एतस्यानुयाजास्तानूनप्त्रमाशीस्तस्मादननुयाजं भवति ॥८॥ १८-२२

देवा वा अन्योऽन्यस्य श्रैष्ठ्याय नातिष्ठन्त ते चतुर्धा व्युदक्रामन्नग्निर्वसुस्सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैस्ते देवाः पापीयाँसोऽभवन् वसीयाँसोऽसुरास्तेऽविदुः पापीयाँसो वै त्ये भवन्ति वसीयाँसोऽसुरा इति ते प्रियास्तन्वस्समवाद्यन्त ते ब्रुवन्नेषां नस्तन्न पारयाद्यो नोऽन्योऽन्यस्मै द्रुह्यादिति तस्मात् सतानूनप्त्रिणे न द्रोग्धवै यद् द्रुह्यति प्रियायै तन्वै द्रुह्यति यत् तन्वस्समवाद्यन्त तत् तानूनप्त्रस्य तानूनप्त्रत्वं ततो देवा अभवन् परासुरा अभवन् य एवं विद्वाँस्तानूनप्त्रमुपैति भवत्यात्मना परास्य भ्रातृव्यो भवत्यसौ वा आदित्य इन्द्रस्तस्य ते श्रैष्ठ्यायातिष्ठन्त तिष्ठन्तेऽस्य समानाश्श्रैष्ठ्याय य एवं वेदैतस्मिन् वै ते तास्तन्वस्संन्यदधत तस्मादेष तेजिष्ठं तपति तस्मात् सूर्यदेवत्यास्सोमा भूयिष्ठा हूयन्त आज्येन वै वज्रेण देवा वृत्रमघ्नन् स्रुग्भ्यां बाहुभ्यां सोमो वृत्रो घ्नन्ति वा एतत् सोमं यदस्याज्येनान्तिकं जुह्वत्यँशुरँशुस्ते देव सोमाप्यायतामिति यदेवास्य घ्नन्ति यन्मितमयन्ति तदाप्याययन्ति यन्ति वा एतेऽस्माल्लोकाद्ये सोममाप्याययन्त्येष्टा रायः प्रेषे भगायेत्यस्मिन्नेव लोके प्रतितिष्ठन्ति पितरं च वा मातरं च हिनस्ति यो गर्भँ हन्त्यनयोर्गर्भस्सोमो राजा नमो दिवे नमः पृथिव्या इत्याभ्यामेव निह्नुते किं दीक्षया स्पृणोतीत्याहुः किमवान्तरदीक्षयेत्यात्मानमेव दीक्षया स्पृणोति प्रजामवान्तरदीक्षया संतरां मेखलामायच्छते ॥ कनीयो व्रतमुपैति तस्मादात्मनः प्रजाँहीयसी यत् परस्सत्यां विसृजते तस्मात् परोवरीयः प्रजया पुत्रेण पौत्रेण प्रथतेऽग्निर्वै दीक्षितश्शमयन्त्यग्निमापो मदन्तीनां मार्जयते मदन्तीनां व्रतयत्यशान्त्यै शान्तिर्ह्यापोऽथो तेज एवात्मन् भूयस्समाधत्ते न

[९] मै. ३,७,१० (१६—१८)। कपि. ३८,१। वा. ५,७—८। काण्व. ५,९—१२। तै. सं. ६,१,२।

वा एतेन हुतं व्रतयितव्यं नाहुतं यो दीक्षितोऽग्निर्वै रुद्रोऽग्निर्नैष तन्वं विपरिधत्ते या ते अग्ने रुद्रिया तनूरिति व्रतयति स्वायामेव देवतायाँ हुतं व्रतयति तेनास्य न हुतं भवति नाहुतम् ॥९॥ २३-२४

देवाश्च वा असुराश्च संयत्ता आसँस्तेषामसुराणामिमाः पुर आसन्नयस्मयीयं रजतान्तरिक्षँ हरिणी द्यौस्ते देवास्संघातँ संघातं पराजयन्त तेऽविदुरनायतना हि वै स्मस्तस्मात् पराजयामह इति त एताः पुरः प्रत्यकुर्वत हविर्धानं दिव आग्नीध्रमन्तरिक्षात् सदः पृथिव्यास्तेऽब्रुवन्नुपसदमुपायामोपसदा वै महापुरं जयन्तीति त उपसदमुपायँस्तानुपसद्भिरेवैभ्यो लोकेभ्यो निरघ्नँस्तस्मादाहुरुपसदा वै महापुरं जयन्तीति त एभ्यो लोकेभ्यो निर्हता ऋतून् प्राविशँस्ते षडुपायँस्तानुपसद्भिरेवर्तुभ्यो निरघ्नन् द्वाभ्याममुष्माल्लोकाद् द्वाभ्यामन्तरिक्षाद् द्वाभ्यां पृथिव्यास्त ऋतुभ्यो निर्हतास्संवत्सरं प्राविशँस्ते द्वादशोपायँस्तानुपसद्भिरेव संवत्सरान्निरघ्नँश्चतसृभिरमुष्माल्लोकाच्चतसृभिरन्तरिक्षाच्चतसृभिः पृथिव्यास्ते संवत्सरान्निर्हता अहोरात्रे प्राविशँस्ते यत् सायमुपायँस्तेनैनान् रात्र्या अनुदन्त यत् प्रातस्तेनाह्नस्तस्माद्धौस्सायं प्रातस्तनमाप्यायते प्रातस्सायन्तनं तानुपसद्भिरेवैभ्यो लोकेभ्यो नुदमाना आयँस्ततो देवा अभवन् परासुरा अभवन् सर्वेभ्य एवैभ्यो लोकेभ्यो भ्रातृव्यं नुदमान एति य एवं विद्वानुपसद उपैति भवत्यात्मना परास्य भ्रातृव्यो भवति ॥ न द्वादशाग्निष्टोमस्य कुर्यादशान्ता निर्मृज्युर्न तिस्रोऽहीनस्योपरिष्टाद्यज्ञक्रतुर्गरीयानभिषीदेद्ग्रीवा निश्शृणीयादार्तिमार्छेद् द्वादशाहीनस्य कुर्याच्छान्त्या अनिर्मार्गाय तिस्रोऽग्निष्टोमस्य प्रत्युत्तब्ध्यै सयत्वाय ते देवा असुर्यानिमाँल्लोकान्नान्ववैतुमधृष्णुवँस्तानग्निना मुखेनान्ववायन् यदग्निमन्त्युपसदां प्रतीकानि भवन्ति यथा क्षेत्रपतिः क्षेत्रेऽन्ववनयत्येवमेवैतदग्निना मुखेनेमाँल्लोकानभिजयन्तो यन्ति यो ह वै देवान् साध्यान् वेद सिध्यत्यस्मा इमे वाव लोका देवास्साध्यास्सिद्धँ ह्यस्यै सिद्धमस्मै सिद्धममुष्मै य एवं वेद सिध्यत्यस्मै ॥१०॥

२५-२६

[१८४८]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां साक्षीति नाम चतुर्विंशं स्थानकं संपूर्णम् ॥२४॥



[१०] मै. ३,८,१-२ (१—३) । कपि. ३८,३ । तै. सं. ६,२,३ ।

अथ पञ्चविंशं स्थानकम् ।

## इषुः ।

इषुं वा एता देवास्समस्कुर्वन् यदुपसदोऽग्निं शृङ्गँ सोमँ शल्यं विष्णुं तेजनं तेऽब्रुवन् यो न ओजिष्ठस्स इमां विसृजत्विति ते रुद्रमब्रुवँस्त्वं वै न ओजिष्ठोऽसि त्वमिमां विसृजेति सोऽब्रवीद्वार्यं वृणा अहमेव पशूनामीशा इति तेऽमन्यन्त यदयं पशूनामीशिष्यते सर्वान्निर्णेष्यतीति तेऽब्रुवन् सप्ताहानीशासै न पराचीनमिति तस्मात् सप्ताहानि रुद्रः पशूनामीशे रक्षाँसि पराचीनं घ्नन्ति तां व्यसृजत् तया पुरस्समरुजद्यत् समरुजत् तद्रुद्रस्य रुद्रत्वं विसृष्टिमेव भ्रातृव्याय विसृजति य एवं विद्वानुपसद उपैति न पुनरपक्रामेद्यतरो वै संयत्तयोः पुनरपक्रामति परा स जयति ॥ समेष एतर्हि यतते य उपसद उपैति सकृदेव पराङतिक्रम्याश्रावयति यज्ञस्याभिजित्यै रक्षसामपहत्यै न प्रयाजा भवन्ति नानुयाजाः पुरो वा एते यज्ञस्य यत् प्रयाजानुयाजा यत् प्रयाजानुयाजान् कुर्यात् पुरो यज्ञस्य कुर्याद्धुरतिव्यथँ स्यादतीक्ष्णामिषुं कुर्याच्चतुर्व्रतो भवति चत्वारि हीष्वाः पर्णानि त्रिव्रतो भवति त्रिषन्धिर्हीषुश्शृङ्गँ शल्यस्तेजनं द्विव्रतो भवति द्विषन्धिर्हीषुश्शल्यश्च तेजनं चैकव्रतो भवत्येका ह्येवेषुरिषुमेवैतां सँस्कृत्य तां श्वो भ्रातृव्याय विसृजत्यथो व्रतमेवाप्नोति ॥ ग्रीवा वा एता यज्ञस्य यदुपसदो न प्रयाजा भवन्ति नानुयाजास्तस्माद्ग्रीवाः प्रतिपुरुषस्याणिष्ठं तास्सवीर्याः प्रयुज्यन्ते तस्माद्ग्रीवा अणिष्ठास्सतीर्वीर्यावत्तमास्तिस्र उपसदो भवन्ति त्रय इमे लोकास्तस्मात् पुरुषस्य त्रयस्स्कन्दा अतिषक्ताभिर्यजति तस्माद्ग्रीवा अतिषक्ता अथो अयातयाम्न्यायातयाम्न्यैव यजति सच्छन्दसो याज्यानुवाक्याः कुर्याद्यद्विच्छन्दसस्स्युरपरिचितो होतारँ हन्युर्भिद्वतीः पुरां भित्त्यै ॥१॥
१-३

देवाश्च वा असुराश्च यज्ञे संयत्ता आसन् स यज्ञोऽबिभेद्यतरेऽभिजेष्यन्ति ते मा विमथिष्यन्त इति स न्यलयत तं देवा अभिजित्यान्वैच्छँस्ते प्रवाहुगिच्छन्त आयँस्तमिन्द्र उपर्युपर्यत्यक्रामत् सोऽब्रवीत् को मायमुपर्युपर्यत्यक्रमीदित्यहमेष कृच्छ्रे हन्तेत्यथ कस्त्वमित्यहमेष कृच्छ्रादाहर्तेत्येमूषो नामायं वराह इत्यब्रवीदेकविँशत्याः पुरामश्ममयीनां पारे यत्किंचासुराणां वामं वसु तेन तिष्ठति तं जहि य एष कृच्छ्रे हन्तावोचथा इति तमिन्द्रो दाल्भूष्याभिविसृज्य पराभिनत् सोऽब्रवीदेष हतस्तमाहर य एष कृच्छ्रादाहर्तावोचथा इति तं विष्णुरपासङ्ग आहरद्यज्ञो वै विष्णुर्यज्ञेनैवैषां तद्यज्ञमवृञ्जत पशुभिः पशूनिन्द्रियेणेन्द्रियं ततो देवा अभवन् परासुरा अभवन् यज्ञो वै विष्णुर्यज्ञेनैवैतद्यज्ञं भ्रातृव्यस्य वृङ्क्ते पशुभिः पशूनिन्द्रियेणेन्द्रियं भवत्यात्मना परास्य भ्रातृव्यो भवति देवयजन-

---

[१] मै. ३,८,१—२ (१—६)। कपि. ३८,४। तै. सं. ६,२,३।
[२] मै. ३,८,३ (११)। कपि. ३८,५। तै. सं. ६,२,४।

मिच्छन्ति यज्ञमेवेच्छन्ति यद्विन्दन्ति यज्ञमेव विन्दन्ति यदुदीचीनं प्राचीनं प्रवणँ स्यात् तस्मिन् यजेत यज्ञकाम एवमेव हि स यज्ञोऽशयद्यज्ञस्यानुवित्त्यै यत् समं प्रतिष्ठितं तस्मिन् यजेत गतश्रीः प्रतिष्ठा वा एतस्मा एष्टव्या यो गतश्रीरेतद्भूम्याः प्रतिष्ठितं यत् समं प्रतिष्ठामेवास्मै विन्दति गच्छति प्रतिष्ठां त्र्युन्नते यजेत भ्रातृव्यवाँस्त्र्युन्नतेन वै विष्णुरिमांल्लोकानुदजयत् स एभ्यो लोकेभ्योऽसुरान् प्राणुदतेमानेव लोकानुज्जयत्येभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदते ॥ यस्यैकधा मध्य उन्नतँ स्यात् तस्मिन् यजेत स्वर्गकामोऽतो वै देवास्स्वर्गं लोकमायन् स्वर्गस्य लोकस्य समष्ट्यै यत्रौषधयो बह्वीरन्या अन्या इव स्युस्तस्मिन् यजेत पशुकाम ओषधयो वै पशवो भूमानमेव पशूनामुपैति यत्रौषधयः कृच्छ्रशः पर्यायशः परीयुस्तस्मिन् यजेत पशुकामोऽतो वै देवाः पशूनुदसृजन्त पशूनेवोत्सृजते यदक्षमलोमकं तस्मिन् याजयेद्यं द्विष्याद्यृद्धं वा एतदोषधिभिर्यदक्षमलोमकमोषधयः पशवः पशुभिरेवैनं व्यर्धयति ॥ यत् समया देवयजनं पन्था विधावेत् तस्मिन् याजयेद्यं कामयेत व्येनं प्रजया पशुभिश्छिन्द्यामित्येतद्वै विच्छिन्नं नाम देवयजनं व्येनं प्रजया पशुभिश्छिनत्ति यदन्तरापश्च देवयजनं च पन्था विधावेत् तस्मिन् याजयेद्यं कामयेत नैनमपरो यज्ञ उपनमेदित्येतद्वै परिवर्त्म नाम देवयजनं पर्येणमपरो यज्ञो वृणक्ति यत्रापस्सर्वतस्समवद्रवेयुस्तस्मिन् यजेतान्नकामो दिग्भ्यो वा एतस्मा अन्नँ हरन्ति यस्मै हरन्त्यापोऽन्नँ सर्वाभ्य एव दिग्भ्योऽन्नाद्यमवरुन्द्धे तदेतत् समापं नाम देवयजनं नीपतममिवर्तसमानानां भवति ॥२॥ ४-६

यत्रापः प्राचीराहवनीयात् प्रतीचीर्गार्हपत्याद्व्यवद्रवेयुस्तस्मिन् याजयेद्यमुदके वा पात्रे वा विवाहे वा मीमाँसेरन् पाप्मना वा एषोऽनुषक्तो यमुदके वा पात्रे वा विवाहे वा मीमाँसन्ते पाप्मनैवैनं व्यावर्तयति यत्रापो दक्षिणा परिप्लूय पश्चात् प्राची रमेरँस्तस्मिन् यजेत बुभूषन्नापो वै सर्वा देवता एतद्देवताभिर्जुष्टं देवयजनं यदेवं देवताभिरेव जुष्टे देवयजने यजते भवत्येव यत्रापो दक्षिणत उदीची रमेरँस्तस्मिन् यजेत सजातकाम आपो वै सर्वा देवता देवतास्सजातास्सजातानामेवैनं प्राधें करोति कृत्रिमे यजेत बुभूषन्नात्मा वै देवयजनं करोत्येवैनं यत्राग्निं चापश्च पश्यन् प्रातरनुवाकमनुब्रूयात् तस्मिन् यजेत यः कामयेत यज्ञो मापर उपनमेदित्यग्निर्वै सर्वा देवता आपो यज्ञ उपैनमपरो यज्ञो नमति देवताश्च हि यज्ञं च पश्यन् यजते यत्राग्निमपस्सूर्यं पश्यन् प्रातरनुवाकमनुब्रूयात् तस्मिन् यजेत ब्रह्मवर्चसकाम एतद्वै त्रिशुक्रियं नाम देवयजनं ब्रह्मवर्चसी भवति यत् पुरस्तादामँ स्याद्देवयजनं तस्मिन् यजेत भ्रातृव्यवान् भ्रातृव्याय वा एष लोक उच्छिष्यते यः पुरस्ताद्देवयजनस्योच्छिष्यत एतावन्तमेवास्मै लोकमुच्छिँषत्यलोकमेनं करोति यो ह वै विद्वान् देवयजनं यजत ऋध्नोत्यग्नि-

---

[ ३ ] मै. ३,८,४ (१४)। कपि. ३८,६। तै. सं. ६,२,६।

वाव देवयजनमग्नौ हि सर्वा देवता इज्यन्ते यत्रैव क्वचाग्निमाधाय यजेत तेनैवर्ध्नोति ब्राह्मणा वाव देवयजनं यत्र ब्राह्मणा बहवस्संराधयेयुस्तस्मिन् यजेत तेनैवर्ध्नोति ॥३॥ ७

वेदिं विमिमीते त्रिंशता पश्चात् प्रक्रमैर्मिमीते षट्त्रिँशता प्राचीं चतुर्विंशत्या पुरस्ताद्विराजैवैनां पश्चात् परिमिमीते बृहत्या प्राचीं गायत्र्या पुरस्ताच्छन्दोभिरेवैनाँ सर्वतः परिमिमीते विराज्येव प्रतितिष्ठति यद्विराजमभिसंपादयति स्फ्येन स्तम्बयजुर्हरतीन्द्रो वै वृत्राय वज्रं प्राहरत् स त्रेधाभवत् स्फ्यस्तृतीयं यूपस्तृतीयं रथस्तृतीयं वज्रो वै स्फ्य एतावती पृथिवी यावती वेदिर्वज्रेणैव पृथिव्या भ्रातृव्यं निर्भजति त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति ॥ तूष्णीं चतुर्थँ हरत्यपरिमितादेवैनं निर्भजतीन्द्रो वै वृत्रँ हत्वा तमनयाभिन्यदधाद्यं तूष्णीं चतुर्थँ हरत्यनयैव भ्रातृव्यमभिनिदधाति मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्त्युद्धन्ति तस्माच्छिरश ओषधयः पराभवन्ति बर्हिस्स्तृणाति तस्माद्वसन्ता पुनराभवन्त्यपाररुमदेवयजनं पृथिव्या देवयजनाज्जहीति भ्रातृव्यो वा अररुर्भ्रातृव्यमेव पृथिव्या अपहन्ति द्रप्सस्ते द्यां मा स्कानिति यो वा अस्या रसस्स द्रप्सस्तमिमाः प्रजा उपजीवन्ति तमेवास्यां यच्छति तस्यास्कन्दाया-ररुर्द्यां मा पप्तदिति भ्रातृव्यो वा अररुर्भ्रातृव्यमेव स्वर्गाल्लोकात् प्रतिनुदते ॥ विषाद्वै नामासुर आसीत् स पृथिवीं विषेणालिम्पत् तस्या न कश्चनाश्नाद्य आश्नात् सोऽरुप्यद्यदुद्धन्ति यदेवास्या अमेध्यमयज्ञियं तदपहन्त्यपि मूलमनुखनेदाविद्धस्य निष्कृत्या अधो दूरं खनेदधो वा अस्या वीर्यं वीर्यस्याभितृत्त्यै तस्मात् सुकृष्टे व्रीहियवाः पच्यन्ते तदाहुरुत्तरार्धे वा अस्या वीर्यं तदिमाः प्रजा उपजीवन्ति तस्मान्नातिखेयेत्या प्रतिष्ठायाः खनेद्यजमानस्य प्रतिष्ठित्यै दक्षिणत उद्धनां कुर्या-द्देवयजनस्य रूपं रक्षसामपहत्यै पुरीषवतीं पशवो वै पुरीषं पशूनेवावरुन्द्धे ॥४॥ ८–१०

स्फ्येन वेदिं परिगृह्णाति वज्रो वै स्फ्य एतावती पृथिवी यावती वेदिर्वज्रेणैव पृथिव्या भ्रातृव्यं निर्भज्य च्छन्दोभिरात्मने परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण च्छन्दसेति दक्षिणतस्तेजो वै ब्रह्म गायत्री तेजसैवैनं दक्षिणतः परिगृह्णाति रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन च्छन्दसेति पश्चादोजो वै वीर्यं त्रिष्टुबोजसैवैनां पश्चात् परिगृह्णात्यादित्यास्त्वा परिगृह्णन्तु जागतेन च्छन्दसेत्युत्तराज्जागता वै पशव उत्तरादायतनाः पशवः पशुभ्य एवैतदायतनं करोति पशूनां धृत्या अथो तेजसा चोभयतः पशून् परिगृह्णाति पुरा क्रूरस्य विसृपो विरप्शिन्निति यद्वा अस्यास्तेजो यज्ञियं तददश्चन्द्रमसि तदेवावरुन्द्धे ॥ इध्माबर्हिषी प्रोक्षति शुष्काणि वा एतान्यमेध्यान्यारण्यादाहृतान्यापो मेध्या यज्ञिया यदद्भिः प्रोक्षति मेध्ये एवैने यज्ञिये करोति वेदिं प्रोक्षति मेध्यामेवैनां यज्ञियां करोत्यथो यदेवास्या

[४] कपि. ३९,१ । वा १,२५—२६ । काण्व. १,४१,४३ ।

[५] मै. ३,८,५—६ (१५—१६) । कपि. ३९,२ । वा. १,२७—२८ । काण्व. १,४४—४५ ।

उद्घ्नन्तः क्रूरं कुर्वन्ति तच्छमयति बर्हिस्स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयति सर्वां वेदिमनुस्तृणाति तस्मात् पृथिवीँ सर्वामन्वोषधयो बहुलँ स्तृणीयादक्षोधुका यजमानो भवत्यनग्नंभावुकोऽध्वर्युर्बर्हिषि प्रस्तरँ सादयति यजमानो वै प्रस्तरः प्रजा बर्हिर्यजमानमेव प्रजास्वधिसादयत्युत्तरँ सादयत्युत्तरो हि यजमानो यजमानाद्व्यावृत्तँ सादयति व्यावृत्तो हि यजमानो यजमानेनाक्त्वा प्रस्तरे प्रहरति यजमानो वै प्रस्तरो हविर्भूतमेवैनँ स्वर्गं लोकं गमयति नात्यग्रं प्रहरेद्यदत्यग्रं प्रहरेद्व्रणकेशीर्जनयस्स्युरभ्यासरिणीर्नंशुका अग्रमग्र आदीपयत्यग्रेणैवाग्रँ समर्धयत्यृजुं प्रहरेत् स्वर्गकामस्यर्जुमेवैनँ स्वर्गं लोकं गमयति यं द्विष्यात् तस्य ह्वर्छयेत् स्वर्गादेवैनं लोकाद्ध्वर्छयति ॥ न्यञ्चं प्रहरेद्वृष्टिकामस्य या वा इव आहुतिरुदयते सामुतो वृष्टिं च्यावयति स्वयैवाहुत्या दिवो वृष्टिं निनयत्यूर्ध्वं प्रहरेद्यदि कामयेत पुमानस्य पुत्रो जायेतेत्यूर्ध्व एव हि पुमान् प्रथयित्वा प्रहरेद्यदि कामयेत स्त्री जायेतेत्येवमेव हि स्त्री प्रथितेव यजमानो वै प्रस्तर एति वा एतदस्माल्लोकाद्यत् प्रस्तरं प्रहरति यत् तृणमुपगृह्णात्यस्मिन्नेवैनं लोके यच्छत्यनुप्रहरति यदेवास्यावमृशन्तः क्रूरं कुर्वन्ति यद्विच्छिन्दन्तस्तच्छमयत्यगा३नग्नी३दित्यगन्नित्यगन् स्वर्गं लोकमित्येवैतदाह श्रावय श्रौषदिति स्वर्गमेवैनं लोकं गतँ श्रावयति ॥५॥ ११-१३

देवाश्च वा असुराश्च संयत्ता आसँस्तान् यदस्यास्तेजो यज्ञियमासीत् तत् सिंहीरूपमिव महिषीरूपमिव भूत्वान्तरातिष्ठत् तेऽविदुर्यतरान्वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां देवा उपामन्त्रयन्त साब्रवीद्वार्यं वृणै मामेव पूर्वामग्नेराहुतिरश्नवाता अथ मया यूयँ सर्वान् कामान् व्यश्नवाथेति सा देवानुपावर्तत ततो देवा अभवन् परासुरा अभवन् यस्यैवं विदुष उत्तरवेदिर्न्युप्यते यश्चैवं विद्वान्निवपति भवत्यात्मना परास्य भ्रातृव्यो भवति दश पश्चात् तिरश्ची पदानि भवन्ति दशोभयतः प्राच्यपरिमिता पुरस्ताद्विराजा संमिता यद्वा असुराणां वित्तमासीत् तद्देवा वेद्याविन्दन्त तद्वेद्या वेदित्वं यद्वेद्यं तदुत्तरवेद्या तदुत्तरवेद्या उत्तरवेदित्वं यस्यैवं विदुषो वेदिश्च क्रियत उत्तरवेदिश्च न्युप्यते वित्तं चैव वेद्यं च भ्रातृव्यस्य विन्दते प्रजापतेर्वै नासिकाशीर्यत सोत्तरवेदिरभवद्यज्ञः प्रजापतिर्यदुत्तरवेदिं निर्वपति प्रजापतेरेव नासिकां मुखतः प्रतिदधाति चत्वारि वा एतस्या नामानि नासिका कशारिस्सिँह्युत्तरवेदिस्तप्तायन्यसीति तप्ता ह्येनानैद्वित्तायन्यसीति वित्ता ह्येनानैदवतान् मा नाथितमिति नाथितान् ह्येनानावदवताद्व्यथितमिति व्यथितान् ह्येनानावदग्ने अङ्गिरो योऽस्यां पृथिव्यामसि यो द्वितीयस्यां यस्तृतीयस्यामिति यदेवास्यैषु लोकेषु श्लिष्टं यन्न्यक्तं तदवरुन्द्धे विदेदग्निर्नभो नामेति॥ यद्वा अग्नेर्वामं वसु तन्नभस्तेनेमां पृथिवीं प्राविशज्जानुदघ्नमधस्तस्माज्जानुदघ्नं खेयं तस्यैव वामस्य

---

[६] मै. ३,८,५ (१५)। कपि. ३९,३—४। वा ५,९—१०; ३३,३०। काण्व. ५,१३—१४; ३२,३०। [ विभ्राड् बृहत् पिबतु०। ऋ. १०,१७०,१; सा. ६२८, १४५३ ]

वसोरनुवित्त्यै सिँह्यसि महिष्यसीति सिँहीरूपमिव हि तन्महिषीरूपमिव भूत्वान्तरातिष्ठद्देवेभ्यः प्रथस्वेति प्रथयत्येवैनान् देवेभ्यः कल्पस्वेति कल्पयत्येवैनान् देवेभ्यश्शुन्धस्वेति शुन्धत्येवैनान् देवेभ्यश्शुम्भस्वेति शुम्भत्येवैनां विभ्राड् बृहत् पिबतु सोम्यं मध्वित्यन्तान् कल्पयति देवपात्रं वा उत्तरवेदिर्देवपात्रेणैव देवतास्तर्पयत्यथो देवताभ्य एव देवपात्रं निवेदयति ॥ यतीन् वै सालावृकेया आदँस्त आदीयमानास्संमृश्यमाना उत्तरवेदिं समुदक्रामँस्तान्नाभ्यधृष्णुवँस्तेषामेकोऽस्मयत तत एनानभ्यधृष्णुवँस्तेषामेकैकमावर्हमादँस्तस्मान्न मोघहासिना भव्यं यन्निस्सारयति यदेवास्या अभिमृतममेध्यं तन्निस्सारयति प्रोक्षत्येतावती वा इयं पृथिव्यासीद्यावत्युत्तरवेदिस्ताँ समन्तं रक्षाँसि संप्राकम्पन्त तानि देवा विनुद्यैताभिर्देवताभिस्समन्तं परिन्यदधुर्यत् प्रोक्षत्येतद्देवत्या वा इमा दिशो रक्षाँस्येव विनुद्यैताभिर्देवताभिस्समन्तमात्मानं परिनिदधाति ॥ गोपीथायैतद्वा एतां पूर्वामग्नेराहुतिमश्नुते यन्माघारयत्यथादोऽब्रवीन्मामेव पूर्वामग्नेराहुतिरश्नवाता अथ मया यूयँ सर्वान् कामान् व्यश्नवाथेत्यथ वा एषां तर्ह्यसुरास्सपत्ना आसँस्तेऽकामयन्त सपत्नान् सहेमहीति सिँह्यसि सपत्नसाही स्वाहेति सपत्नाँस्तेनासहन्त तेऽकामयन्त पशून् विन्देमहीति सिँह्यसि रायस्पोषवनिस्स्वाहेति पशूँस्तेनाविन्दन्त तेऽकामयन्त प्रजां विन्देमहीति सिँह्यसि सुप्रजावनिस्स्वाहेति प्रजां तेनाविन्दन्त तेऽकामयन्तादित्यास्स्यामेति सिँह्यस्यादित्यवनिस्स्वाहेत्यादित्यास्तेनाभवँस्तस्मादिमा आदित्याः प्रजास्तेऽकामयन्त यज्ञियास्स्यामेति सिँह्यस्यावह देवान् देवायते यजमानाय स्वाहेति यज्ञियास्तेनाभवँस्तेऽकामयन्त स्वर्गं लोकमियामेति भूतेभ्यस्त्वेति ॥ देवा वै भूतास्स्वर्गमेव तेन लोकमायन् यस्यैवं विदुष उत्तरवेदिर्व्याघार्यते यश्चैवं विद्वान् व्याघारयति सर्वानेवैतया कामान् व्यश्नोतीमे वै लोका आधृता आसँस्ते संप्राकम्पन्त तान् देवा एतैर्यजुर्भिर्व्यदृंहन् यदेतैः परिधीन् परिदधात्येषां लोकानां विधृत्या अग्निर्वै देवेभ्योऽपाक्रामत् स यां प्रथमां प्रावसत् तां पशुष्ववसद्वृष्णेरन्तराशृङ्गं तस्मादूर्णास्तुका भवति यां द्वितीयां तां वनस्पतिषु पीतुदारौ तस्मात् पीतुदारुर्भवति यां तृतीयां तामोषधिषु सुगन्धितेजने तस्मात् सुगन्धितेजनो भवति यदेते संभारा भवन्ति यदेवास्यात्र श्लिष्टं यन्न्यक्तं तदेतैस्संभरति स पुनरुपावर्तमानश्शरीरमधूनुत तस्य यन्माँसमासीत् तद्गुल्गुल्वभवद्यदस्थि स पीतुदारुर्यानि लोमानि स सुगन्धितेजनो यदेते संभारा भवन्ति यदेवास्यात्र श्लिष्टं यन्न्यक्तं तदेतैस्संभरत्यग्नेस्सर्वत्वायाग्नेः कुलायमस्यग्नेः पुरीषमसीति कुलायमिव ह्येतत् पुरीषमिव यज्ञः प्रत्यष्ठादिति यज्ञस्य प्रतिष्ठित्यै ॥६॥ १४-१८

चत्वारो वै देवानाँ होतार आसन् भूपतिर्भुवनपतिर्भूतानां पतिर्भूतस्तेषां त्रयो होत्रेण ग्रामीय-

[७] मै. ३,८,६ (१७) । कपि. ३९,५ । वा. १,२; ८,६० । काण्व. १,३; ९,४६ ।

न्वाथो यद्भूत उदशिष्यत स प्रभयादबिभेत् स न्यलयत स समुद्रं प्राविशत् स यत् समुद्रे भस्मा-
कुरुत स एष कर्दमस्तं मत्स्यः प्राब्रवीत् तमशपदभिगन्ता त्वा हतादिति तस्मान्मत्स्यमभिगन्ता
हन्ति शप्तो हि स तत उद्द्रुत्य नडं प्राविशत् तस्मान्नडो दग्धः क्रूर इव वर्वरस्तमश्वश्श्वेतोऽवमृश-
न्नन्वविन्दत् तं प्रत्यौषत् तस्मात् स प्रत्युष्टमुखस्सोऽक्रन्दत् सा या वागासीत् स सुश्लोकश्शकुनि-
रभवत् तस्माद्धँ स नष्टैषमभ्यवक्रन्दति विन्दत्येवा तं देवा अनुविद्यानयन्निदं नो होता भविष्यसीति
स प्रभयादबिभेत् तं भ्रातरः प्रमीता अब्रुवन् वयं त इतो वर्म भविष्यामो देवेषु नो भागधेय-
मिच्छेति तेऽब्रुवन् यत्किंच हविर्भूतं बहिष्परिधि स्कन्दात् तदेषां भागधेयमित्येते वाव ते परिधयो
यदि हविर्भूतं बहिष्परिधि स्कन्देद्भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्यनुमन्त्र-
येतैते वै देवास्स्कन्नभागा य एव देवास्स्कन्नभागास्तानेनद्गमयति यज्ञो वा एतेषां मध्यमो यज-
मानो दक्षिणार्ध्यो भ्रातृव्य उत्तरार्ध्यस्स्थविष्ठं मध्यमं कुर्याद्वर्षिष्ठं दक्षिणार्ध्यं क्रधिष्ठमुत्तरार्ध्यँ
स्थविष्ठं प्रथमं परिदधाति प्रथमो हि यज्ञो वर्षिष्ठं दक्षिणार्ध्यं यथा यजमानो दक्षिणतो यज्ञमुप-
सीदत्येवं तत् पश्चेवोत्तरार्ध्यं पश्चेव हि भ्रातृव्यो यज्ञेनैवैतद्यजमानं प्रतरां करोति यज्ञेन भ्रातृव्यमप-
नुदतेऽक्त्वा दक्षिणार्ध्ये प्रहरति मुखत एव यजमानं प्रीणात्यथो हविर्भूतमेवैनँ स्वर्गं लोकं गमयत्यु-
पवपत्युत्तरार्ध्यं भ्रातृव्यमेवं तदुपवपत्यथ ह स्माहायलः काहोडिः किमु स यजेत यो यज्ञस्य स्कन्नेन
न वसीयानित्स्यादिति यत्र स्कन्देत् तदपो निनीय भूपतये स्वाहेति प्राक् प्रादेशेन मिमीत भुवन-
पतये स्वाहेति दक्षिणा भूतानां पतये स्वाहेति प्रत्यग्जनं वा एतद्यज्ञस्यैति यत् स्कन्दतीयं वाव
जनो यो वा इमामेति न स पुनरागच्छति जनमेवैतस्य यज्ञस्य यां कामयत आशिषं तामवरुन्द्धे ॥
दिशो मिमीते दिशो वै यज्ञस्य स्कन्नस्याशीर्गच्छति दिग्भ्य एव यज्ञस्याशिषमवरुन्द्धे प्रादेशेन
मिमीत एतावद्वै पुरुषे वीर्यं यावदस्य प्राणा अभि यावदेवास्मिन् वीर्यं तेनैनत् संभरत्यपो नि-
नयति म्रियते वा एतद्यज्ञस्य यत् स्कन्दत्यद्भिस्तान्तमभिषिञ्चन्त्यापस्सर्वा देवता देवता एवैनत्
प्रवेशयति यदि प्रातस्सवने स्कन्देद्देवाञ्जनमगन् यज्ञस्तस्य यज्ञस्य मेष्टस्य वीतस्य द्रविणेहागम्या
इत्यनुमन्त्रयेत यदि मध्यन्दिनेऽप ओषधीर्जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या
इत्यनुमन्त्रयेत यदि तृतीयसवने पितॄञ्जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या इत्यनु-
मन्त्रयेत यदि नक्तं द्यावापृथिवी जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या इत्यनुमन्त्रयेत
यदि तिरोह्न्येषु गन्धर्वाञ्जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या इत्यनुमन्त्र-
येतैता वै देवता यज्ञस्य स्कन्नस्याशीर्गच्छत्येता एव देवता यथादेवतं प्रत्युपसृत्य यां कामयते
यज्ञस्याशिषं तामवरुन्द्धे यस्यैवं विदुषो यज्ञस्य स्कन्नमनुमन्त्रयन्ते यश्चैवं विद्वाननुमन्त्रयते
वसीयान् भवति ॥७॥　　　　१९-२०

हविर्धाने प्रणेनेक्ति मेध्ये एवैने यज्ञिये करोति ग्रन्थीन् विचृतन्ति देवग्रन्थीनेव ग्रन्थिष्यन्तो मनुष्यग्रन्थीन् विचृतन्ति हविर्वै हविर्धाने स्तीर्णे बर्हिषि हविरासादयन्ति तस्मात् स्तीर्णे बर्हिषि हविर्धाने प्रवर्तयन्ति पत्न्युपानक्ति पत्न्या एवैष यज्ञस्यान्वारम्भोऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय त्रिः प्राचीनमुपानक्त्यसंख्यातँ हि तिरश्चीनं मनुष्या उपाञ्जन्ति व्यावृत्त्यै यजुषोपानक्त्ययजुषा हि मनुष्या उपाञ्जन्ति व्यावृत्त्यै दक्षिणत उपानक्ति दक्षिणतो ह्येते उदीची मनुष्यलोकमुपावर्तेते मानुषमेवैनयोरुत्तरं करोति ॥ यदुत्तरादुपाञ्ज्यान्नान्यतरं चन लोकमुपावर्तेयातां स्वर्गाय वा एते लोकाय प्रवर्तेते यद्धविर्धाने युञ्जते मन इति सावित्र्या जुहोति सवितृप्रसूते एवैने स्वर्गं लोकं गमयति हविर्वै हविर्धाने न हविरनभिघृतं मेधमश्नुते यदभ्यनक्त्यभ्येवैने घारयति मेध्यत्वाय शुष्को वा एष निर्ऋतिगृहीतो यदक्षो नभ्याभ्यामुभयतो बद्ध उपधिभ्याँ संदष्टो यदुपानक्ति मेध्यमेवैनं यज्ञियं करोति घोषो वै नामासुर आसीत् स वनस्पतीन् प्राविशत् तं देवा गृहीत्वोभयतोऽबध्नन् यत् क्ष्वेदेदसुर्या वाग्यज्ञमववदेद्रक्षाँसि यज्ञमन्ववेत्य हन्युरनुगृह्णन्तो यान्ति रक्षसामनववायाय वर्त्मना वै यज्ञं रक्षाँस्यन्ववेत्य जिघाँसन्ति वैष्णव्या वर्त्मञ्जुहोति विष्णुर्वै यज्ञो विष्णुनैव यज्ञाद्रक्षाँस्यपहन्ति व्यृद्धा वा एषाहुतिर्यामनग्नौ जुहोति यद्धिरण्यमुपास्य जुहोत्यग्निमत्येव जुहोति समृद्ध्यै स्वर्गं वा एते लोकं प्रेतो यद्धविर्धाने गायत्र्या दक्षिणस्य वर्त्मञ्जुहोत्ययस्यामेवैने आक्रमयति त्रिष्टुभोत्तरस्यान्तरिक्ष एवैने आक्रमयत्याहवनीयं गमयति स्वर्गमेवैने लोकं गमयति स्वर्गो हि लोक आहवनीयस्त्रीन् पुरस्तात् प्रक्रमानुच्छिंषति त्रय इमे लोका इमानेवास्मिँल्लोकानुच्छिंषति ॥ दिवो वा विष्ण उत वा पृथिव्या इति दक्षिणस्य हविर्धानस्य मेथीमुपमिनोति विष्णुर्वै यज्ञो मुखत एव यज्ञस्याशिषमवरुन्द्धे तां परुषि परुष्याशासान एति विष्णोर्नु कं वीर्याणि प्रवोचमित्युत्तरस्य वैष्णवं वै हविर्धानँ स्वयैवैनद्देवतया समर्धयति विष्णोः पृष्ठमसीति च्छदिरुपरिष्टादधिनिदधातीदमेव तेन करोति यदिदमुत्तरार्धँ शीर्ष्णो विष्णो रराटमसीति पुरस्ताद्रराटमेव तेन करोति विष्णोश्श्नप्त्रे स्थ इत्यभितश्श्नप्त्रे एव तेन करोति ॥ तिर्यञ्चं पुरस्ताद्वँशं विषीव्यन्ति तस्मात् तिरश्ची पुरुषस्य भ्रुवौ विष्णोस्स्यूरसि विष्णोर्ध्रुवोऽसीति वैष्णवं वै हविर्धानँ स्वयैव देवतया सीव्यति स्वया देवतया ग्रन्थिं ग्रथ्नाति यं प्रथमं ग्रन्थिं ग्रथ्नीयात् तं प्रथमं विचृतेदात्मनो गोपीथाय यदन्यं पूर्वं विचृतेदमेहेनाध्वर्युः प्रमीयेतोपरिष्टाच्छम्यास्संनह्यन्ति पश्चादुपमिन्वन्त्यधस्ताद्धि मनुष्या युञ्जन्ति पुरस्तादुपमिन्वन्ति व्यावृत्त्यै ॥ शिरो वा एतद्यज्ञस्य यद्धविर्धानं पुरस्ताद्वर्षीयो भवति पश्चात् क्रधीयस्तस्मात् पुरस्तात्

[८] मै ३,८,७ (१९,२१) । कपि. ४०,१ । वा. ५,१४,१९-२१; ११,४; ३७,२ । काण्व. ५,१९,२४—२७; १२,४; ३७,२ । तै. सं. ६,२,९ । [युञ्जते मन० : ऋ. ५,८१,१; तै. सं. १,२,१३,१; ४,१,१,१; तै. आ. ४,२,१ । दिवो वा विष्ण० । अथर्व ७,२६,८ । विष्णोर्नु कं वीर्याणि० । ऋ १,१५४,१; अथर्व. ७,२६,१, तै. सं. १,२,१३,२ ]

पुरुषस्य शिरो वर्षीयः पश्चात् ऋधीयो वैष्णवमसि विष्णवे त्वेति संमितमभिमन्त्रयते वैष्णवं वै हविर्धानँ स्वयैवैनद्देवतया समर्धयति प्र तद्विष्णुस्स्तवते वीर्येणेति त्रीन् प्रक्रमान् यजमानं प्राञ्चं प्रक्रमयति विष्णुमेवैनं भूतमिमांल्लोकान् गमयति ॥८॥ २१-२५

शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा दक्षिणस्य हविर्धानस्याधस्तात् परिलिखत्येतद्वा एतयोः पर्व मुखत एव यज्ञस्य प्राणान् प्रतिदधाति तस्मान्मुखतः प्राणाश्चतुरः परिलिखति चत्वारो हि प्राणाः प्रादेशं प्रादेशं विपरिलिखत्येतावदेतावद्धीमेऽभि प्राणा असंभिन्दन्तः खनन्ति प्राणानामसंभेदाय यत् संभिन्द्यात् प्राणान् संभिन्द्यात् प्रमीयेत तान् पर एकधा संतृन्दन्ति तस्मात् प्राणाः पर एकधा संतृण्णा देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते सवितृप्रसूत एवैनान् देवताभिरादत्त इदमहं रक्षसो ग्रीवा अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव ग्रीवा अपिकृन्ततीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामीति ॥ प्राणा वा उपरवाः प्राणेभ्य एव भ्रातृव्यमन्तरेति ताजक् प्रधन्वति बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति बृहतीँ ह्येष इन्द्राय वाचं वदति रक्षोहणं वलगहनं वैष्णवीमिति रक्षसामपहत्यै यद्वैष्णवीमिति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयति देवाश्च वा असुराश्च व्यभ्यचरन्त तेऽसुरा देवानां प्राणेषु वलगान्न्यखनँस्तान् बाहुमात्रेऽन्वविन्दँस्तस्माद्बाहुमात्राः खेयाः प्राणानामनुवित्त्या इदमहं तान् वलगानुद्वपामि यान्नस्समानो यानसमानो निचखानेति यदेवास्यात्र शप्तं यदभिचरितं तदनुविद्योद्वपति तस्मादेते भिषज्यास्तस्मादामयाविनमनुमर्शयन्ति ॥ सम्राडसि स्वराडसीति साम्राज्यमेवैतैरुपैति गायत्रेण च्छन्दसावबाढो यं द्विष्मस्त्रैष्टुभेन जागतेनेत्येतावन्ति वै छन्दाँसि च्छन्दोभिरेव भ्रातृव्यमवबाधते किमत्र भद्रं तन्नौ सहेत्याशिषमेवाशास्ते निरस्तो वलगोऽवबाढो दुरस्युरिति यथायजू रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवानिति रक्षसामपहत्यै यद्वैष्णवानिति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयति रक्षोघ्नो वलगघ्नोऽवसिञ्चामि वैष्णवानिति रक्षसामपहत्या अथो यदेवैषां खनन्तः क्रूरं कुर्वन्ति तच्छमयति यद्वैष्णवानिति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयति रक्षोघ्नो वलगघ्नोऽवस्तृणामि वैष्णवानिति रक्षसामपहत्यै यद्वैष्णवानिति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयत्यवसिञ्चत्यव च स्तृणाति तस्मात् प्राणा अन्तरतो लोमशा उदन्वन्तो रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी इति रक्षसामपहत्यै यद्वैष्णवी इति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयत्यृक्षे वा एते तष्टे अमेध्ये आपो मेध्या यज्ञिया यदद्भिः प्रोक्षति मेध्ये एवैने यज्ञिये करोति हनू वा एते यज्ञस्य यदधिषवणे अवितृण्णे भवतस्तस्माद्धनू अवितृण्णे पुरस्ताद्दँहीयसी पश्चाद्वरीयसी एवमेव हि

[ प्र तद्विष्णुस्स्तवते० । ऋ १,१५४,२; अथर्व. ७,२६,२—२३; तै. ब्रा. २,४,३,४, नि. १,२०]

[९] मै. ३,८,८ (२२) । कपि. ४०,२ । वा. ५,२२--२६; ६,१ । काण्व. ५,२८--३३; ६,१ । तै. सं. ६,२,११ ।

[देवस्य त्वा सवितुः० । अथर्व. १९,५१,२, ऐ. ब्रा. ८,७]

हनू त्र्यङ्गुलमन्तराधिषवणे भवति तस्मादियमन्तरा हनू रास्नाकेव रक्षोहणौ वलगहना उपदधामि वैष्णवी इति रक्षसामपहत्यै यद्वैष्णवी इति यज्ञो वै विष्णुस्स्वयैवैने देवतया समर्धयति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति रक्षसामपहत्यै यद्वैष्णवी इति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयति ॥ पर्यूहति तस्माद्धनू अनग्रे अशुषिते बस्वैरोष्ठाभ्याँ सृक्काभ्याँ श्मश्रुभिश्शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हनू अधिषवणे दन्ता ग्रावाणो जिह्वाधिषवणं चर्म मूर्धा द्रोणकलशो यज्ञः प्रजापतिर्मुखतो वा इदं प्रजापतेस्सोमं निष्पिबन्ति तस्माद्दजीषं जग्धमिव प्सातमिवैवँ हि दद्भिः प्सातं भवति यो विराजं यज्ञमुखे दोह्यां वेद दुह एनामियं वाव विराट् तस्या एतदूधो यदधिषवणे स्तना उपरवा वत्सा ग्रावाणस्त्वगधिषवणं चर्मर्त्विजो दुहन्ति य एवं विराजं यज्ञमुखे दोह्यां वेद दुह एनाम् ॥९॥ २६-२९

शिरो वा एतद्यज्ञस्य यद्धविर्धानं ग्रीवा आग्नीध्रमुदरँ सद ऊर्गुदुम्बरो यत् सदस्यौदुम्बरीं मिनोत्यूर्जमेव मध्यतो दधाति यजमाने च प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयत्यस्मै वै लोकायौदुम्बरी मीयतेऽमुष्मै यूपस्तस्मादितः पराञ्चं यूपं प्रोक्षत्यमुतोऽर्वाचीमौदुम्बरीमनयोर्लोकयोर्विधृत्या ऊर्ग्वा उदुम्बरो यदमुतोऽर्वाचीमौदुम्बरीं प्रोक्षत्यमुत एवार्वाचीमूर्जं च्यावयत्यस्मिन्नेव लोक ऊर्जं न्यनक्ति प्रजापतेर्वा उद्गातोर्गुदुम्बर्याँ श्रयते प्रजास्वेवोर्जं न्यनक्ति देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते सवितृप्रसूत एवैनां देवताभिरादत्त इदमहं रक्षसो ग्रीवा अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति ॥ शुन्धन्तां लोकाः पितृषदना इति शुन्धत्येवैनमथो यदेवास्य खनन्तः क्रूरं कुर्वन्ति तच्छमयति यवमतीरवसिञ्चत्यन्नं वै यवा ऊर्गुदुम्बरोऽन्न एवोर्जं दधाति पितृषदनं त्वा लोकमास्तृणामीति यद्वा एतामपबर्हिषं मिनुयुर्गर्तमितस्यादस्या उत्तरार्ध ओषधयोऽस्या एवैनामुत्तरार्धे मिनोत्यगर्तमितमेवाकरुद्द्याँ स्तभानान्तरिक्षं पृण दृँहस्व पृथिव्यामिति दृँहत्येवैनां नितानस्त्वा मारुतो निहन्त्विति मनो वै नितानः प्राणा मारुतास्स्वयैवैनां देवतयावहरति ॥ नितानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैवैनां मिनोति मित्रावरुणयोर्ध्रुवेण धर्मणेति मित्रेण वा इमाः प्रजाश्शान्ता वरुणेन विधृताः क्लृप्त्या एव विधृत्यै ब्रह्मवनिं त्वा क्षत्रवनिमित्याशिषमेवाशास्ते ब्रह्म दृँह क्षत्रं दृँहेत्याशिषमेवास्मा आशिष्टां दृँहति घृतेन द्यावापृथिवी आपृणेथामिति घृतेन द्यावापृथिवी व्युनत्ति तस्मादोषधयोऽनभ्यक्ता रेभन्ते घृतेनौदुम्बरीमभिजुहोति तेजो वै घृतमन्नमुदुम्बरोऽन्न एव तेजो दधात्यान्तमेव वनस्पतिषु चौषधिषु च रसं दधाति ॥ विश्वजनस्य च्छायासीति विश्वजनस्य ह्येषा छाया गोत्राद्गोत्राद्ध्येतत् संप्रसर्पन्त्यौदुम्बरीमभि

---

[१०] मै. ३,८,९ (२३) । कपि. ४०,३ । वा. ५,२६--२७,३० । काण्व. ५,३३--३६,३८। [देवस्य त्वा सवितुः० । अथर्व. १९,५१,२; ऐ. ब्रा. ८,७]

च्छदींषि संमुखानि कुर्याद्दैवीर्वा एता विशो यदोषधय ओषधयश्छदींषि यजमान औदुम्बरी यजमानमेव प्रजा अभिसंमुखाः करोति च्छदिर्भवत्यथान्तर्वर्तस्तस्मात् पुरुषस्य माँसमथ पर्शुरुदरं वा एतद्यज्ञस्य यत् सदस्तिर्यङ् मिन्वन्ति तस्मात् पुरुषेऽशितं ध्रियते यदन्वङ् मिनुयुर्न पुरुषेऽशितं ध्रियेत पुरुषेण वै यज्ञस्संमितो यज्ञेन पुरुषो यत् सद उभयतश्छिद्रं तस्मात् पुरुष उभयतश्छिद्रो विषीव्यन्ति तस्मात् पुरुषोऽन्तरतो विष्यूत इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसीत्यैन्द्रं वै सदस्स्वयैव देवतया सीव्यति स्वया देवतया ग्रन्थिं ग्रथ्नात्यैन्द्रमसीन्द्राय त्वेति संमितमभिमन्त्रयत ऐन्द्रं वै सदस्स्वयैवैनं देवतया समर्धयति ॥ नव च्छदींषि कुर्याद्यद्यग्निष्टोमस्स्यात् तेजसा त्रिवृता संमितं पञ्चदश यद्युक्थ्यः पञ्चदशेन संमितं वज्रः पञ्चदशो वज्रेण संमितँ सप्तदश यद्यतिरात्रस्सप्तदशेन संमितं प्रजापतिस्सप्तदशः प्रजापतिना संमितमेकविंशतिं प्रतिष्ठाकामस्य कुर्यादेकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठित्या अथो यज्ञक्रतूनामेव व्यावृत्त्यै या अन्ततस्स्थूणास्ताः क्षधिष्ठाः कुर्याद्यदि कामयेत वर्षेदिति नीचैरिव हि द्यौर्वर्षिष्यन्ती भवति ता वर्षिष्ठाः कुर्याद्यदि कामयेत न वर्षेदित्युच्चैरिव हि द्यौरवर्षिष्यन्ती भवति यानि दक्षिणानि च्छदींषि तान्युत्तराणि कुर्याद्यजमानलोके वा एतानि यानि दक्षिणानि भ्रातृव्यलोक उत्तराण्युत्तरमेव यजमानमयजमानाद्भ्रातृव्यात् करोत्युत्तरो हि यजमानोऽयजमानात् ॥१०॥ ३०-३४

[१८८२]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायामिषुर्नाम पञ्चविंशं स्थानकं संपूर्णम् ॥२५॥



अथ षड्विंशं स्थानकम् ।

## धिष्ण्यम् ।

धिष्ण्या न्युप्यन्तेऽनयोर्लोकयोर्विधृत्यै न्यन्य उप्यन्ते नान्ये न्युप्यन्त इमं तैर्लोकं दाधार ये न न्युप्यन्तेऽमुं तैः पराङ् ह्यसौ लोकोऽनिरुक्तोऽग्निर्वै देवेभ्योऽपाक्रामत् स पृथिवीं प्राविशत् तं जानुदघ्नेऽन्वविन्दँस्तस्माज्जानुदघ्नं खेयमनुविद्यैवैतान्निवपति चात्वालान्निवपत्येषा वा अग्नेर्योनिस्स्वादेवैनान्योनेर्निवपति यो वेद्यास्तीर्थं वेद न सदस्यामार्तिमार्छति प्राचीनमाग्नीध्रात् प्रतीचीनं चात्वालात् तेन संचरेदेतद्वै वेद्यास्तीर्थं य एवं वेद न सदस्यामार्तिमार्छति न प्रत्यङ् सदोऽतीयादध्वर्युरुदरं वा एतद्यज्ञस्य यत् सद उदरं यज्ञस्य संकर्षेत् प्रमीयेत जनो वा एषोऽध्वर्योर्जनमेति जनता जनतामभीत्य जिनाति यद्यतीयादैन्द्र्या संचरेदैन्द्रं वै सदस्स्वयैव देवतया संचरति न प्राङ् हविर्धानँ शिरो वा एतद्यज्ञस्य यद्धविर्धानँ शिरो यज्ञस्य संकर्षेत् प्रमीयेत यद्यतीयाद्वैष्णव्या संचरेद्वैष्णवं वै हविर्धानँ स्वयैव देवतया संचरति तदाहुः क्षैत्रपत्ययैव संचरेदितीयं क्षेत्रस्य पतिस्तेनास्या नैत्यमुष्मिन् वै लोके सोम आसीत् तं धिष्ण्या अगोपायँस्तं गायत्र्याहरन्नेष्टापोत्रोः प्रति गोपीथं तस्मादेते होत्रे व्यृद्धे व्यृद्धसोमपीथे तस्मान्न नेष्ट्रा न पोत्रा भवितव्यं तस्मादेतौ सँसचन्ता इव यजतस्तमेतेऽन्वायन् द्वितीयानि नामानि कृत्वा तस्माद्ब्राह्मणो द्विनामार्धुकस्तं पर्यविशन् भागधेयमिच्छमानास्तेभ्य एतद्भागधेयमकल्पयद्यद्धिष्ण्यान् व्याघारयति स्वेनैवैनान् भागधेयेन समर्धयति तेषां ये नेदिष्ठं पर्यविशँस्ते सोमपीथं प्राप्नुवन्नाहवनीय आग्नीध्रो होत्रीयस्तस्मादेत उपर्युपरि वषट्कुर्वन्तं न हिँसन्ति प्रीता हि न प्रत्यङ् धिष्ण्यानतिसर्पेदध्वर्युः प्राणा वै धिष्ण्याः प्राणान् संकर्षेन्न प्रत्यङ् होतारं नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वं नाभ्याः प्राणोऽवाचीनमपानोऽपाने प्राणं दध्यात् प्रमीयेत ॥ दक्षिणतो वै देवानां यज्ञं रक्षाँस्यभ्यजयँस्तमाग्नीध्रात् पुनरपाजयन् यदाग्नीध्राद्धिष्ण्यान् विहरन्ति यज्ञस्याभिजित्यै रक्षसामपहत्यै जम्भो वै नामासुर आसीत् स देवानां यज्ञमगिरत् स आग्नीध्रमपि नागिरद्यदाग्नीध्राद्धिष्ण्यान् विहरन्ति तेन यज्ञो जीवस्तेन मेध्योऽङ्गारान् पूर्वयोस्सवनयोर्विहरन्ति शुक्रवती हि ते शलाकान् दीप्यमानाँस्तृतीयसवने तेन तच्छुक्रवत् सर्वाण्यस्य सवनानि शुक्रवन्ति भवन्ति य एवं वेद ॥ प्राचीभिर्वा आहुतिभिर्देवा अन्यानसुरान् प्राणुदन्त प्रतीचीभिरन्यान् प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते प्राचीरन्या आहुतयो हुयन्ते भ्रातृव्यस्य विनुत्त्या अग्नेर्वा एता वैश्वानरस्य प्रियास्तन्वो यद्धिष्ण्या यद्धिष्ण्यान् व्याघारयति ता एवैतत् समुद्धर्षयत्यग्निर्वा एष वैश्वानर उपावसृज्यते यदग्निष्टोमस्स ईश्वरोऽशान्तो यजमानं च सदस्याँश्चाभ्युषः प्रोर्णुवीत यजमान आत्मनोऽनभिदाहाय सवने वै यज्ञस्याशिष ईरते यत् प्रोर्णुवीत ताभ्य आत्मान-

[१] मै. ३,८,१० (२४-२६) । कपि. ४०,४ । तै. सं. ६,२,१-२; ६,५,८,६ ।

मन्तर्दध्यान्नाभिं वै पितरोऽभिसंजानत आविर्नाभिं कुर्वीताभीव कर्णौ प्रोर्णुवीत नाशीर्ष्य आत्मानमन्तर्दधाति जानन्त्वेनं पितरो घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति यावन्तः प्रसृप्तास्स्युस्ते सर्वेऽग्निष्टोममुपगायेयुरन्तो वा अग्निष्टोमोऽन्तमेवैनमागत्य समीरयन्तीन्द्रियाय वै कं ब्राह्मणस्सोमं पिबति यदुपगायेदिन्द्रियं निस्स्वरेत् तस्मान्नोपगेयँ संवत्सरो वा अग्निष्टोमो द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश मासास्संवत्सरस्संवत्सरं प्रजा अनुप्रजायन्ते यदग्निष्टोमस्य स्तोत्रेऽप उपप्रवर्तयति प्रजननाय यद्वै पत्नी यज्ञे करोति तन्मिथुनं यत् पत्न्यप उपप्रवर्तयति मिथुन एव रेतः प्रसिञ्चत्युद्गात्रा पत्नीँ संख्यापयति वृषा वा उद्गाता पत्न्याः प्रजाः प्रजायन्ते वृषाणमेवास्यामपिसृजति प्रजननायोरुभ्यां प्रवर्तयत्यूरुभ्याँ हि प्रजाः प्रजायन्ते प्रजननायान्तरत इव नु देवतान्तरतो ह्येषा वीर्यं करोति दूरमुपर्युदृहेताद्गीतमुख्यस्या जायते न दक्षिणा प्रवर्तयेन्नदक्षिणा प्रवर्तयेत् पितृभ्यः प्रजां निर्धूवेदुदीचीः प्राची प्रवर्तयत्येषा वै मनुष्याणां दिङ् मनुष्यलोक एवैना उपप्रजनयति ॥१॥ १-३

उपसद्भिर्वै देवा इमांल्लोकान् व्यजयँस्तान् वैसर्जनैरभिव्यसृजन्त यथा ग्रामस्संग्रामाद्विसृज्यते तद्वैसर्जनानां वैसर्जनत्वं प्राञ्चँ सोममिमे प्रणयन्ति प्राचीं पत्नीमुदानयन्तीमानेवैतल्लोकानभिप्रयन्त्यग्निना वै मुखेन देवा इमांल्लोकानभ्यजयन् गार्हपत्येनेममाग्नीध्रेणान्तरिक्षमाहवनीयेनामुं यद्गार्हपत्य इमं तेन लोकमभिजयति यदाग्नीध्रेऽन्तरिक्षं तेन यदाहवनीयेऽमुं तेन स्वर्गाय वा एष लोकाय प्रह्रियते द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानोऽस्यामेवैनमाक्रमयति यदाग्नेय्याग्नीध्रे जुहोत्यन्तरिक्ष एवैनमाक्रमयति यद्वैष्णव्याहवनीये जुहोति स्वर्गमेवैनं लोकं गमयति स्वर्गो हि लोक आहवनीयो रक्षाँसि वा एतमेतर्हि जिघाँसन्ति प्रच्युतमितोऽप्राप्तमदस्त्वँ सोमेति सौम्या गार्हपत्ये जुहोति सौमीरिमाः प्रजाः प्रजाभ्य एवैनं प्राह जुषाणो अप्तुरित्यप्तुमेवैनं कृत्वमामतिनयति यदाग्नेय्याग्नीध्रे जुहोत्यग्निमेवैनं कृत्वान्तरिक्षमपिनयति यद्वैष्णव्याहवनीये जुहोति स्वर्गमेवैनं लोकं गमयति स्वर्गो हि लोक आहवनीयस्सर्वेभ्यो वा एष आह्रियते मनुष्येभ्यः पितृभ्यो देवेभ्यस्त्वँ सोमेति सोम्या गार्हपत्ये जुहोति सौमीरिमाः प्रजाः प्रजाभ्य एवैनं प्राह जुषाणो अप्तुरिति पितृभ्य एवैनं प्राह यदाग्नेय्याग्नीध्रे जुहोत्यग्निस्सर्वा देवता देवताभ्य एवैनं प्राह ॥ वैष्णवो वै सोमस्तं देवतया व्यर्धयति यदन्यामन्यां देवतां करोति यद्वैष्णव्याहवनीये जुहोति स्वयैवैनं देवतया समर्धयति सर्वान् वा एतद्वरुणो गृह्णाति यद्दीक्षिते मनुष्यान् पितृन् देवाँस्त्वँ सोमेति सौम्या गार्हपत्ये जुहोति सौमीरिमाः प्रजाः प्रजा एव वरुणपाशान्मुञ्चति जुषाणो अप्तुरिति पितृनेव वरुणपाशान्मुञ्चति

---

[२] मै ३,९,१ (१)। कपि. ४०,५। पा. १,१४,१९; ४,३०; ५,६,३९-४०। काण्व. १,२०,३१; ४,४२; ५,७ ८, ४८-५०। तै. सं. ६.३.३।

यदाग्नेय्याग्नीध्रे जुहोत्यग्निस्सर्वा देवता देवता एव वरुणपाशान्मुञ्चति सोऽनृण इमांल्लोकानभिवि-
सृजमान एति तद्वैसर्जनानां वैसर्जनत्वम् ॥ तस्मादाहुरपि वा एतर्ह्यारण्येभ्यः पशुभ्यो विसृजत इत्या-
ग्नीध्रे ग्राववायव्यानि सादयति प्राञ्चँ सोमं प्रणयत्येतैर्वा एतं घ्नन्ति हन्तृभिरेवैनं व्यावर्तयति न हन्तॄन्
प्रतिपद्यते य एवं वेद पुरस्तात् प्रतिपद्येत रुद्रो वा अग्निः पशवोऽशवो रुद्राय पशूनपिदध्याद-
पशुस्स्यात् पश्चात् प्राञ्चः प्रपद्यन्ते श्रीर्वै सोमः पश्चादिव प्राङ् श्रियमाप्नोति तस्मात् पश्चात् प्राचीः
प्रजाः क्षेत्राण्यभिजयन्तीर्यन्ति पुरस्ताद्गतश्रीः प्रपद्येत पुरस्तादेव प्रत्यङ् श्रियमाप्नोतीममेव लोक-
मभि प्रतितिष्ठति पश्चात् सोमं प्रपादयन्ति पुरस्ताद्यजमानः प्रपद्यत उभयत एवास्मै श्रियं परि-
गृह्णात्युर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष एतर्ह्यदित्यास्त्वगस्यदित्यासदने सीदेत्यादित्यो वै सोमः
पृथिव्यदितिः पृथिव्या अनस्संभृतँ स्व एवैनं योनौ दधाति ॥ देव सवितरेष ते सोम इति सविता
वै देवानामधिपतिर्मनुष्या एतमतः प्राचीनं गोपायन्ति तस्मा एवैनँ संप्रयच्छति गोपीथायैतत्त्वं देव
सोम देवानुपागा इति देवो ह्येष देवानुपैतीदमहं मनुष्यान् सह प्रजया सह रायस्पोषेणेति सहैव
प्रजया पशुभिरिमं लोकमुपावर्तते नमो देवेभ्यस्स्वधा पितृभ्य इति नमो हि देवानाँ स्वधा पितॄणां
निर्द्रुहो निर्वरुणस्य पाशान्मुक्षीयेति द्रुह एवैनं वरुणपाशान्मुञ्चति स्वरभिव्यख्यमितीमे वै लोका-
स्स्वरिमानेव लोकानभिविपश्यत्यग्ने व्रतपा इत्यग्निना वा एष तन्वं विपरिधत्ते तानूनप्त्रे सैनमीश्वरा
हिँसितोरग्निनैवैतत् तन्वं यथायथं कुरुत एतर्हि वा एष देवैस्तन्वं विसृजते तद्वैसर्जनानां वैसर्जनत्वं
यात्मनस्तां पूर्वां ब्रूयाद्यदितरस्य पूर्वां ब्रूयादीश्वरो निकमो यं द्विष्यात् तस्योत्तरं ब्रूयादग्निर्वै रुद्रो
रुद्रायैवैनमपिदधाति ताजक् प्रधन्वति ॥२॥ ४-७

न दीक्षितेन होतव्यँ हविर्वै दीक्षितो रुद्रोऽग्निर्यज्जुहुयाद्धविर्भूतमात्मानं रुद्रायापिदध्याद्यन्न
जुहुयाद्यज्ञपरुरन्तरियाद्यदि क्रीतस्सोमस्स्यादीक्षितस्याग्नौ जुहुयाद्विसृष्टो हि तर्हि यज्ञः प्रेता आहु-
तयो भवन्ति यद्यक्रीतोऽरणी चाज्यं चादाय परेत्याग्निं मथित्वा वैष्णव्यर्चा यूपस्यान्ते जुहुया-
द्वैष्णवो वै यूपस्स्वयैवैनं देवतयाच्छैत्यत्यन्यानगां नान्यानुपागामित्यति ह्यन्यानेति नान्यानुपैति
यान्नाजुजोषं परि तानवृजमिति यान् हि न जुषते परि तान् वृणक्त्यर्वाक् त्वा परेभ्योऽविदं परो-
ऽवरेभ्य इत्यर्वाग्घ्येनं परेभ्यो विन्दति परोऽवरेभ्यस्तं त्वा जुषामहे वनस्पते देवयज्याया इति देव-
यज्यायै ह्येनं जुषते जुष्टं विष्णव इति यज्ञो वै विष्णुर्यज्ञायैवैनं जुष्टं करोति देवस्त्वा सविता मध्वान-
क्त्विति घृतं वै देवानां मधु मेध्यमेवैनं यज्ञियं करोत्योषधे त्रायस्वैनमिति वर्मेव करोति स्वधिते मैनँ
हिँसीरिति वज्रो वै स्वधितिरहिँसायै यः प्रथमश्शकलः परापतति तस्माहरेदेतं वा एतस्य परापतन्तं

[३] मै. ३,९,२-३ (१-३)। कपि. ४१,३। वा. ४,१; ५,४२—४३, ६,१,१५; ३७,११। काण्व. ४,१; ५,५२-५५; ६,१,२०; ३७,११। तै. सं. ६,३,३]

तेजोऽनुपरापतति सतेजसमेवैनं मिनोति ॥ यो दक्षिणावृन्न तं वृश्चेद्गर्तयेस्स य उदङ्ङावृतो न तँ स्थूण्यस्स य ऊर्ध्वशाख ऊर्ध्वशकलस्तं वृश्चेदेष वै यूप्यो य एव यूप्यस्तं वृश्चति योऽशुष्काग्रो बहुशाखो बहुपर्णस्तं वृश्चेदोषधयो वै वनस्पतयः पशव ओषधयः पशुभिरेवैनँ समर्धयति यश्शुष्काग्रोऽशाखोऽपर्णस्तं वृश्चेद्यं द्विष्यात् तस्यौषधयो वनस्पतयः पशव ओषधयः पशुभिरेवैनं व्यर्धयति य उदङ् प्राङुपनतस्तं वृश्चेदेष वै मेधमभ्युपनतो य एव मेधमभ्युपनतस्तं वृश्चति द्यां मा लेखीरन्तरिक्षं मा हिँसीः पृथिव्या संभवेति वज्रो वै यूप एषां लोकानामहिँसाया उदञ्चं प्राञ्चं प्रश्रयत्येष वै देवलोको देवलोकमेवैनमुपप्रश्रयति ॥ वनस्पते शतवल्शो विरोहेत्यात्रश्चने जुहोति वनस्पतिष्वेव भूमानं दधाति तस्मादेत आव्रश्चनाद्भूयाँसो जायन्ते सहस्रवल्शा वि वयं रुहेमेत्याशिषमेवाशास्ते यं त्वायँ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति महते ह्येष सौभाग्याय प्रणीयते यो यज्ञाय प्रणीयते य आरोहस्तं वृश्चेद्यं द्विष्यात् तस्यायोनिर्वा एषोऽनायतनो य आरोहोऽयोनिमेवैनमनायतनं करोति यस्स्वारुत् तं वृश्चेदेष वै योनिमानायतनवान् यस्स्वारुद्योनिमन्तमेवायतनवन्तं यजमानं करोति गुल्फदघ्ने वृश्चेत् परुर्हि गुल्फो यज्ञपरुषा संमितं जानुदघ्ने वृश्चेत् परुर्हि जानु यज्ञपरुषा संमितं यावत्यनक्षसङ्गस्स्यात् तावति वृश्चेद्यज्ञपरुषा संमितं पशूनामप्रतिनोदाय ॥३॥ ८-१०

पशुसंमितो भ्राष्ट्व्यो दशारत्निर्दश वै पशोः प्राणा आत्मैकादशोऽष्टा अश्रयो द्वे परुषी आत्मैकादशः पशुसंमितमेव वृश्चति स्तोमसंमितो भ्राष्ट्व्यो नवारत्निस्तेजसा त्रिवृता संमितः पञ्चदशारत्निर्भ्राष्ट्व्यः पञ्चदशेन संमितो वज्रः पञ्चदशो वज्रेण संमितस्सप्तदशारत्निर्भ्राष्ट्व्यस्सप्तदशेन संमितः प्रजापतिस्सप्तदशः प्रजापतिना संमित एकविँशत्यरत्निर्भ्राष्ट्व्य एकविँशेन संमितोऽसा आदित्यः एकविँशोऽमुनादित्येन संमितस्सप्तविँशत्यरत्निर्भ्राष्ट्व्यस्सप्तविँशेन संमितस्त्रिणवा इमे लोका एभिर्लोकैस्संमितस्त्रयस्त्रिँशदरत्निर्भ्राष्ट्व्यस्त्रयस्त्रिँशेन संमितास्त्रिँशद्देवता देवताभिस्संमितश्छन्दस्संमितो भ्राष्ट्व्यः पञ्चारत्निः पङ्क्त्या छन्दसा संमितष्षडरत्निरतिच्छन्दसा संमितस्सप्तारत्निश्शक्कर्या संमितोऽष्टारत्निर्गायत्र्या संमितो नवारत्निर्बृहत्या संमितो दशारत्निर्विराजा संमित एकादशारत्निस्त्रिष्टुभा संमितो द्वादशारत्निर्जगत्या संमितस्त्रयोदशारत्निस्साध्यैर्देवैस्संमितो बृहन्नपरिमितो भ्राष्ट्व्यो यूपाद्वै देवास्स्वर्गं लोकमायन् स्वर्गस्य लोकस्य समष्ट्यै य एव कश्च पुरुपाद्वर्षीयान् स्यात् तं वृश्चेदेषा वै यूपस्य मात्रा यावानेव यूपस्तं वृश्चति चषालं भवति चषालाद्वै देवतास्स्वर्गं लोकमायन् स्वर्गस्य लोकस्य समष्ट्या इन्द्रो वै वृत्राय वज्रं प्राहरत् तस्य यावदालब्धमासीत् तत् प्राशीर्यत तच्चषालं प्रत्यवृञ्जन् यच्चषालं भवति द्रढिम्न एवालब्ध्या अशिथिलत्वायेयद्भवत्येतावद्धि तदालब्धमासीन्न यूपस्यातिरेचयेद्यदतिरेचयेदबु-

[ वनस्पते शतवल्शो० ऋ ३,८,११; तै. सं १,३,५,१ ]

[४] मै. ३,९,२ (२) । कपि. ४१,१ ।

दिनीर्जनयस्स्युर्यावदुत्तममङ्गुलिकाण्डं तावदतिरेचयेद्यज्ञपरुषा संमितं पशूनामप्रतिनोदाय यद्वै यज्ञ-
स्यातिरिच्यते साध्यान्तद्देवानभ्यतिरिच्यते यज्ञस्य तदतिरिच्यते यद्यूपस्यातिरिच्यते साध्यानेव
तेन देवान् प्रीणात्यन्यस्य वृक्षस्य चषालं कुर्याद्यस्य च यूपस्स्याद्यं कामयेत भ्रातृव्यमस्मै जनयेय-
मिति भ्रातृव्या वा एतस्यान्ये वनस्पतयो भ्रातृव्यमेवास्य लोकमभ्यारोहयत्यलोकमेनं करोति
॥४॥ ११

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति यूपं प्रोक्षत्येभ्य एवैनं लोकेभ्यः प्रोक्षत्यस्मै वै लोका-
यौदुम्बरी मीयतेऽमुष्मै यूपस्तस्मादितः पराञ्चं यूपं प्रोक्षत्यमुतोऽर्वाचीमौदुम्बरीमनयोर्लोकयोर्विधृत्यै
देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते सवितृप्रसूत एवैनां देवताभिरादत्त इदमहं रक्षसो ग्रीवा
अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति शुन्धन्तां लोकाः पितृषदना
इति शुन्धत्येवैनमथो यदेवास्य खनन्तः क्रूरं कुर्वन्ति तच्छमयति यवमतीरवसिञ्चत्यन्नं वै यवास्तेजो
यूपोऽन्न एव तेजो दधात्यन्नं वै यवा वज्रो यूपोऽन्न एव वज्रं दधाति ॥ पितृषदनं त्वा लोकमा-
स्तृणामीति यद्वा एतमपबर्हिषं मिनुयुर्गर्तमित्स्यादस्या उत्तरार्ध ओषधयोऽस्या एवैनमुत्तरार्धे मिनो-
त्यगर्तमितमेवाकस्स्वावेशोऽस्यग्रेगा नेतृणामिति यूपशकलमवास्यत्यृक्षो वा एष तष्टोऽपशव्यस्सत्व-
चसमेवैनं मिनोति घृतेन द्यावापृथिवी आपृणेथामिति घृतेनैव द्यावापृथिवी व्युनत्ति तस्मादोषधयो-
ऽनभ्यक्ता रेभन्ते देवस्त्वा सविता मध्वानक्त्विति घृतं वै देवानां मधु मेध्यमेवैनं यज्ञियं करोति॥
सुपिप्पला ओषधीस्कृधीति चषालं प्रतिमुञ्चत्योषधीरेव फलं ग्राहयति तस्मादेता अकृष्टपच्याः
पच्यन्ते घृतेनाग्निष्ठामनक्ति तेजो वै घृतं यजमानोऽग्निष्ठास्तेजसैव यजमानँ समर्धयत्यान्तँ संततमनक्ति
तेजसस्संतत्या अविच्छेदाय यं द्विष्यात् तस्य विच्छिन्द्यात् तेजसैवैनं व्यर्धयति सर्वतोऽनक्ति सर्वत
एवैनं तेजसा समर्धयति द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृँहीरिति वज्रो वै यूप
एषां लोकानां विधृत्यै ॥ ता वां वास्तूनीति वैष्णव्यावहरति वैष्णवो वै यूपस्स्वयैवैनं देवतयावहरति
विष्णोः कर्माणि पश्यतेति वैष्णव्या कल्पयति वैष्णवो वै यूपस्स्वयैवैनं देवतया कल्पयत्यग्निं
प्रत्यग्निष्ठां कुर्यात् तेजो वा अग्निर्यजमानोऽग्निष्ठास्तेजसैव यजमानँ समर्धयति यं द्विष्यात् तस्येत्थं
वेत्थं वा नमयेत् तेजसैवैनं व्यर्धयति ब्रह्मवनिं त्वा क्षत्रवनिमित्याशिषमेवाशास्ते ब्रह्म दृँह क्षत्रं दृँहे-
त्याशिषमेवास्मा आशिष्टां दृँहति तद्विष्णोः परमं पदमिति वैष्णव्योदीक्षते वैष्णवो वै यूपस्स्वयैवैनं
देवतयोदीक्षते ॥५॥ १२-१५

---

[५] मै. ३,९,३ (३)। कपि. ४१,३। वा. ५,२६-२८, ६,१-५,२५; १३,३३; ३७,१९। काण्व. ५,३३-३६; ६,१-६,
३६, १४,३५, ३७,१८। [देवस्य त्वा सवितुः०। अथर्व. १९,५१,२; ऐ. ब्रा. ८,७। शुन्ध (०म्म०)न्तां
लोकाः०। अथर्व. १८,४,६७। विष्णोः कर्माणि०। ऋ. १,२२,१९; सा. १६७१; अथर्व. ७,२६,६; तै. सं. १,
३,६,२। तद्विष्णोः परमं पदं०। ऋ. १,२२,२०, सा. १६७२, अथर्व. ७,२६,७, तै. सं. १,३,६,२; ४,२,९,३]

अर्धं वेद्यां यूपावटस्य कुर्यादर्धं बहिर्वेदि परिमितस्य चापरिमितस्य चावरुद्ध्यै नाविरुपरस्य कुर्याद्यदाविरुपरस्य कुर्याद्गर्तमित्स्यान्नापरिवीतमवसृजेद्यदपरिवीतमवसृजेत् क्षोधुको यजमानस्स्या-न्नग्नंभावुकोऽध्वर्युरूर्ग्वै रशना मध्यं प्रतिपरिव्ययत्यूर्जमेव मध्यतो दधाति यजमाने च प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयत्यरशनं मिनुयाद्यं द्विष्यात् तस्योर्ग्वै रशनोर्जैवैनं व्यर्धयत्यूर्ध्वामुदूहेद-वाचीं यं द्विष्यात् तस्योर्ग्वै रशनोर्जैवैनं व्यर्धयत्युपरि दूरे परिव्ययेद्यदि कामयेत वर्षेदित्यद्भ्यो वा एष ओषधिभ्यो वर्षति यर्हि वर्षत्योषधयो रशनौषधीरेव नेदीयो वृष्ट्याः करोति ताजक् प्रवर्षत्यधो दूरे परिव्ययेद्यदि कामयेत न वर्षेदित्यद्भ्यो वा एष ओषधिभ्यो वर्षति यर्हि वर्षत्योषधयो रशनौषधी-रेव दवीयो वृष्ट्याः करोति चिरं प्रवर्षति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तामिति दैवीर्वा एता विशो यदोषधय ओषधयो रशना यजमानो यूपो यजमानमेव प्रजा अभिसंमुखाः करोति परीमं रायो मनुष्यमिति पशवो वै रायः पशुभिरेवैनँ समर्धयत्यन्तरिक्षस्य सानूपेयेति स्वरुमुपोह-त्यन्तरिक्षदेवत्यो ह्येष एतर्ह्युपरीवास्माल्लोकादधोऽमुष्मात् स्वयैवैनं देवतयापोहति पितॄणामुपरं मनु-ष्याणामूर्ध्वमुपरादोषधीनां रशनां प्रति विश्वेषां देवानामूर्ध्वं रशनाया इन्द्रस्य चषालँ साध्यानाम-तिरिक्तमेवमिव वा एषु लोकेषु पितरो मनुष्या देवास्सर्वदेवत्यो यूपस्सर्वाभिरेवैनं देवताभिस्समर्ध-यत्यग्नेरर्धादुपनतं यूपस्य कुर्याद्बहिष्टान्निर्णतमग्नेर्वा अर्धादुपनतेन यजमानाय लोकं करोति बहिष्टा-न्निर्णतेन भ्रातृव्यं यज्ञान्निर्णुदते ॥ यज्ञेन वै देवास्स्वर्गं लोकमायँस्तेऽकामयन्तेमं नो लोकमन्यो नानुप्रजानीयादिति ते दिशोऽयोपयन् यद्दिशोऽयोपयँस्तद्यूपस्य यूपत्वं तेऽमुं लोकं गत्वा व्यतृष्यँ-स्तेऽविदुरमुतःप्रदानाद्वा इहाजगामेति त एतं पुनः प्रायच्छँस्तेनार्ध्नुवन्नेष वै यज्ञस्य तन्तुरेष उत्तमपदी यथा वै मयूखात् तन्त्रं तायत एवमतो यज्ञस्तायते तँ ह स्म वा एतं पुरावृह्यैव जुह्वति यत् स्वरुं जुहोत्येतस्यैव निष्क्रीत्यै सोऽस्य निष्क्रीतः प्रीतस्स्वगाकृत इमांल्लोकानुपतिष्ठते द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म स्वाहेतीमानेवैनं लोकान् गमयति ॥६॥　　　　१६–१७

साध्या वै नाम देवा आसन् पूर्वे देवेभ्यस्तेषां न किंचन स्वमासीत् तेऽग्निं मथित्वाग्नौ जुह्वत आसत तस्माद्गन्धोः पशवोऽजायन्त तस्मादाग्नेयास्सर्वे पशव उच्यन्ते यदग्निं मथित्वा पशुमा-लभते प्रजातमेवैनमालभतेऽथो यथापूर्वमेव करोति तदाहुः पशुमालभ्याग्निर्मथितव्य इत्यग्निस्सर्वा देवतास्सर्वा एव देवताः पशव आलब्धाय जनयति पशुना सर्वाणि सवनानि पशुमन्ति वीर्यावन्ति कर्तव्यानि यद्वपया प्रातस्सवने चरन्ति तेन तत् पशुमद्वीर्यावद्यद्दक्षिणाभिर्मध्यन्दिने तेन तत् पशु-मद्वीर्यावद्यदितरेण पशुना तृतीयसवने तेन तत् पशुमद्वीर्यावत् सर्वाण्यस्य सवनानि पशुमन्ति वीर्या-

---

[६] मै. ३,९,४ (४–१४)। कपि. ४१,४। वा. ६,६। काण्व. ६,७।

[७] मै. ३,९,५—६ (१५—१६) कपि. ४१,५। वा. ५,२-३, ६,७—८। काण्व. ५,२-३; ६,८—९।

वन्ति भवन्ति य एवं वेद ॥ सर्वाभ्यो वा एष दिग्भ्य ऋद्धया आलभ्यते यत् पशुर्यत् प्राञ्चमाप्रीणन्ति देवलोकं तेनाभिजयति यदुदञ्चमाप्रीतं नयन्ति मनुष्यलोकं तेनाभिजयति यद्दक्षिणतः परिहृत्यावद्यन्ति पितृलोकं तेनाभिजयन्ति यत् प्रतीचीनँ समवत्तँ हरन्त्येतां तेन दिशमभिजयति यदूर्ध्वस्तिष्ठञ्जुहोति स्वर्गं तेन लोकमभिजयति पशुना वै देवास्स्वर्गं लोकमायँस्ते शरीरमधून्वत स्वर्गो वपा यद्वपया प्रातस्सवने चरन्ति स्वर्गस्य लोकस्य समष्ट्यै यदितरेण पशुना तृतीयसवने शरीरस्य निष्क्रीत्यै यार्द्रा बहुपर्णा तयोपाकुर्यादोषधयो वै वनस्पतयः पशव ओषधयः पशुभिरेवैनँ समर्धयति या शुष्कापर्णा तयोपाकुर्याद्यं द्विष्यात् तस्यौषधयो वै वनस्पतयः पशव ओषधयः पशुभिरेवैनं व्यर्धयति ॥ घोरो वा अन्यो वज्रश्शिवोऽन्यो यश्शुष्कस्स घोरो य आर्द्रस्स शिवो य एव शिवस्तेनोपाकरोति बर्हिषोपाकरोति पशवो वै बर्हिः पशुभिरेवास्मै पशूनुपाकरोत्युपावीरसीत्युप ह्येषोऽवत्युप देवान् दैवीर्विशः प्रागुरिति दैवीर्वा एता विशो यत् पशवः पशूनेवास्मा उपाकरोति वह्नीनुशिज इत्यृत्विजो वै वह्नय उशिज ऋत्विग्भ्य एवैनानुपाकरोति बृहस्पते धारया वसूनीति ब्रह्म वै बृहस्पतिर्ब्रह्मणा प्रजाः प्रजायन्ते ब्रह्मणैवैनाः प्रजनयति देव त्वष्टर्वसु रणेति त्वष्टा वै रूपाणां विकर्ता सोऽस्मै रूपाणि विकरोति रेवती रमध्वमिति ब्रह्म वै बृहस्पतिः पशवो रेवतीर्ब्रह्मणैवास्मै पशून् यच्छत्यग्नेर्जनित्रमसीत्यग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इति न ह्यमुष्काः प्रजाः प्रजायन्ते प्रजननायोर्वश्यस्यायुरसि पुरूरवा असीति माता वा उर्वश्यायुर्गर्भः पिता पुरूरवा रेतो घृतं यद् घृतेनारणी समनक्ति मिथुन एव रेतो दधाति गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमित्येतावन्ति वै छन्दाँसि च्छन्दोभी रेतो हितं प्रजायते छन्दोभिरेवास्मै रेतो हितं प्रजनयति ॥ दक्षिणा वर्तयत्येषा वा आदित्यस्य प्रजनिष्णुस्तनूस्तामेवानुप्रजायतेऽग्नी वा एतर्हि यजमानमभिसंधत्तो भवतं नस्समनसा इति समनसा एवैनौ करोति मा हिँसिष्टं यज्ञपतिं मा यज्ञं जातवेदस इत्यात्मनोऽहिँसायै शिवौ भवतमद्य न इति शिवा एवैनौ कुरुते रक्षसां वा एतेऽनवजयाय परिधीयन्ते यत् परिधयो यदुपर्युपरि प्रहरेद्रक्षोभ्यस्तीर्थं कुर्यात् संधिना वा प्रहरत्यग्रेण वा तीर्थेनैव स्रुवेण जुहोति संजग्मानाभ्यामेवाभ्यां भागधेयमपिदधाति ॥७॥ १८–२१

सावित्रीमन्वाह सवितृप्रसूत एवैनं प्रजनयत्येकदेवत्यामन्वाहैकधैवैनं प्रजनयति यद् द्विदेवत्यामनुब्रूयाद्भ्रातृव्यमस्मै द्वितीयं जनयेद् द्यावापृथिव्यामन्वाह प्रजानां प्रजातानां परिगृहीत्यै न धूमवतीमनुब्रूयादिन्द्रो वै यद्वृत्रमहँस्तस्य यत्र यत्र व्यृद्धमासीत् ततो धूम उदायत व्यृद्धाद्वा एष जातो व्यर्धुकमस्मै भवति यदि मथ्यमानो न जायेत रक्षोघ्नीमनुब्रूयाद्रक्षसामपहत्या अनवानमनुब्रूयादवानं वा अनु यज्ञं रक्षाँसि जिघाँसन्ति रक्षोभ्य एवातीर्थं करोति गायत्रीं ब्राह्मणस्यानुब्रूयाद्गायत्रो

[८] मै. ३,९,५-६ (१५-१६)। कपि. ४१,६। वा. ६,८—१०। काण्व. ६,९-१२ ]

हि ब्राह्मणस्त्रिष्टुभं राजन्यस्य त्रैष्टुभो हि राजन्यो जगतीं वैश्यस्य जागतो हि वैश्यो यथाछन्दसमेव ॥ देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते सवितृप्रसूत एवैनां देवताभिरादत्त ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति यो वै यज्ञियो मेध्यस्स ऋतस्य पाशस्तेनैवैनमालभतेऽमुष्मै जुष्टमिति यस्या एव देवताया आलभते तस्या एव जुष्टं करोति धर्षा मानुषँ इति वज्रो वै यूपः पशवो मानुषा वज्रेणैवास्मै पशून् यच्छत्यृक्षो वा एष तष्टोऽमेध्यो यत् पशुं नियुनक्ति मेध्यमेवैनं यज्ञियं करोति ॥ पुरस्ताद्वै पशवो मेधमुपतिष्ठन्ते देवता एतस्मिन् प्राणा यत् पुरस्तात् प्रत्यञ्चमाप्रीणान्ति देवतानामेवैनमर्धमाप्रीणन्त्यद्भ्यस्त्वौषधीभ्य इत्यद्भ्यो वा एष ओषधिभ्य आलभ्यते यत् पशुरद्भ्य एवैनमोषधिभ्यः प्रोक्षत्यनु त्वा माता मन्यतामनु पितेति पिता च ह्येतस्य माता चानुमन्तारा आपो वै सर्वा देवतास्सर्वदेवत्यः पशुस्सर्वाभिरेवैनं देवताभिस्समर्धयति बहु वा एषोऽमेध्यमयज्ञियं निगच्छति यत् पशुरापो मेध्या यज्ञिया यदद्भिः प्रोक्षति मेध्यमेवैनं यज्ञियं करोत्यपां पेरुरसीत्यप उपगृह्णाति यान्यन्तरतोऽवदानानि तानि तन्मेध्यानि करोति स्वात्तँ हव्यं देवेभ्यो घृतवदित्युरः प्रत्युपोक्षति यान्यधस्तादवदानानि तानि तन्मेध्यानि करोति सर्वत उपोक्षति सर्वत एवैनं मेधेन समर्धयति शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुर्यदाघारमाघार्य पशुँ समनक्ति शिर एव यज्ञस्यात्मन् प्रतिदधाति सं ते वायुः प्राणेन गच्छतामिति वायुमेवास्य प्राणं गमयति सं यजत्रैरङ्गानीति देवता वै यजत्रा देवता एवास्याङ्गानि गमयति सं यज्ञपतिराशिषेत्याशिषैव यजमानँ समर्धयति ॥८॥ २२-२४

ऋत्विजो वृणीते छन्दाँसि वा ऋत्विजश्छन्दाँस्येव तद्वृणीते तैरस्य वृतैर्युक्तैर्वषट्काराः पुरो युज्यन्ते होतारं वृणीते जगतीं तच्छन्दसां वृणीतेऽग्निधं वृणीते पङ्क्तिं तच्छन्दसां वृणीतेऽध्वर्यू वृणीतेऽतिच्छन्दसं तच्छन्दसां वृणीतेऽन्तरा होतारं चाध्वर्यू चाग्निधं वृणीते तस्मादग्निर्मध्यत ओषधीः प्रविष्टो यदुत्तमस्संयजति तस्मादुपरिष्टान्मथ्यमानो जायते मैत्रावरुणं वृणीते गायत्रीं तच्छन्दसां वृणीते ब्राह्मणाच्छँसिनं वृणीते त्रिष्टुभं तच्छन्दसां वृणीते पोतारं वृणीत उष्णिहं तच्छन्दसां वृणीते नेष्टारं वृणीते ककुभं तच्छन्दसां वृणीते ॥ पश्चाजमिव वा एतच्छन्दो यदनुष्टुप् पश्चाजेवैषा होत्रा यदच्छावाकया तस्मादच्छावाकमुपैव ह्वयन्ते न वृणतेऽथैता आप्रियः प्रजापतिः प्रजास्सृष्ट्वा स रिरिचान इवामन्यत स एता आप्रीरपश्यत् ताभिरात्मानमाप्रीणीत यज्ञः प्रजापतिर्यज्ञात्मा यजमानो यदेताः पूर्वार्धे यज्ञस्य क्रियन्ते मुखत एव यजमानमाप्रीणाति प्रयाजान् यजति प्राणा वै प्रयाजाः प्राणानेव तत् प्रयजति तत् प्रयाजानां प्रयाजत्वमनवानमाप्रीणीयाद्यं कामयेत सर्वमायुरियादिति प्राणा वै प्रयाजा अविच्छिन्नानेवास्मिन् प्राणान् प्रतिदधाति सर्वमायुरेत्यात्मा वै पशोर्वपात्मा

[ देवस्य त्वा सवितुः० । अथर्व. १९,५१,२; ऐ. ब्रा. ८,७ ]
[ ९ ] मै. ३,९,८ (१८-२०) । कपि. ४१,७ । तै. सं ६,३,७,५ ।

यजमानस्याप्रीर्यदुत्तमाप्रीर्वपां परिशय आत्मैवात्मानं परिशये यज्ञस्य संतत्या अविच्छेदायैकादश प्रयाजा एकादशानुयाजा एकादशोपयज एतावतीर्वै देवतास्सर्वदेवत्यः पशुस्सर्वाभिरेवैनं देवताभिस्समर्धयति त्रयस्त्रिंशद्वै देवतास्सोमपास्त्रयस्त्रिंशदसोमपा अष्टौ वसव एकादश रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च ते सोमपाः प्रयाजा अनुयाजा उपयजस्तेऽसोमपास्तस्मात् ते बहिर्यज्ञं क्रियन्ते सोमेन वै तद्देवान् सोमपान् प्रीणाति पशुनासोमपाँस्तेऽस्योभये प्रीता यज्ञे भवन्त्येतद्ध वा उवाच ऊयापर्णस्सायकायनोऽषाढं कैशिनं यत्रैनमदस्सोमान्नयति यदि वै मा सोमान्नेष्यस्युभयैर्मा देवैस्सह नेष्यसि सोमपैश्चासोमपैश्च विदेवस्ते यज्ञोऽवहास्यतेऽथो यथ्यश्चं मा नेष्यन्ति ततस्त्वाभीत्य ज्यास्यन्तीति ते मीमाँसित्वेतो नो भयं नास्तीति दक्षिणा प्रत्यश्चं निन्युस्ततः कुन्तयः पञ्चालानभीत्य जिनन्ति य एवंविद्वँ सोमान्नयत्युभयैरेनं देवैस्सह नयति सोमपैश्चासोमपैश्च विदेवोऽस्य यज्ञोऽवहीयतेऽथो यथ्यश्चमेनं नयन्ति तत एनमभीत्य जिनन्ति ॥९॥ २५–२६

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ततो देवा एतमुपाँशुमपश्यँस्त एतस्मिन् यज्ञँ सँस्थाप्यमपश्यँस्तस्मिन्नेव यज्ञँ समस्थापयन्नष्टौ कृत्वोऽभ्यषुण्वन् गायत्रीं तच्छन्द आप्नुवन्नेकादश कृत्वस्त्रिष्टुभं तद् द्वादश कृत्वो जगतीं तत् त्रिर्व्यगृह्णन् सवनान्येव तदाप्नुवँस्ते देवा यावानेव यज्ञस्तं परिगृह्योपोदतिष्ठन् होतुं तेऽसुरा अपश्यञ्जुह्वति वै देवा इति तान् वज्रमुद्यत्याभ्यपतँस्तान् देवा अन्तर्यामेनान्तरदधतैभ्यो लोकेभ्यस्ततो देवा अभवन् परासुरा अभवन् यस्यैवं विदुष उपाँशुं जुह्वति यश्चैवं विद्वाञ्जुहोत्येभ्य एव लोकेभ्यो भ्रातृव्यमन्तर्धत्ते भवत्यात्मना परास्य भ्रातृव्यो भवत्यथ ह स्माहारुण औपवेशिः किमु स यजेत य उपाँशौ यज्ञँ सँस्थाप्यं न विद्यादित्यष्टौ कृत्वोऽभिषुणोति गायत्रीं तच्छन्द आप्नोत्येकादश कृत्वस्त्रिष्टुभं तद् द्वादश कृत्वो जगतीं तत् त्रिर्विगृह्णाति सवनान्येव तदाप्नोत्युपाँशा एवैतद्यज्ञस्सँस्थाप्यते न सँस्थितेनारिष्टेनाघात्येन प्रचरन्त्यष्टा अष्टा अभिषुणुयाद्ब्रह्मवर्चसकामस्याष्टाक्षरा गायत्री गायत्रीमेव यज्ञमुखेऽधि वियातयति गायत्र्यामेवैतत् तेजसि स्वे योनौ स्वर्गे लोके यज्ञमुखं तायते मुख्यो भवति य एवं वेद नोपयामगृहीतोऽसीति ब्रूयादियं वा उपयामोऽनया प्राणानपिहन्यान्न पवित्रं वितन्वन्त्यन्तरिक्षं वै पवित्रमन्तरिक्षेण प्राणान् परिगृह्णीयात् प्रमीयेतायं वाव यः पवते स प्राणस्तस्येदमपग्राहं प्राणिमो यन्नोपयामगृहीतोऽसीत्याह न पवित्रं वितन्वन्ति तस्मादयमपरिगृहीतः काममित्थं चेत्थं च पवते तस्मात् कामं प्राणिमः प्राणपवित्रो वा उपाँशुः प्राणैरेवैनं पावयति षडँशून् परि-

[१०] मै ४,५,५,६ (१४-१९)। कपि ४१,८। वा ७,४,८-९,११-१२,१६,२०,२२,२५,३०-४०, ८,१,७-९,११, ३३-३५,३८-४१,४४-४७, १९,८; २०,३३; २३,१,४। काण्व. ३,५०; ७,४,७-८; १०-११,१५,२१,२४, २७,३०—४०; ८,६—८,१२,१४—१६,१९-२९; २१,७; २२,१८; २५,२,४। तै. सं. ६,४,६।

गृह्णाति तस्मात् षट् प्राणा द्वन्द्वं पावयति तस्मात् प्राणा द्वन्द्वमुपाँशुसवनादुपाँशुं निगृह्णाति प्राणो वा उपाँशुसवनः प्राण उपाँशुः प्राणादेव प्राणं निगृह्णात्युत्तर उपाँशुसवनो भवत्यधरेऽँशवः प्राणो वा उपाँशुसवनः प्रजा अँशवः प्रजास्वेवं प्राणं दधाति तस्मात् प्राण उत्तमः ॥१०॥ २७

क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वर्धन् सुरेक्णाः । मर्त आनाश सुवृक्तिम् ॥ २८

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिस्सीद । वीहि शूर पुरोडाशम् ॥ २९

उप नस्सूनवो गिरश्शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः ॥ ३०

ता नश्शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥ ३१

बृहस्पते जुषस्व नो अग्न आयाहि वीतय एन्द्र सानसिं रयिम् ॥ ३२

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ ३३

आ नो मित्रावरुणा ॥ ३४

आ विबाध्या परिरापस्तमाँसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीममभित्रदम्भनं रक्षोहणं गोत्रभिदँ स्वर्विदम् ॥ ३५

पञ्च व्युष्टीः ॥ ३६

सखे सखायमभ्यावृत्स्वाशुर्न चक्रं रथेऽवरोह्यास्मभ्यं दस्म रँह्या ।
अग्ने मृडीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥ ३७

अग्निँ होतारं मन्ये दास्वन्तं वसुँ सूनुँ सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः ॥११॥ ३८

[११] मै. २,१३,५५,८२, ४ १०,३७, ११,६३,६५; १२,६५; १४,१६६ । वा ११,४६, १५,४७ २५,१४, ३३,७७ । काण्व. १२,४७. १६,६९; २७,१८, ३२,७७ । [ क्रत्वा दा अस्तु० । ऋ ६.१६,२६; तै ब्रा. २,४,६,२ ; इमा ब्रह्म ब्रह्मवाहः० । ऋ. ३,४१,३, अथर्व. २०,२३,३; तै. ब्रा. २,४,६,२. नि ४,१९ । उप नस्सूनवो गिर० । ऋ. ६,५२,९, सा. १५९५; तै सं २,४,१४,५ । ता नश्शक्तं पार्थिवस्य० । ऋ ५,६८,३, सा ११४५,१४६५ । बृहस्पते जुषस्व नो० । ऋ ३,६२,४; तै सं १,८,२२,२ । अग्न आयाहि वीतये० । ऋ ६.१६,१०, सा. १,६६०; तै. सं. २,५,७,३. ८,१; तै ब्रा ३,५,२,१ । आ नो भद्राः क्रतवो० । ऋ १,८९, १ नि. ४,१९ । आ नो मित्रावरुणा० । ऋ ३,६२,१६; ७,६५,४; सा २२०, ६६३, तै सं १,८,२२ ३, तै. ब्रा. २,८,६,७ । आ विबाध्या परिराप० । ऋ. २,२३,३ । सखे सखायमभ्या० । ऋ. ४,१,३ । अग्निँ होतारं मन्ये० । ऋ १,१२७,१; सा ४६५, १८१३. अथर्व २०,६७,३; तै. सं. ४,४,४,८, नि. ६,८ ]

द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुक्शात्रे नमश्शृण्वते नम उपशृण्वते नमस्सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमश्श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमश्शान्ताय नमस्तपसे नमः ॥१२॥
३९
[१९२१]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां धिष्ण्यं नाम षड्विंशं स्थानकं संपूर्णम् ॥२६॥

---

अथ सप्तविंशं स्थानकम्।

### वाचस्पतिः।

वाचस्पतये पवस्वेति वाच आधिपत्याय पवस्वेत्येवैतदाह तस्मादेतया कामं वदामश्च प्र चानिमः प्रजापतिर्वा इदमासीत् तस्य वाग्द्वितीयासीत् तां मिथुनँ समभवत् सा गर्भमधत्त सास्मादपाक्रामत् सेमाः प्रजा असृजत सा प्रजापतिमेव पुनः प्राविशद्वाचस्पतये पवस्वेत्येतस्मादेव मिथुनात् प्रजया च पशुभिश्च प्रजायते वाचस्पतये पवस्वेति ब्रह्म वै वाचस्पतिर्ब्रह्मणैवैनं पावयति वृष्णो अँशुभ्यां गभस्तिपूत इतीन्द्रो वै वृषा तस्य हस्तौ गभस्ती ताभ्यामेवैनं पावयति ॥ देवो देवानां पवित्रमसीति देवताभ्य एवैनं निदिशति मधुमतीर्न इषस्स्कोमेन हि सोमं पुनन्ति येषां भागोऽसीति देवताभ्य एवैनं निदिशति मधुमतीर्न इषस्कृधीति देवता वा इषो देवेभ्य एवैनं मधुमन्तं करोति स्वंकृतोऽसीति प्राणमेव स्वं कुरुत उर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष एतर्हि विश्वेभ्य इन्द्रियेभ्य इति देवेषु चैव मनुष्येषु च प्राणं दधाति मनस्त्वाष्टिवति मनसा हि प्राणो धृतस्स्वाहा त्वा सुभो सूर्यायेति सोमो वै सुभूरमुष्मिन्नादित्ये देवानां प्रियास्तन्वस्ता एव तर्पयत्यथो स्वाहाकारेणैवास्मिन्नाहुतीश्श्रीणाति ॥ सर्वहुतं जुहोति तस्मात् पराङ् प्राण ऋजुस्तिष्ठञ्जुहोति पुरुषेणैव यज्ञस्संमितः प्राणापानाभ्यां पुरुषस्संततः प्राणापानयोरसँशराय नाध्वर्युर्विहूर्छेति य एवं वेदोत्तरादुपाँशुं जुहुयाद्दक्षिणतोऽन्तर्यामं देवरथो वा एष यद्यज्ञस्तस्यैतौ रश्मी यदुपाँश्वन्तर्यामौ देवरथस्यैव पुरस्ताद्रश्मी विहरति संवत्सरस्य क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै तामनुकृतिं मनुष्यरथस्य रश्मी विह्रियेते ऋजू होतव्यौ प्राणानामव्यतिहारायोर्ध्वमुन्मृज्याद्यदि कामयेत न वर्षेदित्यमुत्रैव वृष्टिं परिगृह्णात्यवाचीनमवमृज्याद्यदि कामयेत वर्षेदिति या वा इतराहुतिरुदयते सामुतो वृष्टिं च्यावयति

[१] मै. ४,५,५ (१४) । कपि. ४२,१ । वा ७,१—३,६; ८,४९, ९,३०,३७ । काण्व. ७,१-३,५; ८,३१, १०,३९; ११,४। तै. सं. ६,४,५ ]

सौम्यैवाहुत्या दिवो वृष्टिं निनयति ॥ देवेभ्यस्त्वा मरीचिपेभ्य इति परिधौ निमार्ष्टि प्राणा वै देवा मरीचिपास्तानेव प्रीणात्यथो परिधीनामेवैष सोमपीथोऽन्तरतो निमार्ष्टि तस्मात् प्राणा अन्तरतो वि वा एतद्यज्ञं छिनत्ति यत् पुराभिषोतोस्सँस्थां गमयति यदँशूननभिषुतानपिसृजति यज्ञस्य संतत्या अविच्छेदाय षडँशूनपिसृजति तस्मात् षट् प्राणा द्वन्द्वं तस्मात् प्राणा द्वन्द्वमार्द्रास्सन्तोऽसँश्लिष्टा भवन्ति तस्मात् प्राणा आर्द्रास्सन्तोऽसँश्लिष्टा यो ह वै सोमस्य सोमपीथं वेद न सोमपीथाच्छिद्यते नास्य प्रजा यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येष वै सोमस्य सोमपीथस्सोममेवैतत् सोमस्य तर्पयति न सोमपीथाच्छिद्यते नास्य प्रजा य एवं वेद यद्यभिचरेत् ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्याददीत प्रहर्षिणो मदिरस्य मदे मृषासा अस्त्वथ त्वा होष्यामीति मृषैवैनं करोति सर्वदेवत्यो वै सोमस्सर्वा वा एतर्ह्येतस्मिन् देवता आशँसन्ते मह्यँ होष्यति मह्यँ होष्यतीति देवता एवैनमाहुतिमभीप्सन्तीरुद्दहन्त्या तमितोस्तिष्ठति प्राणस्यैवास्यान्तं गच्छति यद्यजुर्वदति देवेभ्य एवैनमावृश्चत्युपाँशुनाभिचरति प्राणो वा उपाँशुः प्राणेनैवास्य प्राणमभिचरति ताजक् प्रधन्वति ॥१॥　　　　१-१

देवा वै सोमायाभिषुताय पात्रं नाविन्दन्त येनेमं विगृह्णीमहीति त इमामेव देवपात्रमपश्यँस्तमनयैव व्यगृह्णतेयं वाव देवपात्रमस्यास्स्थालीः कुर्वन्त्यस्या वायव्यानि प्र श्रेयसः पात्रमाप्नोति य एवं वेद ब्राह्मणं पात्रेण मीमाँसेत तद्व्रतमुपयामगृहीतोऽसीतीयं वा उपयामो यदत्र स्कन्दत्यनया तद्यतं नास्य सोमस्स्कन्दति य एवं वेदोपयामगृहीतोऽसीत्युपयामगृहीता ह्यतस्सोमा भवन्ति पवित्रं वितन्वन्ति पवित्रपूता ह्यतस्सोमा भवन्ति स्वर्भानुर्वा आसुरस्सूर्यं तमसाविध्यत् स न व्यरोचत तस्माद्देवास्तमोऽपालुम्पन् यत् प्रथममपालुम्पन् साविष्कृष्णाभवद्यद् द्वितीयँ सा फल्गुर्यत् तृतीयँ सा बलक्षी ॥ तस्मात् तस्याः पवित्रं कुर्वन्त्यादित्यस्यैवैनं तन्वा पावयत्यन्तर्यच्छ मघवन् पाहि सोममित्येभ्य एव लोकेभ्यो भ्रातृव्यमन्तर्धत्ते मधुमतीर्न इषस्कृधीति देवता वा इषो देवेभ्य एवैनं मधुमन्तं करोति स्वंकृतोऽसीत्यपानमेव स्वं कुरुत उर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष एतर्हि विश्वेभ्य इन्द्रियेभ्य इति देवेषु चैव मनुष्येषु चापानं दधाति मनस्त्वाष्ट्विति मनसा ह्यपानो धृतस्स्वाहा त्वा सुभो सूर्यायेति सोमो वै सुभूरमुष्मिन्नादित्ये देवानां प्रियास्तन्वस्ता एव तर्पयत्यथो स्वाहाकारेणैवास्मिन्नाहुतीश्श्रीणाति ॥ यदि कुर्यादन्तर्यामपात्रमूर्ग्वै सोमोऽन्तरिक्षमन्तर्यामोऽन्तरिक्ष एव रसं दधात्यूर्जं पशुषूपाँश्वन्तर्यामौ वै पशवोऽनुप्रजायन्त इतरान् ग्रहानन्वन्याः प्रजास्ता असन्नौ जुहोति तस्मादसन्नाः पशवस्सदादि प्रजायन्ते तस्मात् सद्यो जाताः पशवः प्रतितिष्ठन्ति संवत्सरे पुरुषः

[देवस्य त्वा सवितुः। अथर्व. १९,५१,२; ऐ ब्रा. ८,७]

[२] मै. ४,५.६—७ (१९—२२)। कपि. ४२,२। वा. ७,२—६। शत. ७,२,५। तै. सं. ६,४,६।

प्राणाय त्वेत्युपाँशुपात्रँ सादयति व्यानाय त्वेत्युपाँशुसवनमपानाय त्वेत्यन्तर्यामपात्रं व्यानेन वा इमौ प्राणापानौ विधृतौ प्राङ् च प्रत्यङ् च न क्षीयेते नायमूर्ध्व उत्क्रामति नेतरोऽवाङ् संक्रामति व्यानमेव मध्यतो दधाति प्राणापानयोर्विधृत्यै ॥ शृङ्गमुपाँशुरेतोऽन्तर्याम इन्द्रियं प्रजास्सोमपीथ एतौ ह स्म वै तद्रजनः कौणेयो ग्रहौ धयन्मन्यते यच्छृङ्गं धयति यदेतौ पूर्वार्धे यज्ञस्य क्रियेते मिथुनमेव यज्ञमुखे दधाति प्रजननाय तस्मादाहुः प्राणापानौ वै प्रजा अनुप्रजायन्त इति पुरुषेण वै यज्ञस्संमितः प्राणापानाभ्यां पुरुषस्संततो यदेते प्रातस्सन्ने आ तृतीयसवनाच्छयाते प्राणापानाभ्यामेव यज्ञँ संतनोति तस्मात् पुरुषात् सुप्तात् प्राणापानौ नापक्रामतस्ते पुनस्तृतीयसवने प्रयुज्येते तस्मात् सुप्त्वा प्रबुध्यते तस्माद्वा अवाञ्चौ प्राणौ ॥२॥ ६-९

प्राण उपाँशुरपानोऽन्तर्यामो वागैन्द्रवायवो यदुपाँश्वन्तर्यामा ऐन्द्रवायवोऽनुगृह्यते प्राणापानयोरेव वाचमुपरिष्टाद्दधाति तस्मात् प्राण्यापान्य पुरुषो वाचं वदति देवा वै प्रातस्सवनमुद्यमं नाशक्नुवँस्तृतीयसवने तर्हि वायुरासीत् तं देवाः प्राञ्चं पर्यहरन् प्राणो वायुरैन्द्रो यज्ञो यदैन्द्रवायवः प्रातस्सवने गृह्यते प्राणेनैव यज्ञं परिगृह्य पुरस्तादुद्यच्छन्ते वायव्यो वा एष पुरासीत् सा वाक् सृष्टा न व्यावर्तताध्वनदेव स इन्द्रोऽब्रवीन्मह्यमत्रापिगृह्यतामहमेतां व्यावर्तयिष्यामीति तत एतमैन्द्रवायवमगृह्णन् सेयं वागिन्द्रियेण व्यावृत्ता वदति स एष सोमो वाचो व्यावृत्त्यै गृह्यते व्यावृत्तं पापीयसा वदति य एवं वेद प्रजानाँ सृष्टानां तौ समभिद्येतां ता न प्राण्यापानमशक्नुवन्नापान्य प्राणितुँ स इन्द्रोऽब्रवीन्मह्यमत्रापि गृह्यतामहमेतौ प्राणापानौ विदद्‌ध्य इति तत एतमैन्द्रवायवमगृह्णन् वायव इन्द्रवायुभ्यामनुब्रूहीतीन्द्रं मध्ये करोति वायुमभितः प्राणापानयोर्विधृत्या इन्द्रियं वै व्यानो व्यानेन वा इमौ प्राणापानौ विधृतौ प्राङ् च प्रत्यङ् च न क्षीयेते नायमूर्ध्व उत्क्रामति नेतरोऽवाक् संक्रामति व्यानमेव मध्यतो दधाति प्राणापानयोर्विधृत्यै ॥ त्रिर्विगृह्णाति तस्मात् त्रिर्वाग्वदति शनकैरुच्चैरथ सूच्चैर्देवा वै वायुमब्रुवँस्त्वया मुखेन वृत्रँ हनामेति सोऽब्रवीद्वार्यं वृणै मदग्रा एव ग्रहा गृह्यान्ता इति तस्माद्वाय्वग्रा ग्रहा गृह्यन्ते वार्यवृतो ह्यस्य स इन्द्रोऽब्रवीन्मह्यमत्रापि गृह्यतामथ त्वै स्तरिष्यामह इति त एतमैन्द्रवायवमगृह्णँस्ततो वृत्रमघ्नन् स एष सोमो वार्त्रघ्नो विजित्यै गृह्यते सोमो वै वृत्रस्स हतोऽपूयत् ते देवा वायुमब्रुवन्निमं नो विवाहीति सोऽब्रवीद्वार्यं वृणै मद्देवत्यान्येव पात्राण्युच्यान्ता इति तं व्यवात् तस्माद्गन्धमपाहन् स एष पशौ प्रमीते तस्मात् तस्मान्नापिगृह्यँ सोमस्य हि स राज्ञो गन्धो नैनं राजयक्ष्मो विन्दति य एवं वेद तस्माच्छुक्तं विषजन्ति तस्मादपि तृतीयं वायोः पात्रमथ वायव्यान्युच्यन्ते वार्यवृतानि ह्यस्य ॥३॥ १०-११

---

[३] मै. ४,५,८ (७२)। कपि ४२,३। तै सं ६,४,७-८।

नाना वा एतौ पुरा सोमा अगृह्णन् मित्राय वरुणाय च ताः प्रजा अशान्ता अविधृता अन्यान्यां प्रतीरचरँस्ते देवा अब्रुवन् सहेमं गृह्णाम मित्रेण वरुणँ शमयाम वरुणेन मित्रमिति ततो वा एतँ सहागृह्णँस्ते मित्रेणैव वरुणमशमयन् वरुणेन मित्रं ता इमाः प्रजा मित्रेण शान्ता वरुणेन विधृता यन्मैत्रावरुणो गृह्यते क्लृप्त्या एव विधृत्यै देवा वै मित्रमब्रुवन् वृत्रँ हनामेति नेत्यब्रवीन्मित्रोऽहमस्मि न हिनस्मीति हनामैवेत्यब्रुवन् सोऽब्रवीद्वार्यं वृणै पयसा मे सोमँ श्रीणानिति तस्मात् पयसा मैत्रावरुणँ श्रीणन्ति वार्यवृतँ ह्यस्य ततो वृत्रमघ्नँस्तस्माद्राजन्येनाध्यक्षेण वैश्यं घ्नन्ति तं मित्रस्सन्ननृतमकरिति वरुणोऽगृह्णादप पशवोऽक्रामन् स मित्रो वरुण एवानाथत सोऽब्रवीत् सह वा एष सोमो गृह्यतामथ त्वातो मोक्ष्यामीति ततो वा एतँ सहागृह्णँस्तेनैनं वरुणादमुञ्चन्यन्मैत्रावरुणो गृह्यते निर्वरुणत्वाय पशवो वै पयः पशूनाँ हि पयो यत् पयसा मैत्रावरुणँ श्रीणाति पशुभिरेवैनँ समर्धयत्यसोमो वा एष इत्याहुरोषधय एताः पय एव सोम इति यत् पयसा मैत्रावरुणँ श्रीणाति सोममेवैनं करोत्यथो यदेवास्याभिषुण्वन्तो घ्नन्ति यत् क्रूरं कुर्वन्ति तच्छमयति ॥ शृतेन श्रीणाति मैत्रं वै शृतं वारुणं प्रतिधुक् स्वेनैवैनौ भागधेयेन समर्धयति मैत्रो ब्राह्मणो वारुणो राजन्यो यदेष मैत्रावरुणो गृह्यते तस्माद्ब्रह्मपुरोहितं क्षत्रं यज्ञस्य वै शिरोऽच्छिद्यताथ तर्ह्यश्विना असोमपौ भिषजौ देवानामास्तां तौ देवा अब्रुवन् भिषजौ वै स्थ इदं यज्ञस्य शिरः परिधत्तमिति ता अब्रुवतां वार्यं वृणावहै सोमपीथो नौ देवेष्वस्तु ग्रहो नौ गृह्यतामिति तौ देवा बहिष्पवमानेन पावयित्वा ताभ्याँ शुचिभ्यां मेध्याभ्यां भूताभ्यां ग्रहमगृह्णँस्तस्मात् स्तुते बहिष्पवमान आश्विनो गृह्यते तस्माद्ब्राह्मणो बहिष्पवमानमासीत पवित्रँ हि तत् तस्माद्यं द्विष्यात् तं बहिष्पवमानात् परिबाधेत पवित्रादेवैनं परिबाधते तौ देवानुपावर्तमानौ तयोर्या भिषज्या तनूरासीद् तां त्रेधा विन्यदधातामग्नौ तृतीयं ब्राह्मणे तृतीयमप्सु तृतीयं यं कामयेतामयाविनं जीवेदित्यग्नेरन्ते ब्राह्मणाय प्रोच्यापः परिब्रूयादेतावद्वै भेषजं यावदेव भेषजं तदस्मै करोति जीवति सर्वमायुरेति न पुरायुषः प्रमीयते ॥४॥ १२–१३

प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते तस्मात् प्राणा एकनामानस्ते द्विपात्रा हूयन्ते तस्मात् प्राणा द्वन्द्वं येन यजुषा प्रयच्छति तेन प्रतिगृह्णाति प्राणानाँ संतत्यै प्रतिज्ञात्यै नानुवषट् करोति यदनुवषट् कुर्यात् प्राणान् सँस्थापयेत् प्रमीयेत यन्नानुयजति तस्मात् प्राणा असँस्थिता आ च परा च चरन्ति द्विदेवत्याः पूर्वे भक्षयितव्या३ इडोपहूया३ इति मीमाँसन्ते ॥ इडैव पूर्वोपहूया यज्ञस्य यथापूर्वत्वाय प्राणा वै द्विदेवत्याः पशव इडा यदेवं कुर्यात् पशुभिः प्राणानन्तरियात् प्रमीयेत द्विदेवत्या एव पूर्वे भक्षयितव्या अन्तरे वै प्राणाः परे पशवः प्राणानेवात्मन् धित्वा पशूनुपहूते ॥

[४] मै. ४,५,८; ६,२ (२३—२५; ८) । कपि. ४२,४ । तै. सं ६,४,७—९ ।
[५] मै. ४,६,१—२ (१—८) । कपि. ४२,५ । वा ९,४०; १०,१८ । काण्व. ११,१०,२६ । तै. सं. ६,४,९ ।

ये वा इमे पुरुषे प्राणास्ते द्विदेवत्या वाक् च प्राणाश्चैन्द्रवायवश्चक्षुश्च मनश्च मैत्रावरुणश्श्रोत्रं चात्मा चाश्विनोऽग्निर्होतासीत् स वषट्कृत्यातम्यदाहितास्येडासीत् तस्य देवा द्विदेवत्यैरन्वैन्दन् प्राणा वै द्विदेवत्याः प्राणैरेवैनं तदभ्यधिन्वन् स इडोपहूतेति प्रत्यपद्यत प्राणा वै द्विदेवत्या यद् द्विदेवत्यान् भक्षयति प्राणैरेवात्मानमभिधिनोति तस्माद् द्विदेवत्या एव पूर्वे भक्षयितव्यास्ते हि पूर्वे भक्षिता आश्विनो दशमो गृह्यते ॥ दश हि प्राणास्तं तृतीयं जुहोति शिर एव प्राणानभिसँहरति समन्तं परिहृत्य भक्षयति श्रोत्रं वा आश्विनस्तस्मात् पुरुषस्सर्वतश्शृणोति रक्षाँसि वा एतत् पात्रँ सचन्ते यद्यज्ञे रिक्तमविमुक्तं भवति पुरोडाशमैन्द्रवायवस्य पात्रेऽवदधाति पयस्यां मैत्रावरुणस्य धाना-माश्विनस्य रक्षसामपहत्यै तस्मात् प्राणा अदस्ता अरिक्ता दक्षिणस्य हविर्धानस्याधस्तात् सादयत्येतद्वा एतयोरग्निमद्वीर्यावद्यदेवाग्निमद्वीर्यावत् तस्मिन् सादयति पुरुषेण वै यज्ञस्संमितः प्राणापानैः पुरुषस्संततो यदेतानि प्रातस्सन्नान्या तृतीयसवनाच्छेरे प्राणापानैरेवं यज्ञँ संतनोत्येकया च दशभि-श्चेत्येतां प्रतिविमुञ्चति यदर्वाग्विमुञ्चेत् प्राणान् विच्छिन्द्याद्यत् परः प्राणानतिरेचयेत् प्रमीयेत प्राणो वै वायुः प्राणा द्विदेवत्याः प्राणेनैव प्राणान् विमुञ्चति बहु वायव्यं प्रातस्सवने शस्यत एकैव तृतीयसवने तस्माद्बहवो मुखप्राणा एकोऽवाङ्यदि कामयेतावगतमपरुन्ध्युरपरुद्धोऽवगच्छेदितीद-महममुमामुष्यायणममुष्याः पुत्रममुष्या विश उदूहाभीत्यध्वर्योः पात्रमुदूहेदिदमहममुमामुष्यायण-ममुष्याः पुत्रममुष्यां विश्यध्यूहामीति प्रतिप्रस्थातुः पात्रमध्यूहेदध्वर्युर्वै श्रेयान् पापीयानपरुद्धो-ऽवगतमेवापरुणद्ध्यपरुद्धमवगमयति ताजग्व्यवगच्छेते व्यत्यूहेत् पात्राणि यदि कामयेत पापवसीयसँ स्यादित्यध्वर्योः पात्राणां लोके प्रतिप्रस्थातुः पात्राणि सादयेत् प्रतिप्रस्थातुः पात्राणां लोकेऽध्वर्योः पात्राणि सादयेदध्वर्युर्वै श्रेयान् पापीयान् प्रतिप्रस्थाता पापीयाँसमेव वसीयसो लोके सादयति वसीयाँसं पापीयसः पापवसीयसं करोत्येतद्ध वै विपूजनस्सौराकिः पापवसीयसं विदांचकार ॥५॥

१४-१७

यदि कामयेत यजमानादयजमानं भ्रातृव्यं पूर्वँ कुर्यामिति प्रतिप्रस्थाता पूर्वो गृहीत्वा स पूर्वो निरूहेद्यजमानो वै श्रेयान् पापीयानस्माद्भ्रातृव्योऽयजमानो भ्रातृव्यमेवास्मात् पूर्वँ करोत्यध्वर्योर्लोके तिष्ठञ्जुहोत्यध्वर्युर्वै श्रेयान् पापीयान् प्रतिप्रस्थाता भ्रातृव्यमेवास्य लोकमभ्यारोहयत्यलोकमेनं करोति नयन्नाश्रावयेदध्वर्युरप्रतिष्ठानस्स्यान्नानालभ्य पात्रमाश्रावयेदेतद्वा अध्वर्योस्स्वमस्वस्स्या-द्यत्राग्र आहुतिं जुहोति तदुत्तरा जुहुयाद्यत्र वा अग्र आहुतिं जुहोति तद्देवताः परिविशन्ति यदन्यत्रा जुहुयाद्देवताभ्यस्समदं कुर्यात् साक्षादेव देवेभ्यो भागधेयँ संप्रयच्छति ॥ नाना वा एतौ पुराग्नी आस्तां पशोश्चाहवनीयश्च तस्मात् पुरा रुद्रः पशूनघातुक आसीत् पशवो वै पशवः पशवोऽँशवो

[६) मै. ४,६,१ (१,४,८) । कपि. ४१,६ ।

रुद्रोऽग्निर्यदाहुतीस्संसृजति रुद्राय पशूनपिदधात्यपशुर्भवति तस्मादिदानीं रुद्रः पशून् घातुको मध्ये-
ऽग्नेर्जुहुयादाज्याहुतीश्च पश्वाहुतीश्चाभितस्सोमाहुती रुद्रमेव पशुभिः परिवृणक्त्यघातुकस्तत्र रुद्रः
पशून् भवति यत्रैवंविदध्वर्युर्भवति ॥६॥ १८-१९

आयुस्संधत्तं प्राणँ संधत्तमिति प्राणानेव संधत्तस्तस्मात् प्राणा द्वन्द्वँ संजग्माना दिवा पृथिव्ये-
तीमानेव लोकान् समर्धयतो निरस्ता शण्डामर्कौ सह तेन यं द्विष्म इत्येतावान् वै यज्ञो यावच्छुक्रा-
मन्थिना एतावती पृथिवी यावत्युत्तरवेदिरनृतँ शण्डामर्का अनृतं भ्रातृव्योऽनृतमेव भ्रातृव्यमेता-
वता यज्ञाच्च पृथिव्याश्च निर्भजतश्शुक्रस्याधिष्ठानमसि मन्थिनोऽधिष्ठानमसीति समिद्ध एव जुहुतो-
ऽग्निर्वा आहुत्या अतिद्रवादबिभेद्यच्छल्कौ प्रास्यत आहुत्या अनतिद्रवाय ॥ चक्षुषी वा एते यज्ञस्य
यच्छुक्रामन्थिनौ यच्छल्कौ प्रास्यतश्चक्षुषोरेवान्तर्धत्तोऽप्रदाहाय तस्मा इन्द्राय सुतमाजुहोत तस्मैँ
सूर्याय सुतमाजुहोतेति चक्षुषोर्व्यावृत्त्यै तस्मात् समानँ सच्चक्षुर्द्वेधा सर्वहुतौ जुहुतस्सर्वमेव प्रजासु
चक्षुर्धत्तो यः पात्राणां ग्रहाणाँ सोमानां मिथुनं वेद तस्मादेव मिथुनात् प्रजायते स्थालीभिरन्यान्
ग्रहान् गृह्णन्ति वायव्यैरन्याँस्तत्पात्राणां मिथुनँ श्रीणन्त्यन्यान् ग्रहान्नान्याँस्तद्ग्रहाणां मिथुनमाशी-
र्वन्तोऽन्ये सोमा भवन्ति नान्ये तत् सोमानां मिथुनं तस्मादेव मिथुनात् प्रजायते ॥७॥
२०-२१

देवाश्च वा असुराश्च संयत्ता आसन् बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्का असुराणां ते न
व्यजयन्त स इन्द्रोऽवेदुभये हि वै ब्रह्मण्वन्तस्स्मस्तन्न विजयामह इति ता उपामन्त्रयत अब्रुवतां
वार्यं वृणावहै सोमपीथो नौ देवेष्वस्तु ग्रहौ नौ गृह्येतामिति ताभ्यामेता इन्द्रश्शुक्रामन्थिनौ प्राय-
च्छदात्मनस्सन्तौ तद्भागधेयमभ्यैतां तस्माद्ब्राह्मपुरोहितं पराभावुकं तस्माद्भ्रातृव्यायानृतं वदेत्
सोऽमन्यत यदिमा आभ्यामसुरब्रह्माभ्याँ होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि
तदन्वाभविष्यन्तीति ता आददानोऽपानुदतापनुत्ता शण्डामर्कौ सह तेन यं द्विष्म इति ततो देवा
अभवन् परासुरा अभवन् यस्यैवं विदुषश्शुक्रामन्थिनौ जुह्वति यस्यैवं विद्वाँसौ जुहुतो भ्रातृव्यस्या-
पनुत्त्यै भवत्यात्मना परास्य भ्रातृव्यो भवति प्रजापतेर्वा अक्ष्यश्वयत् तस्य कनीनिका परापतत्
सा विकङ्कतं प्राविशत् तस्मिन्नाध्रियत सा यवं प्राविशत् तस्मिन्नध्रियत वैकङ्कतं मन्थिनः पात्रं
भवति सक्तुभिश्श्रीणाति प्रजापतेरेव चक्षुसंभरति यजमानदेवत्यो वै शुक्रो भ्रातृव्यदेवत्यो
मन्थी हिरण्येन शुक्रँ श्रीणाति तेजो वै हिरण्यं तेजसैव यजमानँ समर्धयति तस्मादन्यतर-
च्चक्षुषोस्तेजस्वितरं तस्मादहरेकरूपँ सक्तुभिर्मन्थिनँ श्रीणाति तेज एव भ्रातृव्यस्य विनयति

[७] मै. ४,६,३ (९—१५)। कपि. ४३,१। वा. ७,१२–१३,१७—१८। काण्व. ७,१२,१७। तै. सं. ६,४,१०।
[८] मै. ४,६,३ (९—१५)। कपि. ४३,१। वा. ७,१२—१३,१७—१८। काण्व. ७,१२,१७। तै. सं. ६,४,१०।

तस्माद्रात्री बहुरूपानभिध्वँसयन्नितराणि पात्राणि श्रीणीयाद्यदभिध्वँसयेदक्ष्यामयः प्रजा विन्देद-न्धम्भावुको यजमानस्स्यात् प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिनौ यज्ञः प्रजापतिर्यत् प्राञ्चा उद्द्रुत्य जुहुतस्सवनमुखयोरेव चक्षुषी धत्तस्तस्माद् द्वे सवने शुक्रवती असौ वा आदित्यश्शुक्रश्चन्द्रमा मन्थी यदपिगृह्य प्राञ्चा उद्द्रवतस्तस्मादेतौ प्राञ्चौ यन्तौ न पश्यन्ति यदनपिगृह्य पुरस्तात् प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात् प्रत्यञ्चौ यन्तौ पश्यन्ति ॥ प्राचीभिर्वा आहुतिभिर्देवा अन्यानसुरान् प्राणुदन्त प्रतीचीभिरन्यान् प्रत्यञ्चौ तिष्ठन्तौ शुक्रामन्थिनौ जुहुतः प्राचीरितरा आहुतयो हूयन्ते भ्रातृव्यस्य विनुत्त्यै न वा एतौ मनुष्याः प्रच्यवमर्हन्ति तुथोऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्तु तुथोऽसि जनधाया देवास्त्वा मन्थिपाः प्रणयन्त्विति स्वयैवैनौ देवतया प्रणयति सुवीराः प्रजाः प्रजनयन् परीहि सुप्रजाः प्रजाः प्रजनयन् परीहीति वीरमेवात्रीषु प्रजासु धत्तो भूमानमाद्यासु तस्मादेतासु वीर आजायते तस्मादितरा अद्यमाना न क्षीयन्ते ॥ शुक्रं वा अन्वत्रीः प्रजाः प्रजायन्ते मन्थिनमाद्या अग्निः प्रजनयिता यदभितोऽग्निं विपरिद्रुत्यजुहुत उभयीरेवैतदत्रीश्चाद्याश्च प्रजाः प्रजनयतोऽवरि-फन्ता इवोत्तरवेदिं परीयातां सपर्वास्य स्वप्रकाशो जायते प्रजापतेर्वा एषा नासिका यदुत्तरवेदिश्चक्षुषी शुक्रामन्थिनौ यज्ञः प्रजापतिर्यत् प्राञ्चा उद्द्रुत्य जुहुतो नासिकाया एव पुरस्ताच्चक्षुषी धत्त एत-द्ध्येतस्याः पूर्वमभितस्तिष्ठन्तौ जुहुतस्तस्मान्नासिकामभितश्चक्षुषी अनाधृष्टासीति निगृह्णीतस्तस्मादक्षि घ्राने नीपतमम् ॥८॥ २२-२४

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत तेऽसुरा भूयाँस-श्श्रेयाँस आसन् कनीयाँसः पापीयाँस आनुजावरतरा इव देवास्ते देवा एतमाग्रायणमपश्यँस्तम-गृह्णत तेनाग्रं पर्यायन् यदग्रं पर्यायँस्तदाग्रायणस्याग्रायणत्वं य आनुजावरस्स्यात् ॥ २५

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यँ सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ २६

इत्येतया पुरोरुचाग्रायणं गृहीतं भ्रातृव्यमेव वृक्त्वाग्रं पर्येति ॥ वाग्वै देवेभ्योऽपाक्रामद्यज्ञे भागधेयमिच्छमाना ते देवा एतावद्यज्ञस्य मनसातन्वत सान्तर्यन्ति मेत्याग्रायणं प्रतिन्यागच्छद्यदा-ग्रायणं गृहीत्वा वाचं विसृजते वाचमेव यज्ञ आगतां युनक्ति मृगस्येव वै यज्ञस्याभित्सार आत्मा यज्ञस्याग्रायणो यद्वाचं यच्छति यज्ञमेवाभित्सरति यद्विसृजते यज्ञमेव यत्वा वाचं विसृजते प्रजापति-र्वा आग्रायणः प्राजापत्या एत ऋत्विजस्त्रयो वृता युक्ता यज्ञे भवन्ति प्रस्तोतोद्गाता प्रतिहर्ता यद्धिङ्करोत्युद्गातृनेव वृणीते तेऽस्य वृता युक्ता यज्ञे भवन्ति ॥ द्वयोर्धारयोः प्रातस्सवने गृह्णाति

---

[९] मै. ४,६,४ (१६-१८) । वा. ७,१९-२०; ३३,३९ । काण्व. ७,२०-२१; ३२,५९ । तै. ब्रा. ६,४,११ ।
[विदद्यदी सरमा० । ऋ. ३,३१,६; तै. ब्रा. १,५,८,१०]

तिसृणां मध्यन्दिने चतसृणां तृतीयसवने नव वै पुरुषे प्राणा आत्मा यज्ञस्याग्रायणः प्राणानेवा-त्मानमभिसंपादयते वि वा एतद्यज्ञं छिन्दन्ति यन्नाना सवनानि सँस्थापयन्त्यात्मा यज्ञस्याग्रायणो यदाग्रायणँ सवने सवनेऽभिगृह्णात्यात्मनैव यज्ञँ संतनोति ये देवा दिव्येकादश स्थेति त्रयस्त्रिँशद्देवता-भिरेव यज्ञँ संतनोति प्रजापतिर्वा आग्रायणो यत् प्रस्कन्दयति रेत एव दधाति यदुपगृह्णाति प्रैव जनयति स्थाल्या गृह्णाति सोऽविज्ञातो भवति येन होष्यन्तीति तस्माद्गर्भेणाविज्ञातेन भ्रूणहा स्थाल्या गृह्णाति वायव्येन जुहोति तस्मात् स्त्री निर्वीर्यानिर्वीर्यः पुमान् परा स्थालीमस्यन्ति न वायव्यं तस्मात् स्त्रियं जातां परास्यन्ति न पुमाँसं यदि ग्रह उपदस्येदाग्रायणाद्गृह्णीयाद्यद्याग्रायण उपदस्येद्ग्रहेभ्यो गृह्णीयात् पिता वा आग्रायणः पुत्रा ग्रहा यद्वै पुत्रस्योपदस्यति पितरँ स उप-धावति स एष प्रायश्चित्त्या एव सोमो गृह्यते ब्रह्मवादिनो वदन्ति कस्माद्गायत्र्ययातयाम्न्यभिनि-वर्तँ सर्वाणि सवनानि वहतीति वत्सो वा एष गायत्र्या यदाग्रायणो यदाग्रायणँ सवने सवनेऽभि-गृह्णाति तस्माद्गायत्र्ययातयाम्न्यभिनिवर्तँ सर्वाणि सवनापि वहति तस्माद्गौर्वत्सादपक्रियमाणा पुनरभिनिवर्तते प्रजापतिः प्रजास्सृष्ट्वा ता अभिहिङ्ककरोत् प्रजापतिराग्रायणो यदाग्रायणं गृहीत्वा हिङ्करोति तस्माद्गौर्वत्सं जातमभिहिङ्करोति ॥९॥　　२७-२९

इन्द्रो वै वृत्राय वज्रमुदयच्छत सोऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत् ते प्रदास्यामि मा मे प्रहा-रिति तदस्मै प्रायच्छत् सोऽवेदस्ति वावास्मिन् वीर्यमिति तस्मै द्वितीयं तस्मै तृतीयमुदयच्छत सोऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत् ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छद्यज्ञं वावास्मै तत् प्रायच्छदुक्थ्यमेवैतावान् यज्ञो यावानुक्थ्योऽन्तश्श्लेषणाय त्वा इतरे ग्रहा गृह्यन्ते त्रिः प्रायच्छत् तस्मादेतं त्रिर्विगृह्णन्ति यदेकँ सन्तं बहुधा विगृह्णन्ति तस्मादेको बहूनां ग्रामणीश्शिरो वै यज्ञस्योक्थ्योऽङ्गान्युक्थानि चक्षुषी शुक्रामन्थिनौ यदेतौ भूयिष्ठास्सोमा अनुहूयन्ते तस्माच्चक्षु-स्सर्वाण्यङ्गानि प्रति यदुक्थ्यपात्रं भूयिष्ठास्सोमा अन्वायन्ति तस्मादेकं पुण्यं यन्तं बहवोऽनुयन्ति ॥ वि वा एतद्यज्ञं छिन्दन्ति यन्नाना सवनानि सँस्थापयन्त्यात्मा यज्ञस्योक्थ्यो यदुक्थ्यं सवने सवने विगृह्णाति तेनैव यज्ञँ संतनोतीन्द्राय त्वा बृहद्वत इत्यैन्द्रो वै यज्ञस्तस्मै त्वा विष्णवे त्वेति विष्णुर्वै यज्ञो विष्णुनैव यज्ञेन यज्ञँ संतनोति यथा वा उभयतोयुक्तं यथोभयतोवीवधमेवं पुरोरुक् च ग्रह-श्चाथैषोऽपुरोरुक् को गृह्यत ईश्वरो यज्ञो विवृहो यदुक्थ्यं विगृह्णाति तेनैष सयुक्तेन सवीवधँ शिरो वै यज्ञस्योक्थ्योऽङ्गान्युक्थानि पश्चाद्वै प्राङ् यज्ञ उक्थैश्शिरोऽभिसंततो यदुक्थ्यमवनयति पश्चादेव प्राञ्चं यज्ञमुक्थैश्शिरोऽभिसंतनोति तस्मात् पश्चात् पश्चात् प्राङ् पुरुषस्स्नावभिश्शिरोऽभिसंततस्त्ववा

---

[ये देवा(०सो) दिव्येकादश०। ऋ. १,१३९,११. तै. सं. १,४,१०,१]
[१०] मै. ४,६,५ (१९-३२)। वा. ७,९,२२। काण्व. ७,८,२४। तै. सं. ६,५,१।

छन्नश्शीर्षं सोमो यदि कामयेताध्वर्युरात्मानं यशसार्पयेयमित्यन्तराहवनीयं च हविर्धानं चावनये-देष वा अध्वर्योर्लोकस्स्व एव लोकेऽध्वर्युरात्मानं यशसार्पयति यदि कामयेत यजमानं यशसार्पये-यमित्यन्तरा सदोहविर्धाने अवनयेदेष वै यजमानस्य लोकस्स्व एव लोके यजमानं यशसार्पयति यदि कामयेत सदस्यान् यशसार्पयेयमिति सद आलभ्यावनयेदेष वै सदस्यानां लोकस्स्व एव लोके सदस्यान् यशसार्पयत्यात्मा वै यज्ञस्याग्रायणोऽङ्गान्युक्थ्यो यदाग्रायणमुक्थ्योऽनुगृह्यत आत्मन्नेव यज्ञस्याङ्गानि प्रतिदधाति तस्मादात्मन्नङ्गानि प्रतिहितानि ॥१०॥ ३०-३१

[१९५२]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां वाचस्पतिर्नाम सप्तविंशं स्थानकं संपूर्णम् ॥२७॥

अथाष्टाविंशं स्थानकम् ।

## आयुष्यम् ।

आयुर्वै ध्रुव उत्तमो गृह्यते तस्मादायुः प्राणानामुत्तमं नवमो गृह्यते नव हि प्राणा एकाकिनमुत्तर-स्मिन् हविर्धाने सादयति तस्मादेकाकी प्राणानामर्धभागवाङ् प्राणो ध्रुवं वा अनु मनुष्याः प्रजा-यन्त इतरान् ग्रहानन्वन्याः प्रजा अनुपोप्ते ध्रुवँ सादयत्युपोप्त इतरान् ग्रहाँस्तस्मात् पुरुषो माँसेन प्रतितिष्ठत्यस्था पशवो राजपुत्रो गोपायति राजन्यो वै प्रजानामधिपतिरायुर्ध्रुव आयुरेव प्रजानां गोपायत्यथो क्षत्रमेव गोपायते यदि कामयेतावगतमपरुन्ध्युरपरुद्धोऽवगच्छेदित्यध्रुवं त्वा ध्रुवक्षिति-मध्रुवाणामध्रुवतममच्युतानामच्युततमममुष्या विश उदूहामीति ध्रुवमुदूहेद् ध्रुवो वा एष योऽवगतो-ऽध्रुवोऽपरुद्धोऽवगतमेवापरुणद्ध्यपरुद्धमवगमयति ताजग्व्यवगच्छेते यदेवं कुर्यादायुः प्रजानां वि-चालयेत् तृणमेतेन मन्त्रेणोपर्युपर्यतिहरेत् तेनैवापरुद्धमवगमयति नायुः प्रजानां विचालयति देवक्षेत्रं वै वेदिरेतावती पृथिवी यावती वेदिर्देवक्षेत्रेणैवैनं मनुष्यक्षेत्रान् वदति पूर्णं गृह्णीयाद्यं कामयेत सर्व-मायुरियादिति पूर्णमेवास्मा आयुर्गृह्णाति सर्वमायुरेत्यल्पं गृह्णीयाद्यं कामयेताल्पमायुरियादित्यल्पमे-वास्यायुष्करोति ताजक् प्रधन्वत्युपर्युपार्धं गृह्णीयाद्यं कामयेतोत्तरमायुरियादित्युत्तरमेवैनमायुर्गमयति॥ यथारूपमस्मा आयुः परिगृह्णात्युभयतोवैश्वानरं गृह्णाति तस्मात् प्राणा उभयतोवैश्वानरा मूर्धानं दिवो अरतिं पृथिव्या इति देवेषु चैवं मनुष्येषु चायुर्दधाति पुरुषेण वै यज्ञस्संमित आयुषा पुरुष-स्संततो यदेष प्रातर्गृहीत आ तृतीयसवनाच्छय आयुषैव यज्ञँ संतनोति प्रातर्वा एतौ गृह्येते गायत्र्या लोक आग्रायणश्च ध्रुवश्च ता आ तृतीयसवनाच्छयाते जगत्या लोकात् तस्माद्गायत्र्ययातयाम्न्यु-त्तरे सवने प्रत्येत्येतदेवाभि भागधेयं प्राणो वै गायत्र्यायुर्ध्रुवो यदेष प्रातस्सन्न आ तृतीयसवनाच्छये

[१] मै ४,६,६ (३३-५४) । कपि. ४४,१ । वा. ७,२४; ३३,८ । काण्व.७,२६; ३२,८ । तै सं. ६,५,२ ।
[ मूर्धानं दिवो० । ऋ. ६,७,१; सा. ६७, ११४०; तै. सं. १,४,१३,१]

तस्माद्यावदेवायुस्तावान् प्राण आयुर्वै ध्रुवो रुद्रोऽग्निर्नैकाकी होतव्य आयुः प्रजानां प्रदध्यात् प्रमायुकास्स्युर्होतुश्चमसेऽवनयति वैश्वदेवो वै होता वैश्वदेवीरिमाः प्रजाः प्रजास्वेवायुर्दधात्यध्रुवं वा एनमेतत् करोति यदवनयत्येतस्य वा अध्रुवत्वमनु प्रजाभ्यो न कल्पते दृँहन्तां दैवीर्विशः कल्पन्तां मनुष्या दिवि दिव्यानि सन्त्वन्तरिक्षे वयाँसि पृथिव्यां पार्थिवानीति ध्रुवमवनयति यथायतनमेव प्रजा दृँहत्याहूत उक्थेऽवनयेत् स्तुतेनैव शस्त्रमभिसंतनोति यदाहूतेऽवनयेदुक्थमतिरेचयेद्यच्छस्ते ग्रहमतिरेचयेद्या मध्यमा परिधानीया तस्यामवनयत्यङ्गानि वा एतानि यज्ञस्य यदुक्थामदान्यायुर्ध्रुवोऽर्धं वै पुरुषस्यात्मनोऽङ्गान्यर्धमायुरन्ता एवाभितस्संधायायुर्मध्यतो दधाति कस्मात् सत्यादित्याहुर्ब्रह्मवादिन आपस्त्वरमाणा न क्षीयन्ते न प्रदस्यन्तीत्येतमेव सोमपीथं प्रतीक्षमाणा यद् ध्रुव एष ह्येना अपनुदते प्रत्यङ्ङासीनोऽवनयत्यन्वीपमेवैना अवार्जति न सामि प्रस्रावयेताग्निष्टोममेवासीतायुर्वै ध्रुव आयुर्व्यवस्रावयेतैतावान् वै यज्ञो यावानेवाग्निष्टोमो यदाग्निष्टोममास्ते प्राणस्यैवास्यान्तर्गच्छति सर्वमायुरेत्युदरं वा एतद्यज्ञस्य यत् सदस्तद् द्रवन्ति निस्सर्पन्तो यज्ञः प्रजापतिर्यदाग्निष्टोममास्ते प्रजापतेरेवोदरं न रिणक्त्यक्षोधुको भवति ॥१॥ १-२

देवा वा असुरान् हत्वा वैरदेयादीपमाणास्त ऋतून् संवत्सरममोहयँस्तस्य देवाः क्लप्तिमैच्छँस्तमृतुग्रहैरेवाकल्पयन् यदृतुग्रहा गृह्यन्ते संवत्सरस्य क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्या उभौ सह प्रथमं गृह्याते उभौ ह्येतौ सह संवत्सरं कल्पयितुमुपप्रेत उभौ सहोत्तमँ संवत्सरमेव कल्पयित्वोभौ सह विमुच्येते उभयतोमुखे ऋतुपात्रे भवत उभयतोमुखा ह्यृतवो न हि तद्विद्म यतरत ऋतूनां मुखं नान्योऽन्यमभिप्रपद्येयातां यदभिप्रपद्येयातामृतुर्ऋतुमभ्यायुकस्स्याद्यद्यतीतस्तस्मादाहुरश्वा इवर्तू समद्यातामिति द्वादशैते गृह्यन्ते द्वादश मासास्संवत्सरस्संवत्सरस्य क्लृप्त्यै संवत्सरो वै स्वर्गो लोकस्तस्यैत आक्रमास्संक्रमा यदृतुग्रहा रोहमेवैतै रोहति स्वर्गस्य लोकस्य समष्ट्यै षडन्ये भवन्ति षडन्येऽसौ वा आदित्य ऋतुस्तस्मादेष षण्मास उदङ्ङेति षड् दक्षिणा षडृतुना षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति चतुर्ऋतुभिश्चतुष्पादाः पशवस्संवत्सरं पशवोऽनुप्रजायन्ते संवत्सरादेवास्मै पशून् प्रजनयति द्विर्ऋतुना पुनर्द्विपाद्यजमानः पशुष्वेवोपरिष्टात् प्रतितिष्ठति ॥ सोमपाना वा एते सोमपा इन्द्रस्य सजाता यदृतुग्रहा ऋतुना सोमं पिबत्विति ह्याह नर्तुरिति नर्तवे जुह्वति तेषामेते स्वे पात्रे याभ्यामेनाञ्जुह्वति तस्मात् सजातस्स्वेन पात्रेण बलिँ हरत्यास्मै बलिँ हरन्ति य एवं वेद व्यवहारं भक्षयन्त्ययातयामत्वाय तस्मादृतुमृतुं वर्षति तेन देवास्संवत्सरं कल्पयित्वा स्वर्गं लोकं प्रज्ञाय त एतद्यज्ञस्य ज्योतिरुपरिष्टाददधुर्यदैन्द्राग्नो गृह्यते ज्योतिरेव मुखतो यज्ञस्य दधाति संवत्सरस्य क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै ॥ तस्मात् संवत्सरं ज्योतिरुपर्युपरि चरत्यृतुपात्रेणैन्द्राग्नं गृह्णाति

[२] मै. ४,६,७-८ (५५-५६)। कपि. ४४,२। तै सं. ६,५,३—४।

क्षत्रं वा इन्द्राग्नी विड्तवो विश्येव क्षत्रमध्यूहति विश्वे वै देवास्तृतीयसवनभागास्सन्तस्ते प्रातस्सवन-मभ्यकामयन्त तान् प्रजापतिरेतस्मिन् ग्रहे तर्पयितव्यानपश्यद्यद्वैश्वदेवः प्रातस्सवने गृह्यते विश्वा-नेव देवान् प्रातस्सवने तर्पयति तानस्य तृप्तान् प्रीतानुत्तरे सवने अभिविसृज्येते शुक्रपात्रेण वैश्वदेवं गृह्णात्यसौ वा आदित्यश्शुक्रो वैश्वदेवीरिमाः प्रजास्तस्मादेष सर्वाः प्रजाः प्रत्यङ् मा३म्प्रति मा३म्प्रतीति हि मन्यन्ते ॥२॥ ३–५

माध्यन्दिनेन वै सवनेनेन्द्रो वृत्रमहन् मरुद्भिर्वीर्येण मरुत्वतीयँ स्तोत्रं भवति मरुत्वतीयमुक्थं मरुत्वतीया ग्रहास्सर्वत एव यजमानं वीर्येण समर्धयति सर्वतो वृत्रँ हन्ति प्रतिहितिरेव प्रथमो मरु-त्वतीयोऽपायतिर्द्वितीयो विसृष्टिं तृतीयेन विसृजति वज्रमेव प्रथमेन मरुत्वतीयेनोद्यच्छते प्र द्विती-येन हरति स्तृणुते तृतीयेन यं द्विष्यादमरुत्वतीयाँस्तस्य गृह्णीयाद्वीर्यं वै मरुतो वीर्येणैवैनं व्यर्धय-तीन्द्रो वै वृत्रँ हनिष्यन् प्रदानं देवेभ्यः प्रायच्छद्दक्षिणास्स मरुत्वतीयैरेव वृत्रमहँस्तस्मान्मरुत्वते-ऽनूक्ते न देयँ हतो हि तर्हि वृत्रो विजितं भवति नो प्रतिगृह्णीयात् प्रतिष्ठितान् पशून् प्रच्यावयत्य-पशुर्भवतीन्द्रो वै वृत्रँ हत्वा स महेन्द्रोऽभवत् सोऽन्यान् देवानत्यमन्यत स एतं ग्रहमुद्धारमुदहरत महेन्द्रीयं तस्माद्राजा संग्रामं जित्वा निराजं निरजते ते तं देवा अब्रुवन् सर्वं वा अवोचथा अस्तु नोऽत्रापीति कथं वोऽपि स्यादिति विराजैतस्य ग्रहस्य यजत्विति देवपात्रं वै विराड् यद्विराजा यजति देवपात्रेणैव देवतास्तर्पयति ॥ तस्माद्यद्राजा संग्रामं जयत्यपि तत्र सूतग्रामणीनां गायत्र्या वै त्रिवृदायतनवाँस्त्रिष्टुभा पञ्चदशो जगत्यैकविंशोऽथैषा विराडायतनमेव यत् सप्तदशो यद्विराजा यजति सप्तदशमेवायतनवन्तं करोति यं द्विष्यात् त्रिष्टुभा तस्य यजेदोजो वै वीर्यं त्रिष्टुबोजसैवैनं वीर्येणायतनाच्छिनत्ति सोऽनायतनः पराभवति देवा वा असुरान् हत्वा वैरदेयादीषमाणास्ते यज्ञं मध्यतः प्राविशन्नेतां वाव तदृचं प्राविशन् विराजमेव यद्विराजा यजति देवतानामभीष्ट्या आदित्या वै स्वर्गं लोकं यन्तस्तेऽङ्गिरसोऽस्मिँल्लोके सह यज्ञेन प्रत्यौहँस्तेऽङ्गिरस आदित्यानब्रुवन् कतिभ्यो वो हव्यं वक्ष्याम इति त्रयस्त्रिंशत इत्यब्रुवन् दश वसव इन्द्र एकादशो दश रुद्रा इन्द्र एकादशो दशादित्या इन्द्र एकादशस्त्रिँशदेता देवतास्त्रिँशद् त्र्यक्षरो वषट्कार एकाक्षरा वाक्तेनैन्द्रं कल्पन्तेऽस्य देवता हव्ये यथादेवतमस्य हव्यं गच्छति वृणत एनमार्त्विज्याय य एवं वेद यावती-र्हि देवतास्ता हव्यं गमयति ॥३॥ ६–७

माध्यन्दिनाद्वै सवनाद्देवास्स्वर्गं लोकमायँस्तेषामेत आक्रमास्संक्रमा यद्दक्षिणा यद्दक्षिणा ददाति सेतुमेव कीर्त्वा स्वर्गं लोकमेति यावद्वा इह प्राणद्ददाति तावन्तोऽमुष्मिँल्लोके प्राणास्तस्माद्बहु देयं

---

[ ३ ] मै. ४,६,८ (५६)। कपि. ४४,३ । तै. सं. ६,५,५ ।

[ ४ ] मै. ४,८,२—३ (५—६)। कपि. ४४,४ । वा. ७,४५-४६ । काण्व. ९,१०-११ । तै. सं. ६,६,१ ।

तस्मादिह बहु दत्तं प्रशँसन्ति ज्यायाँसमेव सेतुं किरत एतर्हि वै देवता नेदिष्ठाभ्यानमन्ति तस्मादेष एतर्हि तेजिष्ठं तपति यावन्नेदिष्ठादेव स्वर्गं लोकमारोहति सौरीभ्यां जुहोति स्वर्गस्य लोकस्य समष्ट्यै द्वाभ्यां द्विपाद्यजमानोऽस्यामेवैनमाक्रामयति यदाग्नेय्याग्नीध्रे जुहोत्यन्तरिक्ष एवैनमाक्रामयति ॥ यद्ददाति स्वर्गमेवैनं लोकं गमयति द्यां गच्छ स्वर्गच्छेति स्वर्गस्य लोकस्य समष्ट्यै रूपं वो रूपेणाभ्यागां वयसा वय इत्येतद्वै पशूनां रूपं यद् घृतं यद्धिरण्यं रूपमेवैषां रूपेणाभ्येति वयसा वयस्तुथो वो विश्ववेदा विभजत्विति सत्यं वै तुथो विश्ववेदास्सत्येनैवैनान् ब्रह्मणा विभजत्येतत् ते अग्ने राध एति सोमच्युतमित्याग्नेया वै पशवस्ते सोमे दीयन्ते तान् मित्रस्य पथा नयेति मित्रस्यैवैनान् पथा नयत्यन्तराग्नीध्रं च सदश्च नयत्येतेन वै पथा देवास्स्वर्गं लोकमायँस्तमेवैना अपिपादयति ॥ दक्षिणतो वै देवानां यज्ञं रक्षाँस्यभ्यजयँस्तमाग्नीध्रात् पुनरपाजयन् यदाग्नीध्राद्दक्षिणा दक्षिणा नयन्ति यज्ञस्याभिजित्यै रक्षसामपहत्या आग्नेय्याग्नीध्रे जुहोत्याग्नेया वै पशवः पशूनां निष्क्रीत्यै वारुण्या द्वितीयया जुहुयाद्यद्यश्वं वानो वा रथं वा दास्यन् स्याद्वारुणा ह्यश्वा वारुणा वनस्पतयोऽग्निस्सर्वा देवता देवतानामभीष्ट्या उपबर्हणं ददात्येतद्वै छन्दसां रूपं रूपेणैव च्छन्दाँस्यवरुन्द्धे हिरण्यं ददाति हिरण्यज्योतिष एवैनास्स्वर्गं लोकं गमयत्यस्मद्राता मधुमती देवत्रा गच्छेति स्वर्गमेवैना लोकं गमयति ॥ प्र दातारमाविशेति तस्मादमुष्मिंल्लोक आगामुका ऋतस्य पथा प्रेत चन्द्रदक्षिणा इति यो वै यज्ञियो मेध्यस्स ऋतस्य पन्थास्तेनैवैना नयति ब्राह्मणमद्यर्ध्यासं पितृमन्तं पैतृमत्यमिति यो वै श्रोत्रिय आर्षेयस्स पितृमान् पैतृमत्यस्तं विदेयमित्येवैतदाह स हि सुधातुदक्षिणो यामब्राह्मणाय ददाति वनस्पतयस्तया प्रथन्ते यां कण्वकश्यपेभ्यो ददाति नीहारस्तया प्रथते यां ब्राह्मणायाश्रोत्रियाय ददाति मरीचयस्तया प्रथन्ते याँ श्रोत्रियायार्षेयाय ददाति तयामुष्मिंल्लोक ऋध्नोत्यस्मिँश्चास्य लोके पुनर्भोगाय भवति तस्मात् स एवैष्टव्यो वि स्वः पश्य व्यन्तरिक्षमिति सदः प्रेक्षते ॥ सोमपा वा एते ब्राह्मणास्तेषां तेजस्वीनि चक्षूँष्यरातीयन्ति वा एते ददते त एनमीश्वराः प्रतिनुदस्तेभ्य एव नमस्करोत्यप्रतिनोदायात्रिहिरण्यं ददाति स्वर्भानुर्वा आसुरस्सूर्यं तमसाविध्यत् तमत्रिरेवाग्रेऽन्वविन्दद्यदत्रिहिरण्यं ददाति स्वर्गस्य लोकस्य समष्ट्यै यद्यात्रेयं न विन्देद्य आर्षेयस्सँहितस्तस्मै दद्यात् तेनैवर्ध्नोत्यसुरा वै देवेभ्यो दक्षिणामनयँस्तां प्रत्यनुदन्त तेऽब्रुवन्नस्निहदेषेति तेभ्योऽपरामनयँस्तां प्रत्यनुदन्त तेऽब्रुवन्नृम्णमेषागादिति तेभ्योऽपरामनयँस्तां प्रत्यनुदन्त तेऽब्रुवन्नद्राप्सीदेषेत्येता ह वै तद्यापिरभ्यनूवाच ॥ ८-१२

अव द्रप्सो अँशुमतीमतिष्ठदियानः कृष्णो दशभिस्सहस्रैः ।
आवत् तमिन्द्रश्शच्या धमन्तमप स्नेहितीर्नृमणामदधाम् ॥ १३

[ अव द्रप्सो अँशुमती०। ऋ. ८,९६,१३; सा. ३२३; अथर्व. २०,१३७,७, तै. आ. १,६,३ ]

इति सा सालावृकी संभूयासुरान् प्राविशत् सैनानिरदहत् तस्माद्दक्षिणा प्रतिनुत्ता न प्रतिगृह्या न गोषु चालयेत् सालावृक्येवैनं भूत्वा प्रविशति सैनं निर्दहति ॥४॥ १४

यद्गां ददात्यायुस्तेन स्पृणोति यद्वासो ददाति दीर्घं तेनायुष्कुरुते यदश्वं ददाति सूर्यभ्राजमेवैनं करोति यदनो यद्रथं ददाति शरीराणि तेन स्पृणोति यदविं यदजां ददाति माँसानि तेन स्पृणोति यदोदनं यन्मन्थं ददाति यदेवास्यान्तरात्मं तत् तेन स्पृणोति यद्वरं ददात्यात्मानं तेन स्पृणोत्यात्मा हि वरो यद्ब्रह्मणे ददाति बार्हस्पत्यो वै ब्रह्मा बृहस्पतिमेव तेन प्रीणाति यदुद्गात्रे ददाति प्राजापत्यो वा उद्गाता प्रजापतिमेव तेन प्रीणाति यद्धोत्रे ददाति वैश्वदेवो वै होता सर्वा एवास्य तेन देवता अभीष्टाः प्रीता भवन्ति यदध्वर्युभ्यां ददात्याश्विनौ वा अध्वर्यू अश्विना एव तेन प्रीणाति यदृत्विग्भ्यो ददाति होत्रा वा ऋत्विजो होत्रा एवास्य तेनाभीष्टाः प्रीता भवन्ति ॥ यत् सदस्येभ्यो ददाति यमेव ते सोमं पिबन्ति तं तेन निष्क्रीणाति यां ब्राह्मणाय श्रोत्रियायानृत्विजे प्रसृप्ताय ददाति यामेव स विद्यां वेद सास्य तेनाभीष्टा प्रीता भवति यामब्राह्मणायाश्रोत्रियायानृत्विजे प्रसृप्ताय ददाति यामेव स विद्यां वेद सास्य तेनाभीष्टा प्रीता भवति यामकामो ददाति तस्मात् क्षत्रं ब्रह्मात्ति यां याचितो ददाति भ्रातृव्यं तया जिन्वति यां बर्हिर्वेदि ददाति नैनँ सा गच्छति यां ज्ञातयेऽनृत्विजे प्रसृप्ताय ददाति पाप्मानं तन्निधत्ते यां ज्येष्ठाय याँ श्रोत्रियाय ददाति येनैव स तदिन्द्रियेण भवति तदस्याभीष्टं प्रीतं भवति ॥५॥ १५-१६

आदित्या वा असुरान् हत्वा वैरदेयादीपमाणास्ते देवान् प्राविशन् द्विदेवत्यान् वाव तत् प्राविशन्नेते हि देवानाँ सह भूयिष्ठास्तस्मादादित्यो द्विदेवत्येभ्यो गृह्यत उच्छिष्टाद्वा आदित्या जातास्तस्मादेष उच्छिष्टस्सोमो गृह्यत उच्छेषणभागा वा आदित्यास्तस्मादेष उच्छिष्टस्सोमो गृह्यते परिश्रिते गृह्णाति रुद्रो वा अग्निः पशव आदित्यः पशूनां गोपीथाय रुद्रं वै देवा यज्ञान्निरभजँस्ते समवादिशन्नेष ते मातरि भाग इत्यादित्यान्तमेतावदागमयित्यैतत् प्रति यज्ञादन्तरदधुर्यत् परिश्रित आदित्यं गृह्णाति रुद्रमेव यज्ञादन्तर्दधाति ॥ पशवो वा आदित्यो यदेष भूयिष्ठस्सोमो गृह्यते तस्मात् पशवोऽद्यमाना न क्षीयन्ते यदा बहवोऽन्तर्वेदि स्युरथ गृह्णीयात् तानेवान्नाद्यमवरुन्द्धे यदास्य भ्रातृव्योऽन्तर्वेदि स्यादथ गृह्णीयादेष वै यजमानस्य स्वो लोको यद्वेदिः पशव आदित्यस्स्व एव लोके भ्रातृव्यस्य पशून् वृङ्क्ते बृहतीः पुरोरुचो भवन्ति पशवो वै बृहतीः पशव आदित्यः पशुष्वेव पशून् दधाति सोममग्रे गृह्णात्यथ दध्यथ सोममूर्ग्वै दधि पशव आदित्य ऊर्जमेव पशुषु मध्यतो दधाति शृतातङ्क्यं भवति तस्मादामा पक्वं दुहे यदि कामयेत वर्षेदिति या दिव्या वृष्टिस्तया त्वा

[५] मै. ४,८,३ (६)। कपि. ४४,५।

[६] मै. ४,६,९ (५९-६३)। कपि. ४४,६। तै. सं. ६,५,६।

श्रीणामीति दध्नोपरिष्टाच्छ्रीणीयात् पशवो वै दधि पशव आदित्यः पशुभ्य एव वर्षति यर्हि वर्षति पशुभ्य एव वृष्टिं निनयत्युपाँशुसवनेन मेक्षयति प्राणो वा उपाँशुसवनः पशव आदित्यः पशुष्वेव प्राणं दधाति विवस्व आदित्यैष ते सोमपीथ इत्येष वाव स उपाँशुसवनस्साक्षादेवैनँ सोमपीथेन समर्धयति यद्युद्गृहीतस्य स्तोकोऽवपद्यते ताजक् प्रवर्षति गृहीत्वापिदधाति गर्भाणां धृत्या अप्रपादाय तं दशमे स्तोत्रे प्रच्यावयति तस्माद्दशमे मासि गर्भा हिताः प्रजायन्तेऽन्यत्रेक्षमाणो जुहोति रुद्रो वा अग्निः पशव आदित्यः पशूनां गोपीथाय यदीक्षेत ब्राह्मण उपद्रष्टा पशून् गृह्णीयात् पशूनामेव प्रदीयमानानामनुपद्रष्टा भवति ॥६॥ १७-१८

अन्तर्यामपात्रेण सावित्रं गृह्णाति पशवो वा अन्तर्यामस्सवितृप्रसूताः पशवः प्रजायन्ते सवितृ-प्रसूत एवैनान् प्रजनयति तमसन्नं जुहोति तस्मादसन्नाः पशवस्सददि प्रजायन्ते देवा वै तृतीयसवन-मुद्यमं नाशक्नुवन् प्रातस्सवने तर्हि सवितासीत् तं देवा अब्रुवँस्त्वयेदमुद्यच्छामहा इति नेत्यब्रवी-न्मुख्योऽहमस्मि न प्रत्यङ्ङुपक्रमिष्यामीति मुख्य एवात्रास इत्यब्रुवन् मुख्य इहाथ त्वयोद्यच्छामहा इति तत् सवित्रोदयच्छन्त यत् सावित्रो गृह्यते तृतीयसवनस्योद्यत्या अभि त्वा देव सवितरित्ये-तया प्रातस्सवने मुख्यस्समन्तं वै तत् सविता यज्ञं पर्यभवत् समन्तं भ्रातृव्यं परिभवति य एवं वेदान्तर्यामपात्रेणाग्रायणात् सावित्रं तृतीयसवने गृह्णाति ॥ प्रातर्वा एष गृह्यते गायत्र्या लोके यदा-ग्रायणस्तं तृतीयसवने विगृह्णाति जगत्या लोके तस्मादाग्रायणात् सावित्रो गृह्यते सविता हि देवानां गायत्रस्सावित्रस्य सँस्रावे वैश्वदेवमभिगृह्णाति समानो वा एष ग्रहस्संतत्यै वैश्वदेवीरिमाः प्रजा-स्सवितृप्रसूताः प्रजाः प्रजायन्ते सवितृप्रसूता एवैनाः प्रजनयति सुशर्मासि सुप्रतिष्ठान इति सोमे हि सोममभिगृह्णात्यथो सुशर्माणमेवोत्तरमधरस्मै करोति सुप्रतिष्ठानमधरमुत्तरस्मै बृहदुक्षे नम इति बृहद्धि देवानां नमः पितॄणामुक्थभागा वै पितरोऽस्तोमभाजो यत्रैवैभ्य उक्थँ शँसति तदेभ्यो ग्रहं गृह्णाति ॥७॥ १९-२०

प्रजननं वै पात्नीवतो यद्वै किंच यज्ञे पात्नीवतं क्रियते प्रजननमेव तदुपाँशुपात्रेण गृह्णाति प्राणो वा उपाँशुः प्राणात् प्रजाः प्रजायन्ते प्रजननायोपाँशुना प्रयन्त्युपाँशुपात्रेणोद्यन्ति प्राणो वा उपाँशुः प्राणेनैव प्रयन्ति प्राणेनोद्यन्ति बृहस्पतिसुतस्य त इति ब्रह्म वै बृहस्पतिर्ब्रह्मणः प्रजाः प्रजायन्ते ब्रह्मणैवैनाः प्रजनयतीन्द इति रेत एव दधातीन्द्रियावत इतीन्द्रियं वै प्रजास्सोमपीथो-ऽग्ना३इ पत्नीवानिति मिथुनमेव करोति सजूस्त्वष्ट्रा सोमं पिबेति त्वष्टा वै रूपाणां विकर्ता सो-ऽस्मै रूपाणि विकरोत्येष वै ग्रहः पत्नीभ्यो नातिष्ठत तं देवा आज्यं वज्रं कृत्वाघ्नन् यत् पात्नीवतँ

[७] मै. ४,७,१ (१)। कपि. ४४,७। तै.सं. ६,५,७ [अभि त्वा देव सवित०। ऋ. १,२४,३; तै. सं.३,५,११,३]
[८] मै. ४,७,४ (११)। कपि. ४४,८। वा. ८,९—१०। काण्व. ८,८-११। तै. सं. ६,५,८।

श्रीणाति स्तृत्यै संपातेन श्रीणाति संतत्या उपरिष्टाच्छ्रीणाति तस्मात् स्त्र्यखलतिर्भावुका भृतं वा एतँ सोमं जुहोत्यभृतानितराँस्तस्मात् स्त्री निर्वीर्यानिर्वीर्यः पुमान्नैतस्य होता यजति पश्चेव हि स पश्चात् प्राणान् परिहरेदग्निर्यजति पुरो हि स पुरः प्राणान्नानुयजति यदनुयजेदग्निना प्राणानन्तरियात् प्रमीयेत स्तृतं वा एतँ सोमं भक्षयति तस्मादग्नित्पण्डको भावुकः प्रजननं वै पात्नीवतस्तस्माद्बहुपशुर्भावुकस्सह पात्रेण नेष्टारमभिसर्पति पत्नीरेव सोमपीथं गमयति नोपस्थ आसीत यदुपस्थ आसीत पण्डकस्स्यादन्तरा नेष्टारं च धिष्ण्यं च व्यवसर्पति स्त्रीणां वै नेष्टा पुमान् धिष्ण्यो मिथुन एव रेतो दधाति ॥८॥ २१

इन्द्रो वै वृत्रमहँस्तस्य मूर्धानमुदरुजत् स द्रोणकलशोऽभवत् ततो यस्सोमस्समस्रवत् स हारियोजनोऽभवदिन्द्रो वै वृत्रँ हत्वा तस्य क्लोम्नो हृदयात् सोमँ समसिञ्चत् स हारियोजनोऽभवत् सोऽमन्यत यदिममशृतमद्वितीयँ होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि तदन्वाभविष्यन्तीति स सँस्थितस्सोम आसीत् प्रहृताः परिधयोऽथोपोदतिष्ठद्धोतुं तमग्निरब्रवीन्न मय्येतमशृतमद्वितीयँ होष्यसीति तस्मिन् धाना आवपत् तँ शृतं द्वितीयवन्तमजुहोद्यद्धाना आवपति शृतत्वायैव द्वितीयत्वाय ये वै ते वृत्रे पशव आसँस्त एवैते पशूनेवैतत् कामदुघोऽवरुन्द्धे कामं कामँ ह्येतेषां कुरुत ऋक्सामे वा इन्द्रस्य हरी तयोरेतद्भागधेयम् ॥ यद्धारियोजन आधानानि परिधयो यत् प्रहृतेषु परिधिषु हारियोजनं जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति प्रजापतिर्वा आग्रायण आग्रायणादेष सोमोऽतिरिच्यते यद्वै यज्ञस्यातिरिच्यते प्रजापतिं तदभ्यतिरिच्यते यदेतमतिरिक्तँ सोमं जुहोति तस्मादयमतिरिक्तः प्रजापतिः प्रजा एवाभिवपते द्रोणकलशेनोन्नेता हारियोजनं जुहोत्यतिरिक्तं वा एतत् पात्राणां यद् द्रोणकलशोऽतिरिक्त एष ऋत्विजां यदुन्नेतातिरिक्त एष सोमानां यद्धारियोजनोऽतिरिक्तेनैवातिरिक्तमाप्नोत्युन्नेतर्युपहवमिच्छन्ते य एव तत्र सोमपीथस्तस्यावरुद्ध्यै ये वै ते वृत्रे पशव आसँस्त एवैते यत् संभिन्द्यात् सँशारुका एनमल्पाः पशवो भुञ्जन्त उपतिष्ठेरन् हिनस्ति हि यन्न संभिन्द्यादसँशारुका एनं बहवः पशवो भुञ्जन्त उपतिष्ठेरन् न हि हिनस्ति समिव मृद्नीयादुभयमेव करोत्यसँशारुका एनं बहवः पशवो भुञ्जन्त उपतिष्ठन्ते निरिव धयेद्य एव तत्र सोमपीथस्तस्यावरुद्ध्या उत्तरवेद्यां निवपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून् दधाति ॥९॥ २२-२३

पात्राणि प्रयुज्यन्तेऽनयोर्लोकयोर्विधृत्यै प्रान्यानि युज्यन्ते नान्यानि यानि प्रयुज्यन्त इमं तैर्लोकं दाधार यानि न प्रयुज्यन्तेऽमुं तैः पराङ् ह्यसौ लोकोऽनिरुक्त उपाँशुपात्रं प्रयुज्यतेऽजा

[९] मै. ४,७,४ (११)। कपि. ४४,९। वा. ८,११। काण्व. ८,११। तै. सं. ६,५,९।
[१०] मै ४,८,८ (१६)। कपि. ४५,१। तै. सं. ६,५,१०,१, ६,५,११,१—३।

एव तत् पशूनामनुप्रजायन्ते त्रिर्विगृह्णाति तस्मात् सा त्रीञ्जनयत्यथो द्वौ यदुपाँशुपात्रं प्रयुज्यतेऽजा एव तेन पशूनां दाधारान्तर्यामपात्रं प्रयुज्यतेऽवय एव तत् पशूनामनुप्रजायन्ते यदन्तर्यामपात्रं प्रयुज्यतेऽवीरेव तेन पशूनां दाधारर्तुपात्रे प्रयुज्येते अश्वा एव तत् पशूनामनुप्रजायन्ते तस्मात् तयोरश्वस्येव शफोऽधस्ताद्यदृतुपात्रे प्रयुज्येते अश्वानेव तेन पशूनां दाधारोक्थ्यपात्रं प्रयुज्यत आरण्या एव तत् पशवोऽनुप्रजायन्ते तस्मात् तान् धृतान् ग्राममागतान् घ्नन्ति यदुक्थ्यपात्रं प्रयुज्यत आरण्यानेव तेन पशून् दाधार शुक्रपात्रं प्रयुज्यतेऽत्रीरेव तत् प्रजा अनुप्रजायन्ते मन्थिपात्रं प्रयुज्यत आद्या एव तत् प्रजा अनुप्रजायन्ते यदेते प्रयुज्येते उभयोरेवैतदत्रीश्चाद्याश्च प्रजा दाधारर्तु-पात्रे शुक्रपात्रात् पूर्वे प्रयुज्येते असौ वा आदित्यश्शुक्रो रश्मय ऋतवस्तस्मादेते पूर्वे प्रयुज्येते पूर्वे ह्येत एतस्मादवरमादित्यपात्रं प्रयुज्यते गाव एव तत् पशूनामनुप्रजायन्ते यदादित्यपात्रं प्रयुज्यते गा एव तेन पशूनां दाधाराग्रायणपात्रं प्रयुज्यते सर्वा एव तत् प्रजा अनुप्रजायन्ते यदाग्रायणपात्रं प्रयुज्यते सर्वा एव तेन प्रजा दाधार द्रोणकलशः प्रयुज्यते प्रजापतिर्वै द्रोणकलशो यद् द्रोणकलशः प्रयुज्यते तस्मादिदं प्रजापतिः प्रजा वेद तस्मादयं क्षयोऽस्त्येतावन्तो वै प्रातर्ग्रहा गृह्यन्ते ते स्तोत्रवन्त उक्थवन्तो निदानवन्त आयतनवन्तः कर्तव्या नवैतान् गृहीत्वा नवभिर्बहिष्पवमानँ स्तुवन्ति तेन ते स्तोत्रवन्तो यत् पुनरेत्याश्विनं गृह्णाति सोमेनैव स स्तोत्रवान् यदुपाँश्वन्तर्यामौ हुतौ होता-नुमन्त्रयते तेन ता उक्थवन्तौ ॥ यदैन्द्रवायवं तेनैन्द्रवायव उक्थवान् यन्मैत्रावरुणं तेन मैत्रावरुण उक्थवान् यदाश्विनं तेनाश्विन उक्थवान् यन्निष्केवल्यं तेन शुक्रमन्थिना उक्थवन्तौ यद्वैश्वदेवं तेनाग्रायण उक्थवान् यदुक्थान्युक्थशँसिनश्शँसन्ति तेनोक्थ्य उक्थवानेतावन्तो वै प्रातर्ग्रहा गृह्यन्ते तानेतत् स्तोत्रवत उक्थवतो निदानवत आयतनवतः करोति निदानवानायतनवान् भवति य एवं वेद ॥१०॥　　　　२४-२५

[१९७७]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायामायुष्यं नामाष्टाविंशं स्थानकं संपूर्णम् ॥२८॥



अथैकोनत्रिंशं स्थानकम्।

## दीर्घजिह्वी।

देवाश्च वा असुराश्च संयत्ता आसँस्ते देवास्संघातँ संघातं पराजयन्त तेऽविदुरनायतना हि वै स्मस्तस्मात् पराजयामहा इति त एताः पुरोऽकुर्वत ता एषामनायतना नाध्रियन्त त एतान् पुरोडाशँ अपश्यँस्ताननुसवनं निरवपँस्तैः पुरोऽदृँहन् सवनानि वाव ते पुरोऽकुर्वत यत् पुरोऽदृँहँस्तत् पुरोडाशानां पुरोडाशत्वं यदनुसवनं पुरोडाशान्निर्वपति सवनानां धृत्यै विजित्यै तस्मादनुसवनं पुरोडाशस्य प्राश्नीयात् सोमपीथस्य धृत्यै यतो घृताक्तँ स्यात् ततः प्राश्नीयादाज्येन वै वज्रेण देवा वृत्रमघ्नन् सोमो वृत्रस्सोमपीथस्याघाताय तदाहुर्न वा अन्येनाज्यादहीने समष्टुमर्हतीति सर्वमेतद्धविर्भूतं यत् किंचोत्पुनन्ति यदेवानुत्पूतँ स्यात् तस्य नाश्नीयाद्दीर्घजिह्वी वै देवानां यज्ञमवालेट् प्रातस्सवनं तन्मघात् सा पयस्याभवत् तस्मादामिक्षा विमदितेव यत् पयस्या प्रातस्सवने भवति प्रातस्सवनस्य समृद्ध्यै मैत्रावरुणी प्रातस्सवने भवति नोत्तरे सवने अश्नुते प्राणापानौ वै मित्रावरुणौ प्राणापाना एव मुखतः परिहरते तस्मान्मुखतः प्राणापानौ न वै स्तोत्रेण न शस्त्रेण पङ्क्तिर्यज्ञेऽवकल्पते पञ्चैतानि हवीँषि पङ्क्तिमेवैतद्यज्ञेऽवकल्पयति ॥ हविष्पङ्क्तिर्वै यज्ञो नाराशँसपङ्क्तिः पाङ्क्तः पञ्चैतानि हवीँषि तेन हविष्पङ्क्तिर्द्विनाराशँसा प्रातस्सवने द्विनाराशँसा माध्यन्दिन एकनाराशँसा तृतीयसवने तेन नाराशँसपङ्क्तिरग्नीषोमीयः पशुस्त्रीणि सवनानि वशानूबन्ध्या तेन पाङ्क्तो य एवमेतानि यज्ञस्य रूपाण्यनुवेदर्ध्नोति देवाश्च वा असुराश्च संयत्ता आसँस्ते देवेभ्यो महिमानोऽपाक्रामँस्तेऽसुरानगच्छँस्तेऽसुरा देवानां बहूनि शतान्यघ्नँस्तानीमानि च्छन्दाँसि यान्ययज्ञवाहानि ते देवा अबिभयुरित्थं वाव नस्सर्वानसुरा अवपत्स्यन्तीति तान्युपामन्त्रयन्त तेऽब्रुवन् वार्यं वृणामहा इति ते परिवापपुरोडाशमवृणत तद्भागधेयमभ्यायन्नृक्सामे वावैभ्यस्तदपाक्रामतां पशवो वागिन्द्रियं प्राणापानौ स इन्द्रोऽमन्यतेमे वावेदमभूवन्निति तेषाँ सायुज्यमगच्छद्धरिवाँ इन्द्रो धाना अत्त्वित्यृक्सामे वा इन्द्रस्य हरी ऋक्सामयोरेव तत् सायुज्यमगच्छत् पूषण्वान् करम्भमिति पशवो वै पूषा पशूनामेव तत् सायुज्यमगच्छत् सरस्वतीवान् भारतीवान् परिवाप इति वाग्वै सरस्वती वाच एव तत् सायुज्यमगच्छादिन्द्रस्यापूप इतीन्द्रियं वा इन्द्र इन्द्रियस्यैव तत् सायुज्यमगच्छन्मित्रावरुणयोः पयस्येति प्राणापानौ वै मित्रावरुणौ प्राणापानयोरेव तत् सायुज्यमगच्छदेतेषामेव महिम्नाँ सायुज्यं गच्छति सर्वमायुरेति पशुमान् भवति न यज्ञियामार्तिमार्छति य एवं वेद ॥१॥

१-२

[१] मै. ३,१०,५—६ (१३—२४)। कपि. ४५,२। वा. १९,२१। काण्व. २१,२१।

नीडं वा एतद्यज्ञस्य क्रियते यद्यजुषा क्रियत उल्बमृचा च साम्ना च क्रियते यदृचः पुरोरुचो
भवन्ति दृढिम्न एव प्रत्युत्तब्ध्या अशिथिलत्वाय प्रेवचाह प्र यजुषा यच्छति गमयति ग्रहेणर्चा वै
स्तोत्राय गृह्यते यजुषा शस्त्राय तस्मादेते सँहिते सँहिते हि स्तोत्रं च शस्त्रं च पराङ् वा एतर्हि
यज्ञः पराचीर्देवतास्तृतीयसवने यजमानादाग्नेय्या पुरस्तात् सौम्यं परियजति वैष्णव्योपरिष्टादग्निर्वै
सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभते घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति तस्यैषानु-
स्तरणी यत् सौम्यो दक्षिणार्धेऽग्नेर्जुहोति दक्षिणा हि पितॄणाँ सकृदवद्यति सकृदवत्तँ हि पितॄणां
यन्मेक्षणेन द्वितीयमवद्यति तेनैव सकृदवत्तं भवत्युद्धातृभ्यो हरन्ति सोमदेवत्यं वै साम साम्न-
स्सवीर्यत्वाय सतनूत्वाय प्राश्या३ न प्राश्या३ इति मीमांसन्ते यत् प्राश्नीयात् प्राकारुकस्स्याद्यन्न
प्राश्नीयादहविस्स्यादवजिघ्रेदुभयमेव करोति सोऽन्नाद्याय सन्नन्नं नाद्यात् स प्राश्नीयात् परं वा
एतदन्नं यत् पितरः परेणैवान्नेनावरमन्नाद्यमवरुन्द्धे भेषजं वा एतद्देवा यज्ञायाकुर्वन् यत् सौम्यस्तदेष
भिषज्यस्तस्मादामयाविना प्राश्यः पितरो मन्दन्तां सोमप्रतीका मन्दन्तां व्यशेम देवहितं यदायु-
रिन्द्रपीतो विचक्षणो व्यशेम देवहितं यदायुर्हृदिस्पृक् क्रतुस्पृग्वर्चोधा असि वर्चो मे धेहि ॥ ३
यन्मे मनो यमं गतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥ ४
इति सौम्यमवेक्षेत यद्वा इह प्राकरोति यदस्यात्मनो मीयते पितॄँस्तद्गच्छति यत् सौम्यमवेक्षते
तदेवात्मन् यच्छते परीव पश्येद्यत् परिपश्यत्यात्मानमेव परिपश्यति सह त्वा अमुष्मिँल्लोके सर्वतनूर्य
एवं विद्वान् सौम्यमवेक्षते वीर्यं वा उपसदो निर्वीर्यं तृतीयसवनं ता बहिर्यज्ञं क्रियन्ते यत् सौम्येन
तृतीयसवने चरन्ति तृतीयसवन एव वीर्यं दधत्येता हि देवता उपसत्स्वियजन्त आग्नेय्या पुरस्तात्
सौम्यं परियजति हतो नेद्यज्ञमभिप्रपद्याता इति वैष्णव्योपरिष्टादग्निष्टोमे नेत्सौम्यमभिप्रपद्याता इत्यु-
भयत एव परिस्तृणात्यनभिप्रपादायाग्नेय्या घृतस्य यजति सौम्या सौम्यस्य वैष्णव्योपरिष्टाद्घृतस्य
यथापूर्वमेव देवताः कल्पयति ॥२॥ ५
प्राणा वै सँस्थितयजूँषि नवैतानि यजूँषि नवभिर्बहिष्पवमाने स्तुवन्ति नव प्राणाः प्राणैरेव
प्रयन्ति प्राणैरुद्यन्ति संततं जुहोति प्राणानाँ संतत्या अविच्छेदाय यं कामयेत प्रमीयेतेति नव
कृत्वो गृहीत्वायजुष्केणैकैकं जुहुयात् प्राणा वै सँस्थितयजूँषि प्राणेभ्य एवैनमन्तरेति ताजक् प्रधन्वति
विश्वरूपो वै त्वाष्ट्रो यज्ञस्य व्यृद्धं च समृद्धं चापश्यत् स एतान्यृग्म्याणि यदेवास्य व्यृद्धं तत्
तैस्समर्धयति त्रीणि यजूँषि समृद्धमेव तत् षडृग्म्याणि षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति त्रीणि

[२] मै ४,७,२-३ (२-१०)। कपि ४५,३। क २,२८ ३,१७; ४,३। काण्। २,४८ ३,२३; ४४। तै स.
६,६,७-८।
[३] मै १,३,३९; ४८,४-५ (११४—११९,१२२—१२३; ७-८)। कपि. ४५,४। क ३,४८,८,२३-२७; २०,
१८—१९,९,२२-२३. ३८,१५। काण्व ३,५६, ९,१३—२६. २१-८, २२,४,७; ३८,२४। तै. सं. ६,६,३ ]

यजूँषि त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥ यद्वै यज्ञस्यातिरिच्यते वरुणस्तद्गृह्णाति यज्ञस्यैतद-तिरिच्यते यदृजीषं यदौदुम्बरी यदधिषवणे तेनापोऽवभृथमवयन्त्यापो वै वरुणो निर्वरुणत्वाय न वहन्तीष्वभ्यवेयुः पशवो वा ऋजीषं पशूनस्य निर्मृज्युरपशुस्स्यान्नोदञ्चोऽभ्यवेयुर्यदुदञ्चोऽभ्यवेयु-रभीपतः प्रजा वरुणो गृह्णीयान्न दक्षिणा यद्दक्षिणा पितृभ्यः प्रजा निधूवेयुरुदञ्चः प्राञ्चोऽभ्यवयन्ति पश्चाद्धि प्राङ् यज्ञो वरुणपाशान्मुच्यमान एति स्थावरास्स्ववयन्ति स्थावरा वै प्रत्यक्षं वरुणो वरुण एव वरुणमवयजत उरुँ हि राजा वरुणश्चकार शतं ते राजन् भिषजस्सहस्रमिति यथायजुरग्नेरनीक-मप आविवेशेत्याघारमाघारयति समिद्ध्या एवोद्दीप्त्यै यत्र तृणं वा दारु वा पश्येत् तत् प्रत्या-घारयेदग्निमत्येव जुहोति समृद्ध्या अपबर्हिषः प्रयाजान् यजति प्रजा वै बर्हिः प्रजा एव मृत्योरुत्सृज-त्याज्यभागौ यजति प्राणापानौ वा आज्यभागौ प्राणापाना एव प्रजानां वरुणपाशान्मुञ्चत्यथैष वारुणो निर्वरुणत्वायैककपालो भवति न वै पुरुषं कपालैराप्तुमर्हत्येकधैवैनमाप्नोत्यग्नीवरुणाभ्याँ समवद्यत्युभयत एवैनं वरुणपाशान्मुञ्चत्यग्नेश्च वरुणाच्च सर्वो वा एष यज्ञस्तस्य बहु क्रियते बहु न क्रियते यत् सँस्थापयेद्यज्ञं वरुणेन ग्राहयेद्यन्न सँस्थापयति यज्ञमेव वरुणपाशादुत्सृजति समुद्रे ते हृदय-मप्स्वन्तरिति समुद्रयोनिर्वै यज्ञस्स्वमेवैनं योनिं गमयति यज्ञस्य त्वा यज्ञपत इत्याहुतिमेव करोत्य-वभृथ निचुङ्कुणेत्युभयस्मादेवैनमेतद्देवकृताच्च मनुष्यकृताच्चैनसो मुञ्चति देवीराप एष वो गर्भ इत्यपां वा एष गर्भस्स्वमेवैनं योनिं गमयत्यभिष्ठितो वरुणस्य पाशोऽवहतो वरुणस्य पाश इति वरुणपाशमेवावहन्त्यप्सुधौतस्य ते देव सोमेति बिन्दुमाचामति य एव तत्र सोमपीथस्तस्याव-रुद्ध्यै ॥ यदाचामेद्वरुण एनं ग्राहुकस्स्यान्नीव गृह्णीतोभयमेव करोति प्रत्यस्तो वरुणस्य पाशो नमो वरुणस्य पाशायेति वरुणपाशमेव प्रत्यस्यत्युदेत प्रजामायुर्वर्चो दधाना इत्याशिषमेवाशास्ते ॥ एधोऽस्येधिषीमहीति वरुणमेव निरवदायैधन्तमुपयन्ति समिदसि समेधिषीमहीत्याशिषमेवाशास्ते तेजोऽसि तेजो मयि धेहीति तेज एवात्मन् धत्तेऽपो अद्यान्वचारिषं रसेन समगन्महीति यथायजुः ॥३॥ ६-९

यज्ञस्य वै शिरोऽच्छिद्यत ततो यो रसोऽस्रवत् सा वशाभवद्यद्वशानूबन्ध्या भवति यज्ञस्य स-रसत्वाय मित्रो वै यज्ञस्य स्विष्टं गृह्णाति वरुणो दुरिष्टं यन्मैत्रावरुणी वशानूबन्ध्या भवत्युभयत एव यज्ञं प्रमुच्य यजमानाय संप्रयच्छति मित्राच्च वरुणाच्च यथा लङ्गलेनोर्वरां प्रभिनत्त्येवमृक्सामाभ्यां

---

[उरु हि राजा० । ऋ. १,२४,८; तै. सं. १,४,४५,१ । एधोऽस्येधिषीमहि० । अथर्व. ७,८९,४ । तेजो-ऽसि तेजो०. धेहि । अथर्व. १९,३,१२ । अपो (आपो) अद्यान्वचारिषं० । ऋ. १,२३,२३; १०,९,९; अथर्व. ७,८९,१; ९,१,१४ (उत्तरार्धः); १०,५,४६; तै. सं. १,४,४५,३; ४६,२; तै. ब्रा. २,६,६,५]

[४] मै. ४,८,६ (९)। कपि. ४५,५। तै. सं. ६,६,७।

यज्ञः प्रभिद्यते यथा मत्यमन्ववास्यत्येवं तद्यद्वशानूबन्ध्या यज्ञस्य शान्त्या अनुबध्यते यत् प्रथममस्रवत् तद्बृहस्पतिरुपागृह्णाद्यद् द्वितीयं तन्मित्रावरुणौ यत् तृतीयं तद्विश्वे देवा यदि तिस्रोऽनूबन्ध्यास्स्युर्मैत्रावरुणीं प्रथमां कुर्यादथ वैश्वदेवीमथ बार्हस्पत्यां यज्ञस्य सर्वत्वाय सरसत्वायात्रात्र हि यज्ञस्य रसोऽयातयामा वा एतस्य देवताश्च ब्रह्म च यस्सोमेन यजते यदेते वैश्वदेवी च बार्हस्पत्या च भवतो देवतानां चैव ब्रह्मणश्चायातयामत्वाय वैश्वदेवी मध्ये भवति वैश्वदेवीरिमाः प्रजाः प्रजास्स्वेव रेतो दधात्युपाँशु यजत्यनिरुक्तँ हि रेतो बार्हस्पत्युत्तमा भवति ब्रह्म वै बृहस्पतिरन्तमेवागत्य ब्रह्मवर्चसे प्रतितिष्ठति ॥ यथा वा अनड्वान् यथाश्वो विमुक्तोऽपक्रामत्येवँ सोमेनेजानाद्देवताश्च यज्ञश्चापक्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयं निर्वपत्यग्निर्वै सर्वा देवताः पाङ्क्तो यज्ञो देवताश्चैव यज्ञं चालभते गायत्रो वा अग्निर्गायत्रच्छन्दास्तं छन्दसा व्यर्धयति यत् पञ्चकपालं करोत्यष्टकपालः कार्योऽष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रच्छन्दास्स्वेनैवैनं छन्दसा समर्धयति पाङ्क्ते याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेन यज्ञान्नैति ॥४॥ १०-११

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधमग्निजिह्वेभ्यस्त्वर्तायुभ्यो वातापिभ्यः पर्जन्यात्मभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वा भूताय त्वा भव्याय त्वा यतः प्रजा अच्छिद्रा अजायन्त तस्मै त्वा प्रजापतये विभुदाव्ने जुहोमि स्वाहाभि सोमोऽपः कामयतेऽभि सोममापो यथा गावस्संजानानास्संगत्यान्यान्यां घ्नन्त्येवं वा एतौ संजानानौ संगत्यान्योऽन्यस्येन्द्रियं वीर्यान्निर्हत उभयमेतत् प्राजापत्यं यत् सोमश्चापश्चापामेष रसो यद्दधि यद्वै पुत्रौ युध्येते पिता ताभ्यां कल्पयति स्व एवैनौ लोके स्वेन भागधेयेन पिता शमयति सह त्वै यज्ञेन समृद्धेन यजते यस्यैष गृह्यते दध्ना सर्वाणि सवनानि पशुमन्ति वीर्यावन्ति कर्तव्यानि यत् पयस्यया प्रातस्सवने चरन्ति तेन तत् पशुमद्वीर्यावद्यद्दधिघर्मेण मध्यन्दिने तेन तत् पशुमद्वीर्यावद्यदाशिरा तृतीयसवने तेन तत् पशुमद्वीर्यावत् सर्वाण्यस्य सवनानि पशुमन्ति वीर्यावन्ति भवन्ति य एवं वेद ॥५॥ १२

देवा वा असुरान् यज्ञमभिजित्य ते प्रबाहुग्ग्रहान् गृह्णाना आयन् स प्रजापतिरमन्यत यः प्रथमो ग्रहीष्यते स एवेदं भविष्यतीति स एतमँशुमपश्यत् तं पराङ् प्राणन्न गृह्णीत स पराङ् श्रियोऽन्तमगच्छद्बुभूषन्नेतं गृह्णीत पराङेव प्राण्यान्नापान्यात् पराङेव श्रियोऽन्तं गच्छति यदपानित्यार्तिमार्छति प्र वा मीयते सर्वज्यानिं वा जीयते यदि कामयेत सदङ्यजमानस्स्यादिति न प्राण्यान्ना-

---

[५] मै. १,३,३५ (३४)। कपि. ४५,६। वा. १,११,२०; ५,२६. ६,१,९,२५; ७,३; ३७,१९। काण्व १,१४,३४; ५,३३; ६,१,१०,२६; ७,३; ३७,१८। तै. सं, ३,५,८।

[६] मै. ४,७,७ (१४)। कपि. ४५,७। तै. सं. ६,६,१०।

पान्यात् सहङ्क्षेव भवति चतुस्स्राक्ति पात्रं भवति चतस्रो दिशस्सर्वास्वेव दिक्ष्वृध्नोति ॥ हिरण्येन सँस्पर्शयत्यमृतं वै हिरण्यममृतेनैवैनँ संदधाति सकृदभिपुतस्य गृह्णाति न वै प्रजापतिँ सवनैराप्तु-मर्हत्येकधैवैनमाप्नोति नर्चमन्वाह न यजुर्वदति न वै प्रजापतिं वाचाप्तुमर्हति मनसैवैनमाप्नोति योऽँशो-रायतनं वेदायतनवान् भवति वामदेव्यमेवाँशुं गृह्णन् वामदेव्यं मनसा ध्यायेदेतद्वा अँशोरायतन-मायतनवान् भवति य एवं वेद हिरण्यमभिव्यनित्यायुर्वै हिरण्यमायुष्येवात्मानमभिधिनोत्यद्भिः प्रत्युक्षत्यमृतं वा आपोऽमृतेनैवैनँ संरम्भयति ॥६॥ १३-१४

अथैतेऽतिग्राह्या यदेव परमोजो वीर्यमनवरुद्धं तस्यावरुद्ध्यै यदाग्नेयस्तेजो वा अग्निस्तेज एव तेन पुरस्ताद्धत्ते यदैन्द्र इन्द्रियं वा इन्द्र इन्द्रियमेव तेन मध्यतो धत्ते यत् सौर्यो ब्रह्मवर्चसमसा आदित्य उपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्मवर्चसमसा आदित्यस्तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन् परिगृह्णात्युपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रियौ पृष्ठानि यदेते न गृह्येरन्नुपरिष्टाद्दरीगाँसि पृष्ठानि प्राञ्चं यज्ञँ संमृण्युर्यदेते गृह्यन्ते पुरस्तादेव यज्ञमुपस्तभ्य चक्रिया उपास्यति सयत्त्वाय अनतस्पनने गृह्णीयादेतद्धै सवनानां वीर्यावत्तमं वीर्या-देवैनानधिगृह्णाति ॥ देवा वै सर्व एव सदृशा आसन्न व्यावृतमगच्छँस्तत एत एतान् ग्रहानपश्य-न्नग्निराग्नेयमिन्द्र ऐन्द्रँ सूर्यस्सौर्यं ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानां यस्यैते गृह्यन्ते व्यावृतमेव गच्छति श्रैष्ठ्यँ समानानां प्रजापतिर्वै देवेभ्यो भागधेयानि व्यादिशद्यज्ञमेव सोऽमन्यतात्मानमन्तर-गामिति तस्य याः प्रियास्तिस्रस्तन्व आसँस्ता अपन्यधत्तैतान् वाव स तद्ग्रहानपन्यधत्त येन यज्ञेने-त्सेत् तस्मिन्नेतान् ग्रहान् गृह्णीयात् सर्वमेवैनँ सवीर्यँ सयोनि सतनूमृद्ध्यै संभरति ॥ वृत्रे वा एते पुरासन् स इन्द्रो वृत्रँ हत्वा स एतमाग्नेयमविन्दत तमग्नये प्रायच्छदेतं मे धारयेति स सौर्यमविन्दत तँ सूर्याय प्रायच्छदेतं मे धारयेति स ऐन्द्रं निरवत्तो पुनरयाचत ता अस्मै न पुनरदत्तां त इमांल्लोकान् व्युपायन्नग्निरिममिन्द्रोऽन्तरिक्षँ सूर्योऽमुमेतेर्वै त ग्रहैरेषु लोकेष्वार्ध्नुवन्नेतैरेषां लोकाना-माधिपत्यं पर्यायन् सर्वेष्वेवैषु लोकेष्वृध्नोत्येषां लोकानामाधिपत्यं पर्येति यस्यैते गृह्यन्ते ॥ यद्वै विराज-स्तेजस्तदाग्नेयो यच्छक्वर्यास्तदैन्द्रो यद्रेवत्यास्तत् सौर्यो यत्रैतानि सामानि स्युस्तदेतान् गृह्णीयात् साम्नाँ सतेजस्त्वायाथैते होमाश्च भक्षणानि चैतैर्वै बम्भाविश्ववयसा इमांल्लोकानर्वाचश्च पराचश्च प्राजानीतां यस्यैते गृह्यन्ते समस्मा इमे लोका अर्वाञ्चः पराञ्चश्च भान्त्येतेषां वै वीर्येणाग्निरित ऊर्ध्वो भात्यर्वाङ् सूर्यस्तपति तिर्यङ् वायुः पवते सुप्रज्ञानो वा इत इत्थमसौ लोकोऽमुतो ह त्वा अर्वाङ् दुष्प्रज्ञानँ स ह त्वा इमं लोकममुतोऽर्वाङ् प्रजानाति यस्यैते गृह्यन्ते ॥७॥ १५-१८

आग्नेयसौम्यो बार्हस्पत्यस्ते समानमर्धमालभ्यन्ते यदाग्नेयस्तेजो वा अग्निस्तेजस्स एव तेन

[७] मै. ४,७,३ (८—१०)। कपि ४५,८। तै. सं ६,६,८। [८] मै. ४,७,९ (१७-२१)। तै. सं. ६,६,४।

पुरस्ताद्धत्ते यत् सौम्य इन्द्रियं वै सोम इन्द्रियमेव तेन मध्यतो धत्ते यद्बार्हस्पत्यो ब्रह्म वै बृहस्पति-रुपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते तेजो वा अग्निरिन्द्रियँ सोमो ब्रह्म बृहस्पतिस्तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन् परिगृह्णाति दक्षिणतो वै देवानां यज्ञं रक्षाँस्यजिघाँसन् या देवता ओजीयसीस्ताभ्यो दक्षिणत आलभ्यन्ते रक्षसामपहत्यै किं तदेकादशिन्यां क्रियत इत्याहुर्ब्रह्मवादिनो यस्माद्विट् क्षत्रस्योपाशारमवस्यतीति या देवता ओजीयसीस्ताभ्यो दक्षिणत आलभ्यन्ते ॥ या अबलीयसीस्ताभ्य उत्तरां तस्माद्विट् क्षत्रस्योपाशारमवस्यति दक्षिणत उद्धनां कुर्याद्देवयजनस्य रूपं रक्षसामपहत्यै तस्माद्दक्षिणतस्तीर्थानां गाधं येऽग्निष्ठास्त्रयस्तान् समान् कुर्यादग्निं वै पशवोऽनूप-तिष्ठन्ते पशूनामुपस्थित्या आत्मा वा अग्निष्ठो भ्रातृव्या अस्येतरौ तौ ऋधीयाँसौ कुर्यादधरमेव भ्रातृव्यं कुरुते यौ परौ ता अग्निष्ठेन समौ तौ हि तस्य स्वा आ परार्धादेवं मिनुयात् पापवसीयसस्य व्यावृत्त्या अथो अधरमेव भ्रातृव्यं कुरुते येऽग्निष्ठादुदीचीनं तान् वर्षीयसः कुर्याद्यदि कामयेत विट् क्षत्रादोजीयसी स्यादिति विशमेव क्षत्रादोजीयसीं करोति ॥ येऽग्निष्ठाद्दक्षिणात् तान् वर्षी-यसः कुर्याद्यदि कामयेत क्षत्रं विश ओजीयस्स्यादिति क्षत्रमेव विश ओजीयः करोति सर्वान् समान् कुर्याद्यदि कामयेत पापवसीयसँ स्यादिति पापवसीयसमेव करोति तिरश्ची मीयते दिशां विधृत्या ऊर्ध्वा मीयन्त एषां लोकानां विधृत्यै न यूपं बहिर्वेदि मिनुयान्न वेद्या अतिरेचयेद्यजमानो वै यूप एतावती पृथिवी यावती वेदिर्यद्यूपं बहिर्वेदि मिनुयात् पृथिव्या यजमानं निर्भजेद्यद्वेद्या अतिरेचये-द्भ्रातृव्याय लोकमुच्छिँषेत् समां वेद्यन्तेन मिनुयान्न पृथिव्या यजमानं निर्भजति न भ्रातृव्याय लोकमुच्छिँषत्युपरसंमितां मिनुयाद्यदि कामयेत पितृलोक ऋध्नुयादिति पितृलोक एवर्ध्नोति रशना-संमितां मिनुयाद्यदि कामयेत मनुष्यलोक ऋध्नुयादिति मनुष्यलोक एवर्ध्नोति चषालस्संमितां मिनु-याद्यदि कामयेत देवलोक ऋध्नुयादिति देवलोक एवर्ध्नोति सर्वेष्वेवैषु लोकेष्वृध्नोति रथाक्षेण मिमीते वज्रो वै यूपो वज्रो रथो वज्र एव वज्रं दधाति सर्वेऽग्निष्ठाः कार्या या अग्निष्ठा अश्रयस्ता अग्निमभि-पर्यूहेत् तेनैव सर्वेऽग्निष्ठाः क्रियन्ते ॥ यदग्निष्ठाद्रशना विहरन्ति तेनैव सर्वेऽग्निष्ठाः क्रियन्ते द्वे द्वे रशने यूपमृच्छतस्तस्मात् स्त्रियः पुँसोऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून् पतीनुप-शयो द्वादशो भवति द्वादशमासस्संवत्सरस्संवत्सरस्याप्त्यै तं दक्षिणतः परिहृत्य निदधाति दक्षिणतो वै देवानां यज्ञं रक्षाँस्यजिघाँसन् वज्रो यूपो रक्षसामपहत्यै यद्यभिचरेत् पुरुषपशुं कुर्यादिदमह-ममुमामुष्यायणममुष्याः पुत्रं नियुनज्मीति रशनां यूपेऽधिन्यस्येद्वज्रो वै यूपो वज्र एवैनं नियुनक्ति ताजक् प्रधन्वति यदि नाभिचरेदारण्यं पशुं निर्दिशेत् तस्य नाश्नीयादुपशयं वा अन्वारण्याः पशव उपतिष्ठन्त एकादशिनीं ग्राम्या यदेकादशिन्या वेदिर्मीयते तस्माद्ग्राम्याः पशव आविरिव शान्ता इव यदुपशयो गुहेव शये तस्मादारण्याः पशवो गुहेव निलायमिव प्रलायमिव चरन्ति ॥८॥ १९-२२

प्रजापतिः प्रजास्सृष्ट्वा स रिरिचान इवामन्यत स एतामेकादशिनीमपश्यत् तामाहरत् तयात्मानमाप्रीणीत यो रिरिचान इव मन्येत स एतामेकादशिनीमाहरेद्यास्मिन्नेव कस्मिंश्च यज्ञे दश वै पुरुषे प्राणा आत्मैकादशो यावानेवास्यात्मा तमाप्रीणात्यग्निस्सर्वा देवता अग्ना एवैता देवता उपालम्भ्यन्त आत्मा वा आग्नेयो वाक् सरस्वती यत् सारस्वती वाचमेव मिथुनमात्मन्नुपनियुङ्क्तेऽथ सौम्यस्सोमो रेतोधा मिथुन एव रेतो दधात्यथ पौष्णः पशवो वै पूषा प्रैव जनयत्यथ बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मैव पशुष्वधिवियातयत्यथ वैश्वदेवो वैश्वदेवीरिमाः प्रजाः प्रजा एव ब्रह्मन्ननुनियुनक्त्यथैन्द्रः क्षत्रं वा इन्द्रः क्षत्रमेव प्रजास्वधिवियातयत्यथ मारुतो विड्वै मरुतो विशमेव क्षत्रायानुनियुनक्त्यथैन्द्राग्न ओजो वै वीर्यमिन्द्राग्नी ओजसैव वीर्येण विशं क्षत्रायोपोहति प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणः प्रजापतिः प्रजा असृजत ता अस्मादपाक्रामँस्ता ऊर्ध्वा आयँस्ता अकामयतोप मा वर्तेरन्निति सोऽतप्यत स आत्मानं मेधायालभत ता एनमुपावर्तन्त ता अस्मादबिभयुस्ता न्गाच्यन्त तस्मात् पशवो न्यक्नास्ता आराद्चरँस्ता एनं बलिभिरुपायन् देवयजनेन पृथिवी बर्हिषौषधयः प्रोक्षणीभिराप इध्मेन च यूपेन च वनस्पतयः पशुभिरजावय आशिरा चाज्येन च गाव एते वै देवा बलिहृतो यज्ञः प्रजापतिस्तस्मा एते सर्वा हैवं बलिँ हरन्त्यास्मै बलिँ हरन्ति य एवं वेद ॥ तेषामपक्रमादबिभेत् तेषां द्वन्द्वं वीर्याण्यात्मन्नुपन्ययुङ्क्तात्मा वा आग्नेयो वाक् सरस्वतीन्द्रियँ सोमो वाचं चैवेन्द्रियं चात्मन्नुपनियुङ्क्तेऽथ पौष्णोऽथ बार्हस्पत्यः पशवो वै पूषा ब्रह्म बृहस्पतिः पशूँश्चैव ब्रह्म चात्मन्नुपनियुङ्क्तेऽथ वैश्वदेवोऽथैन्द्रो वीर्यं वै विश्वे देवास्सह इन्द्रो वीर्यं चैव सहश्चात्मन्नुपनियुङ्क्तेऽथ मारुतोऽथैन्द्राग्नो बलं वै मरुत ओज इन्द्राग्नी बलं चैवौजश्चात्मन्नुपनियुङ्क्ते प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणः ॥९॥ २३-२४

आग्नेयँ सारस्वतीँ सौम्यं बार्हस्पत्यं तान् सहालभेत ब्रह्मवर्चसकामः प्रजाकामः पशुकामः पुरोधाकामो यदाग्नेय आग्नेयो हि ब्राह्मणो यत् सारस्वती वाग्वै सरस्वती वाचँ हि वदति यत् सौम्यस्सोमँ हि पिबति यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मैव चतुष्पात् संपाद्य प्रतिष्ठापयति ब्रह्मवर्चसी भवत्यथ पौष्णः पशवो वै पूषा पशूनेव ब्रह्मन्ननुनियुनक्त्यथैन्द्राग्नोऽथैन्द्रः क्षत्रं वा इन्द्राग्नी क्षत्रमिन्द्रः क्षत्रमेव संपाद्य प्रतिष्ठापयत्यथो क्षत्रेणैव पशून् ब्रह्मण उपोहत्याग्नेयो मध्ये भवत्यैन्द्रा अभित आग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यो ब्रह्मणैव क्षत्रं मध्यतो व्यवसर्पति प्र पुरोधामाप्नोति य एवं वेदेन्द्राग्नी पशूनां भूयिष्ठभाजौ करोत्यग्नेराग्नेय इन्द्रस्यैन्द्र ऐन्द्राग्नस्सह तस्माद्ब्राह्मणश्च राजन्यश्च प्रजानां भूयिष्ठभाजा अथ वैश्वदेवोऽथ मारुतो विड्वै विश्वे देवा विण्मरुतो विशमेव संपाद्य तां क्षत्रायानुनियुनक्ति ब्रह्ममुखमेव क्षत्रं कृत्वा तस्मै विशमनुनियुनक्ति प्रसवायैव सावित्रो निर्वरुणत्वाय

[९] मै. ४,७,८ (१५)। कपि. ४६,२। तै. सं. ६,६,५। [१०] कपि. ४६,३।

वारुणस्सम्यगेव ब्रह्म समूहति सम्यक् क्षत्रँ समीचीं विशं यत्रैवं क्लृप्तैकादशिन्यालभ्यते कल्पते तत्र प्रजाभ्यो ब्राह्मण एव ब्राह्मणो भवति राजन्यो राजन्यो वैश्यो वैश्य एकादशिन्या वा इदमक्लृप्तमनु प्रजाभ्यो न कल्पत एषा वावैकादशिनी तामेतां कापेया विदुस्तामेतामतिरात्रेचरमामालभेत सत् त्रियेयमितरायामिदं प्रजा आपद्य चरन्त्यह्नामेवैषा विधैतद्देवत्यान्यहानि ॥१०॥ २५
[२००२]

॥ इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां दीर्घजिह्वी नामैकोनत्रिंशं स्थानकं संपूर्णम् ॥२९॥

अथ त्रिंशं स्थानकम् ।

## पात्नीवतम् ।

प्रजननं वै पात्नीवतो यद्वै किंच यज्ञे पात्नीवतं क्रियते प्रजननमेव तत् पराङ् वा एतर्हि यज्ञः पराचीर्देवतास्त्वाष्ट्रो भवति पराचीष्वेव देवतासु त्वष्टारं वृषाणमपिसृजति सोऽस्मै मिथुनं करोति वज्रो वा एष पुरस्तात् संमीयते यदेकादशिनी स ईश्वरः प्रत्यञ्चं यज्ञँ संपुरो यत् पात्नीवतो मीयते प्रत्युत्तब्ध्यै सयत्वाय मनोर्वै कपालान्यासँस्तैर्यावतो यावतोऽसुरानभ्युपाधात्ते पराभवन्नथ तर्हि त्रिष्टावरुत्री आस्तामसुरब्रह्मौ ता असुरा अब्रुवन्निमानि मनुकपालानि याचेथामिति तौ प्रातरित्वाना अभिप्रापद्येतां वायवेऽग्ना३इ वायव इन्द्रा३ इति किंकामौ स्थ इत्यब्रवीदिमानि नौ कपालानि देहीति तान्याभ्यामददात् तान्यरण्यं पराहृत्य समपिंष्टां तन्मनोर्गावोऽभिव्यतिष्ठन्त तान्यृषभस्समलेट् तस्य रुवतो यावन्तोऽसुरा उपाशृण्वँस्ते पराभवँस्तौ प्रातरित्वाना अभिप्रापद्येतां वायवेऽग्ना३इ वायव इन्द्रा३ इति किंकामौ स्थ इत्यब्रवीदनेन त्वर्षभेन याजयावेति तत् पत्नी यजुर्वदन्ती प्रत्यपद्यत तस्या द्यां वागातिष्ठत् तस्या वदन्त्या यावन्तोऽसुरा उपाशृण्वँस्ते पराभवँस्तस्मान्नक्तँ स्त्री चन्द्रतरं वदति तौ प्रातरित्वाना अभिप्रापद्येतां वायवेऽग्ना३इ वायव इन्द्रा३ इति किंकामौ स्थ इत्यब्रवीदनया त्वा पत्न्या याजयावेति सा पर्यग्निकृतासीदथेन्द्रोऽचायन्मनुं श्रद्धादेवं त्रिष्टावरुत्री असुरब्रह्मौ जायया व्यर्धयत इति स आगच्छत् सोऽब्रवीदाभ्यां त्वा याजयानीति नेत्यब्रवीन्न वा अहमनयोरीश इत्यतिथिपतिर्वावातिथेरीश इत्यब्रवीत् ता अस्मै प्रायच्छत् स प्रतिवेशो वेदिं कुर्वन्नास्त ता अपृच्छतां कोऽसीति ब्राह्मण इति कतमो ब्राह्मण इति ॥ १

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् ।
श्रुतं चेदस्मिन् वेद्यँ स पिता स पितामहः ॥ २

इति ता अविन्तामिन्द्रो वा इति तौ प्रापततां तयोर्याः प्रोक्षणीराप आसँस्ताभिरनुविसृज्य

[१] मै. ४,८,१ (१-४) । कपि. ४६,४ । तै. सं ६,६,६ ।

शीर्षे अच्छिनत् तौ वृषश्च यवाषश्चाभवतां तस्मात् तौ वर्षेषु शुष्यतोऽद्भिर्हि हतौ तां पर्यग्निकृता-
मुदासृजत् तयार्ध्नोत् ता इमा मनाव्याः प्रजा यत् पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धि-
मार्ध्नोत् तामृध्नोति सँस्थाप्या३ न सँस्थाप्या३ इति मीमाँसन्ते स्रवति वै यज्ञोऽसँस्थितस्तँ स्रवन्तं
यजमानोऽनु परास्रवति प्रजया च पशुभिश्च सँस्थाप्य एव यज्ञस्य प्रतिष्ठित्यै यदि सँस्थापयेद्यावन्ति
पशोरवदानानि तावन्त्याज्यस्यावद्येदयातयामँ ह्येतत् प्राजापत्यं यदाज्यमयातयामो देवानां प्रजा-
पतिस्तदेव सँस्थापयति तदु न सँस्थापयत्युभयमेव करोति ॥१॥ ३

ऐन्द्रवायवाग्रा अग्रे गृह्यन्तेऽथ शुक्राग्रा अथाग्रायणाग्रा गायत्रो वा ऐन्द्रवायवस्त्रैष्टुभश्शुक्रो
जागत आग्रायण एतावन्ति वै छन्दाँसि च्छन्दोभिर्देवास्स्वर्गं लोकमायँश्छन्दोभिरेव स्वर्गं लोक-
मेत्याग्रायणश्चतुर्थेऽहञ्जागतो वा आग्रायणो जगन्मुख एष त्रिरात्रो यदेव च्छन्द आप्नोति तेनोत्तरं
त्रिरात्रं प्रतनुत ऐन्द्रवायवाग्राः पञ्चमेऽहन् गायत्रो वा ऐन्द्रवायवः प्राणो गायत्री प्राणमेव मध्यतो
दधाति तस्मान्मध्यतः प्राणश्शुक्राग्राष्षष्ठेऽहँस्त्रैष्टुभो वै शुक्रस्त्रिष्टुबन्त एष त्रिरात्रोऽन्तमेवैनमभ्यु-
दूहति शुक्राग्रा एव सप्तमेऽहँस्त्रैष्टुभो वै शुक्रस्त्रिष्टुम्मुख एष च्छन्दोमः प्रत्युत्तब्ध्यै सयत्वायाथो
यदेव च्छन्द आप्नोति तेनोत्तरं त्रिरात्रं प्रतनुत आग्रायणाग्रा अष्टमेऽहञ्जागतो वा आग्रायणो जग-
न्मध्य एष च्छन्दोमश्छन्दसामेव व्यूहमनुव्यूहत्यैन्द्रवायवाग्राः प्रायणीय ऐन्द्रवायवाग्रा उदयनीये
प्राणा वा ऐन्द्रवायवः प्राणेनैव प्रयन्ति प्राणेनोद्यन्ति प्राणा वै ग्रहास्तानेतन्मोहयति यद्व्यतिहारं
गृह्णाति यदग्रान् यदग्रान् गृह्णीयात् तं धारयन्ना सादयितोरासीत प्राणा वै ग्रहाः प्राणानेवा-
यतनश आपादयत्यथोत्तरं प्रसृता गृह्यन्त एवँ ह वै केशिनो दाल्भ्यस्य वँशव्रश्चने ग्रहाञ्जगृहुस्स
होवाच लुशाकपिः खार्गलिः कथं ग्रहानग्रहीष्टेतीत्थमित्थमिति हास्मा ऊचुस्स होवाच त्र्यनीकमस्य
प्रजा भविष्यतीति ततः पञ्चालास्त्रेधाभवन् यस्यैवं ग्रहा गृह्यन्ते त्र्यनीकमस्य प्रजा भवति॥२॥ ४

ऐन्द्रवायवाग्रान् गृह्णीत यः कामयेत यथापूर्वं प्रजाभ्यः कल्पेतेति यज्ञस्य वै क्लृप्तमनु प्रजाभ्यः
कल्पते यज्ञस्याक्लृप्तमनु न कल्पते यथापूर्वमेव प्रजाभ्यः कल्पयति न कनीयाञ्ज्यायाँसमतिक्राम-
त्यैन्द्रवायवाग्रान् गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्यामयति प्राण ऐन्द्रवायवः प्राणे-
नैवैनँ समर्धयति मैत्रावरुणाग्रान् गृह्णीरन् येषां दीक्षितानां प्रमीयेत प्राणापानाभ्यां वा एते
व्यृध्यन्ते येषां दीक्षितानां प्रमीयते प्राणापानौ वै मित्रावरुणौ प्राणापाना एव मुखतः परिहरन्ते
तस्मान्मुखतः प्राणापाना आश्विनाग्रान् गृह्णीतानुजावरोऽश्विनौ वै देवानामानुजावरौ ता अग्रं पर्यै-
तामश्विना एतस्य देवता य आनुजावरस्ता एवान्वारभते ता एनमग्रं परिणयतः शुक्राग्रान् गृह्णीत

[२] कपि. ४६,५। तै. सं. ७,२,८। [३] कपि. ४६,६। तै. सं. ७,२,७।

गतश्रीरसौ वा आदित्यश्शुक्र एषोऽन्तोऽन्तं मनुष्यश्श्रियो गत्वा निवर्ततेऽन्तादेवान्तमालभते न ततः पापीयान् भवति यादृङ् सन् यजते मन्थ्यग्रान् गृह्णीताभिचरन्नार्तपात्रं वा एतद्यन्मन्थिपात्रं मृत्युनैवैनं ग्राहयत्युक्थ्याग्रान् गृह्णीताभिचर्यमाणस्सर्वेषां वा एतत् पात्राणा मिन्द्रियं वीर्यं यदुक्थ्य-पात्रँ सर्वेणैवैनामिन्द्रियेणातिप्रयुङ्क्ते ॥ ५

मा त्वत्क्षेत्राण्यरणानि गन्म मापस्फरीः पयसा मा न आधक् ।
मा वयमेनोऽन्यकृतं भुजेम सरस्वत्यभि नो नेषि वस्यः ॥ ६

इति मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छत्याग्रायणाग्रान् गृह्णीत यस्य पिता पितामहः पुण्यस्स्यादथ तन्न प्राप्नुयाद्वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यो भवत्यथ तन्न प्राप्नोत्युर इवैतद्यज्ञस्य वागिव यदाग्रायणो वाचैवैनमिन्द्रियेण समर्धयति पूर्णान् ग्रहान् गृह्णीयादामयाविनः प्राणान् वा एतस्य शुगृच्छति यस्यामयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्चति पूर्णान् ग्रहान् गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत् प्राणान् वा एतर्हि प्रजानाँ शुगृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजानाँ शुचो मुञ्चति ताजक् प्रवर्षति ॥३॥ ७

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥ ८

उपयामगृहीतोऽस्यदित्यै त्वा चतुरूध्न्यै ॥ ९

उदीरयत मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उपदस्यन्ति धेनवश्शुभं यातामनु रथा अवृत्सत ॥ १०

उपयामगृहीतोऽस्यदित्यै त्वा चतुरूध्न्यै ॥ ११

महीमू षु मातरँ सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीँ सुशर्माणमदितिँ सुप्रणीतिम् ॥ १२

उपयामगृहीतोऽस्यदित्यै त्वा चतुरूध्न्यै ॥ एष ते योनिरदित्यै त्वा चतुरूध्न्यै ॥ वृष्टिर्वै देवेभ्योऽपाक्रामत् सैषु लोकेष्वश्रयत तां देवा अन्वेष्टुमाध्रियन्त त एतं ग्रहमपश्यँस्तमगृह्णत तेनैभ्यो लोकेभ्यो वृष्टिँ संप्राच्यावयँस्तमेतं वृष्टिकामो गृह्णीत क्षेत्रस्य पते मधुमन्तमूर्मिमित्यसौ वै क्षेत्रस्य पतिरमुतो वर्षत्युदीरयत मरुतस्समुद्रत इति मरुतस्सृष्टां वृष्टिं नयन्ति महीमू षु मातरँ सुव्रताना-मितीयमदितिरस्यां वर्षत्येता वै देवता वर्षस्येशते ता एवोपधावत्येभ्य एव लोकेभ्यो वृष्टिँ

---

[४] मै. १,३,७०,७२; २,४,३१,३३, ४,१०,३४। कपि. ४६,७। वा ८,१, २१,५। काण्व. ३,५०; १३,५। [क्षेत्रस्य पते मधुमन्तं०। ऋ. ४,५७,२; तै. सं. १,१,१४,३; नि. १०,१६। उदीरयत (०रयथा)मरुत०। ऋ. ५,५५,५; तै. सं. २,४,८,२। महीमू षु मातरँ०। तै. सं. १,५,११,५; ७,१,१८,१; तै. ब्रा. ३,१,३,३; तै. आ. १,१३,२; मा. श्रौ. ७,२,६; कपि. ४६,७]

संप्रच्यावयति चतुस्स्तनं पात्रं भवति चतस्रो दिशो दिग्भ्य एव वृष्टिं संप्रच्यावयति यं प्रथमँ स्तनमनुपद्यते तस्या दिशोऽभ्येतद्वर्षत्यपि पात्रे क्रियमाणे वर्षति मृन्मयेन गृह्णाति दारुमयेण जुहोति न हि मृन्मयमाहुतिमानशे ॥४॥ १३–१५

उपयामगृहीतोऽसि प्रजापतये त्वा प्रजाभ्य एष ते योनिः प्रजापतये त्वा प्रजाभ्य उपयामगृहीतोऽसि प्रजाभ्यस्त्वा प्रजापतय एष ते योनिः प्रजाभ्यस्त्वा प्रजापत उपयामगृहीतोऽस्यन्तरिक्षाय त्वा वनस्पतिभ्य एष ते योनिरन्तरिक्षाय त्वा वनस्पतिभ्य उपयामगृहीतोऽसि वनस्पतिभ्यस्त्वान्तरिक्षायैष ते योनिर्वनस्पतिभ्यस्त्वान्तरिक्षायोपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्य एष ते योनिरद्भ्यस्त्वौषधीभ्य उपयामगृहीतोऽस्योषधीभ्यस्त्वाद्भ्य एष ते योनिरोषधीभ्यस्त्वाद्भ्यः ॥ १६

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १७

उपयामगृहीतोऽसि सूर्याय त्वैष ते योनिस्सूर्याय त्वा ॥ १८

वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्या हुवेम ।
स नो नेदिष्ठं हवनान्यागमद्विश्वशम्भूरवसे साधुकर्मा ॥ १९

उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे ॥ २०

महीमू षु मातरँ सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीँ सुशर्माणमदितिँ सुप्रणीतिम् ॥ २१

उपयामगृहीतोऽस्यदित्यै त्वैष ते योनिरदित्यै त्वा ॥ संततिर्वा एते ग्रहा यथा वै शालैवँ संवत्सरो यथा शालायाः पक्षसी एवँ संवत्सरस्य पक्षसी यथा मध्यमो वँश एवं दिवाकीर्त्यं यदेते न गृह्येरन् विषूची संवत्सरस्य पक्षसी व्यवस्रँसेयातामार्तिमार्छेयुर्यदेते गृह्यन्ते यथा शालायाः पक्षसी मध्यमं वँशमभिसमायच्छन्त्येवमेवैतत् संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसंतन्वान्ति ते सर्वे सह दिवाकीर्त्ये गृह्यन्ते यथा वै मध्यमो वँश एवं दिवाकीर्त्यं यद्वै सौबलस्स्यादवशीर्येत ॥ यदेते न गृह्यन्ते द्राढिम्न एवानुनद्ध्या आशिथिलत्वाय शुक्राग्रा एतदहर्गृह्यन्ते त्रैष्टुभो वै शुक्रस्त्रैष्टुभमेतदहः प्रत्युत्तब्ध्यै सयत्वाय सौर्य एतदहः पशुरालभ्यते सौर्यो ग्रहो गृह्यतेऽसौ वा आदित्य एतदहस्तमेव प्रत्यक्षमृध्नुवान्ति षडेतदहरतिग्राह्या गृह्यन्ते पशुस्सप्तमस्सप्त प्राणा असा आदित्यश्शिरः प्रजानाँ शीर्षन्नेव प्राणान् दधाति तस्मात् सप्त शीर्षण्याः प्राणा इन्द्रो वै वृत्रँ हत्वा स इमांल्लोकानभ्यजयत्

[५] मै. १,३,७०,७२,९१,९४,१००, २,१०,२२; ४,१०,३४ । वा. ७,४१; ८,१,४०–४१,४५–४६; १७,२३; २२,५; २३,२,४ । काण्व. ३,५०, ८,२२–२३,२६–२८; ९,६; १८,२२; २३,५; २५,२,४; ३२,३१ । [ **उदु त्यं जातवेदसं०** । ऋ. १,५०,१; सा. ३१; अथर्व. १३,२,१६; २०,४७,१३; तै. सं. १,२,८,२; ४,४३,१; नि. १२,१५ । **वाचस्पतिं विश्वकर्माणं०** । ऋ १०,८१,७; तै. सं. ४,६,२,५ । **महीमू षु मातरँ०** । ( चतुर्थानुवाके द्रष्टव्यम् )]

तस्यासौ लोकोऽनभिजित आसीत् तं विश्वकर्मा भूत्वाभ्यजयद्यद्वैश्वकर्मणो गृह्यतेऽमुष्य लोकस्याभिजित्यै यन्ति वा एतेऽस्माल्लोकाद्ये वैश्वकर्मणं गृह्णते पराञ्च इव ह्येते न रोहन्ति त ईश्वराः प्रमेतोरादित्यँ श्वो गृह्णीरन्नियमदितिरस्यामेव तेन प्रतितिष्ठन्त्या परार्धात् संवत्सरस्यान्यमन्यं गृह्णीरन् विश्वान्यन्येन कर्माणि कुर्वाणा यन्त्यस्यामन्येन प्रतितिष्ठन्ति ता उभौ सह महाव्रते गृह्येते अन्तमेवागत्योभयोर्लोकयोर्ऋध्नुवन्ति वैश्वकर्मणेनामुष्मिन्नादित्येनास्मिन्नक्र्यमुक्थं भवत्यन्नं वा अक्र्यमन्नाद एव तेन प्रतितिष्ठन्ति ॥५॥ २४

अग्नये त्वा प्रवृहामि गायत्रेण च्छन्दसेन्द्राय त्वा प्रवृहामि त्रैष्टुभेन च्छन्दसा विश्वेभ्यस्त्वा देवेभ्यः प्रवृहामि जागतेन च्छन्दसा ॥ २५

अग्निः प्रातस्सवने पात्वस्मान् वैश्वानरो विश्वकृद्विश्वशंभूः ।
स नः पावको द्रविणं दधात्वायुष्मन्तस्सहभक्षास्स्याम ॥ २६
विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः ।
सुमेधसः प्रियमेषां वदन्तो वयँ स्याम पतयो रयीणाम् ॥ २७
इदं तृतीयसवनं कवीनामृतेन ये चमसमैरयन्त ।
सौधन्वना अमृतमानशानास्स्विष्टं नोऽभि वस्यो नयन्तु ॥ २८

शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपे सूर्यस्य रश्मिषु रेशीनां त्वा पत्मन्नाधूनोमि मान्दानां त्वा पत्मन्नाधूनोमि कूतनानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि देवयानीनां त्वा पत्मन्नाधूनोमि ॥ २९

आ सीमुग्रा अचुच्यवुर्दिवो धारामसश्चत । ककुभं रूपमृषभस्य रोचते बृहत् ॥ ३०

सोमस्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य पुरोगा यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ त्रिर्वसुभ्यो अवपथास्त्री रुद्रेभ्यो अवपथास्त्रिरादित्येभ्यो अवपथा येन रूपेण प्रजापतयेऽवपथास्तेन मह्यं पवस्वोशिक्त्वं देव सोम गायत्रेण च्छन्दसाग्नेः पाथ उपेहि वशी त्वं देव सोम त्रैष्टुभेन च्छन्दसेन्द्रस्य पाथ उपेह्यस्मत् सखा देव सोम जागतेन च्छन्दसा विश्वेषां देवानां पाथ उपेहि ॥६॥ ३१-३२

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतमदाभ्यमपश्यँस्तमगृह्णताग्नये त्वा प्रवृहामि गायत्रेण च्छन्दसेति देवताश्चैव तच्छन्दाँसि चाप्नुवन्नग्निः प्रातस्सवने पात्वस्मानिति सवनान्येव तदाप्नुवँश्शुक्रं ते शुक्रेण गृह्णामीत्यहोरात्रयोरेव तद्रूपे आप्नुवन्

[६] मै. १,३,३६ (९६-९९)। मा. श्रौ. ७,१,१। वा. ८,४७-५०। काण्व. ८,२९-३२। तै. सं. ३,१,९।
[७] मै. ४,७,७ (१४)। वा. ८,४७-५०। काण्व. ८,२९—३२। तै. सं. ६,६,९।

रेशीनां त्वा पत्मन्नाधूनोमीत्यपामेव तद्रूपाण्याप्नुवँस्ते देवा यावानेव यज्ञस्तं परिगृह्याजुहवुस्तँ हुतमसुरा अन्वबुध्यन्त तेऽब्रुवन्नदभन्न इति तदस्यादाभ्यत्वमथो यदेनान् दब्धुं नाशक्नुवँस्तदस्यादाभ्यत्वँ स एष भ्रातृव्यस्यैव दब्ध्यै गृह्यते ॥ निग्राभ्याणां गृह्णाति सोमो वै दध्नो गृह्णाति सोमो हि दधि चतुस्स्रक्ति पात्रं भवति चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति तस्यैषातिमोक्षिणी तनूर्यदादाभ्यस्तामेवान्वहताँ हतस्स्वर्गं लोकमभ्यतिमुच्यते तदनु यजमानो यज्ञात् सा हि यजमानस्स ह त्वा अमुष्मिल्लोके सर्वतनूर्यस्यैष गृह्यते वि वा एतद्यज्ञं छिनत्ति यत् पुराभिषोतोस्सँस्थां गमयति यदँशूननभिषुतानपिसृजाति यज्ञस्य संतत्या अविच्छेदाय ॥ न सामानुक्थोऽग्रहोऽस्तीत्याहुरनायतनस्स इति त्रिर्वसुभ्यो अवपथा इत्येतदुक्थमेषाशीर्गौरिवीतँ साम देवा वै यद्ब्रह्म व्यभजन्त ततो यदत्यरिच्यत तद्गौरिवीतमभवदतिरिक्तं वै गोरिवीतमतिरिक्ता अतिग्राह्या अतिरिक्तेनैवातिरिक्तमाप्नोति यत्र गोरिवीतँ साम स्यात् तदपि बहूनतिग्राह्यान् गृह्णीयात् तेनैवैनान् सामवत उक्थवतो निदानवत आयतनवतः करोति निदानवानायतनवान् भवति य एवं वेद ॥७॥ ३३–३५

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः । ता अस्मै प्रतिवेदय चिकित्वाँ अनुमन्यताम्॥ ३६
पशुपतेः पशवो विरूपास्सदृशा उत । तेषां यं वव्रिरे देवास्तँ स्वराडनुमन्यताम् ॥ ३७
प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यो अधिनिश्चरन्तम् ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ ३८
ये बध्यमानमनुबध्यमाना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टाँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥ ३९
य आरण्याः पशवो विश्वरूपा विरूपास्सन्तो बहुधैकरूपाः ।
वायुष्टाँ अग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ॥ ४०
येषामीशे पशुपतिः पशूनां चतुष्पाद उत ये द्विपादः ।
निष्क्रीतास्ते यज्ञियं भागं यन्तु रायस्पोषा यजमानं विशन्तु ॥ ४१
प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतँ शशमानं यदस्थात् प्रियं देवानामप्येतु पाथः ॥ ४२

---

[८] मै. १,२,१५ (१०१,१०७—१०८) । तै. सं. ३,१,४ । [ प्रजानन्तः प्रति० । अथर्व. २,३४,५ । ये बध्यमानमनु० । अथर्व. २,३४,३ । य (ये)आरण्या(ग्राम्याः)० । अथर्व. २,३४,४ । येषामीशे(य ईशे)पशुपतिः० । अथर्व. २,३४,१ । प्रमुञ्चमाना (प्रमुञ्चन्तो)० । अथर्व. २,३४,२]

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिस्सह देवयानः ।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥ ४३
उपेत शमितारो देवानां दसितँ हविः । पशोः पाशं प्रमुञ्चत पाशं यज्ञपतेरधि ॥ ४४
अदितिः पाशान् प्रमुमोक्त्वेतान्नमः पशुभ्यः पशुपतयेऽस्तु ।
यो नो द्वेष्ट्यधरस्स पदीष्ट तस्मिन् पाशान् प्रतिमुञ्चाम एतान् ॥ ४५
त्वामु त्ये दधिरे प्रथमं विचक्ष्यँ श्रृतंकर्तारमुत यज्ञियं च ।
अग्ने सदक्षस्सतनूर्हि भूत्वाथ वह हव्यं देवेभ्यो जातवेदः ॥ ४६
जातवेदो वपया गच्छ देवाँस्त्वँ हि होता प्रथमो बभूथ ।
घृतस्याग्ने तन्वा संभव सत्यास्सन्तु यजमानस्य कामाः ॥८॥ ४७

प्रजापतेर्वै पशवो जाताश्च जायमानाश्च रुद्रस्य जाता व्यृद्धेन वा एष पशुना चरति य एतयोस्सन्तं पशुं तमनिर्याच्यैतयोरालभते ययोरेव पशुस्तयोरेवैनं निर्याच्य तेनानुमतेन प्रसूतेनर्भ्नोत्येव जीवन् पशुस्स्वर्गं लोकं गमयितव्य इत्याहुर्न मृतस्स्वर्गं लोकं गन्तुमर्हतीति प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति जीवन्तमेवैनँ स्वर्गं लोकं गमयति ये च वै ग्राम्याः पशवो ये चारण्यास्त एतमालभ्यमानमनुध्यायन्ति स ईश्वरो यजमानोऽपशुः पराभवितोर्ये बध्यमानमनुबध्यमाना य आरण्याः पशवो विश्वरूपा इति पशूनामेवैषा संप्रमुक्तिः पञ्चैतानि जुहोति पाङ्क्ताः पशवो यावानेव पशुस्तँ स्वर्गं लोकं गमयति ॥ यदवघ्रापयति तमेव निर्दिष्टमालभते पशुर्वै यज्ञो यज्ञात् स यजमान एतत् पशुमालभत इत्याहुः क्वैतर्हि यजमानो भवतीति नाना प्राणो यजमानस्य पशुनेति प्राणा एवैनयोर्व्यावर्तयति यज्ञेन वा एनमेतद्व्यर्धयति यन्नाना प्राण इत्याह सम्यगायुर्यज्ञो यज्ञपतौ दधात्विति यज्ञेनैवैनँ समर्धयत्यधिरज्जू वा एता अमुष्मिँल्लोके पशुश्च यजमानश्च ययोरेतेन पाशं न प्रमुञ्चत्युपेत शमितारो देवानां दसितँ हविः पशोः पाशं प्रमुञ्चत पाशं यज्ञपतेरधीति पाशमेवैनयोः प्रमुञ्चति वरुणपाशँ स ह त्वा अमुष्मिँल्लोकेऽपरज्जुर्यस्यैवं क्रियते यद्यभिचरेद्यो नो द्वेष्ट्यधरस्स पदीष्ट तस्मिन् पाशान् प्रतिमुञ्चाम एतानिति स्तम्भं वा दारु वाभिदध्यात् पाशमेवास्मिन् प्रतिमुञ्चति वरुणपाशमाहवनीयं वा एतद्व्यर्धयति यत् पशुश्रपणं करोति त्वामु त्ये दधिरे प्रथमं विचक्ष्यमिति मेध्यमेवैनं यज्ञियं करोति जातवेदो वपया गच्छ देवानिति स्वर्गमेवैनं लोकं गमयति यद्यद्वा ऋषीणां च देवानां च यज्ञस्यापूतमासीत् तदेतैरपुनत यदेवास्य यज्ञस्यापूतं तदेतैः पुनीत आव्यं वा एतैस्तेऽपाजयँस्तदपाव्यानामपाव्यत्वमाव्यमेवैतैरपजयति ॥९॥ ४८-४९

[ ९ ] तै. सं. ३,१,५।

तृतीयस्यां वै दिवि सोम आसीत् तं गायत्र्याहरत् तस्य पर्णमच्छिद्यत स पर्णोऽभवत् तत् पर्णस्य पर्णत्वं तस्मात् सर्वे वृक्षाः पर्णवन्तोऽथैष एव पर्ण उच्यते यत् पर्णशाखा भवति तमेव सोममवरुन्द्धे देवा वै ब्रह्मन् समवदन्त तत् पर्ण उपाशृणोत् सुश्रवा वै नामैष न बधिरो भवति य एवं वेद यत् पर्णशाखया प्रार्पयति ब्रह्मणैवैनाः प्रार्पयति प्रजापतिः पशूनसृजत तानयं देवोऽभ्यमन्यत तं शम्याशमयत् तच्छम्याश्शमीत्वं यच्छमीशाखया प्रार्पयति शान्त्या अपां वा एतदोषधीनां तेजो यद्दर्भा यद्दर्भपिञ्जूलैः प्रार्पयत्यपामेवैना ओषधीनां तेजसा प्रार्पयतीषे त्वोर्जे त्वेतीषमेवोर्जं यज्ञे दधाति वायवस्स्थेति वायुर्वा अन्तरिक्षस्याध्यक्षोऽन्तरिक्षदेवत्याः पशवो वायुरेवैनानन्तरिक्षाय परिददाति प्र वा एनानेतदाकरोति यद्वागवस्स्थेत्याहारण्यस्येव हि वायुरुपायवस्स्थेति यजमानायैव पशूनपाकरोति देवो वस्सविता प्रार्पयत्विति प्रसूत्यै श्रेष्ठतमाय कर्मण इति यज्ञो वै श्रेष्ठतमं कर्माप्यायध्वमघ्न्या देवभागमिति वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुराप्यायन्तेऽथैतर्हि देवेभ्य एवैना आप्याययति प्रजावतीरनमीवा अयक्ष्मा इति प्रजावतीरेवैना अनमीवा अयक्ष्माः करोति ॥ मा वस्स्तेन ईशत माघशँस इत्याशिषमेवाशास्ते परि वो रुद्रस्य हेतिर्वृणक्त्विति रुद्रमेव पशुभिः परिवृणक्त्यघातुकोऽस्य रुद्रः पशून् भवति यस्यैवं विदुषो यश्चैवं विद्वान् हविषे गाः प्रार्पयति ध्रुवा अस्मिन् गोपतौ स्यातेति दृंहत्येवैना बह्वीरिति भूमानमेवैना गमयति यजमानस्य पशून् पाहीति यजमानस्य पशूनां गोपीथाय प्रतीचीं शाखामुपगूहति तस्माद्ग्राम्याः पशवस्सायमारण्याद्ग्राममायन्ति यत् पराचीमुपगूहेदरण्ये हीयेरन् ॥१०॥ ५०-५१

[२०५३]

॥ इत्येकोत्तरशतशाखाध्वर्युप्रभेदभिन्ने श्रीयजुषि काठके चरकशाखायां मध्यमिकायां पात्नीवतं नाम त्रिंशं स्थानकं संपूर्णम् ॥३०॥

॥ संपूर्णा चेयं मध्यमिका ॥

---

[१०] मै ४,१,१ (१—८) । कपि. ४६,८ । वा. १,१; १६,५० । काण्व. १,१-३; १७,५० । तै. ब्रा. ३,२,१ । [ मा वस्स्तेन ईशत० । ऋ. ६,२८,७ (उत्तरार्धः), अथर्व. ४,२१,७ । परि वो (णा) रुद्रस्य० । ऋ. २,३३,१४, अथर्व. ४,२१,७ ]

# अथ ओरिमिका।

## अथैकत्रिंशं स्थानकम्।

## पुरोडाश-ब्राह्मणम्।

प्रजापतिर्वा ओषधीः परुश्शो वेद प्राजापत्योऽश्वो यदश्वपर्श्वा बर्हिर्दात्योषधीनामहिँसायै देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनां देवताभिरादत्ते गोषदसीति रयिमेव यजमाने दधाति प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षाँस्यपहन्ति प्रेयमगाद्धिषणा बर्हिरच्छेति विद्या वै धिषणा विद्यये- वैनदच्छैति मनुना कृता स्वधया वितष्टेति मनुना ह्येषा कृता स्वधया वितष्टोर्वन्तरिक्षं वीहीति समष्ट्या इन्द्रस्य परिषूतमसीति यद्वा इदं किंच तदिन्द्रस्य परिषूतं यथा श्रेयसे प्रोच्य कर्म करो- त्येवमेवैतदिन्द्राय प्रोच्य बर्हिर्दाति यावत् परिदिशति यत् तत् सर्वं न दाति यज्ञस्य नदतिरिच्यते यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यं तेन वर्धयत्येकँ स्तम्बं परिदिशेत् तँ सर्वं दायाद्यज्ञस्यानतिरेकाय यत् सर्वं दायान्न पशुभ्यो जीवनमुच्छिँषेदेकां वा श्रुष्टिं द्वे वोच्छिँषेन्न यज्ञस्यातिरेचयत्युत पशुभ्यो जीवनँ शिँषति माधो मोपरि परुस्त ऋध्यासमित्यृद्ध्या आच्छेत् ता ते मा रिषदिति यावद्यावद्वा अविद्वानध्वर्युर्बर्हिषो दाति तावदस्यात्मनो मीयते नास्यात्मनो मीयते य एवं वेद देव बर्हिश्शत- वल्शं विरोहेत्योषधिष्वेव भूमानं दधाति सहस्रवल्शा वि वयं रुहेमेत्याशिषमेवाशास्तेऽदित्या रास्नासीतीयमदितिरस्या एवैनद्रास्नां करोतीन्द्राण्यास्संनहनमितीन्द्राणी वा अग्रे देवतानाँ समनह्यत साद्ध्योदद्ध्यै बर्हिस्संनह्यति प्रजा वै बर्हिः प्रजानामपरावापाय तस्मात् स्नाम्ना प्रजास्संतताः ॥ पूषा ते ग्रन्थिं ग्रथ्नात्विति पुष्टिर्वै पूषा पुष्टिमेव यजमाने दधाति स ते मास्थादित्यहिँसाया इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इतीन्द्रस्यैवैनद्बाहुभ्यामुद्यच्छते बृहस्पतेस्त्वा मूर्ध्नाहरामीति ब्रह्म वै बृहस्पतिर्ब्रह्मणै- वैनद्धरति देवंगममसीति बहु वा एतस्य पूर्वेद्युराह्रियमाणस्य स्कन्दत्यस्कन्नमेवैनद्देवेभ्यस्संप्रयच्छति तदाहरन्ति कवयः पुरस्तादिति ब्राह्मणा वै कवयो ब्राह्मणा ह्येतदाहरन्ति देवेभ्यो जुष्टमिह बर्हिरासद इति देवेभ्य एवैनज्जुष्टं करोति ॥१॥ १-२

वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमिति वसूनां वा एतद्भागधेयं यत् पवित्रं तेभ्य एवैनं करोति प्रजापतिः प्रजा असृजत तस्योखे अस्रँसेताँ स एते उखे अपश्यत् ताभ्यामादत्त यदेते उखे भवतः प्रजापतेरेवोखे प्रतिदधात्ययक्ष्मा वः प्रजया सँसृजामीत्ययक्ष्मा एवैनाः

[ १ ] काठ १,२,५—९ (३१)। मै. ४,१,२ (९—१९)। कपि. ४७,१। वा १,७,१०,२१,२४,२९-३०; ५ ४३. २२, १००। काण्व. १,१०,१३,२६,४०,४६-४७; ५,५५। तै. ब्रा. ३,२,२। [ देवस्य त्वा सवितु:०। अथर्व १९, ५१,२; ऐ ब्रा. ८,७। शतवल्शं (०ल्शो) विरोह०। ऋ. ३,८,११। तै. सं १,३,५,१]

[ २ ] काठ. १,३,११—१४। मै. ४,१,३ (२०-२६)। कपि. ४७,२। वा. १,२-४। काण्व १,४-७। तै. ब्रा. ३,२,३।

करोति रायस्पोषेण बहुला भवन्तीरिति भूमानमेवैना गमयति मधुमद् घृतवत् पिन्वमाना इति मधुमदेव घृतवद्देवेभ्यो हव्यं करोति जीवा जीवन्तीरुप वस्सदेमेत्याशिषमेवाशास्ते ॥ मातरिश्वनो घर्मोऽसीत्यन्तरिक्षं वै मातरिश्वनो घर्मो द्यौरासि पृथिव्यसीति दिवमेवैनां पृथिवी-मकर्विश्वधायाः परेण धाम्नाहुतासि मा ह्वारिति दँहत्येवैनां पवित्रमपिदधात्योषधीनां चैव पशूनां च पयस्सँसृजति सा विश्वायुस्सा विश्वव्यचास्सा विश्वधाया इत्यसौ वै विश्वायुरन्तरिक्षं विश्वव्यचा इयं विश्वधाया इमानेव लोकान् यथापूर्वं प्रदापयतीमेऽस्मै लोका यथापूर्वं प्रत्ता दुह्रे तिस्रो यजुषाभिमन्त्रयते त्रय इमे लोका एष्वेव लोकेषु रसं दधाति तस्मादिमांल्लोकान् प्रजा उपजीवन्त्युप-जीवनीयो भवति य एवं वेद ॥ हुतस्स्तोको हुतो द्रप्स इत्यनुमन्त्रयतेऽस्कन्दायाग्नये बृहते नाकाय स्वाहेतीयं वा अग्निर्बृहन्नाको बहु वा एतस्य दुह्यमानस्य स्कन्दत्यस्यामेवैनत् प्रतिष्ठापय-त्यस्कन्दाय न दारुपात्रेण दुह्यादग्निमद्वै दारुपात्रं यातयामेन हविषा यजेत तदु ह स्माहुर्दार्तेयाः पुरोडाशमुखं वै हविर्न वा इत इतः पुरोडाशँ हविषो यामोऽस्ति दोग्धव्यमेवेति न शूद्रो दुह्यादसतो वा एष संभूतोऽसत् स्याद्यद्वाव पवित्रमत्येति तद्धविरग्निहोत्रमेव शूद्रो न दुह्यात् तद्धि नोत्पुनन्ति संपृच्यध्वमृतावरीरिति प्रत्यानयति भृतत्वाय भृतकामा हि देवाः ॥ इन्द्रस्य त्वा भागँ सोमेनातनच्मीति सोममेवैनं करोति सोमो वै देवानां परोक्षँ सान्नाय्यं तस्य ह त्वै सोमपीथस्संततो य एवं विद्वान् सान्नाय्येन यजतेऽदस्तमसि विष्णव इति यज्ञो वै विष्णुर्यज्ञायैवैनददस्तं करोति न मृत्पात्रेणापिदध्याद्यन्मृत्पात्रेणापिदध्यात् पितृदेवत्यँ हविस्स्याद्दारुपात्रेणापिदधात्यग्निमद्वै दारुपात्र-माग्निरेव हव्यं रक्षत उदन्वत् कुर्यादापो रक्षोघ्नी रक्षसामपहत्यै विष्णो हव्यं रक्षस्वेति विष्णुरेव हव्यं रक्षत आपो जागृतेत्यापो वै यज्ञस्य गोप्त्रीस्ताभ्य एवैनत् परिददाति ॥२॥ ३-६

अपः प्रणयत्यापो वै यज्ञो यज्ञमेव तत्वा प्रचरत्यापो देवानां प्रियं धाम देवानामेव प्रियं धाम प्रणीय प्रचरत्यापो रक्षोघ्नी रक्षसामपहत्या आपो वज्रो वज्रमेव भ्रातृव्याय प्रहरत्यापश्श्रद्धा श्रद्ध वा अस्मै देवाश्श्रन्मनुष्या दधते यस्यैवं विदुषो यस्यैवं विद्वानपः प्रणयति कर्मणे वामिति हस्ता अवनेनिक्ते कर्म ह्येतत् क्रियते वानस्पत्यमसि प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षाँस्यपहन्त्युर्वन्तरिक्षं वीहीति समष्ट्यै धूरसि धूर्व धूर्वन्तमिति धुर्यो वा एषोऽग्निर्यदनालभ्यातीयाद्यजमानँ शुचार्पयेद् द्वौ वै पुरुषस्य भ्रातृव्यौ यं च द्वेष्टि यश्चैनं द्वेष्टि ता एवास्य शुचार्पयति ॥ देवानामसि वह्नितममिति देवेभ्य एवैनद्वह्निं करोति विष्णोः क्रमोऽस्यहुतमसि हविर्धानं दँहस्व मा ह्वारिति दँहत्येवै-नन्मित्रस्य त्वा चक्षुषा प्रेक्ष इति मित्रमेवैनत् कुरुत उरु त्वा वातायेति यद्वै किं च वातो नाभिवाति

---

[ ३ ] काठ. १,४,१५-१७। मै. ४,१,४-५ (२७; २८-३८)। कपि. ४७,३। वा.१.६-११,२९। काण्व. १,९-१५, ४६। तै. ब्रा. ३,२,४।

तद्वरुणस्यावरुण्यमेवैनत् देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनद्देवताभ्यो निर्वपत्यमुष्मै जुष्टमिति यस्या एव देवतायै निर्वपति तस्या एनज्जुष्टं करोति यच्छन्तु त्वा पञ्चेति पञ्च वा ऋतव ऋतूनेव प्रीणाति तेऽस्मै प्रीताः कल्पन्ते कल्पन्तेऽस्मा ऋतवो य एवं वेद ॥ रक्षायै त्वा नारात्या इति रक्षसामपहत्या इदं देवानामिदं नस्सहेति व्यावृत्त्यै स्वरभिव्यख्यमिति तम इव वा एष प्रपद्यते परीणहँ स्वरेवाभिविपश्यतीमे वै लोका हविषो गृहीतादुदवेपन्त तान् देवा एतेन यजुषादृंहन् दृंहन्तां दुर्या इतीमानेव लोकान् दृंहत्युर्वन्तरिक्षं वीहीति ब्रूयाद्यायुकोऽध्वर्युस्स्यादुर्वन्तरिक्षं प्रेहीत्यव्यायुकोऽध्वर्युर्भवति य एवं वेदाग्ने हव्यं रक्षस्वेत्युपसादयत्यग्निरेव हव्यं रक्षते ॥३॥ ७-९

विष्णोर्मनसा पूते स्थ इति पुनात्येवैने देवो वस्सवितोत्पुनात्विति सवितृप्रसूत एवैना देवताभिरुत्पुनाति देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनद्देवताभ्यः प्रोक्षत्यमुष्मै जुष्टमिति यस्या एव देवतायै प्रोक्षति तस्या एनज्जुष्टं करोति शुन्धन्तां पात्राणि देवयज्याया इति देवेभ्य एवैतानि शुन्धत्यवधूतं रक्षोऽवधूतारातिरिति रक्षसामपहत्या अदित्यास्त्वगसीतीयमदितिरस्या एवैनत् त्वचं करोत्यधिषवणमसि वानस्पत्यमित्यधिषवणमेवैनत् करोत्यग्नेस्तनूरसि वाचो विसर्जनमित्यग्नेर्ह्येषा तनूर्वाचो विसर्जनं यदा हि पशव ओषधीरश्नन्त्यथ वाचं विसृजन्ते बृहद्ग्रावासि वानस्पत्य इति ग्रावाणमेव कृत्वा हविष्करोति हविष्कृदेहीति य एव देवानाँ हविष्कृत्तँ ह्वयति त्रिर्ह्वयति त्रिसत्या हि देवा अद्रिरसि श्लोककृदपहतं रक्षोऽपहतारातिरिति रक्षसामपहत्यै वयँ संघातँ संघातं जयेमेति संघातँ संघातमेव भ्रातृव्यं जयति ॥ मनोर्वै श्रद्धादेवस्य यजमानस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत् तेषां यावन्तोऽसुरा उपाशृण्वँस्ते पराभवन् य एवं विद्वान् भ्रातृव्याणां मध्येऽवसाय यजेत यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुपशृण्वन्ति तेषामिन्द्रियं वीर्यं वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवति वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्विति मिथुनमेव करोत्यस्मा वै देवाः पशुभ्यो रक्षाँसि निरवादयन्त तुषैरोषधिभ्यः परापूतं रक्षः परापूतारातिरित्येतावतैव यज्ञाद्रक्षाँसि निरवदयते निरस्तो अघशँस इति भ्रातृव्यो वा अघशँसो भ्रातृव्यमेव निरस्यति वायुर्वं इष ऊर्जे विविनक्त्विति वायुर्वै देवानां पवित्रं पुनात्येवैनान् सुफलीकृतान् करोति मेध्यानेवैनान् यज्ञियान् करोति त्रिः फलीकरोति त्रिसत्या हि देवाः ॥४॥ १०-११

अवधूतं रक्षोऽवधूतारातिरिति रक्षसामपहत्या अदित्यास्त्वगसीतीयमदितिरस्या एवैनं त्वचं करोति धिषणासि पार्वती प्रति त्वादित्यास्त्वग्वेत्तु पृथिवीं दृंहेति पृथिवीमेव दृंहति धिषणासि

[देवस्य त्वा सवितुः० । अथर्व. १९,५१,२; ऐ. ब्रा ८,७ ]

[४] कठ. १,५,१८—२० । मै. ४,१,६-७ (३९-४९) । कपि. ४७,४ । वा. १,१२-१६,३१; ४,४; १०,६ । काण्व. १,१६,१८—२६,४८—४९; ४,५; ११,१३ । तै. ब्रा. ३,२,५ ।

[५] काठ. १,६,२१ । मै. ४,१,७ (४५—४९) । कपि. ४७,५ । वा. १,१६,१९—२० । काण्व. १,२६,३१—३४ ।

पार्वतेयी प्रति त्वा पार्वती वेत्तु दिवं दृँहेति दिवमेव दृँहति दिवस्स्कम्भन्यसीति शम्यामुपदधातीमे वै सहास्तां ते शम्यामात्रँ शम्यामात्रं व्यैतां वज्रश्शम्या यच्छम्यामुपदधात्यनयोरेव विधृत्यै ॥ धान्यमसि धिनुहि देवानित्येतस्य वै यजुषो वीर्येण यावदेका देवता कामयेत यावदेका तावदस्या आहुतेः प्रथते प्राणाय त्वा व्यानाय त्वापानाय त्वेति प्राणं व्यानमपानं तानेव यजमाने दधाति दीर्घामनु प्रसृतिमायुषे त्वेत्यायुरेवास्मिन् दधाति देवो वस्सविता हिरण्यपाणिः प्रतिगृह्णात्विति प्रेव वा एते स्कन्दन्ति प्रतिष्ठित्या अदब्धेन वश्चक्षुषावपश्यामीति चक्षुषो गोपीथाय रायस्पोषाय सुप्रजस्त्वायेत्याशिषमेवाशास्ते ॥५॥ १२-१३

निर्दग्धं रक्षो निर्दग्धारातिरिति रक्षसामपहत्या अपाग्ने अग्निमामादं जहीति य आमात् क्रव्यात् तमपहत्य यज्ञिये देवयजन उपदधाति यदधस्तादङ्गारमुपवर्तयत्यस्मिँस्तेन लोके ज्योतिर्धत्ते यदुपरिष्टादधिवर्तयत्यन्तरिक्षे तेन ज्योतिर्धत्तेऽसा एवास्यादित्योऽमुष्मिँल्लोके ज्योतिर्भवति सर्वेऽस्मा इमे लोका ज्योतिष्मन्तो भवन्ति त्रीणि समीचीनान्युपदधाति त्रयः प्राणाः प्राणो व्यानोऽपानस्तानेव यजमाने दधाति त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥ ध्रुवमसि पृथिवीं दृँहेति पृथिवीमेव दृँहत्यायुर्देहि प्राणं देहीत्याशिषमेवाशास्ते धरुणमस्यन्तरिक्षं दृँहेत्यन्तरिक्षमेव दृँहति चक्षुर्देहीत्याशिषमेवाशास्ते धर्त्रमसि दिवं दृँहेति दिवमेव दृँहत्योजो देहि बलं देहीत्याशिषमेवाशास्ते धर्मासि दिशो दृँहेति दिश एव दृँहति रयिं देहि पोषं देहीत्याशिषमेवाशास्ते यन्त्रमस्याशा दृँहेत्याशा एव दृँहति रूपं देहि वर्णं देहीत्याशिषमेवाशास्ते ॥ प्रजापतिर्वै यदग्रे समभवत् स एतावच्छ एव समभवदेकं वा अग्रे शीर्ष्णः कपालँ संभवत्यथ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमं यदष्टौ समीचीनान्युपदधात्यात्मानमेवैतद्यजमानस्सँस्कुरुते तँ सँस्कृतममुष्मिँल्लोकेऽनुपरैति यदष्टा उपदधाति गायत्रीं तच्छन्द आप्नोति ॥ यदेकादश त्रिष्टुभं तद्यद् द्वादश जगतीं तच्छन्दस्संमितान्येवोपदधाति चितस्स्थ परिचित इति सर्वाण्येव यजुष्मन्ति करोति भृगूणामङ्गिरसां तपसा तप्यध्वमित्येतासामेवैनानि देवतानां तपसा तपति यानि घर्मे कपालान्युपचिन्वन्ति वेधस इत्यसौ वा आदित्यो घर्मस्तस्य दिशः कपालानि ता एवैतद्विमुञ्चति यथायतनं पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतामितीन्द्रवायू एवैषां विमोक्तारौ करोति ॥६॥ १४-१७

देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनद्देवताभ्यस्संवपत्यमुष्मै जुष्टमिति यस्या एव देवतायै संवपति हविरेव करोत्यपि तस्या एनज्जुष्टं करोति पवित्रवति संवपति हविरेव करोत्यप

[६] काठ १,७,२२—२३। मै. ४,१,८ (५०—५४)। कपि. ४७,६। वा. १,१७—१८। काण्व. १,२७,३०। तै. ब्रा. ३,२,६-७।

[७] काठ. १,८,२४। मै ४,१,९ (५५—५९)। कपि. ४७,७। वा. १,२१—२३; ११,५७; ३७,८। काण्व. १, ३६-३९; १२,५९; ३७,८। तै. ब्रा. ३,२,८। [देवस्य त्वा सवितु.०। अथर्व. १९,५१,२; ऐ. ब्रा. ८,७]

उपसृजत्यमृतं वा आपोऽमृतमेव हव्यं करोति समाप ओषधीभिस्समोषधयो रसेनेत्यन्या वा एतासामन्या जिन्वन्त्योषधयो यद्वो रेवती रेवत्यं यद्वो हविष्या हविष्यं यद्वो जगतीर्जगत्यमित्यापो वै रेवतीरोषधयो मधुमतीः पशवो जगतीरप ओषधीः पशूँस्तानेवास्मा एकधा सँसृज्य मधुमतः करोति ॥ जनयत्यै त्वेति संयौति मिथुनमेव करोति मखस्य शिरोऽसीति यज्ञो वै मखो यज्ञस्यैव शिरः करोति घर्मो विश्वायुरुरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयत्येव प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षाँस्यपहन्ति घर्मो वा एषोऽर्धमासेऽर्धमासे प्रवृज्यते यत् पुरोडाशस्स ईश्वरोऽशान्तो यजमानस्य पशून्निर्दहो यत् पर्यग्निं करोति पशुमेव करोति शान्त्या अनिर्दाहाय त्रिः परिहरति त्रय इमे लोका एभ्य एवैनल्लोकेभ्यश्शमयति पुरोडाशं वा अधिश्रितं रक्षाँस्यजिघाँसन् स नाको नाम दिवि रक्षोहाग्निस्ससोऽस्माद्रक्षाँस्यपाहन् देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाक इति रक्षसामपहत्या अग्निस्ते तन्वं मा हिँसीदित्यहिँसायै त्वचं ग्राहयति ॥ तस्मान्मस्तिष्कः परिततो यानि वा इमानि शीर्ष्णः कपालानि तानि कपालानि यो मस्तिष्कस्स पुरोडाशो यन्नाभिवासयेदाविर्मस्तिष्कस्स्याद्यदभिवासयति तस्माद्गुहा मस्तिष्को भस्मनाभिवासयति तस्मादस्थि माँसेन च्छन्नं वेदेनाभ्यूहति तस्माच्छिरः केशैश्छन्नं ते देवास्तन्नाविन्दन्त यस्मिन् यज्ञस्य क्रूरं माक्ष्यामह इति सोऽग्निरब्रवीदहं वस्तं जनयिष्यामि यस्मिन् यज्ञस्य क्रूरं माक्ष्यध्य इति सोऽपोऽङ्गारेणाभ्यपातयत् तत एकतोऽजायत द्वितीयं ततो द्वितस्तृतीयं ततस्त्रितो यदात्मनो निरमिमीत तदात्मीयानामात्मीयत्वं यदद्भ्यो निरमिमीत तदाप्यीयानामाप्यीयत्वमन्तर्वेदि निनयति तदेवावरुन्द्ध उल्मुकेनाभिघारयति शृतत्वाय शृतकामा हि देवास्तेऽतिमृजाना आयन् सूर्याभ्युदिते तेऽमृजत सूर्याभ्युदितस्सूर्याभिनिम्रुक्ते सूर्याभिनिम्रुक्तः कुनखिनि कुनखी श्यावदति श्यावदन् परिवित्ते परिवित्तः परिविविदाने परिविविदानोऽग्रेदिधिषा अग्रेदिधिपुर्दिधिषूपतौ दिधिषूपतिर्वीरहणि वीरहा ब्रह्महणि ब्रह्महा भ्रूणहनि भ्रूणहनमेनो नात्येति ॥७॥ १८-२०

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते सवितृप्रसूत एवैनं देवताभिरादत्त इन्द्रस्य बाहुरसि दक्षिणस्सहस्रभृष्टिश्शततेजा इति वज्रो वै स्फ्यो वज्रमेव सँश्यति भ्रातृव्याय प्रहरिष्यन् पृथिवि देवयजन्योषध्यास्ते मूलं मा हिँसिषमित्योषधीनामहिँसायै व्रजं गच्छ गोस्थानमिति च्छन्दाँसि वै व्रजो गोस्थानश्छन्दाँस्येवास्मै व्रजं गोस्थानं करोति वर्षतु ते द्यौरिति वृष्टिमेव निनयति बधान देव सवितः परमस्यां पृथिव्याँ शतेन पाशैरिति द्वौ वै पुरुषस्य भ्रातृव्यौ यं च द्वेष्टि यश्चैनं द्वेष्टि ता एवास्य बध्नाति परमस्यां पृथिव्याँ शतेन पाशैर्द्रप्सस्ते द्यां मा स्कानिति यो वा अस्या रसस्स

[८] काठ. १,९,२५ । मै. ४,१,१० (६०—६४)। कपि ४७,८। वा. १,२४—२६ । काण्व. १,४०—४३ । तै. ब्रा. ३,२,९ । देवस्य त्वा सवितुः०। अथर्व. १९,५१,२; ऐ. ब्रा. ८,७]

द्रप्सस्तमिमाः प्रजा उपजीवन्ति तमेवास्यां यच्छति तस्यास्कन्दायाररुर्या मा पप्तदिति भ्रातृव्यो वा अररुर्भ्रातृव्यमेव स्वर्गाल्लोकात् प्रतिनुदतेऽररुर्वै नामासुर आसीत् सोऽबिभेद्यज्ञेन नो देवा अभिभविष्यन्तीति स पृथिवीं विषेणालिम्पदमेध्यां कुर्वन्निन्द्रो वै वृत्रमहँस्तस्येमां लोहितमनुव्यधावत् तदमेध्याभवद्यदुद्धन्ति यदेवास्या अमेध्यमयज्ञियं तदपहन्त्यररुर्वै नामासुर आसीत् सोऽबिभेद्देवा मा पृथिव्या नोत्स्यन्त इति स पृथिवीमुपम्रुच्याशयत् तमिन्द्रोऽचायत् तमपाररुमदेवयजनं पृथिव्या देवयजनाज्जहीति पृथिव्या अपाहन् स दिवमपतदररुर्या मा पप्तदिति तं दिवः प्रत्यनुदत ततो देवा अभवन् परासुरा अभवन् यस्यैवं विदुषस्स्तम्बयजुर्ह्रियते यस्यैवं विद्वान् हरत्येभ्य एव लोकेभ्यो भ्रातृव्यं निर्भजति भवत्यात्मना परास्य भ्रातृव्यो भवत्यसुराणां वा इयं पृथिव्यासीत् ते देवा अब्रुवन् दत्त नोऽस्या इति ते वै स्वयं ब्रूध्वमित्यब्रुवन् सोऽग्निरेव प्राचीं दिशमुदजयद्वसवो दक्षिणां रुद्राः प्रतीचीमादित्या उदीचीं ते देवा इमामसुराणामविन्दन्त ततो देवा अभवन् परासुरा अभवन् य एवं विद्वानेताभिर्देवताभिर्वेदिं परिगृह्णातीमामेव भ्रातृव्यस्य विन्दते भवत्यात्मना परास्य भ्रातृव्यो भवति ॥ पृथिव्या वै मेध्यं चामेध्यं च व्युदक्रामत् प्राचीनमुदीचीनं मेध्यमुदक्रामत् प्रतीचीनं दक्षिणामेध्यं प्राचीमुदीचीं वेदिं प्रवणां कुर्यान्मेध्यामेवैनां यज्ञियां करोत्यथो मेध्यस्य चामेध्यस्य च व्यावृत्त्यै प्राञ्चौ बाहू उन्नयत्याहवनीयमेव परिगृह्णाति प्रतीची श्रोणी गार्हपत्यमेव परिगृह्णाति मूलं वै रक्षाँस्यनूत्पिबन्ति न नखेन च्छिन्द्याद्यन्नखेन च्छिन्द्यात् कुनखी स्यात् स्फ्येन च्छिनत्ति वज्रो वै स्फ्यो वज्रेणैव रक्षाँसि हन्ति ॥८॥ २१-२२

घृतं च वै मधु च प्रजापतिरासीद्यतो मध्वासीत् ततः प्रजा असृजत तस्मान्मधोः प्रजननमिवास्ति तस्मान्मधुना न प्रचरन्ति यातयामँ हि तद् घृतेन प्रचरन्त्ययातयामँ ह्येतत् प्राजापत्यं यदाज्यमयातयामा देवानां प्रजापतिर्गार्हपत्येऽधिश्रयति पत्न्यवेक्षते पत्न्या एवैष यज्ञस्यान्वारम्भोऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय यद्वै पत्नी यज्ञे करोति तन्मिथुनं यत् पत्न्यवेक्षते मिथुनमेव करोत्यमेध्यं वा एतदयज्ञियं यत् पत्न्यवेक्षत आहवनीयेऽधिश्रयति मेध्यमेवैनद्यज्ञियं करोति देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत स इन्द्र एतमवकाशमपश्यत् तेनावैक्षत तेनासुरानभ्यभवत् ततो देवा अभवन् परासुरा अभवन् य एवं विद्वानेतेनाज्यमवेक्षतेऽभ्येव भ्रातृव्यं भवति भवत्यात्मना परास्य भ्रातृव्यो भवति प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षाँस्यपहन्त्यनिशितास्स्थ सपत्नक्षयणीरित्यनिशिता एवैनाः करोति स्रुचस्संमार्ष्टि पुनात्येवैनास्स्रुवमग्रे संमार्ष्टि पुमाँसमेवासामग्रे सँश्यत्यथ जुहूमथोपभृतमथ ध्रुवामसौ वै जुहूरन्तरिक्षमुपभृदियं ध्रुवेमानेव

[९] काठ. १,१०,३२-३३। मै. ४,१,१२ (७३,७५-७६)। कपि. ४७,९। वा. १,१९। काण्व. १,४६। तै. ब्रा. ३,३,४।

लोकान् यथापूर्वं संमार्ष्टि यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृच्चतुर्जुह्वां गृह्णन् भूय आज्यं गृह्णात्यष्टौ गृह्णन्नुपभृति कनीयो भ्रातृव्यमेवास्मा उपस्तिं करोति ॥९॥ २३

देवीरापो अग्रेगुव इति यज्ञमेव प्रणयति प्रेमं यज्ञं नयत प्र यज्ञपतिं तिरतेत्याशिषमेवाशास्ते-ऽग्नेर्वै मेधोऽपाक्रामत् कृष्णो भूत्वा स वनस्पतीन् प्राविशत् प्रोक्षितास्स्थ कृष्णोऽस्याखरेष्ठो अग्नये त्वा जुष्टं प्रोक्षामीति तमेव मेधमवरुन्द्धेऽथो यस्या एव देवतायै प्रोक्षति तस्या एनं जुष्टं करोति वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामीति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयत्यूर्जा पृथिवीं गच्छतेति पृथिव्यामेवोर्जं दधाति तस्मात् पृथिवीं प्रजा उपजीवन्त्युपजीवनीयो भवति य एवं वेद ॥ बह्वीरासादयेद्यावतीर्वै प्रोक्षणीरासादयति तावतीरस्यामुष्मिल्लोक आपस्तस्माद्बह्वीरासाद्याः पुरस्तात् प्रस्तरं गृह्णाति मुख्यमेव यजमानं करोति यावद्धस्तेन पर्याप्नुयात् तावन्तं गृह्णीयादक्षोधुको यजमानो भवत्यनग्नंभावुकोऽध्वर्युर्न विधूनुयाद्यद्विधूनुयात् प्रजां चास्य पशूंश्च विधूनुयान्न प्रमृज्याद्यदेवास्य स्वं यद्वित्तं यद्वेद्यं तत् प्रमार्ष्टि न प्रमृज्याद्यदेवैनमागमिष्यद्भवति तत् प्रतिनुदते ॥ दक्षिणतस्संनहनं स्तृणाति तस्माद्दक्षिणतो नीविः प्रस्तरं धारयन् परिधीन् परिदधाति यजमानो वै प्रस्तरस्स्वयमेवैतद्यजमान आत्मानं परिदधाति रक्षसामपहत्यै संहितान् परिधीन् परिदधाति रक्षसामनन्ववायाय न पुरस्तात् परिदधात्यसा एवास्मादादित्य उद्यन् पुरस्ताद्रक्षांस्यपहन्त्यूर्ध्वे समिधा आदधात्युपरिष्टादेव रक्षांसि हन्ति द्वे आदधाति मिथुनमेव करोति ॥ सवितुर्बाहू स्थो देवजनानां विधरणिरिति सवितुर्ह्येतौ बाहू देवजनानां विधरणिर्वसूनां रुद्राणामादित्यानां सदनमसीति या एव देवता अभ्यजयंस्ताभ्य एनत् सदनं करोति जुह्वेहि घृताचीत्येतद्वा आसां प्रियं धाम यद्घृतं तत् प्रियेणैवैना धाम्ना समर्धयति ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहीति यथाहैषं ते भागस्तं गोपायस्वेत्येवमेवैतद्विष्णुमाहैतत् त आज्यं तद्गोपायस्वेति ॥१०॥ २४–२७

भुवनमसि विप्रथस्वेति प्रथयत्येवाग्निर्यष्टेदं नम इति नमस्कृत्य हि श्रेयांसमुपचरन्ति जुह्वेह्यग्निस्त्वाह्वयति देवयज्याया इत्यग्निस्सर्वा देवतास्सर्वा एव देवता अवरुन्द्ध उपभृदेहि देवस्त्वा सविताह्वयति देवयज्याया इति सवितृप्रसूत एव प्रचरति नार्तिमार्छत्यङ्घ्रिणा विष्णू मा वामवक्रमिषमिति यथायजुः पाहि माग्ने दुश्चरितादा मा सुचरिते भजेति पाप्मानमेवापहते विजिहाथां मा मा संताप्तमित्यात्मनोऽहिंसायै लोकं मे लोककृतौ कृणुतमित्याशिषमेवाशास्ते विष्णोस्स्थाम इति

[१०] काठ. १,११,३४,३७। मै. ४,१,१३ (७८—८१)। कपि. ४७,१०। वा. १,१२—१३; २,१,५—६। काण्व. १,१७—१८; २,१,६—८। तै. ब्रा ३,३,६।

[११] काठ. १,१२,३८-४९। मै. ४,१,१४ (८३-९४)। कपि. ४७,११। वा. २,८-९.१५—१८। काण्व. २,११-१२, १४—३०। तै. ब्रा. ३,३,७।

प्रतिष्ठित्या ऊर्ध्वो अध्वरो दिविस्पृगिति यज्ञो वा अध्वरो यज्ञस्योर्ध्वत्वायाहुतो यज्ञो यज्ञपतेरिति समृद्ध्या इन्द्रवान् बृहद्भास्स्वाहेत्यैन्द्रो वै यज्ञो मुखत एवेन्द्राय यज्ञँ संप्रयच्छति सेन्द्रोऽस्य यज्ञो भवति सं ज्योतिषा ज्योतिरिति ज्योतिर्वै यज्ञो यज्ञ एव यज्ञमनुसंतनोति वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयोज्जयामीति य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्तं तेन प्रणुदते वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयामुं प्रतिनुद इति य एवास्य पश्चाद्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयाँसं भ्रातृव्यं नुदते प्रति पापीयाँसं नुदते ॥ पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेतीमानेवैनं लोकान् गमयत्यक्तं रिहाणा व्यन्तु वय इति स्वदयत्येव मरुतां पृषती वशा पृश्निर्भूत्वा दिवं गच्छेति यजमानो वै प्रस्तरो हविर्भूतमेवैनँ स्वर्गं लोकं गमयति ततो नो वृष्टिमेरयेति वृष्टिमेवावरुन्द्धेऽहीनः प्राण इति प्राणानेवैतदध्वर्युर्मुखतः कल्पयति चक्षुष्पा असि चक्षुर्मे पाहीति चक्षुषो गोपीथाय यं परिधिं पर्यधत्था अग्ने देव पणिभिरिष्यमान इत्यग्निस्सर्वा देवतास्सर्वा एव देवता अवरुन्द्धे यजमानं प्रथतेति प्रथयत्येवाथो भूमानं गमयति सँस्रावभागास्स्थेति परिधीनभिजुहोति स्वेनैवैनान् भागधेयेन समर्धयति ॥११॥ २८-२९

अग्नेऽदब्धायोऽशीततन इति यदेवान्तर्यन्ति यत् क्रूरं कुर्वन्ति तच्छमयत्यविषं नः पितुं कृणीत्यन्नमेवास्मै स्वदयति सुषीन्योनीन् सुषदां पृथिवीमिति सुषदेवैनँ सादयति वेदिर्वै देवेभ्योऽपाक्रामत् तां वेदेनान्वविन्दँस्तद्वेदस्य वेदत्वं यद्वेदो भवति वेद्या अनुवित्त्यै स्त्री वै वेदिः पुमान् वेदो यद्वेदेन वेदिँ संमार्ष्टि मिथुनमेव करोति प्रजापतेर्वा एतानि श्मश्रूणि यद्वेदो यां पत्नीं कामयेत पुत्रं विन्देतेति तस्या उपस्थ आस्येन्मिथुनमेव करोति वि वा एतद्यज्ञं छिनत्ति यदर्धमासे सँस्थां गमयति यद्वेदँ संततमाहवनीयात् स्तृणाति तेनैव यज्ञँ संतनोति तँ संततमुत्तरेऽर्धमास आलभते ॥ एष वै वनस्पतीनां परिवेष्टा यदुपवेषो य एवं वेदादब्धा अस्य वेशा भवन्ति पुरस्तात् प्रत्यञ्चमुपहन्ति तस्मात् प्रतीचीनावसिता वेशा भवन्ति स्थविमत उपहन्त्यनतिवादना एनं वेशा भवन्ति सर्पेभ्यो वै यज्ञे क्रियते सर्प उपवेषो वल्मीक उत्करो यदुपवेषमुत्कर उपहन्ति तस्मात् सर्पाणां वल्मीको गृहाः ॥१२॥ ३०-३१

यो ह वै स्रुचां योगमविद्वानध्वर्युरध्वर्य इति हूतः प्रतिशृणोत्या देवताभ्यो वृश्च्यतेऽप्रजा अपशुर्भवत्यथ यस्स्रुचां योगं विद्वानध्वर्युरध्वर्य इति हूतः प्रतिशृणोति न देवताभ्य आवृश्च्यते प्रजावान् पशुमान् भवत्याश्रावयेति जुहूं तेन युनक्त्यस्तु श्रौषडित्युपभृतं तेन यजेति ध्रुवां तेन ये यजामह इत्याज्यधानीं तेन वषट्कारेण स्रुवमसौ वै जुहूरन्तरिक्षमुपभृदियं ध्रुवा दिश आज्यधान्यसा

[१२] काठ. १,१२,५० । वा. १,२०—२१ । काण्व. १,३६,३९ । तै. ब्रा. ३,३,९,९—११; ३,३,११,१—१ ।
[१३] मै. ४,१,११ (६५—७२) । कपि. ४७,९ । तै. ब्रा. ३,१,१ ।

आदित्यस्स्रुवोऽसौ वा अस्यै प्रयच्छतीयममुष्यै तस्माद्यज्जुह्वां तेन ध्रुवामाप्याययति यद् ध्रुवायां
तेन जुहूमसौ ह्यस्यै प्रयच्छतीयममुष्यै संततमस्मा अविच्छिन्नं प्रदीयते य एवं वेद ॥१३॥ ३२

स्योनो मे सीद सुषदः पृथिव्यामुरुः पृथुः प्रथमानस्स्वर्गे ।
स्रुवोऽसि घृतादनिशितस्सपत्नक्षयणो दिवि सीदान्तरिक्षे पृथिव्यामुत्तमोऽहं भूयासमधरे
मत्सपत्नाः ॥ ३३

आरोह पथो जुहु देवयानान् यत्रर्षयो जग्मुः प्रथमाः पुराणाः ।
हिरण्यपक्षाजिरा संभृताङ्गा वहाँसि सा सुकृतां यत्र लोक उत्तमोऽहं भूयासमधरे मत्सपत्नाः॥
३४

अवाहं बाध उपभृता द्विषन्तं जातान् भ्रातृव्यान् ये च जनिष्यमाणाः ।
दुहे यज्ञँ सुदुघामिव धेनुमुत्तमोऽहं भूयासमधरे मत्सपत्नाः ॥ ३५
यो नो वाचा मनसा दुर्हृणायुर्हृदारातीयन्नभिदासदग्ने ।
इदमस्य चित्तमधरं ध्रुवाया उत्तमोऽहं भूयासमधरे मत्सपत्नाः ॥ ३६
यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो ।
तेन हन्मि सपत्नं दुर्हृणायुमैनं दधामि निर्ऋत्या उपस्थे ॥ ३७
यो नः कनिष्ठमिह कामयाता अस्मिन् यज्ञे यजमानाय मह्यम् ।
अप तमिन्द्राग्नी भुवनान्नुदेतां प्रजां विदेय वाजवतीँ सुवीराम् ॥ ३८
अयं वेदः पृथिवीमन्वविन्दद्गुहा हितां गह्वरेषु ।
स मह्यं लोकं यजमानाय विन्दत्वच्छिद्रं यज्ञं भूरिरेताः कृणोतु ॥ ३९
स्तृणीत बर्हिः परिधत्त वेदिं चमि मा हिँसीरमुया शयानाम् ।
दर्भैस्स्तृणीत हरितैस्सुवर्णैर्निष्का एते यजमानस्य सन्तु ॥ ४०
अस्मिन् मे यज्ञ उप भूयो अस्त्वविक्षोधाय परिधीन् दधामि ।
धर्ता विधर्ता धरुणो धरीयान् विश्वा द्वेषाँसि वीतो नुदन्ताम् ॥ ४१
चतुश्शिखण्डा युवतिस्सुपत्नी विनीयमाना महते सौभगाय ।
घृतं दुहानादितिर्जनाय सा मे धुक्ष्व सर्वान् भूतिकामान् ॥ ४२
वेदेन वेदिं विविदुः पृथिव्याँ सा पप्रथे पृथिवी पार्थिवाय ।
गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञस्तायते विश्वदानीम् ॥ ४३

[१४] मै. १,१२,१ (६)। वा. १८,३६। काण्व. २०,७। तै. ब्रा. ३,७,६,९।

विशो यन्त्री नुदमाने अरातिं विश्वं जातमरणं दुर्हणायुम् ।
सीदन्ती देवी सुकृतस्य लोके विश्वा द्वेषांसि वीतो नुदेताम् ॥ ४४
आप्यायतां ध्रुवा घृतेन यज्ञिया यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधो अदितेरुपस्थ उरुधारेव दोहतां यज्ञे अस्मिन् ॥ ४५
पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ।
पयस्वतीः प्रदिशस्सन्तु मह्यम् ॥१४॥ ४६

समृतयज्ञो वा एष यद्दर्शपूर्णमासौ कस्य वा ह देवता यज्ञमागच्छन्ति कस्य वा न बहूनाँ
समानमहर्यजमानानां यो वै देवताः पूर्वेद्युर्गृह्णाति तस्य श्वो भूते यज्ञमागच्छन्ति ममाग्ने वर्चो
विहवेष्वस्त्विति पूर्वमग्निं गृह्णात्यग्निस्सर्वा देवता देवता एव पूर्वेद्युर्गृह्णाति ताश्श्वो भूतेऽभियजते
बर्हिषा वै पूर्णमासे व्रतमुपयन्ति वत्सैरमावस्यायां पुरा वत्सानामपाकर्तोर्दम्पती अश्नीतो हस्ता
अवनिज्य दक्षिणतोऽग्नेस्तिष्ठन् ब्रूयादग्ने व्रतपते व्रतमालभ इत्यग्निर्वै व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतपतय
एव प्रोच्य व्रतमालभते समस्मै व्रतमृध्यते यदि निम्रुक्ते सूर्ये व्रतमालभेताग्निमुपस्थायैतद्यजुर्वदेदग्निँ
हि स तर्हि प्रविष्टोऽग्निर्होतोप तँ हुव इति पात्रमभिमृशति येन हविर्निर्वप्स्यन् भवति दुर्ग्रहा वै
देवता दुर्ग्रहो यज्ञो देवताश्चैवैतद्यज्ञं च गृह्णात्या देवा यन्तु सुमनस्यमाना इत्येता वै देवानां देव-
हूतयो यन्त्यस्य देवा देवहूतिं न यज्ञाच्छिद्यते य एवं वेद व्यन्तु देवा हविषो मे अस्येत्याशिष-
मेवाशास्ते ॥ युनज्मि त्वा ब्रह्मणा दैव्येनेति परिधिषु परिधीयमानेषु वदत्यग्नेर्वा एष यागो ब्रह्मणै-
वाग्निं युनक्ति युक्तोऽस्य हव्यं देवेभ्यो वहत्यङ्गिरसो मास्य यज्ञस्य प्रथमानुवाकैरवन्त्विति सामि-
धेनीनामेवैष योगस्तासां युक्तानां यां कामयत आशिषं तामवरुन्द्धे समिद्धो अग्निराहुत इति
समिद्धिरेवैषा मनोऽसि प्राजापत्यं मनसा मा भूतेनाविशेति मन इव वै प्रजापतिः प्राजापत्यो यज्ञो
यज्ञमेव संतनोति वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेतीन्द्रियं वै वागिन्द्रियमेवावरुन्द्धे॥
न वै तद्विदुर्यदि ब्राह्मणा वसन्ता यजन्ति ब्राह्मणा वा यदि तस्य वर्षेरन् यस्य वा यस्य ब्रुवते
यस्यैवर्षेर्ब्रुवाणो यजते तं तदिष्टं गच्छति नेतरमुपनमति तत् प्रवरं प्रवृणाने ब्रूयाद्देवाः पितरो देवा
योऽस्मि स सन् यज इति य एव कश्च सन् यजते तं तदिष्टमागच्छति नेतरमुपनमति देवेभ्य एव
पितृभ्यो यज्ञं परिददाति तमस्य ते गोपयन्ति समिष्टापूर्तेन गच्छति स्वर्गे लोके तदस्याक्षय्यम-
परिमितं भवति वसन्तमृतूनां प्रीणामीति पञ्च वा ऋतव ऋतूनेव प्रीणाति तेऽस्मै प्रीताः कल्पन्ते-
ऽस्मा ऋतवो य एवं वेद ॥१५॥ ४७-४९ [२२०१]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां पुरोडाश-ब्राह्मणं नामैकत्रिंशं स्थानकं संपूर्णम् ॥३१॥

---

[१५] मै. १,४,५ (३४)। तै. सं. १,६,७। [ममाग्ने वर्चो विहवेषु०। ऋ. १०,१२८,१; अथर्व. ५,३,१; तै. सं. ४, [illegible]

अथ द्वात्रिंशं स्थानकम्।

## यजमान-ब्राह्मणम्।

अग्नीषोमाभ्यां यज्ञश्चक्षुष्मानित्यग्नीषोमौ वै यज्ञस्य चक्षुषी यज्ञस्यैव चक्षुषा चक्षुरात्मन् धत्ते चक्षुष्मान् भवति य एवं वेदाग्निरन्नस्यान्नपतिरित्यग्निर्वै देवानामन्नादस्स एनं मनुष्येष्वन्नाद्यं प्रापयत्यन्नादो भवति य एवं वेद दब्धिरस्यदब्धो भूयासममुं दभेयमित्येतया वै दब्ध्या देवा असुरानदभ्नुवँस्तयैव भ्रातृव्यं दभ्नोति नैनं दिप्सन् दभ्नोति य एवं वेदाग्नीषोमौ वृत्रहणा इत्यग्नीषोमाभ्यां वै वीर्येणेन्द्रो वृत्रमहँस्ताभ्यामेव भ्रातृव्यँ स्तृणुत इन्द्राग्न्योरहं देवयज्ययौजस्वान् वीर्यावान् भूयासमित्योजो वै वीर्यमिन्द्राग्नी ओज एव वीर्यमात्मन् धत्त इन्द्रस्याहं देवयज्ययेन्द्रियावान् भूयासमितीन्द्रियं वा इन्द्र इन्द्रियमेवात्मन् धत्ते॥ महेन्द्रस्याहं देवयज्यया जेमानं भूमानं गमेयमिति जेमानमेव भूमानमुपैतीन्द्रस्याहं विमृधस्य देवयज्ययासपत्नो भूयासमित्यसपत्न एव भवतीन्द्रस्याहमिन्द्रियावतो देवयज्यया पशुमान् भूयासमितीन्द्रियं वै पशवः पशूनेवात्मन् धत्ते सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयमिति वाग्वै सरस्वती वाचैवान्नाद्यमवरुन्द्धे पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासमिति पुष्टिर्वै पूषा पुष्टिमेवावरुन्द्धेऽदित्या अहं देवयज्यया प्रतिष्ठां गमेयमितीयमदितिरस्यामेव प्रतितिष्ठति॥ विश्वेषामहं देवानां देवयज्यया प्राणानाँ सायुज्यं गमेयमिति प्राणानामेव सायुज्यं गच्छति द्यावापृथिव्योरहं देवयज्यया प्रजनिषीय प्रजया पशुभिरिति प्रजापतिमेवोपैत्यग्नेरहँ स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां गमेयमित्यायुरेवात्मन् धत्ते प्रति यज्ञेन तिष्ठति यो देवताश्च यज्ञं च यज्ञे तर्पयितव्यान् वेद तृप्यति प्रजया पशुभिरुपैनँ सोमपीथो नमत्येतर्हि वै सर्वा देवता यर्हि स्विष्टकृदेतर्हि ह्येनास्सर्वास्संयजत्येष खलु वाव प्रत्यक्षं यज्ञो यत् स्विष्टकृदतीतृपद्यज्ञे यज्ञमिति देवताश्चैवैतद्यज्ञं च यज्ञे तर्पयति तृप्यति प्रजया पशुभिरुपैनँ सोमपीथो नमत्ययाडग्निरग्नेः प्रिया धामानीति ब्रह्मवर्चसं तेनावरुन्द्धे सोमस्यायाट् प्रिया धामानीति क्षत्रं तेनाग्नीषोमयोरयाट् प्रिया धामानीत्युपाँश्वनिरुक्तं तेनावरुन्द्धेऽग्नीषोमयोरयाट् प्रिया धामानीत्युच्चैर्निरुक्तं तेनानिरुक्तं च वा इदं निरुक्तं च तस्यैवोभयस्यावरुद्ध्या अथो शुष्कहरिते एवावरुन्द्धे यद्वै शुष्कं तदाग्नेयं यद्धरितं तत् सौम्यँ शुष्कं च वा इदँ हरितं च तस्यैवोभयस्यावरुद्ध्यै देवानामाज्यपानामयाट् प्रिया धामानीति प्रयाजानुयाजा वै देवा आज्यपास्तानेवोभयान् प्रीणाति तेऽस्योभये प्रीता यज्ञे भवन्ति॥१॥ १-३

बृहतो मा वाजेन वाजय वामदेव्यस्य मा वाजेन वाजयेति वामदेवो वा एतद्व्रोनामपश्यत्

---

[१] काठ. ५,१,१-२। वा. ११,४६—४७। काण्व. २३,४५—४६। तै. सं. १,६,११,५।

[२] काठ. ५,२,४—९। मै. १,४,१ (५,१२)। वा. २,१०; ३८,१४,२७—२८। काण्व. २,१८; ३८,१४,२६।

पशव इडा पशुष्वेव पशून् दधाति जुष्टे जुष्टिं ते गमेयमुपहूत उपहवं तेऽशीयेति आशीर्वै यज्ञो यज्ञस्यैवैतामाशिषमाशास्ते सुहवा मेहीति सुहवामेवैनां कुरुते सह रायस्पोषेणेति सहैवैवं रय्याभ्यैत्यस्मास्विन्द्र इन्द्रियं दधात्वितीडाया वा एष दोह इडामेवैतद्दुहेऽस्मान् रायो मघवानस्सचन्तामिति पशवो वै रायो मघवानः पशूनेवात्मन् धत्तेऽस्माकँ सन्त्वाशिष इत्याशिषमेवाशास्ते संजयन् क्षेत्राणि सहसाहमिन्द्र कुर्वाणो अन्याँ अधरान् सपत्नानित्यधरमेव भ्रातृव्यं कुरुते ॥ ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्वेत्येतदेवासा इडा सर्वं दुहे सर्वँ हास्यैतद्भवति य एवं वेद मयि त्यदिन्द्रियं महदितीन्द्रियं वा आप इन्द्रियमेवात्मन् धत्ते ब्रध्न पिन्वस्व कल्पन्तां दिश इत्यसौ वा आदित्यो ब्रध्नस्स यदोदेत्यथ दिशः कल्पन्ते य एवं वेद यामब्राह्मणः प्राश्नाति सा स्कन्नाहुतिस्तस्या वै वसिष्ठ एव प्रायश्चित्तिं विदांचकार ब्रध्न पिन्वस्वेति पुरोडाशमभिमृशति दक्षिणीयेष्वेव यज्ञं प्रतिष्ठापयत्यस्कन्नमविक्षुब्धमपि ह वा अस्य यामब्राह्मणः प्राश्नाति सा हुतैव भवत्यथ ह स्माह कपिवनो भौवायनः किमु स यजेत यो गामिव यज्ञं न दुहे सुदोहतरो वा एष गोरिति सं यज्ञपतिराशिषेति यजमानो यजमानभागं प्राश्नाति यजमानो वै यज्ञपतिर्यज्ञो यजमानभागो यद्यजमानो यजमानभागं प्राश्नाति यज्ञपता एव यज्ञं प्रतिष्ठापयति ॥२॥ ४-५

देवस्याहं बर्हिषो देवयज्यया प्रजावान् भूयासमिति बर्हिषा वै प्रजापतिः प्रजा असृजत प्रजामेव सृजते देवस्याहं नराशँसस्य देवयज्यया पशुमान् भूयासमिति नराशँसेन वै प्रजापतिः पशूनसृजत पशूनेव सृजते देवस्याहमग्नेस्स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां गमेयमित्यायुरेवात्मन् धत्ते प्रति यज्ञेन तिष्ठत्या माशिषो दोहकामा इत्याशिषो वै दोहकामा यजमानमुपतिष्ठन्ते ता यथा धेनवोऽदुग्धा अपक्रामन्त्येवं त्वस्माद्यजमानादपक्रामन्त्यथ य एवं वेदाशिष एवैष दुहे सा मे सत्याशीर्देवान् गम्यादिति सत्यामेवाशिषं देवान् गमयित्वा वरं वृणीते ॥ जुष्टाज्जुष्टतरेति जुष्टादेवैनां जुष्टतरां करोति पन्यात् पन्यतरेति पन्यादेवैनां पन्यतरां करोत्यरेडता मनसा देवान् गच्छेत्येवैतदाह यो देवयानः पन्थास्तेन देवान् गच्छेति य एव देवयानः पन्थास्तमेवैनमापिपादयति रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्विति यजमानो वै प्रस्तरो हविर्भूतमेवैनँ स्वर्गं लोकं गमयति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेति स्वमेवैनं योनिं गमयति यो यज्ञस्यायुर्वेद सर्वमायुरेति यज्ञस्यायुरसि यज्ञो म आयुर्दधात्वित्येतद्वै यज्ञस्यायुर्य एवं वेद सर्वमायुरेति यद्वै युक्तो विमुक्तश्शमरथं वा करोति प्र वा क्षिणाति वि ते मुञ्चामि रशनां वि रश्मीनिति विमोक एवास्यैष स्वर्गमेव

[ ३ ] काठ. ५,३,१०—१५ । मै. १,४,१; ५ (६-९,११,३४) । वा. ८,२२। काण्व. ९,२१ । तै. सं. १,७,४; १,६,४।
[ वि ते मुञ्चामि० । अथर्व. ७,७८,१-२]

लोकं देवता गमयित्वा प्रतिष्ठाप्य विमुञ्चति विष्णोश्शम्योर्यज्ञस्यान्त इति विष्णुर्वै यज्ञोऽन्तत एव यज्ञं प्रतिष्ठापयति ॥३॥ ६-७

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिरिति यज्ञस्य वा एष दोहो यज्ञमेवैतद्दुहे तस्य यज्ञस्येष्टस्य स्विष्टस्य द्रविणमागच्छत्वित्याशिषमेवाशास्तेऽङ्गिरसो मेऽस्य यज्ञस्य प्रातरनुवाकैरहौपुरित्याशिषामेवैष दोहो वसुर्यज्ञो वसुमान् यज्ञ इति वसुमन्तमेव यज्ञं कुरुते तस्य यज्ञस्य वसोर्वसुमतो वसुमागच्छत्वित्याशिषमेवाशास्ते सोमो रेतोधा इति सोमो वै देवानां रेतोधास्सोम एवास्मै रेतोधा रेतो दधाति त्वष्टा रूपाणां विकर्तेति त्वष्टा वै रूपाणां विकर्ता सोऽस्मै रूपाणि विकरोति देवानां पत्नीरग्निर्गृहपतिर्मिथुनं यजमानस्येत्येतद्वै दर्शपूर्णमासयोर्मिथुनं दर्शपूर्णमासयोरेव मिथुनेन मिथुनमात्मन् धत्ते तयोरहं देवयज्यया मिथुनेन प्रजनिषीयेति प्र प्रजया प्र पशुभिर्जायते या वा एतस्य पत्नी सैतँ संप्रति पश्चादासीताग्निरस्याः प्रजा निर्दहेद्यदाह पत्न्येष ते पत्नि लोक इति लोकमेवास्यै करोत्यनिर्दाहुकोऽस्या अग्निः प्रजा भवति सं पत्नी पत्या सुकृतेषु गच्छतामिति पत्न्या एवैष यज्ञस्यान्वारम्भस्सह स्वर्गे लोके भवतस्स्वाहा स्वाहेष्टेभ्यो वषडानेष्टेभ्य इति स्विष्टिश्च वै दुरिष्टिश्च यज्ञे संयतेते यस्य स्विष्टिर्यज्ञं युवते स वसीयान् भवति यस्य दुरिष्टिर्यज्ञं युवते स पापीयान् भवति स्विष्टयैवास्य यज्ञँ समर्धयति वसीयान् भवत्ययाश्चाग्नेऽस्यनभिशस्तिश्चेत्यया वै नामैवाग्नेस्तनूरया मर्याधैर्येणेति खलु वा आहुर्यां च विद्म यज्ञस्य प्रायश्चित्तिं यां च न विद्म यश्च यज्ञस्य क्रियते यश्च न क्रियते तस्यैषोभयस्य प्रायश्चित्तिस्सरस्वत्यै वेशभगिन्यै स्वाहेति वेशयमनं वा एतदपि ह वा एनमाजीवन्त उपासते वाचमस्य ब्राह्मणस्य वा राजन्यस्य वोपास्मह इति य एवं वेद यज्ञस्य त्वा प्रमयाभिमयोन्मया प्रतिमया परिगृह्णामीति गायत्री वै यज्ञस्य प्रमा त्रिष्टुबभिमा जगत्युन्मानुष्टुप् प्रतिमैतावन्ति वै छन्दाँसि यज्ञं वहन्ति तैरेवैनं परिगृह्णाति तेष्वेनं प्रतिष्ठापयति॥४॥ ८

पूर्णमसि पूर्णं मे भूया इति येभ्य एव कामेभ्य ऊनस्तमनापूरयतेऽग्निर्वै भूयाँसं यजमानं प्रदहति संततँ स्रावयत्यपोऽतिमुच्यमाना अनु यजमानोऽतिमुच्यतेऽथो अद्भिरेवैतदग्नेरात्मानमन्तर्धत्तेऽप्रदाहाय सर्वं वा एतस्य यज्ञो मृष्टश्शुचाभिषीदति यद्गृहा यत् पशवः प्राच्या दिशा देवा ऋत्विजो मार्जयन्तामित्येता वै यज्ञस्य मृष्टय एताश्शान्तयो मृष्टोऽस्य यज्ञो भवति शान्तोऽघातुकः पशुपतिः पशून् पृथिवीं विष्णुर्व्यक्रँस्त गायत्रेण च्छन्दसेति विष्णुमुखा वै देवाश्छन्दोभिरेभ्यो लोकेभ्यो-

[ ४ ] काठ. ५,४,१६-२३ । मै. १,४,१,३,८ (१०,२७--३०,३७) । वा. २,२० । काण्व. २,३६--३७ । तै. सं. ३,५,४ । तै. ब्रा. ३,३,९,११ ।

[ ५ ] काठ. ५,५,९ । मै. १,४,२,७; १,८,४-५ (११; ३६; ९--२७) । वा. १,३१; २,२५--२७; १५,८; १९,९; २०, १३; ३८,२५ । काण्व. १,४९; २,४६--५०; १६,१३; ११,८; २१,८; ३८,२४ ।

ऽसुरान् प्राणुदन्त विष्णुमुख एवैतद्यजमानश्छन्दोभिरेभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदतेऽगन्म स्वरिति स्वरेव गच्छति सं ज्योतिषाभूमेति ज्योतिर्वै यज्ञो यज्ञ एव यज्ञमनुसंतनोति सूर्यस्यावृतमन्वावर्त इत्यमुष्यैवादित्यस्यावृतमन्वावर्ततेऽथो एवँ हि यज्ञ आवर्ततेदमहं योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणं निवेष्टयामीति यमेव द्वेष्टि तस्य प्राणं निवेष्टयति तेजोऽसि तेजो मयि धेहीति तेज एवात्मन् धत्ते समहं प्रजया सं मया प्रजेति प्रजामेवात्मन् धत्ते समहं रायस्पोषेण सं मया रायस्पोष इति पशवो वै रायस्पोषः पशूनेवात्मन् धत्तेऽग्नेस्तेजसा तेजस्वी भूयासमिति तेज एवात्मन् धत्ते वायोरायुषायुष्मान् भूयासमित्यायुरेवात्मन् धत्ते सूर्यस्य वर्चसा वर्चस्वी भूयासमिति वर्च एवात्मन् धत्ते इन्द्रस्येन्द्रियेणेन्द्रियावान् भूयासमितीन्द्रियं वा इन्द्र इन्द्रियमेवात्मन् धत्ते ॥ धाता मे धाम्ना सुधां दधात्विति धातैवास्मै धाम्ना सुधां दधाति प्रजापतेः प्रजया प्रजावान् भूयासमिति प्रजामेवात्मन् धत्ते प्र वा एषोऽस्माल्लोकाच्च्यवते यः प्रक्रमान् प्रक्रामति च्छन्दोभिर्हि पराङ् रोहति स ईश्वरः प्रमेतोरग्ने गृहपत इति गार्हपत्यमुपतिष्ठतेऽस्मिन्नेव लोके प्रतितिष्ठति ॥५॥ ९—१०

देवाञ्जनमगन् यज्ञ इति जनं वा एतद्यज्ञस्यैति यत् स्कन्दति जनादेव यज्ञस्याशिषमवरुन्द्धे पञ्चानां त्वा वातानां धर्त्राय गृह्णामीत्ययं वाव यः पवते स यज्ञः पाङ्क्तो यज्ञो यज्ञमेवास्मै गृह्णाति पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामीति पशवो वै सलिलं पशूनेवास्मै गृह्णाति पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामीति यज्ञो वै पृष्ठानि यज्ञमेवास्मै गृह्णात्येतेन वै दर्शपूर्णमासौ पृष्ठवन्तौ पञ्चानां त्वा दिशां धर्त्राय गृह्णामीति पञ्च वै दिशो दिश एवास्मै गृह्णाति सर्वा दिशोऽभिजयति सर्वा अस्य दिशोऽभिजिता भवन्ति पञ्चानां त्वा पञ्चजनानां धर्त्राय गृह्णामीति ॥ छन्दाँसि वै पञ्च पञ्चजना यज्ञश्छन्दाँस्युपैनं यज्ञो नमति भूरस्माकँ हव्यं देवानामाशिषो यजमानस्येति भूतिमेवात्मने गृह्णाति हव्यं देवेभ्य आशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्राय गृह्णामीतीमे लोकाश्चरुः पञ्चबिल इमानेवास्मै लोकान् गृह्णाति धामासि प्रियं देवानामनाधृष्टं देवयजनमिति प्रज्ञात आज्यग्रहः पथागान्न यज्ञाद्धूर्छति नास्माद्यज्ञो हूर्छति य एवं वेद यज्ञो वै देवेभ्योऽपाक्रामत् तं वेदेनान्वविन्दँस्तद्वेदस्य वेदत्वं यद्वेदो भवति यज्ञस्यानुवित्त्यै स्त्री वै वेदिः पुमान् वेदो यद्वेदेन वेदिँ संमार्ष्टि मिथुनमेव करोति प्रजापतेर्वा एतानि श्मश्रूणि यद्वेदो यां पत्नीं कामयेत पुत्रं विन्देतेति तस्या उपस्थ आस्येन्मिथुनमेव करोति ॥ शिरो वा एतद्यज्ञस्य यत् पुरोडाशः केशा वेदो यद्वेदेन

---

[योऽस्मान् द्वेष्टि० ...द्विष्मः० । अथर्व. ३,२७,१—६; ७,८१,५ । तेजोऽसि तेजो मयि धेहि। अथर्व. ७,८९,४; १९,३१,१२]

[६] काठ. ५,६,२८—३६ । मै. १,४,१,३—४,८—९ (२,१३—२१,२५; ३७—४०) । कपि. ४,५ । वा. १,५,३१; २,२८; ८,६०; १५,५० । काण्व. १,८,४९; २,५३; ९,४६; १६,७२ ।

पुरोडाशँ समुन्मार्ष्टि यज्ञस्य सर्वत्वायौषधयो वै वेदः पशव ओषधय एष पशूनां गोष्ठो यदन्तराग्नी यद्वेदमन्तराग्नी स्तृणाति स्व एव गोष्ठे भ्रातृव्यस्य पशून् वृङ्क्ते दुरनुवेदो वा अमुत्र यज्ञो यद्वेदो भवति यज्ञस्यानुवित्त्यै वि वा एतद्यज्ञश्छिद्यते यदर्धमासेऽर्धमासे सँस्थां गच्छति यत् संततमाहवनीयात् स्तृणाति यज्ञमेव संतनोति तँ संततमुत्तरेऽर्धमास आलभते ॥ यज्ञहनो वै देवा यज्ञमुषस्सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासत इति य एव पृथिव्यां यज्ञहनश्च यज्ञमुषश्च देवास्तानतीत्यान्तरिक्षं गच्छति गच्छेम सुकृतो वयमित्याशिषमेवाशास्ते ये देवा यज्ञहनो यज्ञमुषोऽन्तरिक्षेऽध्यासत इति य एवान्तरिक्षे यज्ञहनश्च यज्ञमुषश्च देवास्तानतीत्य दिवं गच्छति गच्छेम सुकृतो वयमित्याशिषमेवाशास्ते ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासत इति य एव दिवि यज्ञहनश्च यज्ञमुषश्च देवास्तानतीत्य स्वर्गं लोकं गच्छति गच्छेम सुकृतो वयमित्याशिषमेवाशास्ते ॥ गोमाँ अग्नेऽविमाँ अश्वी यज्ञ इति गोमन्तमेवाविमन्तमश्विनं यज्ञं कुरुते नृवत् सखा सदमिदप्रमृष्य इति नृवत् सखा ह्येष सदमिदप्रमृष्य इडावाँ एषो असुर प्रजावानित्याशिषमेवाशास्ते दीर्घो रयिः पृथुबुध्नस्सभावानिति प्रथयत्येवाग्ने व्रतमचारिषमित्यग्निर्वै देवानां व्रतपतिर्व्रतपतय एव व्रतँ संप्रयच्छति ॥६॥ ११-१५

देवतानां वा एतदायतनं यदाहवनीयो यदन्तराग्नी तत् पशूनां मनुष्याणां गार्हपत्योऽन्वाहार्यपचनः पितॄणां पूर्वं चाग्निमपरं च परिस्तरितवा आह मनुष्याणामिन्न्वै नवावसानं प्रियं नवावसानमेवाक्रन् मेध्यत्वाय सर्वा ह वा अस्य यक्ष्यमाणस्य देवता यज्ञमागच्छन्ति य एवं वेदाग्नेस्तनूरसि वाचो विसर्जनमिति पुरोडाशीयानावपति देवतानां वा एष ग्रहो देवता एवैतदग्रहीदथ ह स्माहारुण औपवेशिरहुतासु वा अहमाहुतिषु देवता हव्यं गमयामि सँस्थितेन यज्ञेन सँस्थां गच्छानीति य एवं वेदाहुतास्वेवास्याहुतिषु देवता हव्यं गच्छति सँस्थितेन यज्ञेन सँस्थां गच्छत्यपः प्रणेष्यन् वाचं यच्छेदौलूखलेन वै दृषदा देवा यज्ञमुखाद्रक्षाँस्यपाघ्नन्मनसा वै प्रजापतिर्यज्ञमतनुतौलूखलस्योद्वदितोरध्वर्युश्च यजमानश्च वाचं यच्छेतां प्रजापतिरेव भूत्वा मनसा यज्ञं तत्वा तेन सर्वाणि सह यज्ञायुधानि प्रहृत्यानि मानुषं तत् क्रियते नैकमेकं पितृदेवत्यं तद् द्वे द्वे प्रहृत्ये याज्यानुवाक्ययो रूपमुपवसत्युभयाँस्तत् पशूनवरुन्द्धे ग्राम्याँश्चारण्याँश्च यद्ग्राम्यस्य नाश्नाति तेन ग्राम्यान् पशूनवरुन्द्धे यदारण्यस्याश्नाति तेनारण्यानथो इन्द्रियं वा एतद्यदारण्यमिन्द्रियमेवावरुन्द्धे ॥ न माषाणामश्नीयादमेध्या वै माषा न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणस्यादप्रतिजग्धेन वै हव्येन देवा वसीयोभूयमगच्छन् प्रतिजग्धेनासुराः पराभवन्नप्रतिजग्धेन वै तद्धव्येन यजमानो

[ गोमाँ अग्नेऽविमाँ० । ऋ. ४ २,५; तै. सं. १,६,६,४. ३,१,११,१ ]

[७] मै. १,४,१० (४१-४४) । वा. १,१५ । काण्व. १,२३ । तै. सं. १,६,८ ।

वसीयोभूयं गच्छति यो वै श्रद्धामनारभ्य यजते पापीयान् भवत्यापश्श्रद्धा न वाचा गृह्णाति न यजुषाति वा एता वाचं नेदन्त्यति वज्रं मनस्तु नातिनेदन्ति तद्यद्यपो ग्रहीष्यन् स्यादिमां तर्हि मनसा ध्यायेदियं वा एतासां पात्रमनयैवैना गृह्णाति श्रद्धामेवारभ्य यजते वसीयान् भवति ॥७॥

१६--१७

[२११९]

॥ इति श्रीयजुषि काठके चरकशाखायामौरिमिकायां यजमान-ब्राह्मणं नाम द्वात्रिंशं स्थानकं संपूर्णम् ॥३२॥

अथ त्रयस्त्रिंशं स्थानकम्।

## सत्त्राणि।

गावो वै सत्त्रमासत शृङ्गाणि सिषासन्तीस्तासां दशमे मासि शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामाव तं काममरुत् स्महि यस्मै कामाय न्यसदामेति तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वासामहा एव द्वादशौ मासौ संवत्सरँ संपाद्योत्तिष्ठामेत्युत्तिष्ठन्तीरु त्वा अब्रुवन्नेवास्मासु श्रद्धाभूदिति तासां या द्वादशौ मासा आसत तासाँ शृङ्गाणि प्रावर्तन्त श्रद्धया वाश्रद्धया वा ता इमा यास्तूपरास्तस्माद् द्वादश मासास्तूपराः प्रेत्वरीश्चरन्ति दश शृङ्गिणीरुभयीर्वाव ता आर्ध्नुवन् याऽशृङ्गाण्यसन्वन्याश्चोर्जमवारुन्धतर्ध्नुवन्ति दशसु मास्सूत्तिष्ठन्त ऋध्नुवन्ति द्वादशसु य एवं विदुस्तदेतद्गवामयनं तस्मादेतेन यन्ति पदेन वा एतद्यन्ति विन्दति ह खलु वै पदेन यँस्तस्मादेतद्गोसनि ॥१॥ १

अतिरात्रः परमो यज्ञक्रतूनामित्याहुर्ब्रह्मवादिनः कस्मात् तं प्रथममुपयन्तीति यद्वा अतिरात्रमुपयन्त्याग्निष्टोमं प्रथममुपयन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रं यथापूर्वमेव यज्ञक्रतूनुपेत्यैतानालभ्य परिगृह्य सोमं पिबन्त आसते ज्योतिष्टोमं प्रथममुपयन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव तत् स्तोमान् प्रयुञ्जते विराजं ज्योतिष्टोमोऽभिसंपन्न एकया गौरतिरिक्त एकयायुरूनस्ते सँस्तुता विराजमभिसंपद्यन्ते द्वे चर्चा अतिरिच्येते स्वर्गो वै लोको विराड् द्विपादो यजमानास्स्वर्ग एव तल्लोके विराजि द्विपादो यजमानाः प्रतितिष्ठन्ति ॥ रथन्तरं पृष्ठं भवतीयं वै पृथिवी रथन्तरमिमामेव तदालभ्यासते रथन्तरं दिवा भवति रथन्तरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामं बृहद्भवति तन्मध्यतो दधाति रथन्तरस्य विधृत्यै तेनाजाम्यतिरात्राच्चतुर्विंशमहरुपयन्ति चतुर्विंशतिस्संवत्सरस्यार्धमासा अर्धमासशस्संवत्सर आप्यतेऽर्धमासश एव तत् संवत्सरमाप्नुवन्ति तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रीयाष्षष्टिश्च वै त्रीणि च शतानि संवत्सरस्याहान्यहश्शस्संवत्सर

[१] तै. सं. ७,५,२—१। [२] तै. सं. ७,४,१०; ७,५,१।

आप्यतेऽहश्श एव तत् संवत्सरमाप्नुवन्त्युक्थ्यो भवति पशवो वा उक्थानि पशूनेवावरुन्धते बृहत् पृष्ठं भवति स्वर्गो वै लोको बृहत् स्वर्गमेव तेन लोकमाप्नुवन्ति त्रयस्त्रिंशो नाम साम माध्यन्दिने पवमाने भवति त्रयस्त्रिंशद्देवास्तद्देवा नाप्नुवन्त्येतस्मै वै संवत्सरमुपयन्त्यापन् देवानापन् स्वर्गं लोकमव-पशूनरुत्सतापन् संवत्सरमर्धमासश आपन्नहश्शस्तच्चतुर्विंशेऽहन् सर्वा देवताः परिगृह्य सोमं पिबन्त आसते ये वा इतः पराञ्चं संवत्सरमुपयन्ति नैनं ते स्वस्ति समश्नुवतेऽथो येऽमुतोऽर्वाञ्च-मुपयन्ति ते हैनँ स्वस्ति संतरन्त्येतद्वा अमुतोऽर्वाञ्चमुपयन्ति यदेवम् ॥२॥ २-३

ज्योतिष्टोमं प्रथममुपयन्त्यस्मिँस्तेन लोके प्रतितिष्ठन्ति गोष्टोमं द्वितीयमुपयन्त्यन्तरिक्षे तेन प्रतितिष्ठन्त्यायुष्टोममुत्तममुपयन्त्यस्मिँस्तेन लोके प्रतितिष्ठन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसा एवायुर्यदेतान् स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्त्रिणः प्रतितिष्ठन्तो यन्ति विराजं ज्योतिष्टोमो-ऽभिसंपन्न एकया गौरतिरिक्त एकयायुरूनस्ते सँस्तुता विराजमभिसंपद्यन्त ऊर्ग्वै विराड् यदेतैस्स्तोमै-र्यन्त्यूर्जमेवैतत् सत्त्रिणोऽवरुन्धाना यन्ति ते न क्षुधार्तिमार्छन्त्यक्षोधुका भवन्ति क्षुत्संबाधमाना इव हि सत्त्रिणोऽग्निष्टोमा अभितः प्रधी ता उक्थ्या मध्ये नभ्यं तदेतद्वै परियद्देवचक्रं यदेतेन षडहेन यन्ति देवचक्रमेव तत् समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवत उभयतोज्योतिषा यन्ति स्वर्गो वै लोको ज्योतिरुभयत एव तत् स्वर्गे लोके सत्त्रिणः प्रतितिष्ठन्तो यन्ति षडहेन यन्ति षड्वा ऋतव ऋतुष्वेव तत् प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतस्तानि द्वादशाहानि संपद्यन्ते दश वै पुरुषे प्राणास्स्तनौ द्वादशौ तत् पुरुषमनुपर्यावर्तन्ते त्रयष्षडहा भवन्ति तान्यष्टादशाहानि संपद्यन्ते नवान्या-नि नव प्राणास्तत् प्राणाननुपर्यावर्तन्ते चत्वारष्षडहा भवन्ति तानि चतुर्विँशतिरहानि संपद्यन्ते चतुर्विँशतिस्संवत्सरस्यार्धमासा अर्धमासशस्संवत्सर आप्यते तत् संवत्सरमनुपर्यावर्तन्ते पञ्च षडहा भवन्ति तानि त्रिँशदहानि संपद्यन्ते दश हस्त्या अङ्गुलयो दश पद्या दश प्राणास्तत् त्रिँशत् त्रिँश-दक्षरा विराड्वैराजः पुरुषस्तत् पुरुषमनुपर्यावर्तन्तेऽप्रतिष्ठितस्संवत्सर इति खलु वा आहुर्वर्षीयान् प्रतिष्ठाया इत्येतावद्वै संवत्सरस्य ब्राह्मणं यावन्मासो मासि मास्येव प्रतितिष्ठन्तो यन्ति य एवं विदुः ॥३॥ ४

नवैतान्यहानि नव वै स्वर्गा लोकाश्चतस्रो दिशश्चत्वारोऽन्तर्देशा ऊर्ध्वा नवमी यदेतान्यहान्युप-यन्ति नवस्वेव तत् स्वर्गेषु लोकेषु सत्त्रिणः प्रतितिष्ठन्तो यन्त्यग्निष्टोमाः परसामानः कर्तव्या इत्याहुरग्निष्टोमसंमितो वै स्वर्गो लोक इति द्वादशाग्निष्टोमस्तोत्राणि द्वादश मासास्संवत्सरस्संवत्सर-स्स्वर्गो लोकस्तस्मात् तदाहुस्तन्न सूक्ष्यमुक्थ्या एव परसामानः कर्तव्या इति पशवो वा उक्थानि

[३] तै. सं. ७,४,११। [४] तै. ब्रा. १,२,२।

पशूनामवरुद्ध्यै विश्वजिदभिजिता अग्निष्टोमा उक्थ्यास्सप्तदशाः परसामान एकविंशं दिवाकीर्त्यं ते सँस्तुता विराजमभिसंपद्यन्ते द्वे चर्चा अतिरिच्येते स्वर्गो वै लोको विराड् द्विपादो यजमानास्स्वर्ग एव तल्लोके विराजि द्विपादो यजमानाः प्रतितिष्ठन्ति ॥ यत् परो रथन्तरं तत् प्रथमेऽहन् कर्तव्यं बृहद् द्वितीये वैरूपं तृतीये वैराजं चतुर्थे शाक्करं पञ्चमे रैवतं षष्ठे तदु पृष्ठेभ्यो न यन्ति संततय एते ग्रहा गृह्यन्तेऽतिग्राह्याः परसामसु यदेते गृह्यन्त इमानेवैतल्लोकान् संतत्य स्वर्गं लोकं यजमाना आरोहन्ति मिथुना एते ग्रहा गृह्यन्तेऽतिग्राह्याः परसामसु यदेते गृह्यन्ते मिथुनमेवैतैरवरुन्धते सौर्य एष ग्रहो गृह्यतेऽतिग्राह्य एकविंशेऽहँस्तस्य प्रत्यक्षं नाम न ग्रहीतवै तेजस्वितर इव वाश्रतरः प्रदाहाद्वा भय्यं किलासंभावाद्वाया विष्ठा जनयन् कर्वराणीत्येष प्राजापत्योऽनिरुक्तो ग्रहो गृह्यतेऽतिग्राह्य एकविंशेऽहन् समन्त आयुष्यः पशव्यो यो ह खलु वाव प्रजापतिस्स एवेन्द्रस्तदु देवेभ्यो न यन्ति ॥४॥ ५–६

प्रथमे मासि पृष्ठान्युपयन्ति मध्यम उपयन्त्युत्तम उपयान्ति यत् प्रथमे मासि पृष्ठान्युपयन्त्यस्मिँस्तेन लोके प्रतितिष्ठन्ति यन्मध्यम उपयन्त्यन्तरिक्षे तेन प्रतितिष्ठन्ति यदुत्तम उपयन्त्यमुष्मिँस्तेन लोके प्रतितिष्ठन्ति मासि मासि पृष्ठान्युपेत्यानीत्याहुः पृष्ठानि वै यज्ञस्य दोह इति तदाहुरेकं वा एतद्देवानामहर्यत् संवत्सरो यां वै त्रिरेकस्याह्न उपसीदन्ति दहँ सापराभ्यां दोहाभ्यां दुहे तत् कुतस्सा धोक्ष्यति यां द्वादश कृत्व उपसीदेयुरिति सकृत् पृष्ठान्युपेयुरुत्तमे मासि समुद्रं खलु वा एतेऽनवारमपारं प्रस्नान्ति ये संवत्सरमुपयन्ति बृहद्रथन्तराभ्यामेतव्यं बृहद्रथन्तरे वै देवानां प्लवस्तद्देवानां प्लवेन समुद्रमर्णवं तरन्ति यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुरेवं तद्यत् पुरा संवत्सराद्बृहद्रथन्तरे उन्सृजेयुरनुत्सर्गं बृहद्रथन्तराभ्यां गत्वा प्रतिष्ठां गत्वा सकृत् पृष्ठान्युपेयुरुत्तमे मासि सर्वेभ्यो वै कामेभ्यस्संधिर्दुहे तत् सर्वान् कामान् यज्ञं पृष्ठानि संवत्सराद्दुह्रे ॥५॥ ७

एकविंश एष एतेन वै देवा एकविंशेनादित्यमितस्स्वर्गं लोकमारोहयन् स एष इत एकविंशस्तस्य दशावस्तादहानि दश परस्तात् स एष उभयतो विराजि प्रतिष्ठित उभयतो हि वा एष विराजि प्रतिष्ठितस्तस्मादन्तरेमौ लोकौ यत् सर्वेषु स्वर्गेषु लोकेषु प्रतितिष्ठन्नेति देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तं त्रिषु स्वर्गेषु लोकेष्वादधुस्तस्य पराचोऽतिपादादबिभयुस्तं परस्तात् त्रिभिस्स्वर्गैर्लोकैः प्रत्यस्तभ्नुवन् स एष उभयतष्षट्सु स्वर्गेषु लोकेषु प्रतिष्ठितो धृत्यै प्रतिष्ठाया अनवपादायानतिपादाय ॥ देवा वै सप्तदशानां प्रव्लयादबिभयुस्तान् सर्वैस्स्तोमैरवस्तात् पर्यार्षन् सर्वैस्स्तोमैः परस्तात् तस्मादभिजित् सर्वस्तोमोऽवस्तात् सप्तदशानां विश्वजित् सर्वस्तोमः

[५] तै. सं. ७,५,३। [६] तै. ब्रा. १,२,४।

परस्तात् सप्तदशानां धृत्या अप्रव्लयाय देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तं ये वर्ष्म स्वर्गाणां लोकानामधिपतयस्तेष्वादधुश्चतुस्त्रिँशा वै स्तोमा वर्ष्म स्वर्गाणां लोकानामधिपतय-स्तद्यदेकविँशस्याह्नस्त्रयोऽवस्तात् सप्तदशास्त्रयः परस्तात् ते त्रयश्चतुस्त्रिँशा द्वौ द्वौ तेषु वा एष आहितो धृत्यै प्रतिष्ठाया अनवपादायानतिपादाय ॥ वर्ष्मन् हि वा एष स्वर्गाणां लोकानामाहित-स्तस्माद्भूतेभ्यो भूतेभ्य उत्तरो वर्ष्म स्वानामाधिपत्यं पर्येति य एवं वेद देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तं पञ्चभी रश्मिभिरुदवयन् रश्मयो दिवाकीर्त्यानि तस्मादेकविँशेऽहन् पञ्च दिवाकीर्त्यानि क्रियन्ते ये गायत्रे ते गायत्रीषूत्तरयोः पवमानयोर्महादिवाकीर्त्यँ होतुः पृष्ठं विकर्णं ब्रह्मसामं भासमग्निष्टोमस्तद्यदेकविँशेऽहन् पञ्च दिवाकीर्त्यानि क्रियन्त आदित्यमेव तत् पञ्चभी रश्मिभिरुद्वयन्ति धृत्यै प्रतिष्ठाया अनवपादायानतिपादाय ॥ अथैतानि स्पराणि स्परैर्वै देवा आदित्याय स्वर्गं लोकमस्पृण्वन् यदस्पृण्वँस्तत् स्पराणां स्परत्वँ स्पृण्वन्त्यस्मै स्पराणि स्वर्गं लोकं य एवं विद्वानेतैस्स्तुतेऽथैतानि पराणि परैर्वै देवा आदित्यँ स्वर्गं लोकमपारयन् यदपारयँ-स्तत् पराणां परत्वं पारयन्त्येनं पराणि स्वर्गं लोकं य एवं विद्वानेतैस्स्तुतेऽनुष्टुभो वै यदयातयाम-रूपं तानि पराणि तस्मादनुष्टुप्सु पराणि क्रियन्ते यदनुष्टुप्सु पराणि क्रियन्तेऽनुष्टुभमेव तत् सवीर्यां कुर्वन्ति स्वर्गस्य लोकस्य समष्ट्यै ॥६॥　　　　८-११

उत्सृज्या३न्नोत्सृज्या३मिति मीमाँसन्ते तदाहुरुत्सृज्यमेव प्राणापाना वा एते संवत्सरस्य यत् पूर्ण-मासा यन्नोत्सृजेयुस्संवत्सरमपिनह्येयुरमेहेन सत्त्रिणो म्रियेरन् पौर्णमास्यां चामावस्यायां चोत्सृज्य-मित्याहुरेते हि यज्ञं वहत इति तदाहुरेतयोस्त्वाव नोत्सृज्यं ये अवान्तरा यज्ञं भजाते इति या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेष हि मासो विशर इति नादिष्टमुत्सृजेयुर्यदादिष्टमुत्सृजेयु-र्यादृशे पुनः पर्याप्लावे मध्ये षडहस्य संपद्यत इति षडहैर्मासँ संपाद्य यत् सप्तममहस्तदुत्सृजेयुस्सँ षडहं तन्वन्त्युत्संवत्सरँ श्वासयन्ति यदहस्तूत्सृजेयुस्तदग्नये वसुमतेऽष्टाकपालं पुरोडाशं प्रातर्निर्वपेयु-रैन्द्रं दधीन्द्राय मरुत्वत एकादशकपालं मध्यन्दिने विश्वेभ्यो देवेभ्य ऋतुमद्भ्यो द्वादशकपाल-मपराह्णे प्राजापत्यः पशुस्स्यादग्नेर्वै वसुमतः प्रातस्सवनं यदग्नये वसुमतेऽष्टाकपालं पुरोडाशं प्रातर्नि-र्वपन्ति देवतामेव तद्भागिनीं कुर्वन्त्यननुसर्गाय सोमो वा एष ओषधीषु प्रविष्टो यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्ति सवनमष्टाभिरुपयन्ति ये खलु वाव प्रातः पशव उपाक्रियन्ते ते वसव इन्द्रस्य वै मरुत्वतो माध्यन्दिनँ सवनं यदिन्द्राय मरुत्वत एकादशकपालं पुरोडाशं मध्य-न्दिने निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्त्यननुसर्गाय ॥ सवनमेकादशभिरुपयन्ति विश्वेषां वै

[७] तै सं. ७,५,७ ।

देवानामृतुमतां तृतीयसवनं यद्विश्वेभ्यो देवेभ्य ऋतुमद्भ्यो द्वादशकपालं पुरोडाशमपराह्णे निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्त्यननुसर्गाय सवनं द्वादशभिरुपयन्ति प्राजापत्यः पशुर्भवति यज्ञो वै प्रजापतिर्यज्ञस्याननुसर्गायाभीवर्त इतष्षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभीवर्तो ब्रह्मणैव तत् स्वर्गं लोकमभिवर्तयन्तो यन्ति ॥ प्रतिकूलमिव हीतस्स्वर्गो लोकस्समानाः प्रगाथा भवन्त्यन्यान्यन्यानि सामानि लोका वै सामानि स्वर्गा ऋचो लोकैरेव तत् स्वर्गांल्लोकानभ्यारोहन्तो यन्ति समानँ साम भवत्यन्या अन्या ऋचस्स्वर्गा वै सामानि लोका ऋचो लोकैरेव तत् स्वर्गांल्लोकानभ्यारोहन्त आयन्ति ॥ १२-१४

इन्द्र क्रतुं न आभर पिता पुत्रेभ्या यथा ।
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ १५

इत्यमुत आयताँ षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आयन्त्ययँ हि लोको लोकानां प्रतिष्ठा ॥७॥ १६

अथैते परसामानस्तेषां परसाम्नां यत् प्रथमं तदुत्तमं यदुत्तमं तत् प्रथमं यन्मध्ये मध्य एव तत् तद्यनैवैते यन्ति तेनामुतः पुनरायन्त्येषां लोकानाँ संतत्यै प्रतिज्ञात्यै ते विश्वजित उपरिष्टात् प्रत्यवरोहिणस्स्तोमानुपयन्ति तदाहुर्जितं वा एते पराजयन्ते निर्वृत्तान् प्रत्यवरोहिणस्स्तोमानुपयन्ति निवर्तन्ते स्वर्गाल्लोकात् प्रत्यञ्चमु यज्ञं तन्वत इति ते तथा पञ्च मासो यन्ति षष्ठस्य च मासस्त्रीनभिप्रवान् द्वे चाहनी गोआयुषी ते पृष्ठान्युपयन्ति पृष्ठानि वै यज्ञस्य दोहो यज्ञं दोहामहै पशूँश्चामृतं च प्राञ्चमु यज्ञं तनवामहा इत्यृतवो वै पृष्ठान्यृतुष्वेव तत् प्रतितिष्ठन्तो यन्ति स्वर्गो वै लोकः पृष्ठानि स्वर्ग एव तल्लोके प्रतितिष्ठन्तो यन्ति ॥ देवक्षत्रं वा आयुषस्स्तोमा देवक्षत्रमेव तदभ्यारोहन्तो यन्ति ते छन्दोमानुपयन्ति पशवो वै छन्दोमाः पशूनेवावरुन्धते ते दशममहरुपयन्ति प्रजननं प्राजापत्यं प्रतिष्ठां प्रजननमेव तत् प्रजां प्रतिष्ठामवरुन्धते ते महाव्रतीयमहरुपयन्ति तदाहुर्विषुवान् वा एतदहर्यन्महाव्रतीयं विषुवत्युपेत्यमित्यथाहुः प्राजापत्यं वा एतदहर्यन्महाव्रतीयं तदुत्तमार्धे संवत्सरस्योपेत्यमिति यो वै षण्मास्यो जायते यस्सप्तमास्यः प्र वै स मीयते न तेन भोगमश्नुते ॥ संवत्सरे खलु वाव रेतो हितं प्रजायते तद्यदुत्तमार्धे संवत्सरस्य महाव्रतीयमहरुपयन्ति संवत्सर एतद्रेतो हितं प्रजनयन्ति यथर्त्वेवर्तून् कल्पयन्ति यथापूर्वं प्रजां प्रजनयन्ति ते पञ्चविंशँ स्तोममुपयन्ति पुरुषस्तोमं दश हस्त्या अङ्गुलयो दश पद्या द्वौ बाहू द्वे सक्थ्या आत्मा पञ्चविंशो

[इन्द्र क्रतुं न आभर० । ऋ. ७,३२,२६; सा. २५९,१४५६; अथर्व. १८,३,६७; २०,७९,१; तै. सं. ७,५,७,४ ]

यदेतँ स्तोममुपयन्ति स्वादेव तत् स्तोमात् सत्त्रिण आत्मानं प्रजनयन्ति भूत्यै तदाहुः प्राजापत्यं वा एतदहर्यन्महाव्रतीयं तस्मिन् सर्वे ग्रहा ग्रहीतव्यास्सर्वमिव हि प्रजापतिर्विंव्याचेत्येको ग्रहीतव्य एको हि प्रजापतिस्त्रयो ग्रहीतव्यास्त्रय इमे लोका एष्वेव लोकेष्वृध्नुवन्ति ॥ पञ्च ग्रहीतव्याः पाङ्क्तो यज्ञो यज्ञमेवावरुन्धते सप्त ग्रहीतव्यास्सप्त ग्राम्याः पशवस्तानेवावरुन्धते नव ग्रहीतव्या नव प्राणाः प्राणेष्वेव प्रतितिष्ठन्ति पञ्चदश ग्रहीतव्याः पञ्चदशार्धमासस्य रात्रयोऽर्धमासशस्संवत्सर आप्यतेऽर्धमासश एव तत् संवत्सरमाप्नुवन्ति सप्तदश ग्रहीतव्याः प्रजापतिस्सप्तदशः प्रजापतिमेवाप्नुवन्त्येकविँशतिर्ग्रहीतव्या असा आदित्य एकविँशोऽमुमेवादित्यमाप्नुवन्ति सप्तविँशतिर्ग्रहीतव्यास्त्रिणवा इमे लोका एष्वेव लोकेष्वृध्नुवन्ति त्रयस्त्रिंशद्ग्रहीतव्यास्त्रयस्त्रिँशद्देवता देवतास्वेव प्रतितिष्ठन्ति ॥८॥
१७-२०
[२२३९]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां सत्त्राणि नाम त्रयस्त्रिंशं स्थानकं संपूर्णम् ॥३३॥

---

अथ चतुस्त्रिंशं स्थानकम्।

## एकादशिनी।

एकादशिनीभिर्यन्ति प्राणा वा एकादशिनीः प्राणेष्वेव तत् प्रतितिष्ठन्तो यन्ति तदाहुर्यदेकादशिनीभिरियुरहानि वातिरिच्येरन् पशवो वा नोत्तमेनाह्नोत्तमः पशुस्संपद्येतेति तद्यदेकादशिनीकामास्स्युः प्रथमे मास्येकादशिनीमुपेयुरुत्तमे च प्राणा वा एकादशिनी प्राणानेव मुखतः प्रतिपद्यन्ते प्राणेष्वन्ततः प्रतितिष्ठन्त्यैन्द्राग्नः खल्वेवाच्युतः पशुस्स्यात् प्राणापानौ वा इन्द्राग्नी प्राणापानयोरेव तत् प्रतितिष्ठन्तो यन्ति तेजो वा इन्द्राग्नी तेजस्येव तत् प्रतितिष्ठन्तो यन्त्योजो वै वीर्यमिन्द्राग्नी तेजस्येव यद्वीर्ये प्रतितिष्ठन्तो यन्तीन्द्राग्नी सर्वा देवता यदैन्द्राग्नः पशुर्भवति सर्वा एव तद्देवताः प्रीणन्तो यन्ति ॥ यदहो रथंतरँ साम स्यादाग्नेयं तदहः पशुमालभेरन् यदहर्बृहदैन्द्रं तदहस्तद्वैन्द्राग्न एव यदहो रथंतरँ साम स्यादाग्नेन्द्रं तदहः पशुमालभेरन् यदहर्बृहदैन्द्राग्नं तदहस्तदनुपूर्वे देवते कल्पयन्ति यथापूर्वं पशूनालभन्त इन्द्राग्निभ्यामेव यन्ति बार्हस्पत्यँ शितिपृष्ठँ षष्ठेऽहन्नालभेरन् ब्रह्म वै बृहस्पतिर्ब्रह्मण्येव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति बार्हस्पत्यः खलु वाव शितिपृष्ठो देवतया द्यावापृथिव्यां धेनुँ सप्तमेऽहन्नालभेरन् प्रथमे छन्दोमे द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा द्यावापृथिव्योरेव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति द्यावापृथिव्या खलु वाव धेनुर्देवतया वायव्यं वत्समष्टमेऽहन्नालभेरन् मध्यमे छन्दोमे प्राणो वै वायुः प्राण एव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति ॥ वायव्यः खलु वाव वत्सो देवतया वाचे पृश्निं नवमेऽहन्नालभेरन्नुत्तमे छन्दोमे वाग्वै पृश्निः प्रतिष्ठा वाच्येव तद्यज्ञस्यान्ततः

प्रतितिष्ठन्ति वाग्देवत्या खलु वाव पृश्निर्देवतयादित्यां वशां दशमेऽहन्नालभेरन्नियं वा अदितिरियं प्रतिष्ठास्यामेव तद्यज्ञस्यान्ततः प्रतितिष्ठन्त्यादित्या खलु वाव वशा देवतया वैश्वकर्मण-मृषभं महाव्रतीयेऽहन्नालभेरन्निन्द्रो वै वृत्रँ हत्वा विश्वकर्माभवत् प्रजापतिः प्रजासृष्ट्वा विश्वकर्मा-भवत् संवत्सरो विश्वकर्मेत्याहुर्यमिमाः प्रजा अनुप्रजायन्त इति त्रिरूपस्स्यादुभयतएतो यत् प्रथमं रूपं तेनैन्द्रो यद् द्वितीयं तेन प्राजापत्यो यत् तृतीयं तत् संवत्सरस्य रूपमिन्द्रो वृषा प्रजापति-र्वृषा संवत्सरोऽस्य वृषेत्याहुर्यमिमाः प्रजा अनुप्रजायन्त इति तस्माद्दृषभस्स्यात् ॥१॥ १—३

असुर्यं वा एतस्माद्वर्णं कृत्वा तेज इन्द्रियं वीर्यं प्रजा पशवोऽपक्रामन्ति यस्य यूपो विरोहति स ईश्वर ईजानः पापीयान् भवति त्वाष्ट्रं बहुरूपमालभेत त्वष्टा वै रूपाणां विकर्ता तमेव भागधेयेनो-पधावति सोऽस्मै तेज इन्द्रियं वीर्यं प्रजां पशून् पुनरुपावर्तयत्यार्तिं वा एते नियन्ति येषां दीक्षितानां प्रमीयते तं यदवृजेयुः क्रूरकृतामिवैषां लोकस्स्यादाहर दहेति ब्रूयुस्तं दाक्षिणार्धे वेद्यां निधाय सर्पराज्ञ्या ऋग्भिस्स्तुयुरियं वै सर्पराज्ञ्यस्या एवैनमधिसमीरयन्ति तदाहुर्व्यृद्धं वा एतद्यत् स्तुतमननुशस्तमिति होता प्रथमो दीक्षितानां प्राचीनावीतं कृत्वा मार्जालीयं परीयाद्यामीरनुब्रुवन् सर्पराज्ञ्या ऋचां कीर्तयन्नियं वै सर्पतो राज्ञ्यस्या एवैनमधिसमीरयन्ति धुवन्त्येवैनमेतदथो न्येवास्मै ह्नुवते तम इव वा एते नियन्ति येषां दीक्षितानां प्रमीयते ॥ अग्न आयूँषि पवस इत्येतौँ सोमस्य प्रतिपदं कुर्वीरन् पुतन एवात्मानमायुरेवात्मन् दधतेऽथो ज्योतिष्मन्त एव यन्त्यप्रतिष्ठिता वा एते येषां दीक्षितानां प्रमीयते रथंतरसामैषाँ सोमस्स्यादियं वै पृथिवी रथंतरमस्यामेव प्रतितिष्ठन्ति ॥२॥ ४-५

यद्यक्रीतमपहरेयुरन्यः क्रीतव्यो यदि क्रीतं यो नेदिष्ठँ स्यात् स आहृत्याभिषुत्यो राजाहाराय तु किंचिद्दीयते नास्य स परिक्रीतो भवति यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानार्जुनानि गायत्री वै सोममपाहरच्छ्येनो भूत्वा तस्य सोमरक्षिरनुविसृज्य नखमच्छिनत् ततो योऽँशुरमुच्यत स पूतीकोऽभवदूतीका वै नामैते यदूतीकानभिषुण्वन्त्यूतिमेव यज्ञाय कुर्वन्तीन्द्रो वै वृत्रमहँस्तस्य यल्लोहितमासीत् तान्यार्जुनानि लोहिततूलान्यभवन्नथ यो ग्रीवाभ्यः प्रवृढाभ्यो रसस्समस्रवत् तान्यार्जुनानि बभ्रुतूलान्यभवन् सोमो वा एषोऽसुर्य इव तु तस्मान्नाभिषुत्यः प्रतिधुक् च प्रातः पूतीकाश्च दधि मध्यन्दिने पूतीकाश्च शृतं चापराह्णे पूतीकाश्चेन्द्रियेण वा एष

---

[२] तै. ब्रा. १,४,६,५-७. १,४,७,१ । वा. १९,३८; ३५,१६ । काण्व. ८,१९, २१,४०; २९,३७, ३५,४८ । [ अग्न आयूँषि पवस० । ऋ. ९,६६,१९; सा. ६२७,१४६४,१५१८; तै. सं १,३,१४,७; ४,२९,१; ५,५,१; ६,६,१; तै. ब्रा. २,६,३,४; तै आ. २,५,१ ]

[३] तै. ब्रा. १,४,७, ५-७ ।

सोमपीथेन व्यृध्यते यस्य सोममपाहरन्ति स ओषधीश्च पशूँश्च प्रविशति यदेतदुभयमभिषुण्व-
न्त्योषधिभ्यश्चैव पशुभ्यश्चाधि सोमपीथं पुनरवरुन्द्धे ॥३॥ ६

यदि सोमौ सँसुतौ स्यातां महति रात्र्याः प्रातरनुवाकमुपाकुर्यात् पूर्व एव यज्ञं पूर्वो देवताः पूर्वश्छन्दाँसि वृङ्क्ते वृषण्वतीं प्रतिपदं कुर्यादिन्द्रो वै वृषा प्रातस्सवनादेवैषामिन्द्रं वृङ्क्ते तदाहुस्सवनमुखे सवनमुखे कर्तव्येति सवनमुखात् सवनमुखादेवैषामिन्द्रं वृङ्क्ते संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभुवे स्वाहा संवेशायोपवेशाय त्रिष्टुभे जगत्या अनुष्टुभे छन्दसेऽभिभुवे स्वाहेत्ये-तावन्ति वै छन्दाँसि च्छन्दोभिर्देवा असुराणां छन्दाँस्यवृञ्जत च्छन्दोभिरेवैषां छन्दाँसि वृङ्क्ते ॥ सजन्यँ शस्यं विहव्यँ शस्यमगस्त्यस्य कयाशुभीयँ शस्यमेतावद्वावास्ति यावदेवास्त्यन्तरिक्षाद्दिवः पृथिव्या अहोरात्राभ्यां तेभ्य एनान् सर्वेभ्यो निर्भजति यदि प्रातस्सवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु माध्यन्दिने पवमाने स्तुयुर्यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यते-ऽतिरिक्तं वा एतदतिरिक्तँ शिपिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोति यदि मध्यन्दिन आर्भवस्य पवमानस्य पुरस्ताद्वषट्कारनिधनँ साम कुर्युर्यदि तृतीयसवन एतदेव वषट्कारो वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनं गमयन्ति ॥४॥ ७-८

आसन्दीमारुह्योद्गाता महाव्रतेनोद्गायति प्रेङ्खमारुह्य होता महदुक्थमनुशँसत्यधिष्ठानेऽभिष्ठाया-ध्वर्यू प्रतिगृणीतः कूर्चेष्वितर आसतेऽन्तरिक्षं वा अन्नममुतो वै प्रदीयतेऽस्यां प्रजायते तदन्तरिक्षाय जायते यदन्तरिक्ष आसीना महाव्रतेन चरन्त्यन्नाद्यस्योपाप्त्या अथो देवसाक्ष्य एवो परिपद्य याज-यन्ति स्वर्गम्नु लोकमाक्रममाणा यन्त्यभिगरापगरौ भवतः प्र वा अन्यस्सत्त्रिणश्शँसति निन्दत्यन्यो यः प्रशँसति यदेवैषाँ सुष्टुतँ सुशस्तं तत् स प्रशँसत्यथ यो निन्दति यदेवैषाँ सुष्टुतँ सुशस्तं तत् सो-ऽपहन्ति शूद्रार्यौ चर्मन् व्यायच्छेते ॥ देवाश्च वा असुराश्चादित्ये व्यायच्छन्त तं देवा अभ्यजय-न्नार्यं वर्णमुज्जापयत्यात्मानमेवोज्जापयत्यन्तर्वेद्यार्यस्स्याद्बहिर्वेदि शूद्रश्श्वेतं चर्म परिमण्डलं स्या-दादित्यस्य रूपँ सर्वासु स्रक्तिषु दुन्दुभयो वदन्ति या दिक्षु वाक्तां तेनावरुन्धते भूमिदुन्दुभिर्भवति यास्यां वाक्तां तेनावरुन्धते वीणा वदन्ति या पशुषु वाक्तां तेनावरुन्धते काण्डवीणा वदन्ति यौष-धिषु वाक्तां तेनावरुन्धते नाडीतूणवा वदन्ति या वनस्पतिषु वाक्तां तेनावरुन्धते वाणश्शततन्तु-र्भवति शतायुर्वै पुरुषश्शतवीर्य आयुरेव वीर्यमवरुन्द्धे ॥ ब्रह्मचारी च पुँश्चली चर्तीयेते सर्वा हि भूते वाचो वदन्ति मिथुनं चरन्ति संवत्सरं वा एते प्रजायमानास्सत्त्रमासते तेषाँ संवत्सरेणैव प्रजनन-मन्तर्धीयते यन्मिथुनं चरन्ति संवत्सरस्यैव प्रजननस्योपाप्त्यै कुम्भिनीरुपाचरन्ति समृद्ध्या इदंमधुरं गायन्तीस्संनद्धकवचाः परियन्ति महाव्रतमेव महयन्त्यथो सेन्द्रताया एव ब्राह्मणो वा अन्या

[४] तै. सं. ७,५,५। पञ्चविंश ब्रा. ९,४। [५] तै. सं. ७,५,८-१०। तै. ब्रा. १,२,६,६—७।

त्विषिः क्षत्रस्यान्या यद्दीक्षितोऽधिकृष्णाजिनस्सा ब्रह्मणस्त्विषिर्यत् संनद्धकवचोऽधिज्यधनुस्सा क्षत्रस्य त्विषिस्तदुभयं भवत्युभयोस्त्विष्योरवरुद्ध्यै ॥५॥ ९-११

प्रजापतिर्वा आत्मनोऽधि द्वादशाहं निरमिमीत संवत्सरः प्रजापतिस्स चतुर्णां मासां तिस्रस्तिस्रो रात्रीरादत्त सा दीक्षाभवत् स उत्तरेषां चतुर्णां तिस्रस्तिस्रो रात्रीरादत्त ता उपसदोऽभवन् स उत्तरेषां चतुर्णां तिस्रस्तिस्रो रात्रीरादत्त सा सुत्याभवत् तस्मादाहुर्यावान् संवत्सरस्तावान् द्वादशाह इति सर्वस्माद्ध्येष संवत्सरादधि निर्मितस्स प्रथमं चाहरसृजतेहीडं च सामेमं लोकमग्निं ज्योतिर्द्वितीयं चाहरसृजतोर्ध्वेडं च सामान्तरिक्षं लोकं वायुं ज्योतिस्तृतीयं चाहरसृजतेडाभिरैडं च सामामुं लोकँ सूर्यं ज्योतिश्चतुर्थं चाहरसृजत परिस्तुब्धेडं च साम यस्मिँश्च लोके तेजो ज्योतिः पञ्चमं चाहरसृजताध्यर्धेडं च साम यस्मिल्लोके सत्यं ज्योतिष्षष्ठं चाहरसृजत होइडं च साम यस्मिल्लोके ब्रह्म ज्योतिस्सप्तमं चाहरसृजत पुनर्नितुन्नां चेडां यस्मिँश्च लोके तपो ज्योतिरष्टमं चाहरसृजत विष्वगैडं च साम यस्मिँश्च लोक ऋतं ज्योतिर्नवमं चाहरसृजत होइडं च साम यस्मिँश्च लोके ब्रह्म ज्योतिर्दशमं चाहरसृजत द्वीडं च साम यस्मिल्लोकेऽमृतं ज्योतिः प्राण एव प्रायणीयोऽपान उदयनीयस्तस्माद्यावदेव प्रायणीये क्रियते तावदुदयनीये क्रियते यावान् हि प्राणस्तावानपान एतांल्लोकानेतानि सामान्येतानि ज्योतीँष्येतानि तेजाँस्यवरुन्द्धे य एवं विद्वान् द्वादशाहेन यजते ॥६॥ १२

प्रजापतिरकामयत प्रजास्सृजेयेति स एतमात्मन् द्वादशाहमपश्यत् तमात्मनो निरमिमीत तेन प्रजा असृजत तं गायत्री छन्दोऽन्वसृज्यत साकामयताहमिमँ सर्वतः परिभवेयमिति तं तेजसा मुखतः पर्यभवदोजसा मध्यतश्छन्दसोपरिष्टात् सर्वतो वै सा तं व्यत्यशयत् सर्वतो भ्रातृव्यं व्यतिशये य एवं वेद द्वे रूपे संवत्सरस्य मासा अन्यद्दतवोऽन्यद्यत् षड्तवस्तेनाप्तो यद् द्वादश मासास्तेनाप्त उभाभ्यामेव रूपाभ्याँ संवत्सरमाप्नोति ब्रह्म वै गायत्री क्षत्रं द्वादशाहोऽन्वेनं क्षत्रं बुध्यते प्र पुरोधामाप्नोति य एवं वेद ॥ यज्ञं वा अन्यानि च्छन्दाँस्यभ्यसृज्यन्त स्वाराज्यमेव बृहत्यभ्यसृज्यत तस्माद्बृहत्या न वषट्कुर्वन्ति यद्वषट्कुर्युः पशूनग्नौ प्रदध्युर्वचसाप्त्वा पशूनवरुन्धते वाचि वा एते चत्वारः पशवो गौरश्वोऽजाविस्तस्माद्वाचा हूताः पशव उदायन्ति वाचा सिद्धा आवर्तन्ते बृहतीं वा एत आप्नुवन्ति य एता रात्रीरासते षट्त्रिँशदेता रात्रयष्षट्त्रिँशदक्षरा बृहती बृहती स्वर्गं लोकं प्रवेद स्वर्गं लोकमाप्नुवन्ति य एता रात्रीरासते देवलोकान् वा एत आप्नुवन्ति य एता रात्रीरासते षट्त्रिँशदेता रात्रयष्षट्त्रिँशद्देवलोका अष्टौ वसव एकादश रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च त्रय इमे लोकास्तान् सर्वान् देवलोकानाप्नुवन्ति य एता रात्रीरासत उभये वै देवाश्च मनुष्या-

श्वाध्यावृत्ता आसँस्ते देवा एतं द्वादशाहमुपायँस्ते दीक्षयैवात्मानमपुनतोपसद्भिर्यज्ञँ समभरन्त हित्वा शरीरँ सुत्यया स्वर्गं लोकमायन् य एवं विद्वान् द्वादशाहमुपैति दीक्षयैवात्मानं पुनीत उपसद्भिर्यज्ञँ संभरते हित्वा शरीरँ सुत्यया स्वर्गं लोकमेति प्रजापतिर्वा एतँ स्वर्गकाम आहरत् स न प्राभवदेकादशाहो वा एष स एतमतिरात्रमुपरिष्टादुभयतः पर्यहरत् समानो वा एष उभयतः परिह्रियते स्वर्गस्य लोकस्य समष्ट्यै ॥७॥ १३-१४

प्रजापतिरकामयत प्रजायेयेति स द्वादशाहेनायजत तेन प्राजायत प्रैव जायते य एवं वेदापो वै यद्यज्ञिया मेध्या असृज्यन्त तदेका अपि नासृज्यन्तासृग्वाव तन्नासृज्यत तदस्रोऽसृक्त्वं तस्माद्यदेवासृक् छिद्यतेऽथ यज्ञियो मेध्यो भवति पुरुषसंमितो वा एष यत्सत्त्रियं प्रतिगृह्णाति पुरुषं वै सोऽत्ति यं खलु वै पुरुषमत्ति न तस्यास्मिँल्लोके नामुष्मिन्नपिभवति प्राणो वै पूर्वोऽत्रिरात्रोऽपान उत्तर इयं वै पूर्वोऽतिरात्रोऽसा उत्तरोऽग्निर्वै पूर्वोऽग्निष्टोमस्सूर्य उत्तरोऽन्तरौ वा एता अनयोस्तस्मादन्तरौ प्रयुज्येते तदाहुर्यदग्निष्टोमप्रायणो यज्ञः कस्मादतिरात्रौ पूर्वौ प्रयुज्येते इत्यथाहुश्चक्षुषी वा एते यज्ञस्य यदतिरात्रौ कनीनिके अग्निष्टोमा इति यदग्निष्टोमौ पूर्वौ प्रयुञ्जीरन् बहिष्कनीनिके निरादध्युरन्धाः प्रजायेरन् यदतिरात्रौ पूर्वौ प्रयुज्येते चक्षुषी एव यज्ञस्य प्रतिधाय मध्यतः कनीनिके प्रतिदधाति भूतं वै पूर्वोऽतिरात्रो भव्यमुत्तरस्सादिमानि दशाहानि मध्ये सद्भवति य एवं वेद यो ह वै गायत्रीं ज्योतिष्पक्षां वेद ज्योतिष्मता भासा स्वर्गं लोकमेति या अतिरात्रौ तौ पक्षौ या अग्निष्टोमौ ते ज्योतिषी येऽष्टा अन्तर उक्थ्यास्स आत्मैषा वै गायत्री ज्योतिष्पक्षा य एवं गायत्रीं ज्योतिष्पक्षां वेद ज्योतिष्मता भासा स्वर्गं लोकमेति ॥ पक्षिणो वा एते भवन्ति पक्षिणा भूत्वा यत्र कामयन्ति तत् परापातमासत एष वै प्रजापतिर्द्वादशधा विनिहितो यद् द्वादशाहो या अतिरात्रौ तौ पक्षौ या अग्निष्टोमौ ते चक्षुषी येऽष्टा अन्तर उक्थ्यास्स आत्मा स एष प्रजापतिरेव सद्धै सत्त्रिणस्स्पृण्वन्ति तत् सत्त्रस्य सत्त्रत्वं प्राणा वै सत् प्राणानेव तत् स्पृण्वन्ति सर्वासां वा एते प्रजानां प्राणैरासते ये सत्त्रमासते तस्मात् पृच्छन्ति किमेते सत्त्रिण इति प्रियः प्रजानामुत्थितो भवति य एवं वेद ॥८॥ १५-१६

प्रजापतिरकामयत स्यामिति स द्वादशाहेनायजत तेनाभवत् तस्मादाहुर्बुभूषतो यज्ञ इति तं मासा दीक्षितमदीक्षिता अयाजयँस्तस्माद्दीक्षितमदीक्षिता याजयन्ति तेभ्य इषमूर्जमददात् सेयं मासेष्वार्ध्नोत् प्रजापतिदत्ताध्नुवन्मासाः प्रतिगृह्यर्ध्नोति य एवं विद्वान् ददात्यृध्नोति यः प्रतिगृह्णाति पीवा दीक्षेत यदस्याङ्गानामीयते जुहोत्येव तत् स यथा वसन्तो नवदाव्यश्शोभमान उत्तिष्ठत्येवमेव नवदाव्य-

[८] तै. सं. ७,२,९ ।

श्शोभमान उत्तिष्ठति तपो वै यज्ञस्य श्लेष्म यथा वै रथस्य श्लेष्मैवं यज्ञस्य तपो योऽतपस्वी भवत्यसँश्लिष्टोऽस्य य स्तपस्वी स्याद्यज्ञमेव सँश्लेषयतेऽर्धमसा वावासँस्तेऽकामयन्त मासास्स्यामेति ते द्वादशाहमुपायँस्त्रयोदशं ब्रह्माणं कृत्वा तस्मिन् दष्टोदतिष्ठँस्तस्मात् सोऽनायतन इतरानुपजीवति तस्माद् द्वादशाहस्य त्रयोदशेन न ब्रह्मणा भवितव्यं द्वादश दीक्षेरन् संवत्सरायतना द्वादश मासास्संवत्सरस्संवत्सरायतना एवर्ध्नुवन्ति त्रयोदश दीक्षेरन् संवत्सरायतनास्त्रयोदश मासास्संवत्सरस्संवत्सरायतना एवर्ध्नुवन्ति पञ्चदश दीक्षेरन्नर्धमासायतनाः पञ्चदशार्धमासस्य रात्रयोऽर्धमासायतना एवर्ध्नुवन्ति सप्तदश दीक्षेरन् प्राजापत्यायतनाः प्रजापतिस्सप्तदशः प्राजापत्यायतना एवर्ध्नुवन्त्येकविँशतिर्दीक्षेरन् रुक्कामा असा आदित्य एकविँश एष रुचः प्रदाता स एभ्यो रुचं प्रयच्छति चतुर्विँशतिर्दीक्षेरन् ब्रह्मवर्चसकामाश्चतुर्विँशत्यक्षरा गायत्री तेजो गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्धते सप्तविँशतिर्दीक्षेरँस्त्रिणवायतनास्त्रिणवा इमे लोकास्त्रिणवायतना एवर्ध्नुवन्ति त्रिँशद्दीक्षेरन् मासायतनास्त्रिँशन्मासो रात्रयो मासायतना एवर्ध्नुवन्ति त्रयस्त्रिँशद्दीक्षेरन् देवतायतनास्त्रयस्त्रिँशद्देवता देवतायतना एवर्ध्नुवन्ति चतुश्चत्वारिँशद्दीक्षेरन्नोजस्कामा वीर्यकामाश्चतुश्चत्वारिँशदक्षरा त्रिष्टुबोजो वीर्यं त्रिष्टुबोज एव वीर्यमवरुन्धतेऽष्टाचत्वारिँशद्दीक्षेरन् पशुकामा अष्टाचत्वारिँशदक्षरा जगती जागताः पशवः पशूनेवावरुन्धतेऽपरिमिता दीक्षेरन्नपरिमितस्यावरुद्ध्या अपरिमितः प्रजापतिः प्रजापतिमेवार्ध्नुवन्त्यृतवो वावासन्ननुयावरा मासास्ते मासा अकामयन्तर्तूनाप्नुयामेति ते द्वादशाहमुपायँस्त्रयोदशं ब्रह्माणं कृत्वा त ऋतूञ्छिशिरेण निभाय्य वसन्तमूर्जमेषामभ्युदतिष्ठन् य एवं विद्वाञ्छिशिरे दीक्षते तपसैव भ्रातृव्यं निभाय्यैषमूर्जमस्याभ्युत्तिष्ठति शिशिरं वा एतस्य प्रयाणं वसन्तोऽवसानमृध्नोति य एवं विद्वाञ्छिशिरे दीक्षते ॥९॥ १७

ब्रह्मवादिनो वदन्ति किं प्रथमेनाह्ना द्वादशाहस्यावरुन्द्ध इति तेजो ब्रह्मवर्चसं किं द्वितीयेनेति वाचमन्नाद्यं किं तृतीयेनेति त्रीनिमाँल्लोकान् किं चतुर्थेनेति चतुष्पदः पशून् किं पञ्चमेनेति चतस्रो दिश ऊर्ध्वां पञ्चमीं किँ षष्ठेनेति षडृतून् किँ सप्तमेनेति सप्तपदाँ शक्वरीं किमष्टमेनेत्यष्टाक्षरां गायत्रीं किं नवमेनेति नव प्राणान् किं दशमेनेति दशाक्षरां विराजं किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभं किं द्वादशेनेति द्वादशाक्षरां जगतीमेतावद्वावास्ति यावदेवास्ति तत् सर्वमाप्त्वावरुन्द्ध ऋध्नोति वसीयान् भवति य एवं विद्वान् द्वादशाहेन यजते ॥१०॥ १८

चतुर्वै तास्तिस्रस्तिस्रस्तासां याः प्रथमा आत्मानं ताभिः पुनीते या द्वितीया मेध्यस्ताभि-

[१०] तै. सं. ७,३,२ । [११] तै. सं. ७,२,१०,३—४ ।

येत्रियो भवति यास्तृतीया गात्राणि ताभिर्निर्णेनिक्तेऽथ याश्चतुर्थीर्यदेवास्यान्तरतो यद्बहिष्टाच्छमलं तत् ताभिर्धूनुते पुरुषं खलु वा एतेऽदन्ति यद् द्वादशाहेन याजयन्ति यः पाशवमत्ति माँसँ सोऽत्ति यो वाजिनं लोहितँ स यो धाना अस्थि स य आज्यं मज्जानँ स यः परिवापं केशान् स यः पुरोडाशं मस्तिष्कँ स यो राजानं भक्षयति स्वेदँ स यः करम्भं निष्पदँ स एष ह खलु वै सत्त्रियमत्ति योऽनृतं वदति स्वदितमस्य सत्त्रियं भवति नास्य सत्त्रियं जग्धं भवति य एवं वेद ॥११॥ १९

द्वादश दीक्षितो भवति जायत एव तत् तद्धि जातं यत् तपसोऽधि जायते न यत् स्त्रिया द्वादश दीक्षितो भवति द्वादश वै पुरुषेऽमेध्यानि लोम च तनूश्चासृक् च माँसं चास्थि च मज्जा च रेतश्च प्लीहा चाश्रु च दूषीका च स्वेदश्च यच्च प्रस्रावयत एतानि वै पुरुषे द्वादशामेध्यानि यद् द्वादश दीक्षितो भवति तान्येवापहते द्वादश दीक्षितो भवति द्वादशोपसदो द्वादश प्रसुतस्ताष्षट्त्रिँशत् संपद्यन्ते षट्त्रिँशदक्षरा बृहती बार्हताः पशवो बृहत्यामेवैतत् पशूनाप्नोति बृहत्यामेवैतत् पशूनाप्त्वावरुन्द्धे ततो यानि चत्वार्यक्षराण्युत्क्रामन्ति सा चतुष्पदानुष्टुब् वागनुष्टुब् वाच्येवैतत् पशूनाप्नोति वाच्येवैतत् पशूनाप्त्वावरुन्द्धे तस्माद्वाचा पशवो नाम जानते वाचा सिद्धानि वर्तन्ते ॥१२॥ २०

प्रजापतिरकामयत भूयान् स्याँ श्रेयान् स्यामृध्नुयामिति स द्वादशाहेनादीक्षत तेनायजत स आर्ध्नोत् तस्मादेको द्वादशाहेन यजतैको हि स आर्ध्नोत् प्रजापतिरेव प्रजापतेरेवर्द्धिमन्वृध्नोति य एवं विद्वानेको द्वादशाहेन यजते तेन तिस्रो देवता रोचना अदीक्षन्त तेनायजन्त ता आर्ध्नुवँस्तस्मात् त्रयो द्वादशाहेन यजेरँस्त्रयो हि त आर्ध्नुवन्निम एव लोका एषामेव लोकानामृद्धिमन्वृध्नुवन्ति य एवं विद्वाँसस्त्रयो द्वादशाहेन यजन्ते तेन षड् देवता अदीक्षन्त तेनायजन्त ता आर्ध्नुवँस्तस्मात् षड् द्वादशाहेन यजेरन् षड्ढि त आर्ध्नुवन्नृतव एवर्तूनामेवर्द्धिमन्वृध्नुवन्ति य एवं विद्वाँसष्षड् द्वादशाहेन यजन्ते तेन द्वादश देवता अदीक्षन्त तेनायजन्त ता आर्ध्नुवँस्ते पूर्वपक्षेष्वार्ध्नुवन्नपरपक्षाननूपाह्वयन्त तस्माद् द्वादश द्वादशाहेन यजेरन् द्वादश हि त आर्ध्नुवन् मासा एव मासानामेवर्द्धिमन्वृध्नुवन्ति य एवं विद्वाँसो द्वादश द्वादशाहेन यजन्त उपसत्सु त्रयोदशो दीक्षेतोत हि तं विदुरुत न विदुरुत वै त्रयोदशं मासं विदुरुत न विदुः ॥१३॥ २१

प्रजापतिर्मनसि सारस्वतो वाचि विसृष्टायां धाता दीक्षायां ब्रह्म व्रते सविता भृत्यामन्धोऽच्छेतो दिव्यस्सुपर्णः प्रतिख्यातोऽदितिः प्रायणीये पशुष्ठा न्युप्तो रुद्रो विचीयमानश्छन्दाँसि मीयमानो वरुण उपनद्धः पूषा सोमक्रयण्यां भगः पण्यमानोऽसुरः क्रीतश्शिपिविष्ट ऊरा आसाद्यमानो बृहस्पति-

[११] तै. सं ७,१,१०,३। [१४] अथ० प्राय० सूत्र ३,१। तै. सं. ४,४,९।

रुत्थितो वायुराधिह्रियमाणोऽधिपतिः प्रोह्यमाणोऽग्नीषोमीयः पशा अतिथिर्दुरोणसदातिथ्ये वरुण-
स्सम्राडासन्द्यामासाद्यमान ऐन्द्राग्नो अग्नौ मथ्यमान ऐन्द्राग्नोऽग्नौ प्रह्रियमाणे साम तानूनप्त्रे
तपोऽवान्तरदीक्षायां पृथिव्युपसद्यन्तरिक्षमुपसदि द्यौरुपसदि यज्ञस्य प्रमाभिमोन्मा प्रतिमा वेद्यां
क्रियमाणायां पशव उत्तरवेद्यां द्यौर्हविर्धानेऽन्तरिक्षमाग्नीध्रे पृथिवी सदसि ॥१४॥ २२

प्राण उपरवेषु भ्रातृव्या धिष्ण्येषु पशवा बर्हिषि वेद्याँ स्तीर्यमाणायाममुर्वैसर्जने प्रजापतिः प्रणीय-
मानोऽग्निराग्नीध्रे वैष्णव आसन्नकर्मणि हस्तो विसृष्टो वैष्णवो यूप ओषधयो रशनायां मेध आप्रीषु
हविः पर्यग्निकृतः पितृदेवत्यस्संज्ञप्यमाने यज्ञस्य मिथुनं पन्नेजनीषु रक्षसां भागधेयं वपायामुद्धृह्य-
मानायां यज्ञस्य संततिर्वसतीवरीषु परिह्रियमाणास्विन्द्राग्न्योर्धेनुर्दक्षिणायामुत्तरवेद्याश्श्रोण्यामासन्ना
मित्रावरुणयोर्धेनुरुत्तरस्यामुत्तरवेद्याश्श्रोण्यामासन्ना विश्वेषां देवानामाग्नीध्रे छन्दाँस्युपवसथे हविरुपा-
वहृतस्सारस्वतः प्रातरनुवाकेऽथ वा न्युप्तः प्रजापतिर्विभज्यमाना देवता विभक्त इन्द्रो वृत्रहेन्द्रो-
ऽभिमातिहेन्द्रो वृत्रतूरुन्नीयमान आयुरुपाँश्वन्तर्यामयोर्यमोऽभिषुतः ॥१५॥ २३

निर्भूयपूराधवनीये सुपूतपूः पूतभृति शुक्रश्रीः क्षीरश्रीः ककुहस्सक्तुश्रीः पात्रेषु वायुर्बहिष्पवमाने
होत्राः प्रवरे वसवः प्रयाजेषु यद्देवत्यस्सोमस्तद्देवत्यः पशुर्वैश्वदेव उन्नीयमान ऐन्द्राग्न उन्नीतो रुद्रो
हूयमानो वाग्घुतो मारुतो गणोऽभ्यावृत्तो मित्रः प्रतिख्यात इन्द्र आसन्नो भक्षो भक्ष्यमाणस्सखा
भक्षितः पितरो नाराशँस आग्नेयं प्रातस्सवनमैन्द्रं माध्यन्दिनँ सवनं यज्ञो दक्षिणायामैन्द्राणि पृष्ठानि
वैश्वदेवं तृतीयसवनं वैश्वानरोऽग्निष्टोम ऐन्द्रावारुणं मैत्रावरुणस्य स्तोत्रमैन्द्राबार्हस्पत्यं ब्राह्मणा-
च्छँसिन ऐन्द्रावैष्णवमच्छावाकस्यैन्द्रष्षोडशी रात्री पत्न्याग्नेयो रथंतरस्संधिस्सौर्यमाश्विनमहर्यज्ञ
आदित्या अनुयाजेषु यदन्तरा क्रियते समुद्रो वरुणोऽवभृथे समुद्र ऋजीषे यदवारे तीर्थं तत् प्राय-
णीयं यत्पारे तीर्थं तदुदयनीयं वैष्णवो वशायां ब्रह्मा समिष्टयाम् ॥१६॥ २४

यथा वै रथ एकैकमरमभिप्रतितिष्ठन् वर्तत एवं यज्ञ एकैकां तन्वमभिप्रतितिष्ठन्नेति पुरा प्र-
चरितोराग्नीध्रे होतव्या एतद्ध वा उवाच वासिष्ठस्सात्यहव्याऽस्कान् सोम इत्युक्ते मा स्रक्षत प्रचरत
प्रातर्वावाद्याहँ सोमँ समस्थापयमिति नास्य सोमस्स्कन्दति य एवं वेद स ह स्म वै स आसन्द्या-
मासीनस्सक्तुभिरुपमथ्य सोमं पिबत्यहं वाव सर्वतो यज्ञं वेद य एता वेद न मामेष हिँसिष्यतीति
नैनँ सोमः पीतो न पेयो हिनस्ति य एवं विद्वान् सोमं पिबति तँ ह स्म यदाहुः कस्मात् त्वमिदमा-
सीनस्सक्तुभिरुपमथ्य सोमं पिबसीति देवतास्वेव यज्ञं प्रतिष्ठापयामीत्यब्रवीद्यस्यैवं विदुषो यस्यैवं
विद्वान् यज्ञार्त्यां यज्ञप्रायश्चित्तिं जुहोति देवतास्वेव यज्ञं प्रतिष्ठापयति ॥ यज्ञार्तिं प्रतिजुहुयात्

[१५] अथ० प्राय० सूत्र ३,२ । तै. सं. ४,४,९ । [१६] अथ० प्राय० सूत्र ३,३ । तै. सं. ४,४,९ ।
[१७] गोप० ब्रा० १,१,१० ।

सयोनित्वाय त्रयस्त्रिँशद्वै यज्ञस्य तन्व एकान्नत्रिँशत् स्तोमभागास्त्रीणि सवनानि यज्ञश्चतुर्थस्स्तोमभागै-रेवैतत् स्तोमभागान् प्रतियुङ्क्ते सवनैस्सवनानि यज्ञेन यज्ञँ सर्वा ह वा अस्य यज्ञस्य तन्वः प्रयुक्ता भवन्ति सर्वा आशास्सर्वा अवरुद्धा देवस्य सवितुः प्रसवे बृहस्पतये स्तुतेति यद्यद्वै सविता देवेभ्यः प्रासुवत् तेनार्ध्नुवन् सवितृप्रसूता एव स्तुवन्त्यृध्नुवन्त्यृध्यन्ते ह वा अस्य स्तोमा ऋध्यते यज्ञ ऋध्यते यजमानायर्ध्यते प्रजाया ऋध्यते पशुभ्य ऋध्यते ब्रह्मणे यस्यैवं विदुषो यस्यैवं विद्वान् ब्रह्मा भवति ॥१७॥ २५-२६

यो वै स्तोमभागानामायताश्च प्रतिहिताश्च विद्यात् स समृतसोमस्य ब्रह्मा स्याद्बहिष्पवमाने प्रस्तुते ब्रूयात् स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः प्रसवे बृहस्पतिप्रसूता इत्येता वै स्तोमभागानामायतप्रतिहिता य एवं विद्यात् स समृतसोमस्य ब्रह्मा स्याद्यां दिशँ सोमौ सँस्तुतौ स्यातां तां दिशं परीक्षेतेदमहममुमामुष्यायणममुष्याः पुत्रँ शुचा विध्यामीत्यृत्विजामेकं ब्रूयाच्छुचैवैनान् विध्यति यो वै स्तोमभागानामायताश्च प्रतिहिताश्चाविद्वान् ब्रह्मा भवति स विष्वग्वीर्येण व्यृध्यते बहिष्पवमाने प्रस्तुते स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः प्रसवे बृहस्पतिप्रसूता इत्युपर्युपरि ब्रह्माणमतीक्षेताधरमेव द्विषन्तं कुरुते ब्रह्मन् सोमोऽस्कानिति यज्ञोऽस्कानित्येवैतदाह यत्र स्कन्देत् तदपो निनीय ॥ २७

अभूद्देवस्सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।
वि यो रत्ना भजति मानवेभ्यश्श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥ २८

इत्यभिमन्त्रयेतापो वै सर्वा देवता देवतास्वेव यज्ञं प्रतिष्ठापयति यत्र वै ब्रह्मान्यस्मै भूयो दीयमानं पश्यति सोऽधराचीनप्रवणस्सोमो भवति यदि ब्रह्मान्यस्मै भूयो दीयमानं पश्येदिदमहममुष्यामुष्यायणस्येन्द्रियं वीर्यं वृञ्ज इति यजमानं ब्रूयादिन्द्रियमेवास्य वीर्यं वृङ्क्ते ॥१८॥ २९

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥ ३०
अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ ३१
सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि ।
सप्त होत्रा अनु विद्वान् सप्त योनीँरापृणस्वा घृतेन ॥ ३२

---

[१८] [ अभूद्देवस्सविता वन्द्यो० । ऋ. ४,५४,१; तै ब्रा. ३,७,१३,४ ]

[१९] मै. १,६,१०; ७,५-६; ८,५९, ४,१०,३९,१०८—१०९; १४,२५६—२५७। कपि. ४८,१। वा. १,१३; ८,६१; १७,७९; २१,३—४। काण्व १,१९; १८,७९, २३,३—४। [ अग्निं नरो दीधितिभि० । ऋ. ७,१,१; सा. ७२; १३७३, नि. ५,१०। अग्निनाग्निस्समिध्यते० । ऋ १,१२,६; सा. ८४४; तै. सं. १,४,४६,३; ३,५,११,५; तै. ब्रा. २,७,१२,३ ]

मनो ज्योतिर्जुषतामाज्यस्यारिष्टं यज्ञँ समिमं तनोतु ।
इमं यज्ञँ सप्ततन्तुं ततं न आ देवा यन्तु सुमनस्यमानाः ॥ ३३
त्रयस्त्रिँशत् तन्तवो यान्वितन्वत इमं यज्ञँ स्वधया ये ददन्ते ।
तेषां छिद्रं प्रतिदध्मो यदत्र स्वाहायं यज्ञो अप्येतु देवान् ॥ ३४
यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः ।
अयं देवो बृहस्पतिस्सं तत् सिञ्चतु राधसा ॥ ३५
विश्वकर्मा हविरिदं जुषाणस्संतानैर्यज्ञँ समिमं तनोतु ।
या व्युष्टा उषसो याश्च निम्रुचस्तास्संदधातु हविषा घृतेन ॥ ३६
अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।
अयास्सन् मनसा कृतोऽयास्सन् हव्यमूहिषेऽया नो धेहि भेषजम् ॥ ३७
त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत् ॥ ३८
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकँ सुहवो न एधि ॥१९॥ ३९

[११७८]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायामेकादशिनी नाम चतुस्त्रिंशं स्थानकं संपूर्णम् ॥३४॥

अथ पञ्चत्रिंशं स्थानकम् ।

## प्रायश्चित्तिः ।

भद्रं कर्णेभिश्शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ १
स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिस्स्वस्ति नो बृहस्पतिर्दधातु ॥ २

---

[ त्वं नो अग्ने वरुणस्य० । ऋ ४,१,४, तै. सं. २,५,१२,३ । स त्वं नो अग्नेऽवमो० । ऋ. ४,१,५; तै. सं. २,५,१२,३ ]

[ १ ] कपि. ४८,१ । मै. २,१०,६६; ४,९,२५४; १०,२३; १४,१८ । वा. २५,१९—२१; १७,७६ । काण्व. २७, २३—२६, १८,७६ । [ भद्रं कर्णेभिश्शृणुयाम० । ऋ. १,८९,८; सा. १८७४; तै. आ. १,१,१ । स्वस्ति न इन्द्रो० । ऋ. १,८९,६; सा. १८७५; तै. आ. १,१,१; ११,२; १०,१,१ ]

पृंषदश्वा मरुंतः पृश्निमातरश्शुभंयावानो विदंथेषु जंग्मयः ।
अग्निजिह्वा मंनवस्सूरचक्षसो विंश्वे मा देवा अंवसागमन्निह ॥ ३
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ४
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाँ शश्वन्त उपयन्ति वाजाः ॥ ५
श्रुत्कर्णाय कवये वेद्याय वचोभिर्नाकमुपयामि शँसन् ।
यतो भयमभयत्वं नो अस्त्वग्ने देवानामव हेड इक्ष्व ॥ ६
अग्निं वो देवमग्निभिस्सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ ७
घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम ।
घृतप्रुषो हरितस्त्वावहन्तु घृतं पिबन् यजताद्देव देवान् ॥१॥ ८

इमो अग्ने वीततमानि हव्याजस्रा वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तु ॥ ९
सप्त ते अग्ने त्रयस्त्रिँशद्यन्मे मनसो विश्वकर्माग्निं युनज्मीन्धानास्त्वाग्निर्न ईडित ईडितव्यैर्देवैः
पार्थिवैः पातु वायुर्न ईडित ईडितव्यैर्देवैरन्तरिक्ष्यैः पातु सूर्यो न ईडित ईडितव्यैर्देवैर्दिव्यैः पातु
विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पात्वग्निर्यजुर्भिः पूषा स्वगाकारैस्त इमं यज्ञमवन्तु ते मामव-
न्त्वनु व आरभेऽनु मारभध्वम् ॥२॥ १०

पृथिवि विभूवरि सिनीवाल्युरंध आचित्ते मनस्ते भुवो विवस्ते य ऊर्मिर्हविष्य इन्द्रियावांस्तं
व ऋध्यासँ सोमस्याज्यमसि हविषो हविर्ज्योतिषो ज्योतिर्विश्वेषां देवानां भागधेयीस्स्थ देववीतये
वो गृह्णामि ॥ ११
सं वस्सिञ्चन्तु मरुतस्सं पूषा सं धाता समिन्द्रस्सं बृहस्पतिः ।
सं वोऽयमग्निस्सिञ्चतु प्रजया च धनेन च । आयुष्मन्तं कृणोत मा ॥ १२

[ पृषदश्वा मरुतः० । ऋ. १,८९,७ । शतमिन्नु शरदो० । ऋ. १,८९,९ । प्रेद्धो अग्ने दीदिहि० । ऋ. ७,१,३; सा. १३७५; तै. सं. ४,६,५,४ । श्रुत्कर्णाय कवये० । अथर्व. १९,३,४ । अग्निं वो देवमग्निभिः० । ऋ. ७,३,१; सा. ११११ ]

[ १ ] कपि. ४८,३ । मै. १,५,२०; ६,३०; ७,५; ८,५९; २,१०,२४,२९, ११,९; ४,७,५ । वा. १७,७९; ८,६१, १८,५१; ३,१८ । काण्व. १८,७९, २०,२१; ३,२४ । [ विश्वकर्मा० । ऋ. १०,८२,२; तै. सं ४,६,२,१; नि. १०,२६ ]

[ ३ ] कपि. ४८,४ । मै. २,४,२४; ७,५९—६१; १३,१,११—१२; १३,१३; ४,९,२४६—२४८; ४,११,९३ । वा. ६,२७; ११,५०—५२; ३६,१४—१६ । काण्व. ६,३९—४०; १२,५१—५३, ३६,१४—१६ ।

मान्दा वशाः ॥ १३

आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः ।
तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसागन् ॥ १४
आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्म आसाम् ।
मेने भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥ १५
समन्या यन्त्युप यन्त्यन्यास्समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परितस्थुरापः ॥ १६
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १७
यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ १८
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ १९
स ईं वृषा जनयँस्तासु गर्भँ स ईँ शिशुर्धयति तँ रिहन्ति ।
सो अपां नपादूर्जयन्नप्स्वन्तर्वसुधेयाय विधते विभाति ॥ २०
इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणो रायस्पोषः प्रजायताम् ॥ २१
अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिस्स्वपत्या सुवीरा ।
इदं बर्हिरति बर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः ॥ २२
स आ दमे सुदुघा यस्य धेनुस्स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥३॥ २३

स्कन्ना द्यौस्स्कन्ना पृथिवी स्कन्नं विश्वमिदँ हविः ।
स्कन्नादो विश्वा भूतानि प्र स्कन्नं जायताँ हविः ॥ २४

इह गावोऽयं यज्ञः ॥ २५

---

[ समन्या यन्त्युप० । ऋ १,३५,३; सा. ६०७; तै. सं. २,५,१२,१ । आपो हि ष्ठा० । ऋ. १०,९,१; सा. १८३७, अथर्व. १,५,१; तै. सं. ४,१,५,१; ५,६,१,४; ७,४,१९,४; तै.आ.४,४२,४; १०,१,११; नि. ९,२७। यो वश्शिवतमो० । ऋ. १०,९,२; सा. १८३८, अथर्व. १,५,२; तै. सं. ४,१,५,१; ७,४,१९,४; तै. आ. ४,४२,४; १०,१,११ । तस्मा अरं गमाम० । ऋ. १०,९,३; सा. १८३९; अथर्व. १,५,३; तै. सं. ४,१,५,१; ५,६,१,४, ७,४,१९,४, तै. आ. ४,४२,४; १०,१,११ । स ईं वृषा जनयँस्तासु (०यत्तासु)० । ऋ. २,३५,१३ । इह गावः प्रजा० । अथर्व. २०,१२७,१२ । स (स्व) आ दमे सुदुघा० । ऋ. २,३५,७ ]

[ ४ ] कपि. ४८,५ । [ इह गावः० । अथर्व. २०,१२७,१२ । अयं यज्ञः० । ऋ. १,१७७,४]

पयस्वतीरोष ओषधयः पयस्वन्मामकं वचः ।
अपां पयस्वद्यत् पयस्तेन नस्सह वर्धताम् ॥ २६
यद्वामृक्षच्छकुनिर्मुखेन निर्ऋते तव । अग्निष्टत् सर्वँ शुन्धतु हव्यवाड् घृतसूदनः ॥ २७
यद्वामृक्षच्छ्वपान्मुखेन निर्ऋते तव । अग्निष्टत् सर्वँ शुन्धतु हव्यवाड् घृतसूदनः ॥ २८
भूतिर्दभ्रा घृतेन वर्धतां यज्ञं यज्ञाय मुञ्चतु स्वाहा घृतेन वर्धतां भूतिर्मुञ्चेमं यज्ञं मुञ्च यज्ञपति-
मँहसस्स्वाहा ॥ २९
यास्ते अग्ने समिधो अप्स्वन्तर्वेश्मन् पृथिव्यां उप सूर्ये याः ।
तास्ते गच्छन्त्वाहुतीर्घृतस्य देवाव्ये यजमानाय शर्म ॥४॥ ३०

यज्ञस्य हि स्थ ऋत्विजा इन्द्राग्नी कल्पना युवम् ।
हुताहुतस्य तृम्पतमहुतस्य हुतस्य च ॥ ३१
हुतस्य चाहुतस्य चाहुतस्य हुतस्य च ।
पीतापीतस्य सोमस्यास्य हव्यस्येन्द्राग्नी वीतं पिबतमागतम् ॥ ३२
मेमं यज्ञं तमो विदन्मर्त्विजो मो इमाः प्रजाः ।
मा यस्सोमं पिबादिमँ सँसृष्टमुभयं कृतम् ॥ ३३
मा नो व्वारिषुः पितरो मोत देवा मा नस्सबन्धुरुत वान्यबन्धुः ।
मा नो दुश्शँसो अघशँस ईशताहुतोऽयं यज्ञो अप्येतु देवान् ॥ ३४
सप्तर्त्विजस्सप्त सदास्येषां दश क्षिपो अश्विना पञ्चवाजा ।
प्राणो व्यानोऽपानो मन आकूतमग्निस्स्वाहा देवा हविरिदं जुषन्ताम् ॥५॥ ३५

आत्मा यज्ञस्य रँह्या सुष्वाणः पवते सुतः । प्रत्नानि पाति काव्यः ॥ ३६
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥ ३७
आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य योनिरमृतं विजायते ।
समीचीनास्सुदानवः प्रीणन्ति तन्नरो हितमवमेहन्ति पेरवः ॥ ३८
देवा देवेषु श्रयन्तां प्रथमा द्वितीयेषु श्रयन्तां द्वितीयास्तृतीयेषु श्रयन्तां ये स्थ त्रय एका-
दशास्त्रयश्च त्रिंशच्च त्रयश्च त्री च शता च त्रयश्च त्री च सहस्रा ते इमं यज्ञमवन्तु ते मामवन्त्वनु

[ पयस्वतीराप (०रोषधयः)० । ऋ. १०,१७,१४; अथर्व. ३.२४,१; १८,३,५६, तै. सं १,५,१०,२ ]
[५] कपि. ४८,६। [ यज्ञस्य हि स्थ ऋत्विजा० । ऋ. ८,३८,१, सा. १०७३, तै ब्रा. ३,७,८,३ ]
[६] कपि. ४८,७। [ आत्मा यज्ञस्य रँह्या० । ऋ. ९,६,८ । गोषा इन्दो नृषा० । ऋ. ९,२,१०; सा. १०४५ ।
आत्मन्वन्नभो दुह्यते० । ऋ. ९,७४,४ ]

व आरभेऽनु मारभध्वम् ॥६॥ ३९

वसवस्त्वोदीरयन्तु रुद्रास्त्वोदीर्पयन्त्वादित्यास्त्वोच्छ्रयन्तु विश्वे त्वा देवा दृँहन्तु ॥ ४०

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
देवा ह धर्मणा ध्रुवा यजमानः पशुभिर्ध्रुवः ॥ ४१

दिवि दिव्यान् दृँहान्तरिक्षेऽन्तरिक्ष्यान् दृँह पृथिव्यां पार्थिवान् दृँह ॥ ४२

आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्यज्ञो अधिभ्रशत् ॥ ४३

ध्रुवं ध्रुवेण हविषा हविरव सोमं नयामसि ।
यथा न इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥ ४४

स्वाहा दिव आप्यायस्व स्वाहान्तरिक्षादाप्यायस्व स्वाहा पृथिव्या आप्यायस्वायुर्धा असि
ध्रुवायुर्मे धेहि वयोधा असि ध्रुव वयो मे धेहि तनूपा असि ध्रुव तन्वं मे पाहि चक्षुष्पा असि ध्रुव
चक्षुर्मे पाहि वर्चोधा असि ध्रुव वर्चो मे धेहि ॥ ४५

अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय ।
विश्वस्मै भूताय ध्रुवो अस्तु देवास्स पिन्वस्व घृतवद्देव यज्ञ ॥ ४६

इहैवैधि मापच्योष्ठाः पर्वत इवाविचाचलत् । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमु धारय ॥ ४७

इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा हविः ।
तस्मै सोमो अधिब्रुवत् तस्मा उ ब्रह्मणस्पतिः ॥ ४८

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामसि ॥७॥ ४९

असवे स्वाहा वसवे स्वाहा वसुधेयाय स्वाहा भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये
स्वाहा भूताय स्वाहा ॥ ५०

---

[७] कपि. ४८,९ । मै. १,३,४८; २,७,१०१; ४,६,४० । वा. २,१६,२६; ३,१७; १४,१७; २२,१ । काण्व. २,३३, ४८; ३,२३; १५,१७; २४,१ । [ **ध्रुवा द्यौर्ध्रुवा पृथिवी०** । ऋ. १०,१७३,४; अथर्व. ६,८८,१; तै. ब्रा. २, ४,२,८ । **आ त्वाहार्षमन्त०** । ऋ. १०,१७३,१, अथर्व. ६,८७,१; तै. सं. ४,२,१,४; तै. ब्रा. २,४,२,८ । **ध्रुवं ध्रुवेण हविषा०** । ऋ. १०,१७३,६, अथर्व. ७,९४,१; तै. सं. ३,२,८,६ । **अध्वर्योऽयं यज्ञो अस्तु०**। तै. सं. ३,१,९,३ । **इहैवैधि मापच्योष्ठाः०** । ऋ. १०, १७३,२; अथर्व. ६,८७,२; तै. ब्रा. २,४,२,८ । **इममिन्द्रो अदीधरद्०** । ऋ. १०,१७३,३; अथर्व. ६,८७,३; तै. ब्रा. २,४,२,९ ]

[८] कपि. ४८,९ । मै. २,५,१५; ७,२००; ३,११,१३ । वा. २,२; ७,२६; ९,२०; १३,५; १८,२८; २२,३० । काण्व. २,३; ७,२९; १०,२७; १४,५; १९,४०; २४,४२ ।

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ ५१
यस्ते द्रप्सस्स्कन्दति यस्ते अँशुर्बाहुच्युतो धिषणाया उपस्थे ।
अध्वर्योर्वा परि वा यः पवित्रात् तत् ते जुहोमि मनसा वषट्कृतम् ॥ ५२
यो द्रप्सो अँशुः पतितः पृथिव्यां परिवापात् पुरोडाशात् करम्भात् ।
धानासोमान्मन्थिन इन्द्र शुक्रात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥ ५३
यस्ते द्रप्सो मधुमाँ इन्द्रियावान् स्वाहाकृतः पुनरप्येति देवान् ।
अध्वर्योर्वा परि वा यः पवित्रात् तत् ते जुहोमि मनसा वषट्कृतम् ॥ ५४
यस्ते द्रप्सस्स्कन्दति यस्ते अँशुरवश्च यः परो दिवः ।
अयं देवो बृहस्पतिस्सं तत् सिञ्चतु राधसा ॥८॥ ५५

विसृष्टधेनास्सलिला घृतश्च्युतो वसन्तो ग्रीष्मो मधुमन्ति वर्षाः ।
शरद्धेमन्त ऋतवो मयोभुव उदप्रुतो नभसी संवसन्ताम् ॥ ५६
आ नः प्रजामा देवानां त्वमग्ने व्रतपा असि ॥ ५७
यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमापृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति ॥ ५८

मधुश्च माधवश्च वासन्तिका ऋतू शुक्रश्च शुचिश्च ग्रैष्मा ऋतू नभश्च नभस्यश्च वार्षिका ऋतू
इषश्चोर्जश्च शारदा ऋतू सहश्च सहस्यश्च हैमन्तिका ऋतू तपश्च तपस्यश्च शैशिरा ऋतू त इमं यज्ञमवन्तु
ते मामवन्त्वनु व आरभेऽनु मारभध्वम् ॥९॥ ५९

असवे स्वाहा वसवे स्वाहा विभवे स्वाहा विवस्वते स्वाहा शूषाय स्वाहा सँसर्पाय स्वाहा मलि-
म्लुचाय स्वाहा गणश्रिये स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहाभिभवे स्वाहाधिपतये स्वाहा दिवा-
पतये स्वाहेन्द्रस्य ग्रहोऽस्यगृहीतो ग्राह्यो देवानां पूरसि तां त्वा प्रविशामि तां त्वा प्रपद्ये सह
गृहैस्सह प्रजया सह पशुभिस्सहर्त्विग्भिस्सह सदस्यैस्सह सोम्यैस्सह दक्षिणीयैस्सह यज्ञेन सह यज्ञ-
पतिना ॥ इन्द्राग्नी परिधी मम वाता देव पुरा कृता तत्त्वेन्द्रग्रह प्रपद्ये सगुस्साश्वस्सपूरुषस्सह

[ द्रप्सश्चस्कन्द पृथिवीं (प्रथमाँ)० । ऋ. १०,१७,११; अथर्व १८,४,२८; तै. सं. ३,१,८,३; ४,२,८,२; ९,५; तै. आ. ६,६,१ । यस्ते द्रप्सस्स्कन्दति० । ऋ. १०,१७,१२; तै. सं ३,१,१०,१ । यो द्रप्सो अँशुः मधुमाँ० । तै. सं. ३,१,१०,१-२ । यस्ते द्रप्सस्स्कन्दति (स्कन्नो)० । ऋ १०,१७,१३ ]

[९] कपि. ४८,१० । मै. २,८,१४ । वा. १३,२५ । काण्व. १४,२६ ।

[१०] कपि. ४८,८; ४८,१२ । मै. ३,१२,११(१३) । वा. २०,३० । काण्व. २४,४२ । तै. ब्रा. ३,१०,७ । [ चन्द्राय स्वाहा० । अथर्व. १९,४३,४ ]

यन्मेऽस्ति तेन ॥ अरिष्टया अव्यथ्यै संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभुवे स्वाहारिष्टया
अव्यथ्यै संवेशायोपवेशाय त्रिष्टुभे जगत्या अनुष्टुभे छन्दसेऽभिभुवे स्वाहा ॥१०॥ ६०-६२

द्यौश्च त्वा पृथिवी च श्रीणीतामहश्च त्वा रात्री च श्रीणीतां वाक् च त्वा मनश्च श्रीणीतामापश्च त्वौषधयश्च श्रीणन्त्वृक् च त्वा साम च श्रीणीताँ स्तोमश्च त्वा यजुश्च श्रीणीतां बृहच्च त्वा रथंतरं च श्रीणीतां यज्ञश्च त्वा दक्षिणा च श्रीणीताँ सूर्यश्च त्वा चन्द्रमाश्च श्रीणीतां दर्शश्च त्वा पूर्णमासश्च श्रीणीतां ब्रह्म च त्वा क्षत्रं च श्रीणीतामर्कश्च त्वाश्वमेधश्च श्रीणीताँ श्रीतस्त्वं श्रीतोऽहमिन्दुरिन्दुमवागाँस्तस्य त इन्द इन्द्रियावत इन्द्रपीतस्य सर्वगणस्सर्वगणस्योपहूत उपहूतस्य भक्षयामि ॥११॥
६३

विश्वा अग्ने त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः ॥ ६४

या देव्यष्टकास्यपसामपस्तमा स्वपा असि ।

तस्यै त एना हविषा विधेम त्वं यज्ञे वरुणस्यावया असि ॥ ६५

श्रुत्कर्णाय ॥ ६६

अनुमतेऽनुमन्यस्व न इदं यद्भेषजं कृणुमहे तनूषु ।

यद्वो तोकेषु तनुषु प्रजासु यद्वौष्वोषधीष्वप्सु ॥१२॥ ६७

हिरण्यगर्भः ॥ ६८

तदित् पदं न विचिकेत विद्वान् यन्मृतः पुनरप्येति जीवान् ।

त्रिवृद्भुवनं यद्रथवृज्जीवो गर्भो न मृतस्स्वाहा ॥ ६९

आप्यायस्व सं ते पयांसि ॥ ७०

आप्यायस्व मदिन्तम सोम विश्वेभिरँशुभिः । भवा नस्सुश्रवस्तमस्सखा वृधे ॥१३॥ ७१

अप्स्वग्ने ॥ ७२

---

[११] कपि. ४८,११ । वा ८,१२ । काण्व. ८,१३ ।

[१२] कपि. ४८,१२ । [ विश्वा अग्ने (उत) त्वया० । ऋ. २,७,३ । श्रुत्कर्णाय कवये० । अथर्व. १९,३,४ ]

[१३] कपि. ४८,१३ । मै. २,७,११८; १३,११०; ३,१२,१८; ४,१३,७१ । वा. १२,११२—११४; १३,४; २३,१; २५,१० । काण्व. १३,१११—११३; १४,४; २५,१; २७,१४ । [ हिरण्यगर्भ· समवर्तताग्रे० । ऋ. १०, १२१,१; अथर्व. ४,२,७; तै. सं. ४,१,८,३; २,८,२; ताण्ड्य ब्रा. ९,९,१२; नि. १०,२३ । तदित् पदं न विचिकेत० । तै. ब्रा. ३,७,१०,६ । आप्यायस्व समेतु ते० । ऋ. १,९१,१६; ९,३१,४, तै. सं. ३,२,५,३; ४,२, ७,४; ताण्ड्य ब्रा. १,५,८ । सं ते पयांसि० । ऋ. १,९१,१८; तै. सं. ४,२,७,४। आप्यायस्व मदिन्तम०। ऋ. १,९१,१७; तै. सं. १,४,३२,१; तै. आ. ३,१७,१ ]

[१४] कपि. ४८,१३ । मै. २,७,१२४ । वा. १२,३६ । काण्व १३,३७। [ अप्स्वग्ने सधिष्टव० । ऋ. ८,४३,९; तै. सं. ४,२,३,२; ११,३ ]

तपोऽष्वग्ने अन्तराँ अमित्रान्तपा शँसमररुषः परस्य।
तपो वसो चिकितानो अचित्तान् वि ते तिष्ठन्तामजरा अयासः॥ ७३
यो नस्सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो अनुष्यात्।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान्॥ ७४
स स्मा कृणोतु केतुमा नक्तं चिद्दूर आ सते।
पावको यद्वनस्पतीन् प्र स्मा मिनात्यजरः॥ ७५
नहि ते अग्ने तन्वः क्रूरमानाश मर्तः। कपिर्बभस्ति तेजनँ स्वं जरायु गौरिव॥ ७६
मेष इव यदुप च वि च चर्वति यदप्सरद्रूरुपरस्य खादति।
शीर्ष्णा शिरो वक्षसा वक्ष एजयन्नँशुं बभस्ति हरितेभिरासभिः॥ ७७
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः।
न्यङ् नियन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्रितः॥१४॥ ७८

अग्निना तपोऽन्वाभवत् सूर्येण तेजो वायुना प्राणा इन्द्रेण देवा यमेन पितरस्सरस्वत्या मनुष्या-
स्सप्तदशेन स्तोमा वामदेव्येन सामानि गायत्र्या छन्दाँसि मण्या रूपाणि हिरण्येन वर्चाँसि तिरश्चि-
राजिना सर्पा अजगरेणाप्सव्याश्श्येनेन पतत्रिणो व्याघ्रेणारण्याः पशवस्सुपर्णेन वयाँस्यश्वत्थेन
वनस्पतय ओदनेनान्नानि यवेनौषधयोऽश्ववृषेणैकशफाः पशवो वृषभेण गावो वृष्णिनावयो बस्तेना-
जाश्चन्द्रमसा नक्षत्राणि ब्राह्मणेन वाचो वाचा देवतास्स्त्रिया विराड् ग्राव्णा पर्वतास्समुद्रेणापोऽद्भि-
स्सत्यँ सत्येनर्तमृतेन तपस्तपसा परमेष्ठी परमेष्ठिना मृत्युर्मृत्युना प्रजाः प्रजाभिस्संगरस्तनूभि
प्रजापतिस्तैर्देवैरन्वाभूतिरनु च भूयासमति च भूयासं ब्राह्मणानाँ श्रेष्ठश्च भूयासम्॥१५॥ ७९

यस्य द्रोणकलश उपदस्यति कलशमेवं तस्योपवायन्तं प्राणोऽनूपदस्यति प्राणो हि सोमस्तदाहुः
पयोऽवनयेदित्यथो खल्वाहुरन्तर्हितमिव वा एतद्यत् पयो हिरण्यमेवापोऽभ्यवनयेद्धिरण्यम-
भ्युन्नयेदमृतं वा आप आयुर्हिरण्यममृतादेवाध्यायुरात्मन् धत्ते चत्वारो वरा देया ब्रह्मण उद्गात्रे
होत्रेऽध्वर्यव एते वै यज्ञस्येन्द्रास्तानेव प्रीणाति सैवं तत्र प्रायश्चित्तिर्यस्य चमस उपदस्यति चमस-
मेवं तस्योपवायन्तं प्राणोऽनूपदस्यति प्राणो हि सोमो यमध्वर्युरन्तमं ग्रहं गृह्णीयात् तस्य संपातं-
मवनयेत् प्रायश्चित्त्यै वै सोमो गृह्यते प्रायश्चित्त्यैवास्मै प्रायश्चित्तिं करोति सर्वमायुरेति सैवं तत्र

[ तपोऽष्वग्ने अन्तराँ०। ऋ. ३,१८,२; तै. आ. ४,५,५। यो नस्सनुत्यो अभिदासद०। ऋ. ६,५,४। स स्मा कृणोतु (०ति) केतुमा०। ऋ. ५,७,४। नहि ते अग्ने तन्वः०। अथर्व. ६,४९,१; तै. आ. ६,१०,१। मेष इव यदुप०। अथर्व. ६,४९,२। सुपर्णा वाचमक्रतोप०। ऋ. १०,९४,५; अथर्व. ६,४९,३]
[१५] तै. सं. ७,३,१४। [१६] कपि. ४८,१।

प्रायश्चित्तिर्यस्य ग्रावापिशीर्येते पशुभिर्व्यृध्यते पशवो हि ग्रावाणो द्युतानस्य मारुतस्य ब्रह्मसाम्नेन स्तुवीरन् पशवो वै द्युतानो मारुतस्स्वेनैवैनँ साम्ना संदधाति पशुमान् भवति सैव तत्र प्रायश्चित्तिः प्रजापतये स्वाहेत्यभक्षणीयानुपरवेष्ववनयेत् प्राजापत्यो वै सोमः प्रतिष्ठामेवैनं गमयति सैव तत्र प्रायश्चित्तिर्यस्य सोममभिदहेद्ब्रह्मानध्वर्युस्स्पाशयेत स्तोत्राण्युद्गाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः पञ्च वरा देयाः पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धेऽवभृथं गत्वा पुनरुदेत्य पुरा द्वादश्याः पुनर्दीक्षेत यद् द्वादशीमतिनयेदन्तर्धीयेत तत्र ता दक्षिणा दद्याद्याः पूर्वस्मिन् दास्यन् भवति सैव तत्र प्रायश्चित्तिः ॥१६॥ ८०

सर्वान् वा एषोऽग्नौ कामान् प्रवेशयते योऽग्निमन्वाधाय व्रतमुपैति स यदनिष्ट्वा प्रयायादकाम-प्रीता एनं कामा नानु प्रयायुरतेजा अवीर्यस्स्यात् स प्रयास्यञ्जुहुयात् ॥ ८१

तुभ्यं ता अङ्गिरस्तम विश्वास्सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ ८२

इति कामानेवास्मिन् दधाति कामप्रीता एनं कामा अनु प्रयान्ति तेजस्वी वीर्यावान् भवति संततिर्वा एषा यज्ञस्य योऽग्निमन्वाधाय व्रतमुपैति स यदनिष्ट उद्वायाद्विच्छित्तिरेवास्य सा प्राङ्-मुद्धृत्य मनसोपतिष्ठेत मन इव वै प्रजापतिः प्राजापत्यो यज्ञो यज्ञमेव संतनोति भूरिति व्याहरेद्भूतो वै प्रजापतिर्भूतिमेवोपैत्यायुषा वा एष वीर्येण व्यृध्यते यस्याहिताग्नेरग्निरपक्षायति स यावच्छम्यया पराविध्येद्यदि तावदपक्षायेत् तँ संभरेत् ॥ ८३

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व ।
संवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे ॥ ८४

इति ब्रह्मणैवैनँ संभरति सैव तत्र प्रायश्चित्तिर्यदि परस्तरामपक्षायेदनुप्रयाय वसेत् सैव तत्र प्राय-श्चित्तिरोषधीर्वा एतस्य पयः पशून् प्रविशति यस्य हविषेऽपाकृता वत्सा धयन्ति वायव्या यवागूं निर्वपेद्वायुर्वै पयसः प्रदाता तमेव भागधेयेनोपधावति सोऽस्मै पयः प्रयच्छत्यथोत्तरस्मै हविषे वत्सानपावर्तयेत् सैव तत्र प्रायश्चित्तिः ॥१७॥ ८५

अर्धं वा एतस्य यज्ञस्य मीयते यस्य सायं दुग्धं हविरार्तिमार्छतीन्द्राय व्रीहीन्निरुप्योपवसेत् पयो वा ओषधयः पय एवारभ्योपवसति यत् प्रातस्स्यात् तच्छतं कुर्युरैन्द्रं इतरः पुरोडाशस्स्यात् पयो वा ओषधयः पयसैवास्मै पयः प्रदापयत्यथोत्तरस्मै हविषे वत्सानपावर्तयेत् सैव तत्र प्राय-श्चित्तिरुभयान् वा एष देवान् भागधेयेन व्यर्धयति ये यजमानस्य सायं च प्रातश्च गृहमागच्छन्ति

[१७] कपि. ४८,१५ । वा. ११,११६ । काण्व. १३,११५ । तै. ब्रा. ३,७,१,१-६ । [तुभ्यं ता अङ्गिरस्तम० । ऋ. ८,४३,१८; तै. सं. १,३,१४,३; तै. ब्रा. ३,७,१,१ । इदं त एकं पर ऊ त०। ऋ. १०,५६,१; सा. ६५; अथर्व. १८,३,७; तै. ब्रा. ३,७,१,३; तै. आ. ६,३,१; ४,२]

[१८] कपि. ४८,१६ । तै. ब्रा. ३,७,१,६-९; ३,७,२,६-७ । वा. ३,६३ । काण्व. ३,७६ ।

यस्य सायं प्रातर्दुग्धं हविरार्तिमार्छेत्योदनं पञ्चशरावं निर्वपेदग्निं देवतानां प्रथमं यजेदग्निमुखा एव
देवताः प्रीणात्यग्निं वा अन्वन्या देवता इन्द्रमन्यास्ता एवोभयीः प्रीणात्यथोत्तरस्मै हविषे वत्सा-
नपावर्तयेत् सैव तत्र प्रायश्चित्तिर्यत् कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानस्स्याद्यदनायतने निन-
येदनायतनस्स्यान्मध्यमेन पर्णेन द्यावापृथिव्ययर्चान्तःपरिधि निनयेद् द्यावापृथिवी वै यज्ञस्य
प्रतिष्ठा प्रतिष्ठामेवैनं गमयति सैव तत्र प्रायश्चित्तिर्यत् प्रयाजेष्वनिष्टेषु प्राङङ्गारस्स्कन्देदध्वर्यवे च
यजमानाय चार्कं स्याद्यद्दक्षिणा ब्रह्मणे च यजमानाय चार्कं स्याद्यत् प्रत्यङ् होत्रे च पत्न्यै चार्कं
स्याद्यदुदङ्ङग्नीधे च यजमानस्य च पशुभ्योऽर्कं स्यात् तं प्रहरेत् ॥ ८६

सहस्रशृङ्गो वृषभो जातवेदास्स्तोमपृष्ठो घृतवान् सुप्रतीकः।
मा मा हासीन्नाथितो नेत्त्वा जहानि सहस्रपोषस्स गोपोषं च यच्छ ॥ ८७

इति ब्रह्मणैवैनं प्रहरति सैव तत्र प्रायश्चित्तिरर्धं वा एतस्य यज्ञस्य मीयते यस्य व्रत्येऽहन्
पत्न्यनालम्बुका भवति तामपरुध्य यजेत सर्वेणैव यज्ञेन यजते तामिष्ट्वोपह्वयेत ॥ ८८

सा त्वमस्यमोऽहममोऽहमस्मि सा त्वम्। ता एहि संरभावहै पुंसे पुत्राय कर्तवे।
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ८९

इत्यर्ध एवैनामाभजति सैव तत्र प्रायश्चित्तिः ॥१८॥ ९०

यदवृष्टेन जुहुयादपरूपमस्यात्मञ्जायेत यत् प्रत्येयात् पापीयान् स्याद्यन्न जुहुयादार्ति-
मार्छेत् ॥ ९१

मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम्।
मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवद्विधेम ॥ ९२

इति मैत्र्यर्चा समिधमाधाय होतव्यं मित्रो वै यज्ञस्य शान्तिर्मित्रेणैवैनच्छमयति तद्धुत्वाथान्यां
दुग्ध्वा पुनर्होतव्यं सैव तत्र प्रायश्चित्तिर्यत् कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानस्याद्यन्न जुहु-
यादार्तिमार्छेत् प्राजापत्ययर्चा वल्मीकवपायामवनयेत् प्राजापत्यो वै वल्मीको यज्ञः प्रजापतिर्यज्ञ
एव यज्ञं प्रतिष्ठापयति तद्धुत्वाथान्यां दुग्ध्वा पुनर्होतव्यं सैव तत्र प्रायश्चित्तिः ॥ यदि पूर्वस्या-
माहुत्यां हुतायामुत्तराहुतिस्स्कन्देद् द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत यदभिजुहुयाच्चतुष्पाद्भिः
पशुभिर्यजमानो व्यृध्यते ॥ ९३-९४

---

[ **सहस्रशृङ्गो वृषभो०** । ऋ. ७,५५,७, अथर्व. ४,५,१, १३,१,१२ । **सा त्वमस्यमो०** । अथर्व. १४,२,७१; तै. ब्रा. ३,७,१,९ ]

[१९] कपि. ४८,१७ । तै. ब्रा. ३,७,२ । [ **मित्रो जनान्यातयति०** । ऋ, ३,५९,१; तै. सं. ३,४,११,५, तै. ब्रा. ३,७,२,३; नि १०,२२ ]

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥ ९५
इति वानस्पत्ययर्चा समिधमाधाय होतव्यं वनस्पतिनैवास्यार्तां चानार्तां चाहुती विदाधार
तद्धुत्वाथान्यां दुग्ध्वा पुनर्होतव्यँ सैव तत्र प्रायश्चित्तिः ॥१९॥ ९६

देवाश्च वा असुराश्चास्मिँल्लोक आसन् स प्रजापतिरकामयत परासुरान्नुदेय प्रजास्सृजेयेति स एतानि चातुर्मास्यान्यपश्यत् स चातुर्मास्यैरेवासुरान् प्राणुदत चातुर्मास्यैः प्रजा असृजत य एवं विद्वाँश्चातुर्मास्यैर्यजते परा भ्रातृव्यं नुदते प्र प्रजया प्र पशुभिर्जायतेऽग्निष्टोमाद्वैश्वदेवं यज्ञक्रतुं निर्माय प्रजापतिः प्रजा असृजतोक्थ्याद्वरुणप्रघासान् यज्ञक्रतुं निर्माय प्रजा वरुणेनाग्राहयदतिरात्रात् साकमेधान् यज्ञक्रतुं निर्मायेन्द्रो वृत्रमहन् वैश्वदेवेन वै सोऽसुरान् प्राणुदत वैश्वदेवेन प्रजा असृजत ॥ सृष्टा वा अन्याः प्रजा आसन्नसृष्टा अन्या अथ प्रजापतिरकामयत प्रजास्सृजेयेति संवत्सरो वै यज्ञो यज्ञः प्रजापतिस्स एते आत्मनोऽधि पयसी निरमिमीतोधन्यं च वंद्यं चाथैताभ्यो देवताभ्य एतानि हवीँषि भागं निरवपत् तैः प्रजा असृजततेभ्यो वै ताः प्रजाः प्राजायन्ततैव एतानि पञ्च हवीँषि पञ्च ह्युतवस्तत एवं प्रजायतेऽग्निरेव प्रावापयत् सोमो रेतोऽदधान्मिथुनं वा अग्निश्च सोमश्च सविता प्रासुवद् संवत्सरो वै सविता द्वादश मासास्संवत्सरस्तस्माद् द्वादशकपालोऽथो वैश्वदेवत्वायैव द्वादशकपाल उपाँशु यजत्यनिरुक्तो हि संवत्सरस्सरस्वत्येवं सृष्टासु वाचमदधात् पूषणं प्रतिष्ठामभ्यसृजन्त ॥ वाग्वै सरस्वती पशवः पूषा मिथुनं वाक् च पशवश्च मध्यतो वै प्रजा विसृज्यन्तेऽन्ततो मिथुनाद्विषूचीः प्रजायन्ते तदेतत् प्रजापतेरेवाधि मध्यतः प्रजा विसृज्यन्तेऽथादोऽन्ततो मिथुनादुभयतो विषूचीः प्रजायन्ते वार्त्रघ्नानि वा एतानि हवीँष्यग्निना वा अनीकेनेन्द्रो वृत्रमहन् सोमेन राज्ञा सवित्रा प्रसूतस्सरस्वत्या चैत्र्यां पूषा वीर्यैरन्वतिष्ठत विजितिरेवैतानि हवीँषि ॥२०॥ ९७–९९

[२२७७]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां प्रायश्चित्तिर्नाम पञ्चत्रिंशं स्थानकं संपूर्णम् ॥३५॥



[ यत्र वेत्थ वनस्पते० । ऋ. ५,५,१०; तै. ब्रा ३,७,२,५ ]
[२०] कपि. ४८,१८ । मै १,१०,५ (२८) । तै. ब्रा. १,६,१—२ ।

अथ षट्त्रिंशं स्थानकम् ।

## चातुर्मास्यानि ।

इन्द्रस्य वै वृत्रं जघ्नुष इन्द्रियं वीर्यमपाक्रामत् तदिदँ सर्वमनुप्राविशदप ओषधीर्वनस्पतीँस्तेन देवा अश्राम्यँस्त इदँ समनयन् यत् सान्नाय्यं मिथुनं वै दधि च पयश्च यत् सँसृष्टं मण्डमिव मस्त्विव परीव ददृशे गर्भ एव स तपसो वै प्रजाः प्रजायन्ते तपस्त्वमेतद्गच्छति यच्छृतत्वं गच्छति तत एव प्रजायते यद्वैश्वदेव्यामिक्षया प्रजा असृजत तस्मादिमा वैश्वदेवीः प्रजास्तोका वै विश्वे देवास्तानेवैतद्यजत्यमुतःप्रदानाद्धि प्रजा उपजीवन्ति ॥ योनिर्वा एष प्रजानां तं मरुतोऽभ्यकामयन्त तेऽँहोगृहीता असृज्यन्त यत् स्वतवद्भ्यस्स्वत्वायैव निष्कृत्यै पशवो वै मरुतः प्रजननायैष पशूनाँ सप्तकपालो भवति सप्त हि मरुतो निरवत्त्या एव मारुताऽथो ग्राम्यमेवैतेनान्नाद्यमवरुन्द्धे ता वैश्वदेवेन सृष्टा विषूचीर्व्युदायँस्ता द्यावापृथिव्येन पर्यगृह्णात् प्रजानामेवैष सृष्टानां परिगृहीत्यै यदेककपालस्तेन प्राजापत्यः प्रजापतिमेवैतद्देवता अभि प्रतितिष्ठति यजमानो वा एककपाल आहवनीयस्स्वर्गो लोकस्सर्वहुतं जुहोति हविर्भूतमेवैनँ स्वर्गं लोकं गमयत्यात्मा वा एककपालः पशवो घृतं यद् घृतेनाभिपूरयति पशुभिरेवैनँ समर्धयति यदाभिपूरयेदभुञ्जन्त एनं पशव उपतिष्ठेरन्नधरँ ह्येनं पशुभ्यः करोत्याविःपृष्ठः कार्य उत्तरमेवैनं पशुभ्यः करोति भुञ्जन्त एनं पशव उपतिष्ठन्ते तत् तन्न सूक्ष्यमभ्येव पूरयेन्न हि पशवो न भुञ्जन्ति बर्हिषदं करोति प्रतिष्ठित्यै यजमानं वै हूर्छन्तं प्रजा अनुहूर्छन्ति यजमानं प्रतितिष्ठन्तमनु प्रतितिष्ठन्त्यृजुः प्रतिष्ठितो होतव्यो यजमानस्य प्रतिष्ठित्यै ॥१॥ १-२

त्रेधासंनद्धस्तर्हि भवति त्रेधासंनद्ध इध्मस्त्रेधाविहितानि हि संवत्सरेण चातुर्मास्यानि वसन्ता यजेत प्रजननाय प्रवणे यजेत प्रजननाय प्रस्वो भवन्ति प्र मा जनयानीति नोत्तरवेदिमुपवपन्ति प्रजननायाग्निं मन्थत्यग्निं वै पशवोऽनुप्रजायन्ते प्रजननायाथो वृषाणमेवैतं यजमानाय जनयति पशवो वै पृषदाज्यं नानारूपाः पशवस्तस्मान्नानारूपमाग्नेयं घृतमैन्द्रं दध्यैन्द्राग्नं पृषदाज्यं देवतया प्राणापानौ वा इन्द्राग्नी मिथुनं प्राणापानौ मिथुनयोनयः प्रजास्तस्मादेव मिथुनात् प्रजायते ॥ यदि वसन्ता यजेत द्विरुपस्तृणीयात् सकृदभिघारयेदोषधीरेव प्रतिष्ठापयति यदि प्रावृषि यजेत सकृदुपस्तृणीयाद् द्विरभिघारयेद्वृष्ट्यैव पशूनभिजिघर्ति प्राणेभ्यो वै प्रजाः प्रजायन्ते प्राणा एतानि नव हवीँषि नव प्राणा आत्मा देवता तत एव प्रजायते नव प्रयाजा नवानुयाजा द्वा आज्यभागा अष्टौ

[१] मै. १,१०,५, ७ (२८-३०) । तै. ब्रा. १,६,१-३ ।
[२] मै. १,१०,७—८ (३०—३१) । तै. ब्रा. १,६,३ ।

हवीँष्यग्नये समवद्यति वाजिनो यजति तत् त्रिँशत् त्रिँशदक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रतितिष्ठति त्रिँशदक्षरा वै विराड् विराजो योनेः प्रजाः प्रजायन्ते विराज एवैना योनेः प्रजनयति॥ त्रिँशत् त्रिँशद्वै रात्रयो मासो यो वै मासस्स संवत्सरस्संवत्सरः प्रजापतिस्तदेतत् प्रजापतेश्चैव विराजश्चाधि मिथुनात् प्रजायत एकैकया वा आहुत्या द्वादश द्वादश रात्रीरयुवन्त ता यावतीस्संवत्सरस्य रात्रयस्तावतीस्संख्याने संवत्सरमेव भ्रातृव्याद्युवते वैश्वदेवेन वै ते चतुरो मासोऽयुवन्त वरुणप्रघासैः पराँश्चतुरस्साकमेधैः पराँश्चतुरस्तानेव भ्रातृव्याद्युवते यच्चतुरश्चतुरो मासोऽयुवन्त तच्चातुर्मास्यानां चातुर्मास्यत्वम् ॥२॥ ३-५

वैश्वदेवेन यजते प्रजाकामो वा पशुकामो वा न वरुणप्रघासैर्न साकमेधैस्सर्वो वै पुरुषस्साहस्रो जायते यावत्तरसं त्वे गच्छति प्रजननमेतद्धविर्यद्वैश्वदेवं प्रजननमेव यजते स्वां मात्रां गच्छानीति यदा सहस्रं पशून् गच्छेदथ वरुणप्रघासैर्यजेत यदेव तत् सहस्रमगँस्तस्याँहोऽवयजत ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यो यो वसन्तोऽभूत् प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी यस्त्रयोदशं मासं संपादयति स त्रयोदशं मासमभियजते स चातुर्मास्ययाजी त्रीन् ऋजूनिष्ट्वा चतुर्थमुत्सृजेद् द्वौ परा ऋजू इष्ट्वा तृतीयमुत्सृजेद्ये वै त्रयस्संवत्सरास्तेषाँ षट्त्रिँशत् पूर्णमासा यौ द्वौ तयोश्चतुर्विँशतिर्ये षट्त्रिँशत्यधि ते चतुर्विंशतिमुपयन्त्येष वाव स त्रयोदशो मासस्तमेवैतत् संपादयति तमभियजते॥ यद्बर्हिः प्रयाजेषु यजत्योषधीस्तद्यजति यद्बर्हिरनुयाजेषु फलं तद्यजति यद्बर्हिर्वारितीनां यदेव फलादधि प्रजायते तत् तद्यजति यद्दुरो यजत्युपस्थं तद्यजति यदुषासानक्ता व्युष्टिं चैव निम्रुक्तिं च तद्यजति यज्जोष्ट्री यदेव जातं यज्जनिष्यमानं तद्यजति यदूर्जाहुती यदेवात्ति च पिबति च तत् तद्यजति यद्दैव्या होतारेमे वै दैव्या होतारेमे एव तद्यजति यत् तिस्रो देवीर्वाग्वै तिस्रो देवीर्वाचमेव तद्यजति च्छन्दाँसि वै वाक् छन्दाँस्येव तद्यजति नराशँसं यजति तनूनपाद्वै यज्ञः प्रसृतो नराशँसोऽप्रसृतः प्रसृतो वा एतर्हि यज्ञस्तस्मान्नराशँसमनुयाजेषु यजति त्वष्टारं यजति स हि रूपाणि विकरोति वनस्पतिं यजत्यूर्ग्वै सोमो वनस्पतिस्सौमीरिमाः प्रजाः प्रजास्वेवोर्जं दधाति ॥३॥ ६-७

वाजिनो यजति पशवो वै वाजिनस्तानेव तद्यजति न वा एष सुयज्ञ इव सँस्थिते हि यज्ञे प्रहृतेषु परिधिषु जुहोति यदनवानँ होता यजति तेन यज्ञः क्रियतेऽनुयजत्यग्निस्समिष्टिरग्निः प्रतिष्ठितिस्समिष्ट्या एव प्रतिष्ठित्यै पशवो वै वाजिनो यत् सँस्थापयेत् तान् सँस्थापयेदसँस्थिता ह्येते सदादि प्रजायन्ते बर्हिरनुनिषिञ्चन् गृह्णात्यृषभेष्वेव रेतो दधाति प्रजा वै बर्ही रेतो वाजिनं प्रजास्वेव रेतो दधात्यूर्ध्वज्ञुरासीनो यजत्यूर्ध्वज्ञुर्हि पशुः पशौ रेतो दधाति समुपहूय भक्षयन्ति सोमपीथ इव ह्येष

[३] मै. १,१०,८-९ (३१-३२)। तै. ब्रा. १,६,३।
[४] मै. १,१०,९ ((३२-३४)। तै. ब्रा. १,६,३।

सर्वे ऋत्विजः प्राश्नन्ति वाजिनो मे यज्ञं वहानित्यात्मना प्राश्नीयादात्मन्नेव वाजं धत्ते ॥४॥ ८

ता वैश्वदेवेन सृष्टास्तस्मिँस्तरुणिमन्वरुणोऽगृह्णादथो आहुरति वै तास्तमचरँस्ता अतिचरन्तीर्वरुणेनाग्राहयदिति तस्मात् पिता नातिचरितवै वैश्वदेवेन वै प्रजापतिः प्रजा असृजत तस्य मरुतो हव्यं व्यमथ्नत ततोऽँहोगृहीता असृज्यन्त ताभ्यो भेषजमैच्छत् तदात्मन्नेवैच्छत् स एतदात्मनोऽधि पयो निरमिमीत तेनाभ्योऽँहोऽवायजदँहसो वा एषावेष्टिर्यद्वरुणप्रघासा जग्धाद्वै वरुणो गृह्णाति तस्माद्वरुणप्रघासा यावद्वै कुमारेऽन्नो जात एनस्तावदेतस्मिन्नेनो भवति यो वरुणप्रघासैर्यजतेऽथैतानि पञ्च हवींषि संतत्यै ॥ सावित्रोऽष्टाकपालो गायत्रो हि देवानाँ सवितेन्द्राग्नो द्वादशकपालो वैश्वदेवत्वाय यद्वै तत् प्रजा वरुणगृहीता अवेव्लीयन्तेव तदास्विन्द्राग्नी बलमधत्तां न वै ताः प्राणँस्ता अप्राणन्तीर्वरुणोऽगृह्णात् प्राणापानौ वा इन्द्राग्नी प्राणापाना एवैतन्मध्यतो धीयेते शिथिला वै ताः प्रजा वरुणोऽगृह्णादोजो वीर्यमिन्द्राग्नी ओज एवैतद्वीर्यं मध्यतो धीयते निरवद्या एव मारुती निर्वरुणत्वाय वारुणी कन्त्वाय कायो यद्वा आभ्यस्तद्वरुणगृहीताभ्यः कमभवत् तस्मात् कायः प्रजापतिर्वै ताः प्रजा वरुणेनाग्राहयत् प्रजापतिः क आत्मन्नेवैना वरुणान्मुञ्चत्यृतं वै सत्यं यज्ञोऽनृतँ स्त्र्यनृतमेषा करोति या पत्युः क्रीता सत्यथान्यैश्चरत्यनृतमेव निरवदायतँ सत्यमुपैति यद्वाचयति मेध्यामेवैनां यज्ञियां करोति न मिथु ब्रूयाद्यन्मिथु ब्रूयात् प्रियतमेन यातयेत् ॥५॥ ९-१०

आमपेषा भवन्ति सर्वस्याँहसोऽवेष्टयै यद्भृज्ज्येयुर्विच्वकमँहोऽवेष्टँ स्यात् पात्रेभ्यो वै ताः प्रजा वरुणोऽगृह्णाद्यत् पात्राणि पात्रेभ्य एवैना वरुणान्मुञ्चति प्रतिपुरुषं भवन्ति प्रतिपुरुषमेवाँहोऽवयजत एकमधि भवति गर्भेभ्य एव तेनाँहोऽवयजतेऽन्नाद्वै ताः प्रजा वरुणोऽगृह्णाच्छूर्पेणान्नं बिभ्रति तस्माच्छूर्पेण हूयते स्त्रीपुँसौ जुहुतो मिथुना एव प्रजा वरुणान्मुञ्चतः पुरस्तात् प्रत्यञ्चौ तिष्ठन्तौ जुहुतः पुरस्तादेवाग्नेरँहोऽवयजतो यत् पात्राणि य एव द्विपादः पशवो मिथुनास्तेषां तेन पुरस्तादँहोऽवयजतो यन्मेषश्च मेषी च य एव चतुष्पादः पशवो मिथुनास्तेषां तेनोपरिष्टादँहोऽवयजत उभयत एवाँहोऽवयजतः पुरस्ताच्चोपरिष्टाच्च ॥ पात्राणि हुत्वाग्निं संमार्ष्टि यत्राँहोऽवायाक्षुस्तस्मिन्नुत्पूते देवता यजानिति यद्वै प्रजा वरुणो गृह्णाति शमी च यवं च न गृह्णाति हेमन्तौ हि वरुणस्तस्मादेतौ हेमन्न शुष्यतो या एवावरुणगृहीतौ ताभ्यामेना वरुणान्मुञ्चति वरुण्यो वै यवो वरुणदेवत्युस्स्वेनैव भागधेयेन वरुणं निरवदयतेऽथैतौ अनृतपशू अनृताद्वै ताः प्रजा वरुणोऽगृह्णाद्यदेतौ अनृतपशू अनृतादेवैना वरुणान्मुञ्चति स्त्रीपुँसौ भवतो मिथुना एव प्रजा वरुणान्मुञ्चति लोमशौ भवतो मेध्यत्वाय यावन्तो हि पशवो लोम जगृहुस्ते मेधं प्रापुश्शमीपर्णानि भवन्ति शन्त्वाय

[५] मै. १,१०,१०-११ (३५-३६)। तै. ब्रा. १,४,४, १,६,४-५।
[६] मै. १,१०,११-१२ (३६-३७)। तै. ब्रा. १,६,४-५। मा. श्रौ. १,७,४।

भूर्जो वै नामैष वृक्षः कार्यो वा एतस्य स्रुचः प्रजापतिर्वा अन्नाद्यं नावारुन्द्ध तच्छतेध्मेनावारुन्द्ध परश्शतानि कार्याण्यन्नाद्यस्यावरुद्ध्यै सहस्रेध्मो ह त्वा अँहसोऽवेष्टिं विन्द्याच परस्सहस्राणि कार्याण्यँहसोऽवेष्ट्यै ॥६॥ ११-१२

यतीन् वै सालावृकेया आदँस्तेषामेतानि शीर्षाणि यत् खर्जूरास्सोमपीथ एष उदीषति यत् करीराणि यत् करीराणि भवन्ति सोमपीथमेवावरुन्द्धे प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत् पर्वतास्ते पक्षिण आसँस्ते यत्र यत्राकामयन्त तत् परापातमासताथ वा इयं तर्हि शिथिलासीत् तेषामिन्द्रः पक्षानच्छिनत् तैरिमामदृँहद्ये पक्षा आसँस्ते जीमूता अभवँस्तस्मात् ते गिरिमुपप्लवन्ते योनिर्ह्येषामेष तस्माद्गिरौ भूयिष्ठं वर्षति यत् प्राक्षरत् तानि करीराणि तदेतत् प्रावृष्युज्जीमूताः प्लवन्ते यजन्ते वरुणप्रघासैर्वृष्टिमेव संतनोति तस्मात् तर्हि भूयिष्ठं वर्षति वृष्टिँ हि संतनोति न वैश्वदेव उत्तरवेदिमुपवपन्त्युपात्र वपन्ति प्रजाता एव प्रजाः परिगृह्णाति योत्तरा वेदिर्या अत्रीः प्रजास्तासाँ सा योनिस्तास्तामनुप्रजायन्ते या दक्षिणा वेदिर्या आद्याः प्रजास्तासाँ सा योनिस्तास्तामनुप्रजायन्त उभयीरेवैतदत्रीश्चाद्याश्च प्रजाः प्रजनयत्ययं वाव हस्त आसीन्नायं यैषा द्वितीया वेदिस्तयेमं द्वितीयँ हस्तमत्रिन्दँस्तस्मादेष एतस्य परिवेष्टापरजो हि तस्मात् कनीयाञ्ज्यायाँसं परिवेवेष्टि समे कार्ये समौ हीमौ हस्ता असंभिन्ने भवतोऽँहसोऽवेष्ट्यै यत् संभिन्द्युरनवेष्टमँहस्स्यादेकस्फ्यामनु संभिन्दन्त्यनुसंतत्या उपोत्तरां वपन्ति न दक्षिणामनभ्यारोहाय ॥ क्षत्रं वै वरुणो विण्मरुतो नाना यजन्ति पापवसीयसस्य व्यावृत्त्यै यदध्वर्युः करोति तत् प्रतिप्रस्थाता करोति तस्माद्यद्राजा करोति तद्विट्करोति न वैश्वदेवे त्रिँशदाहुतयस्सन्ति न साकमेधेषु वरुणप्रघासेषु वाव त्रिँशदाहुतयो वैराजः पुरुषो दश हस्त्या अङ्गुलयो दश पद्या दश प्राणास्तत् त्रिँशत् त्रिँशदक्षरा विराड्वैराजः पुरुषो यदेतद्ध्यवभृथमवैत्यात्मानमेवाँहोऽवयजते यद्वै यज्ञस्य स्वगाकृतिं न प्राप्नोति वरुणस्तद्गृह्णाति यन्निष्कापेणावभृथमवैति यदेव वरुणगृहीतं तेन वरुणं निरवदयतेऽथो यदेवात्र वरुणस्य न्यक्तं तस्य निरवत्त्या अनपेक्षमाणा आयान्ति वरुणस्याऽनन्ववायायैधोऽस्येधिषीमहीति वरुणमेव निरवदायैधतुमुपयन्ति समिदसि समेधिषीमहीत्याशिषमेवाशास्ते तेजोऽसि तेजो मयि धेहीति तेज एवात्मन् धत्ते ॥७॥ १३-१४

प्रजास्सृष्ट्वाँहोऽवेज्य सोऽकामयत वृत्रँ हन्यामिति स एताभिर्देवताभिस्सयुग्भूत्वोपप्लायत मरुद्भिर्विशाग्निनानीकेन स वृत्रमभीत्य वृत्रं दृष्ट्वोरुस्तम्भगृहीतोऽतिष्ठदनभिधृष्णुवँस्तं मरुत ऐषीकैर्वातरथैरध्यैयन्त तेऽत्यैषँस्तेऽस्य यत्र मर्मागच्छँस्तदचेष्टत् सं वा एनं तदतपँस्तस्मात् सांतपना

---

[७] मैं १,१०,१२-१३ (३७-३८)। वा. २०,२३; ३८,२५। काण्व २२,७; ३८,२४। तै. ब्रा. १,६,४-५।
[एधोऽस्येधिषी महि०। अथर्व ७,९४,४]

[८] मै. १,१०,१४ (३९)। तै. ब्रा. १,६,६,३।

वार्त्रघ्ना वै साकमेधा अग्निना वा अनीकेनेन्द्रो वृत्रमहन्ननीकत्वायैवैषोऽग्निर्देवानाँ सेनानीस्सेनोत्थापनीयमेवैतदिन्द्रो वै वृत्राय वज्रमुद्यमं नाशक्नोत् स एतं मरुद्भ्यो भागं निरवपत् तं मरुतो वीर्याय समतपन् स तेन वीर्येण वज्रमुदयच्छत् सं वा एनं तदतपँस्तस्मात् सांतपना मध्यंदिने निरुप्यस्तर्हि ह्युभा अन्तौ तपति चरुर्भवति तँ हि सर्वतस्तपति देवा वै वृत्रस्य मर्म नाविन्दँस्तं मरुतः क्षुरपविना व्ययुस्सं वा एनं तदतपँस्तस्मात् सांतपनाः ॥८॥ १५

ते श्वो वृत्रँ हनिष्यन्त उपावसँस्तेऽब्रुवन् कस्य वाहेदँ श्वो भविता कस्य वा पचतेति त एतमोदनमपचन्त ते पशूनचिकयुर्यतरान् वा इमे श्वः कमितारस्ते जेतार इति तेभ्य एतेन प्रातिष्ठँस्तानेतेनायच्छन् पशूनामेवैषा यतिस्ते श्वोविजयिनोऽवसँस्तेऽब्रुवन् कस्य वाहेदँ श्वो भविता कस्य वा पचतेति त एतमोदनमपचन्त तेऽब्रुवन् माहुतमशिष्मेति ते मरुद्भ्यो गृहमेधेभ्योऽजुहवुः पशवो वै मरुतो गृहमेधास्तेभ्य एव तदजुहवुस्ते संयत्ता आसँस्तेऽसुरा देवेभ्यः क्षुधं प्राहिण्वँस्तां देवाः प्रतिश्रुत्यैतमोदनमपचन्त सा देवेषु लोकमवित्त्वा पुनरसुरान् प्राविशत् सैनान्निरदहदपि प्रतिवेश ओदनं पचेत भ्रातृव्यायैव क्षुधं प्रहिणोति सैनं निर्दहति '। यद्वै चातुर्मास्यानां पाकयज्ञस्यैव तदेषां पशव्यं गृहमेध्यो वै पाकयज्ञो न प्रयाजा इज्यन्ते नानुयाजा न सामिधेनीरन्वाहाज्यभागौ यजति तेन यज्ञः क्रियतेऽग्नये समवद्यत्यग्निस्समिष्टिरग्निः प्रतिष्ठितिस्समिष्ट्या एव प्रतिष्ठित्यै पशवो वै गृहमेधाः पशव इडा तस्मादिडामुपह्वयन्ते निष्कासो निधीयते संतत्यै तेषां वा उभयेषामिन्द्रः प्रावसत् ते देवा एतामिन्द्राय भागं न्यदधुरस्माञ्छ्वो निहितभागो वृणाता इति रुवथो वषट्कारोऽथो असुराणामेव तदृषभमत्याह्वयन्नस्मान् प्रजनयादित्यृषभमाह्वयतीन्द्रमेव तान्निह्वयतेऽथो पुष्टिमेव भ्रातृव्यस्य वृङ्क्ते ॥९॥ १६--१७

सवत्सा गावो वसन्ति साकमेधत्वाय यत् पत्नी नाश्नीयादसाकमेधास्स्युर्यत् पत्न्यश्नाति साकमेधत्वाय निर्ऋतिर्वा एतद्यज्ञस्य गृह्णाति यत् स्त्र्यश्नाति निर्ऋतिर्वै स्त्री स्त्रिया एष हस्तो यद्दर्विर्यद्दर्व्या जुहोति निर्ऋत्यैव निर्ऋतिं निरवदयते यद्वै यज्ञस्य स्वगाकृतिं न प्राप्नोति निर्ऋतिस्तद्गृह्णाति निर्ऋतिगृहीता वै दर्विस्तस्माँ ह्येषावचरति यद्दर्व्या जुहोति निर्ऋतिगृहीतयैव निर्ऋतिं निरवदयते स श्वो वृत्रँ हन्तुमुपप्लायत तं मरुतः परिक्रीडन्त आयँस्तेऽस्याप्त्वा व्यनयँस्त एनमभ्यधर्षयँस्तस्मात् क्रीडयस्ते संयत्ता आसँस्ते देवा असुराणां परमन्तं न परापश्यँस्ते मरुतः क्रीडीन् क्रीडतोऽपश्यँस्तेऽविदुर्जितमनसो वा इम इति तेभ्य एतं भागं निरवपँस्ततोऽजयन् विजित्या एवैषोऽसौ वा आदित्य इन्द्रो रश्मयः क्रीडयस्साकं रश्मिभिः प्रचरन्ति विजित्यै ॥ देवा वै वृत्रँ हतं न व्यजानँस्तं मरुतो-

[९] मै. १,१०,१५-१६ (४०-४१)। तै. ब्रा. १,६,६,४, १,६,७।
[१०] मै. १,१०,१६ (४१)। तै. ब्रा. १,६,७।

ऽध्यक्रीडँस्तस्मात् क्रीडयोऽथैतानि पञ्च हवींषि संतत्या अथैन्द्राग्न इन्द्राग्नी वै तं वज्रेणाभ्यौहतामथो आहुरिन्द्राग्नी अस्मै वज्रमनुबिभृतामित्यथैन्द्र एतेन वा इन्द्रो वृत्रमहन् स एतमुद्धारमुदहरतोद्धार एवास्यैष भाग एवाथ वैश्वकर्मणो विश्वा मे कर्म कृतानीति विश्वकर्मा ह्यभवद्वृत्रँ हत्वाग्ने वेर्होत्रं वेर्दूत्यमित्याघारमाघारयत्याहुतीनाँ संपत्त्यै त्रिँशत्त्वाय ॥१०॥ १८-१९

प्रजास्सृष्ट्वाँहोऽवेज्य वृत्रँ हत्वा तेऽमृतत्वमकामयन्त स्वर्गो वै लोकोऽमृतत्वं द्वादश मासास्संवत्सरस्स्वर्गो लोको यद् द्वादशाहुतयोऽमृतत्वमेव तेन स्पृणोति सं वा एतत् संवत्सरमकृक्षदापद्वा एतत् संवत्सरं यत् षट् षट् संपादयति षड्वा ऋतव ऋतूनेवैतत् पुनरपिपादयति तानपिपद्यमानानन्वपिपद्यते ततः प्रजायतेऽति वा एतत् संवत्सरमगाद्यद् द्वादशाहुतयस्संवत्सरमेवाभिपर्यावर्तत आपद्वा एतत् संवत्सरं पितर ऋतवस्तमेव प्रजनयति तं प्रजायमानमनुप्रजायत एतद्वा अस्य संवत्सरोऽभीष्टोऽभूदभीष्टा ऋतवोऽथास्य पितरोऽनभीष्टा यदेष पितृयज्ञस्तेनास्य पितरोऽभीष्टाः प्रीता भवन्ति ॥ दक्षिणतो निरुप्यं दक्षिणा हि पितॄणामुभयतो निरुप्यमुभये हीज्यन्ते तत् तन्न सृक्ष्यँ दक्षिणत एव निरुप्यं दक्षिणा हि पितॄणाँ षट्कपालः पुरोडाशो भवति षड्वा ऋतव ऋतव एवास्य तेनाभीष्टाः प्रीता भवन्ति न वै धानाभिर्न मन्थेन यज्ञो यदेष पुरोडाशस्तेन यज्ञः क्रियतेऽथैता धानास्सुधा वा एता अमुष्मिल्लोकेऽपरिमितास्संवत्सरस्य रात्रयस्ता एवास्यैताभिरभीष्टाः प्रीता भवन्ति न वै धानाभिर्न पुरोडाशेन पितृयज्ञो यदेष मन्थस्तेन पितृयज्ञोऽभिवान्यवत्साया दुग्धे भवति सा हि पितॄणां नेदिष्ठमेकयोपमन्थत्येकलोका हि पितरो दक्षिणोपमन्थति दक्षिणा हि पितॄणामनारभ्योपमन्थति तद्धि पितॄन् गच्छति ॥११॥ २०-२१

न प्राच्युद्धत्या पितृयज्ञो हि न दक्षिणा यज्ञो ह्युभे दिशा अन्तरोद्धन्त्युभये हीज्यन्त उभयानेव व्यश्नोति देवाँश्च पितॄँश्च चतुस्स्रक्तिर्वेदिर्भवति सर्वासु हि दिक्षु पितरः परिश्रिते याजयन्त्यन्तर्हिता ह्यमुष्मादादित्यात् पितरोऽथो अन्तर्हिता हि देवेभ्यश्च मनुष्येभ्यश्च पितर उपमूलं बर्हिर्दाति तेन पितॄणां यद्दतेमूलं तेन देवानामुभये हीज्यन्ते समन्तं बर्हिस्स्तृणन् पर्येति समन्तँ हीम ऋतवः परिविष्टा एति वा एषोऽस्माल्लोकाद्यः पितृयज्ञं पर्येति यदस्तृणन् पुनः पर्येतीममेव लोकमुपावर्ततेऽमुष्मिन् वै पूर्वस्मिन् देवता यजन्ति यत् तत्र यजेदाहुतीस्सँसृजेत् समदं कुर्याद्गार्हपत्ये शृतं कुर्वन्ति तेन यज्ञः क्रियत ओदनपचनादग्निमाहरन्ति तदु स्विन्नान्यत आह्रियत उशन्तस्त्वा हवामह इत्यन्वाहोशन्तो हि पितरोऽनुष्टुभमन्वाहान्तो वा अनुष्टुबन्तः पितरोऽथो अनुष्टुब्भि सर्वाणि च्छन्दाँस्ये-

---

[११] मै. १,१० १७ (४१)। तै ब्रा. १,६,८।

[१२] मै. १,१०,१७-१८ (४१-४६)। वा. १९,७० । काण्व. २१,७०। तै. ब्रा. १,६,८-९।

[उशन्तस्त्वा० · अत्तवे०। ऋ १०,१६,१२; अथर्व. १८,१,५६; १८,२,३४]

कामन्वाहैकलोका हि पितरस्त्रिरन्वाह तृतीये हि लोके पितरो यदेकामन्वाह तेन पितृणां यत् त्रिरन्वाह तेन देवानामुभये हीज्यन्ते नार्षेयं वृणीते न होतारं मृत्योरेवैना उत्सृजत्यपबर्हिषः प्रयाजान् यजति प्रजा वै बर्हिः प्रजा एव मृत्योरुत्सृजति संव्ययते वै मनुष्येभ्यः करिष्यन् दक्षिणतो देवेभ्य उपव्ययतेऽथात्र प्राचीनावीतेन भव्यं व्यावृत्त्यै दक्षिणतोऽवदायोदङ्ङतिक्रम्य दक्षिणावृत्य जुहोति दक्षिणा हि पितृणाम् ॥१२॥ २२

सोममग्रे यजति सोमो वै पितृणां देवता पितृदेवत्यो हि सोमो यत् सोमं पितृमन्तं यजति सोमपाँस्तत् पितॄन् यजति यद्बर्हिषदो यज्वनस्तद्यदग्निष्वात्तान् गृहमेधिनस्तद्यदग्निं कव्यवाहनं द्वे वा अग्नेस्तन्वौ हव्यवाहन्या देवेभ्यो हव्यं वहति कव्यवाहन्या पितृभ्योऽग्निस्समिष्टिरग्निः प्रतिष्ठिति- स्समिष्ट्या एव प्रतिष्ठित्यै पञ्च पञ्च कृत्वोऽवद्यति पञ्च ह्यृतवस्स्वधा नम इति वषट्करोति स्वधा हि पितृणां नमस्कारो देवानां द्वे वै देवानां याज्यानुवाक्ये प्रान्यया यच्छति गमयत्यन्ययाथात्र तिस्रः कार्या व्यावृत्त्यै द्वे अनुवाक्ये एका याज्या परे वै देवेभ्यः पितरो यैषा तृतीयाभ्येवैतया प्रयच्छति ॥ देवान् वै पितॄन् मनुष्याः पितरोऽनुप्रपिबन्ते देवानेवैतत् पितॄनयाज्यत् स्रक्तिषु नि- दधाति तेन मनुष्यान् पितॄन् यजति त्रिर्निदधाति त्रीन् हीदं पुरुषानभिस्मस्त्रीन् परानन्वाचष्टे त्रयो वै पिता पुत्रः पौत्रोऽनुसंतत्यै सर्वासु स्रक्तिषु निदधाति सर्वा एव दिशो गमयति सर्वासु हि दिक्षु पितरो नास्यां निदध्याद्यदस्यां निदध्यान्मृत्युनैनान् परिगृह्णीयात् तामेवानूद्यन्ति यत् तस्यां निमार्ष्टि तेनैव तान् प्रीणात्यत्र पितरो मादयध्वमिति निष्क्रामन्ति त आहवनीयमुपायन्ति सुसंदृशं त्वा वयमि- ति त आ तमितोस्तिष्ठन्त्यन्तं वा एते प्राणस्य गच्छन्ति ये पितृयज्ञमुपयन्त्यग्निमेवोपद्रष्टारं कृत्वान्तं प्राणस्य गच्छन्ति परेत पितरस्सोम्यास इति पुनरायन्त्यनुषक्ता वा एतान् पितरो व्यावृत्त्या अमीमदन्त पितर इति प्रपद्यन्ते त ऊर्णां वा दर्शां वा न्यस्यन्ति यदेव तत्र निगच्छान्ति तस्य निरवत्त्या अपः परिषिञ्चति मार्जयत्येव पुनरपरिषिञ्चन् पर्येत्यमुं वा एते लोकं निगच्छन्ति ये पितृयज्ञमुपयन्ति प्रजापतिस्त्वा एनानत उन्नेतुमर्हति यदेतामनिरुक्तां प्राजापत्यामन्वाहाया विष्ठा जनयन् कर्वराणीति प्रजापतिरेवैनाँस्तत उन्नयति पितॄन् वा एतद्यज्ञोऽगन् पङ्क्त्या पुनरायन्ति पाङ्क्तो यज्ञस्सहैव यज्ञे- नायान्ति पितॄन् वा एतस्य मनो गच्छतिं मनो न्वहुवामह इति तदेव पुनरुपह्वयते॥१३॥२३-२४

एतद्वा अस्य संवत्सरोऽभीष्टोऽभूदभीष्टाः पितरोऽथास्य रुद्रा अनभीष्टा रुद्रास्त्र्यम्बका यदेते त्र्यम्बकास्तेनास्य रुद्रा अभीष्टाः प्रीता भवन्ति प्रतिपुरुषं भवन्ति प्रतिपुरुषमेव रुद्रं निरवदयत

---

[१३] मै. १,१०,३; १८--१९ (१०-१८; ४४--४७)। वा. २,३१; ३,५२, १९,५८। काण्व. २,५६, ३,६०; २१,५९। तै. ब्रा. १,६,८-९।

[१४] मै. १,१०,४; २० (२२-२७; ४८--५०)। वा. ३,५७--६१। काण्व. ३,६५--७०। तै. ब्रा. १,६,१०।

एकोऽधि भवति गर्भेभ्य एव तेन रुद्रं निरवदयत एककपाला भवन्ति न वै पुरुषं कपालैराप्तुमर्ह-त्येकधैवैनमाप्नोत्यभिघार्या३ नाभिघार्या३ इति मीमाँसन्ते अभिघार्या एव न हि हविरनभिघृतं यदभिघारयेद्रुद्रं पशूनन्ववनयेत् तस्मान्नाभिघार्या एकोल्मुकँ हरन्त्येकोल्मुकँ हि रुद्राणां धूपाय-द्धरन्ति धूपायद्धि रुद्राणां पराचीनँ हरन्ति पराञ्चमेव रुद्रँ हरन्तीमां दिशँ हरन्त्येतस्यां वै दिशि रुद्राणां गृहा गृहेष्वेव रुद्रं निरवयजते ॥ रुद्राखुं ते पशुं करोमीत्याखुकिरा एकमुपवपति पशुभ्य एव रुद्रं निरवदयते तस्मात् तान् पशुपतिर्घातुकश्चतुष्पथे याजयन्ति चतुष्पथे वै रुद्राणां गृहा गृहेष्वेव रुद्रं निरवयजत एष ते रुद्र भागस्सह स्वस्राम्बिकया तं जुषस्व स्वाहेति शरद्वै रुद्रस्य स्वसाम्बिका तामेषोऽन्ववचरति तस्मादेष शरदि भूयिष्ठँ हन्ति तयैवैनँ सह निरवदयते मध्यमेन पर्णेन जुहोति तद्ध्यरक्षोहतं यद्ग्राम्येण जुहुयाद्रुद्रः पशूनन्ववनयेत् तस्मादारण्येन हूयतेऽवाम्ब रुद्रमदिमहीत्य-नृणा एवाभूवन भेषजं गवेऽश्वाय पुरुषाय चेत्यनृणा एव भूत्वा भेषजमक्रत ॥ त्र्यम्बकं यजामह इति परियन्ति या पतिकामा स्यात् सापि परीयात् पतिवेदनमेवास्यै कुर्वन्ति तानुदस्य प्रतिलभन्ते-ऽनृणा एव भूत्वा भगं प्रतिलभन्ते तान् यजमानाय समावपन्ति भगमेवास्मै समावपन्ति या पति-कामा स्यात् तस्यै समावपेयुर्भगमेवास्यै समावपन्ति तान् मूते कृत्वा वृक्ष आसजन्त्येष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहीति गिरिर्वै रुद्रस्य योनिस्तत एषोऽभ्यवचरति स्वेनैवैनं भाग-धेयेन स्वं योनिं गमयत्यनपेक्षमाणा आयान्ति रुद्रस्यानन्ववायायैधोऽस्येधिषीमहीति रुद्रमेव निर-वदायैधतुमुपयन्ति समिदसि समेधिषीमहीत्याशिषमेवाशास्ते तेजोऽसि तेजो मयि धेहीति तेज एवात्मन् धत्तेऽम्बी वै स्त्री भगानाम्नी तस्मात् त्र्यम्बका अप्रतिष्ठितो वा एष यस्याप्रतिष्ठितँ हवि-रप्रतिष्ठितास्त्र्यम्बका न प्रयाजा इज्यन्ते नानुयाजा न सामिधेनीरन्वाहादित्यै चरुं निर्वपतीयं वा अदितिरियं प्रतिष्ठास्यामेव प्रतितिष्ठति ॥१४॥ २५-२७

अपां यो द्रवणे रसस्तमहमस्मा अमुष्मा आमुष्यायणाय तेजसे वर्चसे गृह्णाम्यपां य ऊर्मौ रस-स्तमहमस्मा अमुष्मा आमुष्यायणायौजसे क्षत्राय गृह्णाम्यपां यो मध्ये रसस्तमहमस्मा अमुष्मा आमुष्यायणाय प्रजायै पुष्ट्यै गृह्णाम्यपां या यज्ञिया तनूस्तामहमस्मा अमुष्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामि ॥ २८

रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ २९

---

[ एधोऽस्येधिषीमहि० । अथर्व. ७,९४,४ ]

[१५] वा. १२,५६, १४,१३; १५,११-१३,६१, १७,६१ । काण्व. १३,५७; १५,१६; १६,१९,२१,२५,८१; १८,६१। तै. ब्रा. २,७,७ । [ रथे अक्षेषु वृषभस्य० । अथर्व. ६,३८,२ ]

या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वन्तः ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ ३०
सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ ३१
या राजन्ये दुन्दुभा आयतायामश्वस्य क्रन्दे पुरुषस्य मायौ ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ ३२

राडसि विराडसि सम्राडसि स्वराडसीन्द्राय त्वा मधुमते मधुमन्तँ श्रीणामीन्द्राय त्वौजस्वत
ओजस्वन्तँ श्रीणामीन्द्राय त्वा पयस्वते पयस्वन्तँ श्रीणामीन्द्राय त्वायुष्मत आयुष्मन्तँ श्रीणामि
वर्चोऽसि तन्मे नियच्छ तत् ते नियच्छाम्योजोऽसि तन्मे नियच्छ तत् ते नियच्छामि पयोऽसि
तन्मे नियच्छ तत् ते नियच्छाम्यायुरसि तन्मे नियच्छ तत् ते नियच्छामि ॥ ३३

वर्चस्वदस्तु मे मुखं वर्चस्वच्छिरो अस्तु मे ।
वर्चस्वान् विश्वतः प्रत्यङ् वर्चसा सँपिपृग्धि मा ॥ ३४
ओजस्वदस्तु मे मुखमोजस्वच्छिरो अस्तु मे ।
ओजस्वान् विश्वतः प्रत्यङ्ङोजसा सँपिपृग्धि मा ॥ ३५
पयस्वदस्तु मे मुखं पयस्वच्छिरो अस्तु मे ।
पयस्वान् विश्वतः प्रत्यङ् पयसा सँपिपृग्धि मा ॥ ३६
आयुष्मदस्तु मे मुखमायुष्मच्छिरो अस्तु मे ।
आयुष्मान् विश्वतः प्रत्यङ्ङायुषा सँपिपृग्धि मा ॥ ३७

इदमहं गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाग्निना देवतया तेजस्ते वर्च आददे-
ऽसा इदमहं त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नेन्द्रेण देवतयौजस्ते क्षत्रमाददेऽसा
इदमहं जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्ना विश्वैर्देवैर्देवतया प्रजां ते पुष्टिमाददे-
ऽसा इदमहमानुष्टुभेन च्छन्दसैकविँशेन स्तोमेन वैराजेन साम्ना प्रजापतिना देवतयायुस्ते दीर्घा-
युत्वमाददेऽसौ ॥ ३८

इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सँशिशाधि ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥ ३९

---

[या हस्तिनि द्वीपिनि० । अथर्व. ६,३८,२ । सिंहे व्याघ्र उत० । अथर्व. ६,३८,१ । या राजन्ये दुन्दु-भा० । अथर्व. ६,३८,४ । इममग्न आयुषे वर्चसे० । मै. २,३,१७; अथर्व. २,२८,५, तै. ब्रा. २,७,७,५ ]

विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शतः । तं त्वा घृतस्य धारया श्रैष्ठ्याय समसृषत ॥ ४०
यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः ।
तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ ४१
अभि त्वा वर्चसासिचं यज्ञेन पयसा सह ।
यथासो मित्रवर्धनस्तथा त्वा सविता करत् ॥ ४२
इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानाँ सत्पतिं पतिम् ॥ ४३

अपां यो द्रवणे रसस्तेनाहमिमममुमामुष्यायणममुष्याः पुत्रं तेजसे ब्रह्मवर्चसायाभिषिञ्चाम्यपां य ऊर्मौ रसस्तेनाहमिमममुमामुष्यायणममुष्याः पुत्रमोजसे क्षत्रायाभिषिञ्चाम्यपां यो मध्ये रसस्तेनाहमिमममुमामुष्यायणममुष्याः पुत्रं प्रजायै पुष्ट्या अभिषिञ्चाम्यपां या यज्ञिया तनूस्तयाहमिमममुमामुष्यायणममुष्याः पुत्रमायुषे दीर्घायुत्वायाभिषिञ्चामि ॥१५॥ ४४

[२३२१]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां चातुर्मास्यानि नाम षट्त्रिंशं स्थानकं संपूर्णम् ॥३६॥

अथ सप्तत्रिंशं स्थानकम् ।

## सवाः ।

प्रजापतिः प्रजा असृजत ता अस्मादपाक्रामँस्ता अकामयतोप मावर्तेरन्निति स एतमोदनमपचत् सोऽन्नमेव भूत्वैकधातिष्ठत् ता अन्यत्रान्नमवित्त्वा ताः प्रजापतिमेवैकधान्नाद्यायाभिसमावर्तन्त यावतीर्ह वै कियतीश्च प्रजा वाचं वदन्ति ता एनमेकधान्नाद्यायाभिसमावर्तन्ते य एतेनाभिषिच्यते स एष ओदनसवो राडसि विराडसीत्येतानीव सर्वाणि भवन्ति सर्वाण्यन्नानि भवन्ति सर्वे पुरुषास्सर्वाण्येवान्नान्यवरुन्द्धे सर्वान् पुरुषान् हिरण्यं ब्रह्मणे ददाति तेजस्तेन परिक्रीणाति तिसृधन्वं राजन्यायौजस्तेन परिक्रीणात्यष्ट्रां वैश्याय पुष्टिं तेन परिक्रीणाति माषकमण्डलुँ शूद्रायायुस्तेन परिक्रीणाति हिरण्यमाबध्नाति तदेवास्मिन् प्रतिष्ठापयति ॥ यदोदनं प्राश्नात्येतदेव सर्वमवरुध्य तदस्मिन्नेकधा दधाति रोहिण्यां क्रियते यद् ब्राह्मणा रोहिणी तस्माद्यदुद्यति सूर्ये क्रियत एतद्वै प्रजापते

[ जरदष्टिर्यथासत्० । ऋ. परि. २७,८; अथर्व. ८,५,२१ । तासां त्वा सर्वासां० । अथर्व. ४,८,५(उत्तरार्धः)। अभि त्वा वर्चसासिचं० । अथर्व. ४,८,६; तै. ब्रा. २,७,१५,४ । इन्द्रं विश्वा अवीवृधन्० । ऋ. १,११,१; सा. ३४३,८२७; तै. सं. ४,६,३,४ तै. ब्रा. २,७,१५,५ ]

[ १ ] मै. १,८,१,९; २,५,६ । तै. ब्रा. २,७,१ ।

रूपं यर्ह्येष उदेति सर्वा वा एतं प्रजाः प्रतिनन्दन्ति दिदृक्षेण्यो ह दर्शनीयो भवत्यवेत्योऽवभृथा३
नावेत्या३ इति मीमाँसन्ते यद्दर्भपिञ्जूलैः पावयति तदेवावैति तदु नावैत्युभयमेव करोति द्वाभ्यां
पावयति द्वे सत्यं चानृतं च सत्येनैवास्यानृतं पावयति द्वौ प्राणश्चापानश्च त्रिभिः पावयति त्रिषत्या
हि देवा अथो त्रयो हि प्राणाः प्राणो व्यानोऽपानः पञ्चभिः पावयत्यपां वा एतदोषधीनां तेजो
यद्दर्भा यद्दर्भपिञ्जूलैः पावयत्यपामेवैनमोषधीनां तेजसाभिपिञ्चति ॥१॥ १-२

आग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावित्रोऽष्टाकपालो बार्हस्पत्यश्चरुरग्नीषोमीय एकादशकपाल-
स्सारस्वतश्चरुर्वारुणो यवमयो दशकपालो द्यावापृथिव्य एककपालो यदाग्नेय आग्नेयो हि ब्राह्मणो यत्
सौम्यस्सौम्यो हि ब्राह्मणो यत् सावित्रः प्रसवायैव सावित्रो यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिरेतद्ब्राह्म-
णस्य वाक्पत्यं यदग्नीषोमीय आग्नेयो हि सौम्यो ब्राह्मणस्तौ यदा संगच्छेते अथ वीर्यावान् भवति
यत् सारस्वतो वाग्वै सरस्वत्येतद्ब्राह्मणस्य प्रत्यक्षं वाक्पत्यं यद्वारुणो निर्वरुणत्वायैव वारुणो यो
ह्येव कश्च सन् सूयते स वारुणो यद् द्यावापृथिव्य इन्द्रो वै वृत्राय वज्रमुदयच्छत तं द्यावापृथिवी
नान्वमन्येतां तमेतेन भागधेयेनान्वमन्येतां वज्रस्य वा एषोऽनुमानोऽनुमतवज्रस्सूयाता इति यदष्टौ
हवींष्यष्टाक्षरा गायत्री ब्रह्म गायत्री ब्रह्मणा सूयाता इति कृष्णाजिनेऽध्यभिषिच्यत ऋक्सामयोर्वा
एतद्रूपं यत् कृष्णाजिनमृक्सामयोरेवाध्यभिषिच्यते हिरण्येन घृतमुत्पुनाति तेजस एव रुचे यद्
घृतेनाध्यभिषिच्यते तेन ह श्रेष्ठ्यं प्राप्नोति ॥२॥ ३

आग्नेयोऽष्टाकपालः पौष्णश्चरुस्सावित्रोऽष्टाकपालो वैश्वदेवश्चरुस्त्वाष्ट्रोऽष्टाकपालो वारुणो यवमयो
दशकपालो मारुतस्सप्तकपालो मारुती पृश्निर्वशा यदाग्नेय ऋद्ध्या एवाग्नेयोऽग्निमुखा ह्यृद्धिर्यत् पौष्णः
पुष्टिर्वै पूषा पुष्टिर्वैश्यस्य यत् सावित्रः प्रसवायैव सावित्रो यद्वैश्वदेवो वैश्वदेवो हि वैश्यो यत् त्वाष्ट्र-
स्त्वष्टा हि रूपाणि विकरोति यद्वारुणो निर्वरुणत्वायैव वारुणो यो ह्येव कश्च सन् सूयते स वारुणो
यन्मारुतो मारुतो हि वैश्यो यत् सप्त हवींषि सप्त हि मरुतोऽथैषा मारुती पृश्निर्वशा तस्या अग्नये
समवत्तं भवत्यथाभिषिच्यते विड्वै मरुतो विश एव मध्यतोऽभिषिच्यते तस्मादेष विशः प्रियो विशो
हि मध्यतोऽभिषिच्यत ऋषभचर्मेऽध्यभिषिच्यते स हि प्रजनयिता प्रजननाय दध्नाभिषिच्यते मृदु
दधि मृदुमेवैनं करोति ॥३॥ ४

नराशँसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवश्शुचयो धियंधास्स्वदन्ति देवा उभयानि हव्या ॥ ५

---

[१] मै. १,१०,१; १,६,९ । तै. ब्रा. ७,३ ।
[३] मै. १,१०,१; १,६,९ । तै. ब्रा. १,७,१ ।
[४] मै. ४,१३,१३ । तै. ब्रा. १,७,५ । [ नराशँसस्य महिमान० । ऋ. ७,२,१; तै. ब्रा. ३,६,३,१; नि. ८,७ ]

यो वै सोमेन यजते स देवसवो यः पशुना यजते स देवसवो य इष्ट्या यजते स मनुष्यसव एतं त्रै पृथ्व्यै देवा अन्वमन्यन्त तेनैनमभ्यभिषिञ्चन् सोऽप्यारण्यानां पशूनामसूयत यावतीर्ह वै क्रियतीश्च प्रजा वाचं वदन्ति तासाँ सर्वासाँ सूयते य यतेनाभिषिच्यते निह्नुत्यैवैतदभिषिच्यते नाराशँस्यर्चा मनुष्या हि नराशँसो यत् किंच राजसूयेऽनुत्तरवेदिकं तदत्र सर्वं क्रियतेऽथैष मारुत एकविँशतिकपालस्तस्याग्नये समवत्तं भवत्यथाभिषिच्यते त्रिर्वै सप्त सप्त मरुतो त्रिण्मरुतो विश एव मध्यतोऽभिषिच्यते तस्मादेष विशः प्रियो विशो हि मध्यतोऽभिषिच्यते ॥४॥ ६

सं ते पयाँसि समु यन्तु वाजास्सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व ॥ ७

न वै सोमेन सोमस्य सवोऽस्त्यभिषिक्तो हि सोमो घ्नन्ति हि सोमं न हि हतस्सूयते सौम्या त्रिष्टुभाभिषिच्यते सा हि सोमसवस्सौम्याँ सूतवशायामध्यभिषिच्यते सा हि रेतोधा रेतस्सोमो यत् किंच राजसूयेऽन्यत् स्तोमेभ्यस्तदत्र सर्वं क्रियतेऽथैष मारुत एकविँशतिकपालस्तस्याग्नये समवत्तं भवत्यथाभिषिच्यते त्रिर्वै सप्त सप्त मरुतो विण्मरुतो विश एव मध्यतोऽभिषिच्यते तस्मादेष विशः प्रियो विशो हि मध्यतोऽभिषिच्यते ॥५॥ ८

यद्वै राजसूयँ स वरुणसवो यद्वाजपेयँ स सम्राट् सवः प्रजापतिस्साम्राज्यं परमेष्ठी स्वाराज्यं गौरेव स एष गोसवो यथैव ह गौरेवमिव भवति य एतेनाभिषिच्यते प्रतिदुहाभिषिच्यते तद्धि स्वाराज्यं बृहत्साम तद्धि स्वाराज्यमयुतं दक्षिणा तद्धि स्वाराज्यं पवमाने कण्वरथंतरं प्रोहन्ति दक्षिणत आहवनीयस्यानुद्धतेऽभिषिच्यत इयं वै गौरस्या एवानन्तर्हितोऽभिषिच्यते षट्त्रिँशस्स्तोमो भवति पशुस्तोमो वा एष तेन गोसवः ॥६॥ ९

त्रिवृत्स्तोमो ब्रह्मवर्चसं वै त्रिवृद्ब्रह्मवर्चसेनैवाभिषिच्यते रथंतरँ साम ब्रह्मवर्चसं वै रथंतरं ब्रह्मवर्चसेनाभिषिच्यतेऽग्निष्टोमस्स्तोमो ब्रह्मवर्चसं वा अग्निष्टोमो ब्रह्मवर्चसेनैवाभिषिच्यते प्रवर्ग्यः प्रवृज्यते ब्रह्मवर्चसं वै प्रवर्ग्यो ब्रह्मवर्चसेनैवाभिषिच्यते परिस्रजी होतारुणो मिर्मिरस्त्रिशुक्रिय एतद्वै ब्रह्मवर्चसस्य रूपं रूपेणैव ब्रह्मवर्चसमवरुन्द्ध एकं वा एतत् सवनं यदेकस्स्तोम एकं छन्द एकादशैकादशानुसवनं दद्यात् सवनानां व्यावृत्त्यै त्रयस्त्रिँशत् संपद्यन्ते त्रयस्त्रिँशद्देवता देवता एवावरुन्द्धेऽश्वं चतुस्त्रिँशं ददाति प्रजापतिश्चतुस्त्रिँशः प्रजापतिमेवाप्नोति बृहस्पतये वै देवा न श्रददधत तमेतेन

---

[५] मै. २,६,१९६ । तै. ब्रा. १,७,४ । वा. १२,११३ । काण्व. १३,१११ । [ सं ते पयाँसि समु० । ऋ. १,९१, १८; तै. सं. ४,२,७,४ ]

[६] तै. ब्रा. २,७,६ । [७] तै. ब्रा. २,७,१ ।

प्रजापतिरयाजयत् ततोऽस्मै श्रद्दधत स एष बृहस्पतिसवो ब्रह्मवर्चसकाम एतेन यजेत ब्रह्मवर्चसी भवति तस्यैषैव नियतिः प्रजास्सर्वा ब्राह्मणीर्ब्रह्मवर्चसिनीर्भवन्ति ॥७॥ १०

पञ्चदशस्स्तोम ओजो वै वीर्यं पञ्चदश ओजसैव वीर्येणाभिषिच्यते बृहत्सामौजो वै वीर्यं बृहदोजसैव वीर्येणाभिषिच्यत उक्थ्यस्स्तोम ओजो वै वीर्यमुक्थान्योजसैव वीर्येणाभिषिच्यत ऐन्द्रं स्तोत्रं च शस्त्रं च त्रैष्टुभाः पवमाना ओजो वै वीर्यं त्रिष्टुबोजसैव वीर्येणाभिषिच्यत इन्द्रं वै सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षाँस्यजिघाँसँस्तमेतेन प्रजापतिरयाजयत् स सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षाँस्यतरदिन्द्रो यजमानो यदेतेन यजते सर्वा एव मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षाँसि तरति स एष इन्द्रसवः ॥८॥ ११

सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यँ सवितर्वार्याणि दिवो दिव आसुवा भूरि पश्वः ॥ १२
भूतो भूतेषु चरति प्रविष्टस्स भूतानामधिपतिर्बभूव ।
तस्य मृत्यौश्चरति राजसूयँ स राजा राज्यमनुमन्यतामिदम् ॥ १३
येभिश्शिल्पैः पप्रथानामदृँहद्येभिर्द्यामभ्यपिँशत् प्रजापतिः ।
येभिर्वाचं विश्वरूपेभिरव्ययँस्तेनेममग्न इह वर्चसा समङ्ग्धि ॥ १४
येभिरादित्यस्तपति प्र केतुभिर्येभिस्सूर्यो ददृशे चित्रभानुः ।
येभिर्वाचं पुष्कलेभिरव्ययँस्तेनेममग्न इह वर्चसा समाङ्ग्धि ॥ १५
आयं भातु शवसा पञ्च कृष्टीरिन्द्र इव ज्येष्ठो भवतु प्रजानाम् ।
अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु रजसा विमानम् ॥ १६
यत् ते शिल्पं कश्यप रोचनावदिन्द्रियावत् पुष्कलं चित्रभानु ।
यस्मिन् सूर्या अर्पितास्सप्त साकं तस्मिन् राजानमधि विश्रयेमम् ॥ १७
व्याघ्रो वैय्याघ्रे अधि विक्रमस्व दिशो महीः ।
विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः ॥ १८
या आपो दिव्याः पयसा संबभूवुर्या अन्तरिक्ष्या उत पार्थिवासः ।
तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ १९

---

[९] मै. २,१,११; २,१०,५१ । वा. ८,३३. १२,५६; १५,६१; १७,६१, ३३,२२ । काण्व. ८,१५; १३,५७; १६, ८२;१८,६१; ३२,२२ । तै. ब्रा २,७,१५—१६; २,७,८ [ **सावीर्हि देव प्रथमाय०** । अथर्व. ७,१४,३ । **भूतो भूतेषु चरति०** । अथर्व. ४,८,१ । **व्याघ्रो वैय्याघ्रे अधि०** । अथर्व. ४,८,४ । **या आपो दिव्याः पयसा०** । अथर्व. ४,८,५ ]

अभि त्वा वर्चसासिचं यज्ञेन पयसा सह ।
यथासो मित्रवर्धनस्तथा त्वा सविता करत् ॥ २०
इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ २१
अभि प्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा । आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन् ॥ २२
आतिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनँ सु ते मनो ग्रावा कृणोतु वग्नुना ॥ २३
आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत् तदस्यासुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥ २४
अनु त्वेन्द्रो मदत्वनु बृहस्पतिरनु सोमो अन्वग्निरावीत् ।
अनु त्वा विश्वे अवन्तु देवास्सप्त राजानो य उदाभिषिक्ताः ॥ २५
अनु त्वा मित्रावरुणा इहावतामनु द्यावापृथिवी ओषधीभिः ।
सुर्योऽहोभिरनु त्वावतु चन्द्रमा नक्षत्रैरनु त्वावीत् ॥ २६
द्यौश्च त्वा पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु ।
अनु स्वधा चिकिते सोमो अग्निरनु त्वावतु सविता सवेन ॥ २७
एना व्याघ्रं परिषस्वजानँ सिँहं हिन्वन्ति महते धनाय ।
मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषं न सुभ्वस्तस्थिवाँसम् ॥९॥ २८

बोधश्च मा प्रतीबोधश्च पुरस्ताद्गोपायतामस्वप्नश्च मानवद्राणश्च दक्षिणतो गोपायतां गोपायमानश्च
मा रक्षमाणश्च पश्चाद्गोपायतां जागृविश्च अरुन्धती चोत्तराद्गोपायताम् ॥ २९

अनमित्रं नो अधरागनमित्रमुदक् कृधि । इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३०

अनमित्रैरहोभिस्सचीमहि विश्वे देवा अनमित्रा न उषसस्सन्तु निम्रुचः ॥ याष्षडुर्वीः पञ्च
प्रदिशस्ता नः पान्तु मित्रधा नो मित्रे दधाता अभयं नो अस्तु ॥ ३१-३२

---

[अभि त्वा वर्चसासिचं० । अथर्व. ४,८,६ । इन्द्रं विश्वा अवीवृधन्० । ऋ. १,११,१; सा. ३४३,८१७, तै. सं. ४,६,३,४; तै. ब्रा. २,७,१५,५ । अभि प्रेहि वीरयस्व० अथर्व. ४,८,१ । आतिष्ठ वृत्रहन् रथं० । ऋ. १,८४,३; तै. सं. १,४,३७,१ । आतिष्ठन्तं परि विश्वे० । ऋ. ३,३८,४; अथर्व. ३,८,३, तै. ब्रा. २,७,८,१ । द्यौश्च (नः) त्वा पृथिवी च प्रचेतसा० । ऋ. १०,३६,२; अथर्व. ६,५३,१ । एना व्याघ्रं परिषस्व० । अथर्व. ४,८,७ ]

[१०] [बोधश्च मा प्रतिबोधश्च० । अथर्व. ८,१,१३ । अनमित्रं नो अधरा० । अथर्व. ६,४०,३ ]

ये रात्रीमनुतिष्ठथ ये च भूतेषु जागृथ । पशून् ये सर्वान् रक्षथ ते न आत्मसु जागृत ॥ ३३
बोध प्रतिबोधास्वप्नानवद्राण गोपायमान रक्षमाण जागृवेऽरुन्धति ये देवास्तनूपास्स्थ ते म इह तन्वं पात बोध प्रतीबोधेत्यसौ वा आदित्यो बोधोऽग्निः प्रतीबोधोऽस्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नो यः पवते सोऽनवद्राणो गोपायमान रक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृवेऽरुन्धतीति यज्ञो वै जागृविर्दक्षिणारुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेद्ध आत्मनो गोपीथाय ॥१०॥
३४

ये राष्ट्रभृतो ये राष्ट्रस्यानुभर्तारस्तेभ्यो राष्ट्रीयः परिदेय इमे वाव ते प्राणास्तेभ्य एवैनं परिददाति तेषामेताः पत्न्यस्तानेता अनु ताभ्योऽत्रापि कार्यं ताभ्य एवैतत् क्रियते ता हुता अनु पुरोधाकामः कुर्वीत ब्रह्म चैवं क्षत्रं च सयुजौ करोति यदि क्षत्रमभिचरेत् स न इदं ब्रह्म पात्विति ब्रूयान्न क्षत्रमपि ब्रह्माणि वै क्षत्रं प्रतिष्ठितं ब्रह्मण एवं क्षत्रमन्तरेति ताजक् प्रधन्वत्यपरुरुत्स्यमानः कुर्वीत संग्रामे कुर्वीत ये राष्ट्रभृतो ये राष्ट्रस्यानुभर्तारस्तानेवोपासरत् तेऽस्मै राष्ट्रमनुबिभ्रति य एषां लोकानां छन्दं राष्ट्रभृतो वेद नास्य राष्ट्रं व्यथते ॥ अग्निश्चास्या मनश्च वायुश्चान्तरिक्षस्य यज्ञश्च सूर्यश्च दिवश्चन्द्रमाश्च रथस्सप्तथस्सं हिं भयादपवहति त्रिषप्ताः कवचिनस्त्रिषप्ता निषङ्गिणस्त्रिषप्ता आयुधिनस्तेभ्यो राष्ट्रीयः परिदेय इमे वाव ते प्राणास्तेभ्य एवैनं परिददात्यभितो वा अग्निष्टोमं देवासुरा यत्ता आसन्नग्निष्टोमे देवा उक्थेष्वसुरास्ते देवा यदोक्थान्यागच्छन् यदोक्थान्यभ्यजयन्नथेन्द्रोऽब्रवीत् कश्चाहं चेदमाहरिष्याव इत्यहं चेत्यब्रवीद्वरुणस्तं वरुणोऽन्वतिष्ठतेन्द्र आहरत् सोऽब्रवीत् कश्चाहं चेदमाहरिष्याव इत्यहं चेत्यब्रवीद्बृहस्पतिस्तं बृहस्पतिरन्वतिष्ठतेन्द्र आहरत् सोऽब्रवीत् कश्चाहं चेदमाहरिष्याव इत्यहं चेत्यब्रवीद्विष्णुस्तं विष्णुरन्वतिष्ठतेन्द्र आहरदेताभिर्वै देवताभिस्सायुज्येन देवा असुराणां राष्ट्रमाददतैताभिरेवं देवताभिस्सायुज्येन भ्रातृव्याद्राष्ट्रमादाय तद्राष्ट्रं कृत्वा ये राष्ट्रभृतो ये राष्ट्रस्यानुभर्तारस्तेभ्य एनत् संप्रयच्छत्येतद्धिभृतैतन्मा रिषदित्यसौ वा आदित्यो राष्ट्रभृतत्वो राष्ट्रभृतस्तेभ्य एवैनत् संप्रयच्छत्येतद्धिभृतैतन्मा रिषादिति य एष सप्तथः प्रजापतिरेवैष यन्मध्ये जुहुयाद्व्यवधून्वीतैनं परोगव्यूतिं होतव्युस्तथा हैनं न व्यवधूनुत ऊर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हिं तिष्ठन् वीर्यावत्तरः पूर्णया स्रुचा जुहोति पूर्णः प्रजापतिः प्रजापतिमेवाप्नोति ॥११॥          ३५-३६

देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतान् राष्ट्रभृतोऽपश्यँस्तेषामग्निं चौषधीश्च प्रथमेनावृञ्जत सूर्यं च मनाँसि च द्वितीयेन चन्द्रमसं च नक्षत्राणि

---

[ ये रात्री(०त्रि०)मनुतिष्ठथ० । अथर्व. १९ ४८,५ ]
[ ११ ] मै. २,१,१२ (२२) । [ १२ ] मै. १,९,१०, १०,२८; २,५,३; ३,१०,१४; ४,३,४ । तै. सं. ३,४,८ ।

च तृतीयेन यज्ञं च दक्षिणां च चतुर्थेन तेऽसुरा अयज्ञा अदक्षिणा अनक्षत्रा यत् किंचाकुर्वत तां कृत्यामेवाकुर्वत तस्मान्नादक्षिणं गृहे हविष्कुर्वीत यत् कुरुते कृत्यां कुरुते प्रजापतिं चक्रसामानि च पञ्चमेन वायुमप ओषधीरूर्जँ षष्ठेनैतावद्वावास्ति यावदेवास्ति तदेषामेतैरवृञ्जत य एष सप्तथः प्रजापतिरेवैष तेनैनाद् प्राणुदन्त ततो देवा अभवन् परासुरा अभवन्नेतैर्यजेत भ्रातृव्यवानेतावद्वावास्ति यावदेवास्ति तदेतैर्भ्रातृव्यस्य वृङ्क्ते य एष सप्तथः प्रजापतिरेवैष तेनैनं प्रणुदते भवत्यात्मना परास्य भ्रातृव्यो भवत्येतैर्याजयेद्राजानँ संग्रामे संयत्त एतावद्वावास्ति यावदेवास्ति तदेषामेतैर्वृङ्क्ते य एष सप्तथः प्रजापतिरेवैष तेनैनान् प्रणुदते जित्यै जयत्येवैतैर्याजयेद्यद्राष्ट्रं शिथिलमिवावहतँ स्यात् तेषां यावन्तो रथास्स्युस्तान् सर्वान् योजयित्वा यश्श्रेष्ठस्स्यात् तस्य दक्षिणं रथचक्रं प्रवृह्य नाड्यां जुहुयाद्वीर्यं वै रथो वीर्येणैवैषां राष्ट्रं विसँश्यति रथचक्रं विगृह्णन्ति वज्रो वै रथो वज्रेणैवैषां पाप्मानं विगृह्णन्ति यदि क्लृप्ताहुतिरत्येति कल्पत एभ्यो यस्य नाड्यां जुहोति स दक्षिणा समृद्धये ॥१२॥ ३७

कोऽसि कतमोऽसि को नामासि कस्मै त्वा कतमस्मै त्वा काय त्वा कामस्य त्वासन्नसा अपिदधामि स त्वं नो देव गायत्रेण च्छन्दसाह्ने परिपाहि मृडोऽसि मृडसे द्विपदे चतुष्पद आदित्योऽसि वृष्णो अश्वस्य रेतो देवानां यातुरसि यातुर्मेऽस्यसुमाह्वि तं जहि स त्वं नो देव त्रैष्टुभेन च्छन्दसा रात्र्यै परिपाहि मृणोऽसि मृणामुष्य द्विपदश्चतुष्पदस्स्कम्भोऽसि वरुणस्य राज्ञो वरुणस्य पाशस्सोऽमुमह्ने बधान श्लेष्कोऽसि निर्ऋत्याः पाशस्सोऽमुं रात्र्यै बधानाग्नये वीतमन्यवे स्वाहा ॥ ३८

येनेन्द्रो वृत्रं निरहँश्छन्दसस्स्वादनुष्टुभः । तेनाहमद्य शँसेनामुं निर्हन्म्योकसः ॥१३॥ ३९

देवाश्च वा असुराश्च संयत्ता आसन्नसुरेषु तर्ह्यमृतमासीच्छुष्णे दानवे तच्छुष्ण एवान्तरास्येऽबिभर्यान् देवानामघ्नँस्तदेव तेऽभवन् यानसुराणां ताञ्छुष्णोऽमृतेनाभिव्यानीत् ते समानन् स इन्द्रोऽवेदसुरेषु वा अमृतँ शुष्णे दानव इति मध्वष्ठीला भूत्वा प्रपथेऽशयत् तां शुष्णोऽभि व्याददात् तस्येन्द्रश्श्येनो भूत्वास्यादमृतं निरमुष्णात् तस्मादेष वयसां वीर्यावत्तम इन्द्रस्य ह्येषैका तनूरमृतमेष बिभर्ति य एवं वेद यं कामयेतामयाविनं जीवेदिति तं व्यादायाभिव्यन्यादमृतेनैवैनमभिव्यनिति जीवति सर्वमायुरेति न पुरायुषः प्रमीयते ॥ देवाश्च वा असुराश्च संयत्ता आसँस्ते देवा असुरानघ्नँस्तेषां य उदशिष्यन्त ते देवानन्वरोहँस्त एनान् वृञ्जानाः प्रत्यस्यमाना आयँस्ते देवास्समितिमकुर्वत त एतौ ब्रह्मयातुं च देवयातुं चापश्यँस्ता एभ्यः प्रत्यवासृजँस्ता एनान्निरदहतां

[१३] वा. ७,२९; २०,४ । काण्व. ९,४, २१,९१ । [१४] मै. १,९,२०; १० २८; १,५,३; ३,१०,१४; ४,३,४ ।

ता एनान् वृञ्जानौ प्रत्यस्यमाना ऐतां तेषां येऽत्यमुच्यन्त ते मनुष्यान् प्राविशँस्तज्जन्मानो यातुधानाः क्रव्याद इतरे न ह वा अस्य यातुधाना न क्रव्यादो न पिशाचा न रक्षाँसीशते नैनँ शप्तं नाभिचरितमागच्छति य एवं वेद ॥ तद्यद्येनं यातुधान इति ब्रूयुर्नापह्नुवीतैतौ ह्येव तस्य यातू कोऽसि कतमोऽसीत्येष वै ब्रह्मयातुस्तस्मा एवैनमपिदधाति स त्वं नो देव गायत्रेण च्छन्दसाह्ने परिपाहीत्यह्न एवात्मानं परिददाति मृडोऽसि मृडसे द्विपदे चतुष्पद इति द्विपदश्चैवास्मै चतुष्पदश्च पशून् परिददात्यादित्योऽसि वृष्णो अश्वस्य रेतो देवानां यातुरसि यातुर्मेऽस्यसुमद्धि तं जहीत्येष वै देवयातुस्तस्मा एवैनमपिदधाति स त्वं नो देव त्रैष्टुभेन च्छन्दसा रात्र्यै परिपाहीति रात्र्या एवात्मानं परिददाति मृणोऽसि मृणामुष्य द्विपदश्चतुष्पद इति द्विपदश्चैवास्मै चतुष्पदश्च पशून्-पिदधाति ॥ स्कम्भोऽसि श्लेष्कोऽसीत्येतौ वै यमश्चा अहश्च रात्री च ता इदं मनुष्यान् वृञ्जानौ प्रत्यस्यमाना इतस्ताभ्यामेवैनमपिदधाति ता एनं वृञ्जानौ प्रत्यस्यमाना इतो यदा प्रव्लयव्यथित इव मन्येताग्नये वीतमन्यवे स्वाहेति जुहुयादीश्वरो वा अभिचरोऽशान्तः प्रत्यङ्क्तेता शान्त्यै॥१४॥
४०–४३

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा कामाय स्वाहा स्वमाय स्वाहाह्ने स्वाहा रात्र्यै स्वाहा तृप्तस्त्वं तृप्तोऽहं तृप्तो मे प्राणस्तृप्तो मे व्यानस्तृप्तो मेऽपानस्तृप्तं मे चक्षुस्तृप्तं मे श्रोत्रं तृप्ता मे वाक् तृप्तो म आत्मा द्यौर्मे पिता पृथिवी मे माता सूर्यो मे चक्षुर्वातो मे प्राणोऽस्तृतो नामाहमस्मि स इदं द्यावापृथिव्योरात्मानं परिददे तयोश्श्रये तयोः पराक्रमे गोपीथाय पिपृतं मा मा मा हिँसिष्टं पाहि द्विषः पाहि रिपः पाह्यदेव्या अभिशस्त्या अश्मासि तनूपानस्स म इह तन्वं पाहि ॥ त्वयि मे मर्म बृहस्पतौ प्राणस्स मा मृत्योः पाह्युद्वाचमुन्मनीषामुदिन्द्रियमुत्प्रजामुत्पशून्नेतँ स ऋच्छतु यो मैतस्या दिशोऽभिदासतीन्द्राग्नी मैतस्या दिशो गोपायतां पितरो मैतस्या दिशो गोपायन्तु सविता मैतस्या दिशो गोपायतु मित्रावरुणौ मैतस्या दिशो गोपायतां बृहस्पतिर्मैतस्या दिशो गोपायत्वायुष्टदायुपत्नि स्वधावो गोपा नस्स्थ रक्षितारो मा नः कश्चित् प्रस्वान्मा प्रमेष्महि ॥१५॥　　४४–४५

यान् वा असुरा देवेभ्यो न्यदधत तान् देवा अन्वपश्यन् यान् देवा असुरेभ्यस्तानसुरा नान्वपश्यँस्ततो देवा अभवन् परासुरा अभवन् यत्रान्यो नानुपश्येत् तदेतान्निदधीत भ्रातृव्यस्याननुख्यात्यै भवत्यात्मना परास्य भ्रातृव्यो भवति पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहेति त्रय

[१५] मै. ३,१२,१२ । वा. २२,२७,२९; ३९,१ । काण्व. २४,३७,३९, ३९,१ । [ पृथिव्यै स्वाहा । अथर्व. ५,९,२, ६ । अन्तरिक्षाय स्वाहा । अथर्व. ५,९,३,४ । दिवे स्वाहा । अथर्व. ५,९,१,५ ]

[१६] (पञ्चदशानुवाके द्रष्टव्यम् ।)

इमे लोका एभ्य एवैनं लोकेभ्यः परिददाति कामाय स्वाहेत्यायुर्वै परमः काम आयुरेव तेन स्पृणोति स्वप्नाय स्वाहेति या एवैनं स्वपन्तं नाष्ट्रा दिप्सन्ति स्वप्न एनं ताभ्यः पात्यह्ने स्वाहा रात्र्यै स्वाहेति द्वौ वा ऋतू अहश्च रात्री च ताभ्यामेवैनं परिददाति सप्तैता आहुतीर्जुहोति सप्त प्राणास्तानेवास्मिन् दधाति तानस्मिन्नधि वियातयति तानस्मादनपगान् करोति ॥ घृतेनाश्मानमनक्त्येषु ह्येतद्येतस्यात्मा तेजो घृतं यावानेवास्यात्मा तं तेजसानक्ति सर्वतोऽनक्ति सर्वत एवैनं तेजसा समर्धयति तृप्तस्त्वं तृप्तोऽहमिति प्राणानेवास्यैतन्महिम्नो व्याचष्टे प्राणा हि महिमानो द्यौर्मे पिता पृथिवी मे माता सूर्यो मे चक्षुर्वातो मे प्राण इत्येताभ्य एव देवताभ्य आत्मानं परिददात्यस्तृतो नामाहमस्मि स इदं द्यावापृथिव्योरात्मानं परिदद इति द्यावापृथिव्योरेवात्मानं परिदत्ते तयोश्श्रये तयोः पराक्रम इति यो वा अनयोः पराक्रमते न स व्यथतेऽनयोरेव पराक्रँस्त गोपीथाय पिपृतं मा मा मा हिँसिष्टमित्यात्मनोऽहिँसायै पाहि द्विषः पाहि रिषः पाह्यदेव्या अभिशस्त्या इत्याशिषमेवाशास्ते ॥ सर्वतोऽश्मानं परिहरत्येष ह्युतं सर्वतः पातीयान्तं लोष्टमुद्रुजत्येतावान् ह्यात्मा बाहुमात्रमवटं खनत्येतावान् हि पुरुषस्तमवधायाथाश्मानमथ हिरण्यमस्या एवैनमुत्तरार्धे निदधात्यनिखातो भवति नाभिं प्रति निखनति नाभिर्वै प्राणान् दाधार ये चोर्ध्वा ये चावाञ्चः प्राणानां धृत्यै हिरण्येन सँस्पर्शयत्यमृतं वै हिरण्यममृतेनैवैनँ संदधात्युद्वाचमुन्मनीषाममित्येतानि वा अस्य निखनेत् तान्येनेोद्धरत्यात्ममात्री वेदिर्भवत्यात्ममात्रँ हि वर्म यन्नात्ममात्री स्यान्नात्मने क्रियेतैतावती पृथिवी यावती वेदिरस्या एवैतदन्तेषु पुरोऽधित देवपुरा एवाकृताथो एता एव देवता एतासां दिशां परस्पा अकृत गोपीथाय ॥१६॥ ४६-४८

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यँस्तं वसिष्ठ एव प्रत्यक्षमपश्यत् सोऽबिभेदितरेभ्यो मर्षिभ्यः प्रवक्ष्यतीति सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्रवोच इति तस्मा एतान् स्तोमभागानब्रवीत् ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त स्तोमो वा एतेषां भागस्तत् स्तोमभागानाँ स्तोमभागत्वं रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति क्षयो वै देवा देवेभ्य एव यज्ञं प्राह प्रेतिरसि धर्मेण त्वा धर्मं जिन्वेति धर्मो मनुष्या मनुष्येभ्य एव यज्ञं प्राहान्वितिरसि दिवे त्वा दिवं जिन्व संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्वेति त्रय इमे लोका एभ्य एव लोकेभ्यो यज्ञं प्राह विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेति वृष्टिमेवावरुन्द्धे प्रवास्यनुवासीति मिथुनमेव करोत्युशिगसि वसुभ्यस्त्वा वसूञ्जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वेत्यष्टौ वसव एकादश रुद्रा

[१७] काठ. १७,७,२० । मै. २,८,८ (२०) । कपि. २६,६ । वा. १५,६—७,९ । काण्व. १६ ९—१२,१४—१५ । तै. सं. ३,५,२; ४,४,१ । गोप० ब्रा. १,२,१३—१४ । मा. श्रौ. ६,२,२ । तै. सं. ३,५,१ ।

द्वादशादित्या वाग्द्वात्रिँशी स्वरस्त्रयस्त्रिँशस्त्रयस्त्रिँशद्देवता देवताभ्य एव यज्ञं प्राहौजोऽसि पितृभ्यस्त्वा
पितृञ्जिन्वेति देवानेव पितृननुसंतनोति तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वेति प्रजा एव पशूननुसं-
तनोति पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेति प्रजा एव पशूननुसंतनोति रेवदस्योषधीभ्यस्त्वौषधी-
र्जिन्वेत्योषधीष्वेव पशून् प्रतिष्ठापयत्यभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेति वज्रो वै षोडशी
व्यावृत्तोऽन्यैर्वज्रस्तस्मादेषोऽन्यैर्व्यावृत्तोऽधिपतिरसि प्राणाय त्वा प्राणं जिन्वेति प्राणमेवावरुन्द्धे
धरुणोऽस्यपानाय त्वापानं जिन्वेत्यपानमेवावरुन्द्धे सँसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्वेति चक्षुरेवावरुन्द्धे
वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्वेति श्रोत्रमेवावरुन्द्धे ॥ एतद्वै पुरुषमकरथातः प्राणानुपैति प्रजा-
पतिमेव त्रिवृदसि त्रिवृते त्वा सवृदसि सवृते त्वा प्रवृदसि प्रवृते त्वानूवृदस्यनूवृते त्वेति मिथुनमेव
करोति संरोहोऽसि विरोहोऽसि प्ररोहोऽस्यनूरोहोऽसीति प्रजापतिरेव वसुकोऽसि वस्वष्टिरसि वेषश्री-
रसीति प्रतिष्ठितिरेव देवस्य सवितुः प्रसवे बृहस्पतये स्तुतेति यद्यद्वै सविता देवेभ्यः प्रासुवत्
तेनार्ध्नुवन् सवितृप्रसूता एव स्तुवन्त्यृध्नुवन्ति यस्यैवं विदुषो यस्यैवं विद्वान् स्तोमभागैर्ब्रह्मा भवति
वसीयान् भवति ॥१७॥ ४९–५०

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन मधुमतीं मधुमता सृजामि सँ सोमेन सोमो-
ऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥ ५१

परीतो षिञ्चता सुतँ सोमो य उत्तमँ हविः ।
दधन्वान् यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ ५२

वायुः पूतः पुनातु ते ॥ ५३

ब्रह्म क्षत्रं पवते तेज इन्द्रियँ सुरया सोमस्सुत आसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ॥ ५४

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ ५५

उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि सरस्वत्या इन्द्राय सुत्राम्ण एष ते योनिस्तेजसे
त्वा वीर्याय त्वा बलाय त्वा ॥ ५६

[१८] काठ. १२.९ (२२-२७)। मै. १,११.४; २,३,८; ३,११,७ (३१; ३६-४१; ४९-५६)। वा. १०,३१; १९,१, ३-४,६; २०,३३; २३.३८। काण्व. ११,४५; २१.१,३—५, २२,१८; २५,४०। तै. सं. १,८,२१; ३,२,८ ३। तै. ब्रा. १.४,३; २,६,१,३ । [परीतो षिञ्चता सुतँ०। ऋ. ९.१०७,१; सा. ५१२, १३१३; तै. ब्रा. २,६, १,१। वायुः पूतः०। अथर्व. ६,५१,१। पुनातु (०ति) ते०। ऋ ९,१,६; तै. सं १,८,२१,१; तै ब्रा. २,६, १,२। कुविदङ्ग यवमन्तो०। ऋ. १०,१३१,२; अथर्व. २०,१२५,२; तै. सं. १,८,२१,१; ५,२,११,१; तै. ब्रा. २,६,१,३]

नाना हि वां देवकृतँ सदस्कृतं मा सँसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिँसीस्स्वं योनिमाविशन् ॥ ५७
उपयामगृहीतोऽस्याश्विनं तेजस्सारस्वतं वीर्यमैन्द्रं बलमेष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥ ५८
या व्याघ्रं विषूचिकोभौ वृकं च रक्षति । श्येनं पतत्रिणँ सिँहँ सोमं पात्वँहसः ॥ ५९
संपृचस्स्थ सं मा भद्रेण पृङ्क्त विपृचस्स्थ वि मा पाप्मना पृङ्क्त ॥१८॥ ६०
[२३८१]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां सवा नाम सप्तत्रिंशं स्थानकं संपूर्णम् ॥३७॥

---

अथाष्टात्रिंशं स्थानकम् ।

## सौत्रामणी ।

सोमो राजामृतँ सुत ऋजीषेणाजहान्मृत्युम् ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ १
सोममद्भ्यो व्यपिबच्छन्दसा हँसश्शुचिषत् ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ २
अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ३
अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रम् ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ४
रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियम् ।
गर्भो जरायुणावृत उल्वं जहाति जन्मना ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ५
वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ६
दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः । अश्रद्धामनृतेऽदधाच्छ्रद्धाँ सत्ये प्रजापतिः ।
ऋतेन सत्यमिन्द्रियँ विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ ७

---

[१] मै. ३,११,६ (३९-४८) । वा. १९,७२—७९ । काण्व. २१,७२—७६ । तै. ब्रा. २,६,२ ।

दृष्ट्वा परिस्रुतो रसँ शुक्रेण शुक्रं व्यपिबत् पयस्सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥१॥ ८
सुरावन्तं बर्हिषदँ सुवीरं यज्ञँ हिन्वन्ति महिषा नमोभिः ।
दधानास्सोमं दिवि देवतासु मदेनेन्द्रं यजमानास्स्वर्काः ॥ ९
यस्ते रसस्संभृत ओषधीषु सोमस्य शुष्मस्सुरया सुतस्य ।
तेन जिन्व यजमानं मदेन सरस्वतीमश्विना इन्द्रमग्निम् ॥ १०
यमश्विना नमुचेरासुरादधि सरस्वत्यसनोदिन्द्रियाय ।
इमं तँ शुक्रं मधुमन्तमिन्दुँ सोमं राजानमिह भक्षयामि ॥ ११
यदत्र रिप्तँ रसिनस्सुतस्य यदिन्द्रो अपिबच्छचीभिः ।
अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि ॥ १२
पितृभ्यस्स्वधायिभ्यस्स्वधा नमः पितामहेभ्यस्स्वधायिभ्यस्स्वधा नमः प्रपितामहेभ्यस्स्वधायिभ्य-
स्स्वधा नमोऽक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरश्शुन्धध्वम् ॥ १३
पुनन्तु मा पितरस्सोम्यासः पुनन्तु मा पितामहाः ।
पुनन्तु प्रपितामहाः पवित्रेण शतायुषा ॥ १४
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ १५
अग्न आयूँषि पवसे ॥ १६
पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ १७
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँरनु ॥ १८
यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥ १९
पवमानस्स्वर्जनः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ २०
उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ २१
वैश्वदेवी पुनती देव्यागाद्यस्या इमास्तन्वो वीतपृष्ठाः ।
तया मदन्तस्सधमाद्येषु वयँ स्याम पतयो रयीणाम् ॥ २२

---

[१] मै. ३,११,७; १० (५७-६०, ८८-१०४) । वा. १९,३२—४८ । काण्व. २१,३२—५० । तै. ब्रा. २,६,३,६ । **अग्न आयूँषि पवसे०** । ऋ. ९,६६,१९; सा. ६२७; १४६४; १५१८, तै. सं. १,३,१४,७; ४,२९,१; ५,५,१; ६,६,२; तै. ब्रा. २,६,३,४; तै. आ. २,५,१ । **पुनन्तु मा** (मां) **देवजनाः०** । ऋ. ९,६७,२७; अथर्व. ६,१९,१; तै. ब्रा. १,४,८,१; २,६,३,४ । **यत्ते पवित्रमर्चिष्यग्ने०** । ऋ. ९,६७,२३; तै. ब्रा. १,४,८,२ । **पवमानस्स्वर्जनः पवित्रेण०** । ऋ. ९,६७,२२ । **उभाभ्यां देव सवितः०** । ऋ. ९,६७,२५; अथर्व. ६,१९,३ । **वैश्वदेवी पुनती०** । ऋ. परि. १९,२; अथर्व. ६,६२,२ । **वयँ स्याम पतयो रयीणाम्** (च. पा.) । ऋ. ४,५०,६; ५,५५,१०; ८,४०,१२; ४८,१३; १०,१२१,१०; अथर्व. ६,६१,२ ]

ये समानास्समनसः पितरो यमराज्ये । तेषां लोकस्स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ २३
ये समानास्समनसो जीवा जीवेषु मामकाः ।
तेषाँ श्रीर्मयि कल्पतामस्मिंल्लोके शतँ समाः ॥ २४
द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥ २५
इदँ हविः प्रजननं मे अस्तु दशवीरँ सर्वगणँ स्वस्तये ।
आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि ।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥ २ ॥ २६

सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति ।
अश्विना यज्ञँ सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यम् ॥ २७
तदस्य रूपममृतँ शचीभिस्तिस्रो दधुर्देवतास्संरराणाः ।
लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य माँसमभवन्न लाजाः ॥ २८
तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम् ।
अस्थि मज्जानं मासरैः करोतरेण दधतो गवां त्वचि ॥ २९
सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः ।
रसं परिस्रुता न रोहितं नग्नहुर्धीरस्तसरं न वेम ॥ ३०
पयसा शुक्रममृतं जनित्रँ सुराया मूत्राज्जनयन्ति रेतः ।
अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातँ सब्वं तदारात् ॥ ३१
इन्द्रस्सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान ।
यकृत् क्लोमानं वरुणो भिषज्यन् मतस्ने वायव्यैर्न मिनाति पित्तम् ॥ ३२
अन्त्राणि स्थाली मधु पिन्वमाना गुदाः पात्राणि सुदुघा न धेनुः ।
श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी नाभिरुदरं न माता ॥ ३३
कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः ।
प्लाशिर्व्यक्तश्शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥ ३४
मुखँ सदस्य शिर इत्सतेन जिह्वा पवित्रमश्विनासन् सरस्वती ।
चप्यं न पायुर्भिषगस्य वारो वस्तिर्न शेपो हरसा तरस्वी ॥ ३५

[ द्वे स्रुती अशृणवं० । ऋ. १०,८८,१५; तै. ब्रा. १,४, २,३; २,६,३,५; शत. ब्रा. १४,९; १,४ ]
[ ३ ] मै. ३,११,९ (७२—८७) । वा. १९,८०-९५ । काण्व. २१,७७-९२ । तै. ब्रा. २,६,४ ।

अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन ।
पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्रमसितं वसाते ॥ ३६
अविर्न मेषो नसि वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् ।
सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ॥ ३७
इन्द्रस्य रूपमृषभो बलाय कर्णाभ्याँ श्रोत्रममृतं ग्रहाभ्याम् ।
यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे मधु सारघं मुखात् ॥ ३८
आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि न व्याघ्रलोम ।
केशा न शीर्षन् यशसे श्रियै शिखा सिँहस्य लोम त्विषिरिन्द्रियाणि ॥ ३९
अङ्गान्यात्मन् भिषजा तदश्विनात्मानमङ्गैस्समधात् सरस्वती ।
इन्द्रस्य रूपँ शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधाना ॥ ४०
सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति ।
अपां रसेन वरुणेन साम्नेन्द्रँ श्रियै जनयन्नप्सु राजा ॥ ४१
तेजः पशूनाँ हविरिन्द्रियावत् परिस्रुता पयसा सारघं मधु ।
अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याममृतस्सोम इन्दुः ॥३॥ ४२

क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि स्योनासि सुषदासि स्योनामासीद सुषदामासीद मा त्वा
हिँसीन्मा मा हिँसीः ॥ ४३

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ ४४

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसा-
याभिषिञ्चामि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्या भैषज्येन
वीर्यायान्नाद्यायाभिषिञ्चामि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रस्ये-
न्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि कोऽसि को नामासि कस्मै त्वा काय त्वा सुश्लोका३
सुमङ्गला३ सत्यराजा३न् ॥ ४५

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि ।
राजा मे प्राणो अमृतँ सम्राट् चक्षुर्विराट्छ्रोत्रम् ॥ ४६

---

[ ४ ] मै. ३,११,८ (६१-७१) । वा. १०,२७; २०,१—१३ । काण्व. ११,३७, २१,९३-१०६ । तै. ब्रा २.६,५ ।
[ निषसाद धृतव्रतो० । ऋ. १,२५,१०; तै. सं. १,८,१६,१; तै. ब्रा. १,७,१०,२; २,६,५,१ । देवस्य त्वा
सवितुः० । काठ. १,२,५; अथर्व. १९,५१,२; ऐ. ब्रा. ८,७ ]

जिह्वा मे भद्रं वाङ् महो मनो मन्युस्स्वराड् भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥ ४७
बाहू मे बलमिन्द्रियँ हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम ॥ ४८
पृष्टीर्मे राष्ट्रमुदरमँसौ ग्रीवाश्च श्रोण्यौ । ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥ ४९
नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् ।
आनन्दनन्दा अण्डौ मे भगस्सौभाग्यं पसः ॥ ५०
जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः ।
प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ ५१
प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् प्रति प्राणेषु प्रतितिष्ठामि पुष्टे ।
प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ॥ ५२
त्रयो देवा एकादश त्रयस्त्रिँशास्सुराधसः । बृहस्पतिप्रसूता देवस्य सवितुस्सवे ॥ ५३

देवा देवैरवन्तु मा प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयास्सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूँषि
सामभिस्सामान्यृग्भिर्ऋचो याज्याभिर्याज्या वषट्कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान् समर्ध-
यन्तु भूस्स्वाहा ॥ ५४

लोमानि प्रयतिर्मम त्वङ् म आनतिरागतिः ।
माँसं म उपनतिर्वस्वस्थि मज्जा म आनतिः ॥४॥ ५५

यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥ ५६
यदि दिवा यदि नक्तमेनाँसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः॥ ५७
यदि जाग्रद्यदि स्वप्न एनाँसि चकृमा वयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः॥५८
यद्ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् ।
यदेकस्याधि धर्मणि तस्यावयजनमसि ॥ ५९

यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्चावभृथ निचुङ्कुण निचेरुरसि निचुङ्कुणो-
ऽव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि ॥ ६०

समुद्रे ते हृदयमप्स्वन्तस्सं त्वा विशन्त्वोषधीरुतापः ॥ ६१

---

[५] मै. ३,११,१०; १,३,३९; २,१२,५; ४,९,२७ (१०५—११२; ११८—११९; ३४; २५६) वा. २०,१४-२३; ८,२५· २७,१०; ३५,१४; ३८,२४—२५ । काण्व. २२,१—८; ९,२५; २९,१०; ३५,४७; ३८,२४ । तै. सं. १,४ ४५ । [ यद्देवा देवहेडनं० । अथर्व. ६,११४,१ । यदि दिवा यदि० । अथर्व. ६,११५,१ । यदि जाग्रद्यदि स्वप्न० । अथर्व. ६,११४,१—२ । यदापो अघ्न्या वरुणेति० । अथर्व. ७,८३,२; १९,४४,९ ]

सुमित्रा ण आप ओषधयो भवन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः॥६२
द्रुपदादिवेन्मुमुचानस्स्विन्नस्स्नात्वी मलादिव।
पूतं पवित्रेणेवाज्यमापश्शुन्धन्तु मैनसः॥ ६३
उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ ६४
प्रत्यस्तो वरुणस्य पाशः प्रतियुतो वरुणस्य पाशः॥ एधोऽस्येधिषीमहि समिदसि॥ तेजो-
ऽसि तेजो मयि धेहि॥ ६५-६७
अपो अद्यान्वचारिषं रसेन समगन्महि। पयस्वानग्न आगमं तं मा सँसृज वर्चसा॥ ६८
समाववर्ति पृथिवी समुषास्समु सूर्यः। वैश्वानरज्योतिर्भूयासं विभुं कामं व्यश्नवै॥ ६९
भूस्स्वाहा॥५॥ ७०

समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः।
त्रिभिर्देवैस्त्रिँशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार॥ ७१
नराशँसः प्रति शूरो मिमानस्तनूनपात् प्रति यज्ञस्य धाम।
गोभिर्वपावान् मधुना समञ्जन् हिरण्यैश्चन्द्री यजतु प्रचेताः॥ ७२
ईडितो देवैर्हरिवाँ अभिष्टिराजुह्वानो हविषा शर्धमानः।
पुरंदरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः॥ ७३
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनँ सीदत् प्रदिशा पृथिव्याः।
उरुप्रथाः प्रथमानँ स्योनमादित्यैरक्तं वसुभिस्सजोषाः॥ ७४
इन्द्रं दुरः कवष्यो धावमाना वृषाणं यन्तु जनयस्सुपत्नीः।
द्वारो देवीरभितो विश्रयन्ताँ सुवीरा वीरं प्रथमाना महोभिः॥ ७५
उषासानक्ता बृहती बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम्।
पेशस्वती तन्तुना संव्ययन्ती देवानां देवं यजतस्सुरुक्मे॥ ७६
दैव्या मिमाना मनसा पुरुत्रा होतारा इन्द्रं प्रथमा सुवाचा।
मूर्धन् यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः॥ ७७

---

[ द्रुपदादिव मुमुचानः० । अथर्व. ६,११५,३ । उद्वयं तमसस्परि० । ऋ. १,५०,१०, अथर्व. ७,५३,७; तै.सं.४,१,७,४; तै. ब्रा. २,४,४,९; ६,६,४; तै. आ. ६,३,२। एधोऽस्येधिषीमहि०। अथर्व. ७.८९,४ । तेजोऽसि तेजो मयि धेहि० । अथर्व. ७,८९,४; १९,३१,१२ । अपो (आपो) अद्यान्वचारिषं० । ऋ. १,२३, २३; १०,९,९; तै. सं. १,३,४५,३; ४६,२; तै. ब्रा. २,६,६,५ ।

[ ६ ] मै. ३,११,१ (१-११) । वा. २०,३६—४६ । काठ. ३८,६—११ । तै. ब्रा. २,६,८ ।

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः ।
अच्छिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः ॥ ७८
त्वष्टा दधदिन्द्राय शुष्ममपाकोऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन् वृषणं भूरिरेता मूर्धन् यज्ञस्य समनक्तु देवान् ॥ ७९
वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानस्स्वदाति यज्ञं मधुना घृतेन ॥ ८०
स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो वृषभस्तुराषाट् ।
घृतप्रुषा मनसा हव्यमुन्दन् मूर्धन् यज्ञस्य जुषतां स्वाहा ॥६॥ ८१

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः ।
स्तुतश्श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥ ८२
त्रिवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अँहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥ ८३
तँ सध्रीचीरूतयो वृष्ण्यानि पौँस्यानि नियुतस्सश्चुरिन्द्रम् ।
समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आविशन्ति ॥ ८४
सत्यमित् तन्न त्वावाँ अन्यो अस्तीन्द्र देवो न मर्त्यो ज्यायान् ।
अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रम् ॥ ८५
प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्राभर दक्षिणेना वसूनि पतिस्सिन्धूनामसि रेवतीनाम् ॥ ८६
स शेवृधमधिधा द्युम्नमस्मे महि क्षत्रं जनाषाडिन्द्र तव्यम् ।
रक्षा च नो मघोनः पाहि सूरीन् राये च नस्स्वपत्या इषे धाः ॥७॥ ८७

समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः ।
दुहे धेनुस्सरस्वती सोमँ शुक्रमिहेन्द्रियम् ॥ ८८

---

[७] मै. ४,१२,३; १४,१८ (४९; २६३-२७८)। तै. ब्रा. २,६,९। [आ चर्षणिप्रा वृषभो० । ऋ. १ १७७,१; तै. ब्रा. २,४,३,११ । त्रिवेष यन्मा धिषणा० । ऋ. ३,३२,१४; तै. सं. १,६,१२,३; २,५,१२,५; तै. ब्रा. २, ६,९,१ । तँ सध्रीचीरूतयो० । ऋ. ३,३६,३, तै. ब्रा. २,४,५,२; ६,९,१ । सत्यमित् तन्न त्वावाँ० । ऋ. ६,३०,४; तै. ब्रा. २,६,९,१ । प्र ससाहिषे० । ऋ. १०,१८०,१; तै. सं. ३,४,११,४; तै. ब्रा. २,६,९,१; ३,५,७,४ । स शेवृधमधिधा० । ऋ. १,५४,११; तै. ब्रा. २,६,९,१]

[८] मै. ३,११,३ (१३—२३)। वा. २०,५५—६६ । काण्व. २२,४१—५१ । तै. ब्रा. २,६,१२ । [समिद्धो अग्निरश्विना० । अथर्व. ७,७३,१]

तनूपा भिषजा सुतेऽश्विनोभा सरस्वती । मध्वा रजाँसीन्द्रियमिन्द्राय पथिभिर्वहान् ॥ ८९
इन्द्रायेन्दुँ सरस्वती नराशँसेन नग्नहुम् । अधातामाश्विना मधु भेषजं भिषजा सुते ॥ ९०
आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् । इडाभिरश्विना इषँ समूर्जँ सं रयिं दधुः॥ ९१
अश्विना नमुचेस्सुतँ सोमँ शुक्रं परिस्रुता । सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥ ९२
कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।
इन्द्रो न रोदसी दुघे दुहे कामान् सरस्वती ॥ ९३
उषासा नक्तमश्विना दिवेन्द्रँ सायमिन्द्रियैः । संजानाने सुपेशसा समञ्जाते सरस्वत्या॥ ९४
पातं नो अश्विना दिवा पाहि नक्तँ सरस्वति ।
दैव्या होतारा भिषजा पातमिन्द्रँ सचा सुते ॥ ९५
तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा । तीव्रं परिस्रुता सोममिन्द्रायासुषवुर्मदम् ॥ ९६
अश्विना भेषजं मधु भेषजं नस्सरस्वती । गोभिर्न सोममश्विना मासरेण परिस्रुतम् ।
समधाताँ सरस्वत्या स्वाहेन्द्रे सुतं मधु ॥८॥ ९७

अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु मघमिन्द्राय जभ्रिरे ॥ ९८
यमश्विना सरस्वती हविषेन्द्रमवर्धयन् । स बिभेद बलं मघं नमुचा आसुरे सचा ॥ ९९
तमिन्द्रं पशवस्सचाश्विनोभा सरस्वती । दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियम् ॥ १००
य इन्द्र इन्द्रियं दधुस्सविता वरुणो भगः । स सुत्रामा हविष्पतिर्यजमानाय सश्चत॥ १०१
सविता वरुणो दधद्यजमानाय दाशुषे । आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥ १०२
वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत॥१०३
अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् । हविषेन्द्रँ सरस्वती यजमानमवर्धयन् ॥ १०४
ता नासत्या सुपेशसा हिरण्यवर्तनी नरा । सरस्वती हविष्मतीन्द्र कर्मसु नोऽवत ॥ १०५
ता भिषजा सुकर्मणा सा सुदुघा सरस्वती । स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम्॥१०६
युवँ सुराममश्विना नमुचा आसुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ १०७
पुत्रमिव पितरा अश्विनोभेन्द्रावथुः काव्यैँर्दंसनाभिः ।
यत् सुरामं व्यपिबश्शचीभिस्सरस्वती त्वा मघवन्नभिष्णक् ॥ १०८

[९] मै. ३,११,४ (२४—३०,३२-३७) । वा. २०,६७-७९; १०,३३-३४ । काण्व. २२,५२—६४; ११,४६-४७ । तै. ब्रा. २,६,१२—१३ । [ युवँ सुराममश्विना० । ऋ. १०,१३१,४; अथर्व. २०,१२५,४· तै. ब्रा. १,४,२, १ । पुत्रमिव पितरा० । ऋ. १०,१३१,५; अथर्व. २०,१२५,५; तै. ब्रा. १,४,२,१ ]

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टा आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनय चारुमग्नये ॥ १०९
अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥९॥ ११०

समिद्धो अग्निस्समिधा सुषमिद्धो वरेण्यः । गायत्री छन्द इन्द्रियं त्रियविर्गौर्वयो दधुः ॥ १११
तनूनपाच्छुचिव्रतस्तनूपाश्च सरस्वती । उष्णिहा छन्द इन्द्रियं दित्यवाड् गौर्वयो दधुः ॥ ११२
इडाभिरग्निरीड्यस्सोमो देवो अमर्त्यः । अनुष्टुप् छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः ॥ ११३
सुबर्हिरग्निः पूषण्वाँ स्तीर्णबर्हिरमर्त्यः । बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधुः ॥ ११४
दुरो देवीर्दिशो महीर्ब्रह्मा देवो बृहस्पतिः ।
पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड्गौर्वयो दधुः ॥ ११५
उषे यह्वी सुपेशसा विश्वे देवा अमर्त्याः । त्रिष्टुप् छन्द इहेन्द्रियं पष्ठवाड्गौर्वयो दधुः ॥ ११६
दैव्या होतारा भिषजेन्द्रेण सयुजा युजा ।
जगती छन्द इन्द्रियमनड्वान् गौर्वयो दधुः ॥ ११७
तिस्र इडा सरस्वती भारती मरुतो विशः ।
विराट् छन्द इहेन्द्रियं धेनुर्गौर्न वयो दधुः ॥ ११८
त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टिवर्धना ।
द्विपदा छन्द इन्द्रियमुक्षा गौर्न वयो दधुः ॥ ११९
शमिता नो वनस्पतिस्सविता प्रसुवन् भगम् ।
ककुप् छन्द इहेन्द्रियं वशा वेहद्वयो दधुः ॥ १२०
स्वाहा यज्ञं वरुणस्सुक्षत्रो भेषजं करत् ।
अतिच्छन्द इन्द्रियं बृहदृषभो गौर्वयो दधुः ॥१०॥ १२१

वसन्तेनर्तुना देवा वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥ १२२
ग्रीष्मेण देवा ऋतुना रुद्राः पञ्चदशे स्तुतम् ।
बृहता यशसा बलँ हविरिन्द्रे वयो दधुः ॥ १२३

---

[ यस्मिन्नश्वास ऋषभास० । ऋ. १०,९१,१४, तै. ब्रा. १,४,२,१ । अहाव्यग्ने हविरास्ये० । ऋ. १०,९१, १५; तै. ब्रा. १,४,२,१ ]

[१०] मै. ३,११,११ (१११—१२१) । वा. २१,१२—२२ । काण्व. २३,१३—२३ । तै. ब्रा. २,६,१८ ।

[११] मै. ३,११,१२ (१२४—१२९) । वा. २१,२३,२८ । काण्व. २३,२४—२९ । तै. ब्रा. २,६,१९ ।

वर्षाभिर्ऋतुनादित्यास्तोमे सप्तदशे स्तुतम् । वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः॥ १२४
शारदेनर्तुना देवा एकविँश ऋभवस्स्तुतम् । वैराजेन श्रिया श्रियँ हविरिन्द्रे वयो दधुः॥ १२५
हेमन्तेनर्तुना देवास्त्रिणवे मरुतस्स्तुतम् । बलेन शक्करीस्सहो हविरिन्द्रे वयो दधुः ॥ १२६
शैशिरेणर्तुना देवास्त्रयस्त्रिँशेऽमृतँ स्तुतम् ।
सत्येन रेवतीः क्षत्रँ हविरिन्द्रे वयो दधुः ॥११॥ १२७

बृहस्पतिपुरोहिता देवा देवानां देवा देवाः प्रथमजा देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु
द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रयस्त्रिँशा अनु व आरभ इदँ शकेयं यदिदं करोमि ते मावत ते मा
जिन्वतास्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्याम् ॥ १२८

योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी । यमं भङ्गश्रवो गाय यो राजानपरोध्यः॥ १२९
यमं गाय भङ्गश्रवो यो राजानपरोध्यः । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा॥ १३०
हिरण्यकेशान् सुधुरान् हिरण्याक्षानयश्शफान् ।
अश्वाननश्यतो दानं यमो राजाधितिष्ठति ॥ १३१
अयं योऽसि यस्य त इदँ शिर एतेन त्वमत्र शीर्षण्वानेधि ।
इदमस्माकं भुजे भोगाय भूयात् ॥ १३२
उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतस्सधस्थात् ।
आशुं त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥ १३३
धनंजयस्सहमानः पृतन्युरग्न इषमूर्जं यजमानाय धेहि ।
विश्वाः पृतनास्सहमानस्सहोभिरन्नं नो धेहि बहुधा विरूपं यत् प्रजा अनु जीवन्ति सर्वाः॥
१३४

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा वैश्वानराय त्रैष्टुभेन
च्छन्दसाहरुपदधे देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा वैश्वानरायानुष्टुभेन च्छन्दसा रात्रीमुपदधे ॥ १३५

पुनस्त्वादित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन ते तन्वं वर्धयामि सत्यास्सन्तु यजमानस्य कामाः ॥ १३६

---

[१२] मै. १,१,११,१३; २,७२; ३,९; ७,४, ९,५; ११,२६, २,६,१०, ७,९,२७--२८, ३०; ३,५,३; ८,११; ११, ६१; ४,१,९.५१,६०; ९,२,९९; १३,२२—२४। काठ. १,२,५। वा. ११,२५--२६; १२,४४। काण्व. १२,२५—२६.८५; १३,४५। [ योऽस्य कौष्ठ०। तै. आ. ६,५,२। देवस्य त्वा सवितुः०। अथर्व. १९,५१,२; ऐ. ब्रा. ८,७। पुनस्त्वादित्या रुद्रा०। ऋ. १०,११६.८, अथर्व. १२,२,६; तै. सं. ४,२,३,४; ५,२,२,५ ]

अग्निर्होता नो अध्वरे वाजी सन् परिणीयते । देवो देवेषु यज्ञियः ॥ १३७
परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ १३८
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ १३९
परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम् ॥ १४०
परि प्रागाद्देवो अग्नी रक्षोहामीवचातनः । सेधन् विश्वा अप द्विषो दहन् रक्षाँसि विश्वहा ॥ १४१
चितस्स्थ परिचित ऊर्ध्वश्रितश्श्रयध्वम् । प्रजामस्मै रयिमस्मै नियच्छत ॥१२॥ १४२

व्रजं कृणुध्वँ स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वस्सुस्रोच्चमसो दृँहता तम् ॥ १४३
अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भम् ।
दश स्वसारो अग्रुवस्समीचीः पुमाँसं जातमभिसंरभन्ताम् ॥ १४४
साकँ हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।
विद्वाँ अस्य व्रता ध्रुवा वया इवानुरोहति ॥ १४५
अपास्मदेतु निर्ऋतिर्नेहास्या अपि किं चन । अगोतां नाष्ट्रां पाप्मानँ सर्वं तदपहन्महे ॥ १४६
अपास्य नैर्ऋतान् पाशान् मृत्योरेकशतं चये ।
अपास्य ये सिनाः पाशा मृत्योरेकशतँ सुवे ॥ १४७
ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे । ताँस्ते यज्ञस्य मायया सर्वानवयजामहे ॥ १४८
देवीमहं निर्ऋतिं बाधमानः पितेव पुत्रं दमये वचोभिः ।
या जायमानस्य जायमानस्य शिरो देवी प्रति सूर्विचष्टे ॥ १४९
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥ १५०
ऊर्जं बिभ्रद्वसुवनिस्सुमेधा गृहाणां मोदमाना सुवर्चाः ।
अघोरेण चक्षुषाहँ शिवेन गृहाणां पश्यन् वय उत्तिरामि ॥ १५१

---

[अग्निर्होता नो अध्वरे० । ऋ. ४,१५,१; तै. ब्रा. ३,६,४,२ । परि त्रिविष्ट्यध्वरं० । ऋ ४,१५.२; तै. ब्रा. ३,६,४,१ । परि वाजपतिः० । ऋ. ४,१५,३; सा. ३०; तै. सं. ४.१,२,५; तै. सं. ३ ६,४,१ । परि त्वाग्ने पुरं वय०। ऋ. १०,८७,२२; अथर्व. ७,७१,१; ८,३,२२; तै. सं. १,५,६,४; ४,१,२,५ ]

[१३] मै. २.७,१५२; ४,१२,३५। वा. १२,५३; ३५,२१; ३६,१२–१३ । काण्व. १३,५४; ३५,५४; ३६,११—१३। [ व्रजं कृणुध्वं०। ऋ. १० १०१.८; अथर्व. १९,५८,४। अजीजनन्नमृतं मर्त्यासो०। ऋ. ३,२९,१३; तै. ब्रा. १,२,१,१९ । साकँ हि शुचिना० । ऋ. २,५,४ । शं नो देवीरभिष्टय० । ऋ. १०,९,४: सा. ३३; अथर्व. १,६,१; तै. ब्रा. १,२,१,१; २,५,८,५; तै. आ. ४,४२,४ ]

गृहाणामायुः प्र वयं तिराम गृहा अस्माकं प्रतिरन्त्वायुः ।
येन देवा ज्योतिषोर्ध्वा उदायन् येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानस्स्वस्ति ॥ १५२
स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नश्शर्म सप्रथाः ॥ १५३

वाक्त्वा समुद्र उपदधातु प्रजावनिं रायस्पोषवनिं मह्यं वाजिनाय मही ध्रुवा सलिलासि ज्योति-
ष्मती सा स्वर्गं लोकं प्रजानीहि प्रजापतिः प्रजापतौ सादयतु तयाङ्गिरस्वद् ध्रुवा सीद ॥१३॥
१५४

उ॑द॑स्थाद्ध॑नजि॑द्गोजि॑दश्वजि॑द्धि॑रण्यजि॑त् सू॒नृ॑तया॒ प॑री॒वृतः ।
ए॒तच॑क्रेण सवि॒ता॑ र॑थेनो॒र्जो॑ भा॒गं॑ पृथि॒वीमि॑त्या॒पृण॑न् ॥ १५५
सँ वरत्रा॑न् दधातन नि॑राहा॒वँ कृणो॑तन ।
सिञ्चा॑महा अवतँ व॒यमु॒द्रि॒णं॑ विश्वा॒हा॒दस्तम॑क्षितम् ॥ १५६
ब्रह्म जज्ञानँ प्रथमँ पुर॑स्ताद्वि सीमतस्सुरु॑चो वेन॑ आवः ।
स॑ बुध्न्या॑ उपमा॑ अस्य विष्ठा॒स्सत॑श्च यो॑निमस॑तश्च वि॑वः ॥ १५७
अ॑नाप्ता॒ या॑ वः प्रथमा॑ य॑स्यां क॑र्माणि कु॒र्वते॑ ।
वीरा॑न्नो अ॑त्र मा॑ दभँस्त॑द्व ए॒तत् पुरो॑ दधे ॥ १५८
प॑र्यू॒ षु प्र॑धन्व वा॑जसात॑ये प॑रि वृ॒त्रा॑णि सक्ष॑णिः ।
द्वि॒षस्तर॑ध्या ऋणया॑ न ई॑यसे ॥ १५९
स॒हस्रधा॑रेऽव तेँ स॑मस्वरन् दि॒वो॑ ना॑के म॑धुजिह्वा असश्च॑तः ।
त॑स्य स्प॑शो न॑ नि॑मिषन्ति भू॒र्णयः पदे॑ पदे पा॒शिनस्सन्ति सेत॑वः ॥ १६०

मलिम्लुचो॑ ना॑मासि त्रयोदशो॑ मा॑स इन्द्रस्य श॑र्मासी॑न्द्रस्य व॑र्मासी॑न्द्रस्य व॑रूथमसि तँ त्वा
प्र॑पद्ये स॑गुस्सा॑श्वस्स॑पुरुषः ॥ सह य॑न्मे॑ऽस्ति ते॑न स॑ मे श॑र्म च व॑र्म च भव गायत्री॑ल्लो॑माभिः प्र॑-
विशामि त्रिष्टु॑भं त्वचा॑ प्र॑विशामि ज॑गतीं माँसे॑न प्र॑विशाम्यनुष्टु॑भमस्थ्ना॑ प्र॑विशामि पङ्क्तिं मज्ज्ञा॑
प्र॑विशामि ॥ १६१-१६२

---

[ स्योना पृथिवी० । ऋ. १,२२,१५; अथर्व. १८,२,१९; तै. आ. १०,१,१०; नि. ९,३२ ]

[१४] मै. २,७,१६१; १९७ : वा. १३,३ । काण्व. १४,३ । [ सं वरत्रान् दधातन० । तै॰ सं ४,२,५,५ । ब्रह्म जज्ञानं प्रथमं० । अथर्व. ४,१,१, ५,६,१; काठ. १६,२०,१८३; २०,५,८; तै. सं. ४,२,८,२ । अनाप्ता या (ये) वः० । अथर्व. ४,७,७ । पर्यू षु प्रधन्व० । ऋ. ९,११०,१; सा. ४२८; १३६४; अथर्व. ५,६,४ । सहस्रधारेऽव समस्वरन्० । ऋ. ९,७३,४; अथर्व. ५,६,३ ]

ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति शूराः ।
तन्नस्त्रायतां तन्वस्सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥१४॥ १६३
[१५४४]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां सौत्रामणीनामाष्टात्रिंशं स्थानकं संपूर्णम् ॥३८॥

---

अथैकोनचत्वारिंशं स्थानकम् ।

## यदक्रन्दः ।

यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥ १
अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह ।
बृहस्पतिस्सवितेन्द्रस्तदाह पूषा माधात् सुकृतस्य लोके ॥ २
आस्थादुदस्थादजनिष्ट विप्रो व्यास्थन् मृधो अशिशीत बाहू ।
समपृक्षि ज्योतिषा सूर्यस्य परा बाधस्व निर्ऋतिं पराचैः ॥ ३
प्रजापतिस्त्वा सादयतु ॥ ४
दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुश्शर्म सप्रथा नमस्पथे वयस्त्वस्सदः ॥ ५
प्राचीनमूर्ध्वमधरागपागुदग्देवाः पान्तु यजमानममृतमृतात् ।
तेन ब्रह्मणा तेन च्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ ६
आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च ।
रायश्च स्थ स्वपत्यस्य पत्नीस्सरस्वती तद्गृणते वयो धात् ॥ ७

अर्थेतस्स्थान्वगतोऽग्नेर्वस्तेजसा देवताभिर्गृह्णामि शर्म च स्थ वर्म च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि ज्योतिषे वाँ शुक्रास्स्थ वीर्यावतीरिन्द्रस्य व इन्द्रियावतो देवताभिर्गृह्णाम्यमृतं च स्थ सत्यं च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि चक्षुषे वां मन्द्रास्स्थाभिभुवो विश्वेषां वो देवानां देवताभ्यो गृह्णामि रक्षोघ्नीश्च स्थारातिघ्नीश्च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि रेतसे वामधिपतिरस्यूर्जस्वानादित्यानां वो देवानां देवताभिर्गृह्णामि सपत्नघ्नीश्च

---

[ ऐन्द्राग्नं वर्म बहुलं० । अथर्व. ८,५,१९ ]

[ १ ] मै. १,५,३०, ६.१७,२०; २,७,३२; १२,१२; ४,९,२१२ । वा. ११,३०; १३,१७; १८,५४; २९,१२। काण्व. १२,३०, १४.१७; २०,२४; ३१,२४ । [ यदक्रन्दः प्रथमं जायमान० । ऋ. १,१६३,१; तै. सं. ४,२,८,१; ६,७,१ । अभ्यस्थाद्विश्वा पृतना० । तै. सं. ४,२,८,१ । आपो रेवतीः क्षयथा० । ऋ. १०,३०,१२ ]

स्थाभिमातिघ्नीश्च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि प्रजाभ्यो वां व्रजाक्षितस्स्थोर्ध्व-
श्रितो बृहस्पतेर्वो ब्रह्मणा देवताभिर्गृह्णामि वसु च स्थ वामं च स्थ देवस्य वस्सवितुः प्रसवे मधुमती-
स्सादयामि तेजसे वां क्षत्रभृतस्स्थौजस्विनीर्मित्रावरुणयोर्वो देवयोर्देवताभिर्गृह्णामि भूतं च स्थ भव्यं
च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि वर्चसे वां दिवि श्रयस्वान्तरिक्षमापृण पृथिव्यां
कल्पस्व ॥१॥ ८

यददस्संप्रयतीरहा अनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ॥ ९

यत् प्रेषिता वरुणेनाच्छीभँ समवल्गत । तदिन्द्र आप्नोद्यतीर्वस्तस्मादापो अनुष्ठन ॥ १०

अपकामँ स्यन्दमाना अवीवरत वो हिकम् ।
इन्द्रो वश्शक्तिभिर्देवीस्तस्माद्वार्नाम वः प्रियम् ॥ ११

एको देवो अप्यतिष्ठत् स्यन्दमाना उपेत्य । उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥ १२

आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः ।
तीव्रा रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसागन् ॥ १३

तपो योनिरसि प्राजापत्यं विश्वाभिस्त्वा धीभिरुपदधामि ॥ १४

ये यज्ञँ समगृभ्णन् देवा देवेभ्यस्परि ।
तान् गायत्री नयतु प्रजानती स्वर्गे लोके अमृतं दुहाना ॥ १५

ये ज्योतीँषि संदधति स्वरारोहन्तो अमृतस्य लोकम् ।
ते यन्तु प्रजानन्तो यज्ञं दधानास्सुकृतस्य लोकम् ॥ १६

यः पन्था विततो देवयानश्छन्दोभिर्विगृहीत एति ।
तेनातिष्ठ दिवमन्तरिक्षं यज्ञं गृहीत्वा सुकृतस्य लोकम् ॥ १७

ये पशवो मेध्यासो यज्ञस्य योनिमभिसंबभूवुः ।
तान् ददन्ते कवयो विपश्चितो यज्ञं दुहानास्सुकृतस्य लोके ॥ १८

यो यज्ञस्सहस्रधारो द्यावापृथिव्योरधि निर्मितः ।
तेनैतु यजमानस्स्वस्त्या दिवोऽधि पृष्ठमस्थात् ॥ १९

---

[१] मै. २,१३,१-२; २,७,१५ (७-१२,१५; १११) । वा. १०,५, २२,६,२०; ३१,१७ । काण्व ११,१२; २४.६, ३५,१७ । तै. सं. ५,६,१ । [ यददस्संप्रयतीरहा० । अथर्व. ३,१३,१, तै. सं. ५ ६,१,२ । यत् प्रेषिता वरुणेना० । अथर्व. ३.१३,२; तै. सं. ५,६,१,२ । अपकामँ स्यन्दमाना० । अथर्व. ३,१३,३; तै सं ५,६, १,३ । एको (घो) देवो अप्यतिष्ठत्०। अथर्व. ३,१३,४। आपो देवी(भद्रा)घृतमिद्‌प०। अथर्व. ३,१३,५, तै. सं. ५,६,१,३ ]

आयवे स्वाहायुष्कृते स्वाहायोः पत्मने स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहा ॥ २०

अद्भ्यस्संभृतः पृथिव्या रसो विश्वकर्मणस्समवर्ततांधि ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवमाजानमग्रे ॥ २१

त्रिवृत् ते अग्ने शिरस्तन्मे अग्ने शिरः पञ्चदशौ ते अग्ने बाहू तौ मे अग्ने बाहू सप्तदशस्ते अग्न
आत्मा स मे अग्न आत्मैकविंशौ ते अग्न ऊरू तौ मे अग्न ऊरू त्रिणवौ ते अग्ने अष्ठीवन्तौ तौ मे
अग्ने अष्ठीवन्तौ त्रयस्त्रिंशं ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठानं त्रिवृत् ते अग्ने शिरस्तेन माभिपाहि
पञ्चदशौ ते अग्ने बाहू ताभ्यां माभिपाहि सप्तदशस्ते अग्न आत्मा तेन माभिपाह्येकविंशौ ते अग्न
ऊरू ताभ्यां माभिपाहि त्रिणवौ ते अग्ने अष्ठीवन्तौ ताभ्यां माभिपाहि त्रयस्त्रिंशं ते अग्ने प्रतिष्ठानं
तेन माभिपाहि ॥२॥ २२

प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यासि
भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृँह पृथिवीं मा
हिँसीर्विश्वस्मै प्राणाय व्यानायापानायोदानाय प्रतिष्ठायै चरित्रायाग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा
शंतमेन तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २३

चित्तिं जुहोमि मनसा यथा देवा इहागमन् । वीतिहोत्रा ऋतावृधः ॥ २४
समुद्रस्य वयुनस्य पत्मञ्जुहोमि विश्वकर्मणे । विश्वाहादाभ्यँ हविः ॥ २५

स्वाहोदपुरा नामास्यन्नेन विष्टा वसवो रक्षितारोऽग्निरधि वियत्तो अस्यां तां त्वा प्रपद्ये सा मे
शर्म च वर्म च भव तया देवतयाङ्गिरस्वद् ध्रुवा सीद ज्योतिरसि ज्योतिर्मे यच्छ पृथिवीं दृँह
पृथिव्या मा पाहि तया देवतयाङ्गिरस्वद् ध्रुवा सीद भूरसि भुवनस्य रेत इष्टका स्वर्गो लोको मनसा
त्वान्वारोहामि स्वरसि स्वरसीष्टका स्वर्गे लोके वाचा त्वान्वारोहामि यास्ते अग्न आर्द्रा योनयो याः
कुलायिनीर्ये ते अग्न इन्दवो या उ नाभयो यास्ते अग्ने तन्व ऊर्जो नाम ताभिस्त्वमुभयीभिस्संवि-
दानास्स्वयंचित्यानास्तन्वो निषीद ॥ २६

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः ॥ २७
मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥ २८

---

[ अद्भ्यस्संभृतः पृथिव्या० । तै. आ. ३,१३; १०,१,३ ]

[ ३ ] मै. २,७,१६; ८,१४, १०,६; १२,५; ३,४,६; ४,९,१६ । (२१८,२२०—२२५,२२९—२३०,२३१—२३४; ३३; २५; ६; ६८-६९; २१२) । वा. ८,३२; १२,५३; १३,१७,२७—३२; १७,७८; २७,१ । काण्व. ९,३१; १३,५४; १४,१७,२९—३४; १८,७८; २९,१ । चित्तिं जुहोमि० । तै. सं. ५,५,४,३ । मधु वाता ऋताय-ते० । ऋ. १,९०,६; तै. सं. ४,२,९,३; तै. ब्रा. १०,१०,२; शत० ब्रा. १४,९,३,११ । मधु नक्तमुतोष-सो० । ऋ. १,९०,७; तै. सं. ४,२,९,३; तै. आ. १०,१०,२; शत. ब्रा. १४,९,३,१२ ]

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥ २९
सँसर्पन् त्रीन् समुद्रान् स्वर्गानपां पतिर्वृषभ इष्टकानाम्।
तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानस्सुकृतस्य लोकम्॥ ३०
अपां गम्भीरं गच्छ मा त्वा सूर्यः परिताप्सीन्माग्निर्वैश्वानरः।
अनु त्वा दिव्या वृष्टिस्सचतामछिद्राः प्रजा अभिविपश्य॥ ३१
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः॥ ३२
स्यूता देवेभिरमृतेनागादुखा स्वसारमधि वेदिमस्थात्।
सत्यं पूर्वेभिर्ऋषिभिश्चाक्लृपानोऽग्निः प्रविद्वाँ इह तद्दधातु॥ ३३
पृथिवि पृथिव्याँ सीद माता मातरि माता स्योना स्योनायाम्॥ ३४
ऋतुं देवानाममृतत्वमीमहेऽग्निँ सधस्थे सदनेष्वच्युतम्।
वैश्वानरं ब्रह्मणा विश्वव्यचसँ स्तोमस्य धामन्निदधे पुरीष्यम्॥ ३५
न्यधुर्मात्रया कवयो वयोधसमग्निँ सधस्थे सदनेषु सुक्रतुम्।
वैश्वानरं ब्रह्मणा विश्वव्यचसँ स्तोमस्य धामन् न्यधां पुरीष्यम्॥ ३६
समिध्यमानँ समिधा समिन्धतेऽग्निँ सधस्थे सदनेष्वद्भुतम्।
वैश्वानरं ब्रह्मणा विश्वव्यचसँ स्तोमस्य धामन् पवमानमाभृतम्॥ ३७
समास्त्वाग्ने॥३॥ ३८

विश्वकर्मा दिशां पतिः प्रजापतिस्स नः पशून् पातु स मां पातु तया देवतयाङ्गिरस्वद् ध्रुवा सीद प्रजापतिर्दिशां पतिः प्रजापतिस्स नः पशून् पातु स मां पातु तया देवतयाङ्गिरस्वद् ध्रुवा सीद रुद्रो दिशां पतिर्वरुणो दिशां पतिरग्निर्दिशां पतिः प्रजापतिस्स नः पशून् पातु स मां पातु तया देवतयाङ्गिरस्वद् ध्रुवा सीद॥ मा छन्दस्तत् पृथिव्यग्निर्देवता प्रमा छन्दस्तदन्तरिक्षं वातो देवता प्रतिमा छन्दस्तद् द्यौस्सूर्यो देवतास्रीवयश्छन्दस्तद्दिशस्सोमो देवता विराट् छन्दस्तद्वाग्वरुणो देवता गायत्री छन्दस्तदजा बृहस्पतिर्देवता त्रिष्टुप् छन्दस्तद्धिरण्यमिन्द्रो देवता जगती छन्दस्तद्द्यौः प्रजापतिर्देवतानुष्टुप् छन्दस्तदायुर्मित्रो देवतोष्णिहा छन्दस्तच्चक्षुः पूषा देवता बृहती छन्दस्तद्वृष्टिः पर्जन्यो

---

[**मधुमान्नो वनस्पतिः०**। ऋ. १,९०,८. तै. सं. ४,२,९,३, तै आ. १०.१०,२; शत. ब्रा. १४,९,३,१३। **मही द्यौः पृथिवी च न०**। ऋ. १,२२,१३; तै. सं. ३,३,१०,२; ५,११,३; ४,२,९,३। **समास्त्वाग्ने०**। अथर्व. २,६,१]

[४] मै. २,१३,१४ (९६-९७)। वा. १४,१८-२०; १२,५३; १३,१९,२४; १४,६,११,१४; १५,५८,६४। काण्व. १५,१८-२१; १३,५४; १४,१९,२५; १५,५,१५-१६; १६,७९,८४। तै. सं. ४,३,७,१; ५,५,५।

देवता पङ्क्तिश्छन्दस्तदश्वः परमेष्ठी देवता तेन ब्रह्मणा तेन च्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा-
स्सीदत ॥४॥ ३९–४०

ऋतसदसि सत्यसदसि तेजस्सदसि वर्चस्सदसि यशस्सदसि गृणानासि धामासि धाम्ने त्वा धामभ्यस्त्वा धामसु सीद सनिरसि सन्ये त्वा सनेयं वित्तिरसि वित्त्यै त्वा विदेयं कर्मासि कर्मणे त्वा क्रियासँ शक्तिरसि शक्त्यै त्वा शकेयं भूतिरसि भूत्यै त्वा भूयासं गूर्दोऽसि गूर्दाय त्वा गूर्देभ्यस्त्वा गूर्दे सीद क्षत्रं पाहि क्षत्रं पिन्व क्षत्रं जिन्व क्षत्रं यच्छ क्षत्रमसि क्षत्राय त्वा क्षत्रेभ्यस्त्वा क्षत्रे सीद विश्वेषु त्वा पार्थिवेषु सादयामि विश्वेषु त्वान्तरिक्षेषु सादयामि विश्वेषु त्वा दिव्येषु सादयामि विश्वासु त्वाप्सु सादयामि विश्वासु त्वौषधिषु सादयामि विश्वेषु त्वा वनस्पतिषु सादयामि विश्वासु त्वा दिक्षु सादयामि विश्वासु त्वा प्रदिक्षु सादयामि ॥ दिवि सीद स्वर्जिदसि पृतनाजिदसि भूरिजिदस्यभिजिदसि विश्वजिदसि सर्वजिदसि सत्राजिदसि धनजिदसि भ्राडसि विभ्राडसि प्रभ्राडसि सपत्नहनं त्वा वज्रँ सादयामि रक्षोहनं त्वा वज्रँ सादयामि पिशाचहनं त्वा वज्रँ सादयामि यातुधानहनं त्वा वज्रँ सादयाम्यरातिहनं त्वा वज्रँ सादयाम्यभिमातिहनं त्वा वज्रँ सादयामि शत्रुहणमसि शत्रुहणं भ्रातृव्यहणमसुरहणं त्वेन्द्रं वज्रँ सादयामि ॥५॥ ४१–४२

उद्यदस्युदितिरस्युद्यत्यस्याक्रममाणास्याक्रामन्त्यस्याक्रान्तिरसि संक्रममाणासि संक्रामन्त्यसि संक्रान्तिरसि स्वर्गासि स्वरसीषि सीदोर्जि सीद भगे सीद द्रविणे सीद सुभूते सीद पृथिव्या यज्ञिये सीद विष्णोः पदे सीदेडायाः पदे सीद घृतवति सीद पिन्वमाने सीद संवत्सरे सीद परिवत्सरे सीदेदावत्सरे सीदानुवत्सरे सीदोद्वत्सरे सीदैकस्याँ सीद दशसु सीद शते सीद सहस्रे सीदायुते सीद प्रयुते सीद नियुते सीदार्बुदे सीद न्यर्बुदे सीद बद्वे सीद समुद्रे सीद मध्ये सीदान्ते सीद परार्धे सीद ॥ पिन्वमानासि पिन्वमानाय त्वा पिन्वमानेभ्यस्त्वा पिन्वमाने सीदर्तमस्यृताय त्वर्तेभ्यस्त्वर्ते सीद सत्यमसि सत्याय त्वा सत्येभ्यस्त्वा सत्ये सीद संधिरसि संधये त्वा संधिभ्यस्त्वा संधिषु सीद सँश्लिडसि सँश्लिषे त्वा सँश्लिड्भ्यस्त्वा सँश्लिट्सु सीद संपदसि संपदे त्वा संपद्भ्यस्त्वा संपत्सु सीद ॥६॥ ४३–४४

प्राची दिग्गायत्री छन्दो रथन्तरँ सामाग्निर्देवता वसन्त ऋतुस्त्रिवृत्स्तोमः पञ्चदशवर्तनिस्त्रियविर्वयः कृतमयानां पुरोवातो वातस्सानग ऋषिर्दक्षिणा दिक् त्रिष्टुप् छन्दो बृहत्सामेन्द्रो देवता ग्रीष्म ऋतुः पञ्चदशस्स्तोमस्सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेतायानां दक्षिणाद्वातो वातः प्रत्न ऋषिः प्रतीची

[६] वा. २७,४५ । काण्व. २९,४९ ।

[७] मै. २,७,२० (२४९ – २५३) । वा. १५,१०—१९; ४,१२; १६,६४—६६ । काण्व. १६,१६—१७,१९—२०, २२—२३,२५—२६,२८—२९; ४,१६; १७,६४ । तै. सं. ४,३,३ ।

दिग्जगती छन्दो वैरूपँ साम मरुतो देवता वर्षा ऋतुस्सप्तदशस्स्तोम एकविँशवर्तनिस्त्रिवत्सो वयो द्वापरोऽयानां पश्चाद्वातो वातस्सनातन ऋषिरुदीची दिगनुष्टुप् छन्दो वैराजँ साम विश्वे देवा देवता शरदृतुरेकविँशस्स्तोमस्त्रिणववर्तनिस्तुर्यवाड्वय आस्कन्दोऽयानामुत्तराद्वातो वातः पुराण ऋषिरूर्ध्वा दिक् पङ्क्तिश्छन्दश्शाक्करं रैवतँ साम मित्रावरुणौ देवता हेमन्तशिशिरा ऋतू त्रिणवस्स्तोमस्त्रय-स्त्रिँशवर्तनिः पष्ठवाड्वयोऽभिभूरयानां विष्वग्वातो वातस्सुपर्ण ऋषिः पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां तेन ब्रह्मणा तेन च्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवास्सीदत ॥७॥ ४५

आयुषः प्राणँ संतनु प्राणाद्व्यानँ संतनु व्यानादपानँ संतन्वपानाच्चक्षुस्संतनु चक्षुषश्श्रोत्रँ संतनु श्रोत्राद्वाचँ संतनु वाच आत्मानँ संतन्वात्मनः पृथिवीँ संतनु पृथिव्या अन्तरिक्षँ संतन्वन्तरिक्षाद्दिवँ संतनु दिवस्स्वस्संतनु पृथिवी वशामावस्या गर्भो वनस्पतयो जराय्वग्निर्वत्सोऽग्निहोत्रं पीयूषोऽन्तरिक्षं वशा धाता गर्भो रुद्रा जरायु वायुर्वत्सो घर्मः पीयूषो द्यौर्वशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु सूर्यो वत्सो वृष्टिः पीयूष ऋग्वशा बृहद्रथन्तरे गर्भः प्रैषनिविदो जरायु यज्ञो वत्सो दक्षिणा पीयूषो विड्वशा राजन्यो गर्भः पशवो जरायु राजा वत्सो बलिः पीयूषः ॥८॥ ४६

भूमस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्ध्वास्यन्तरिक्षमसि तेजोदां त्वा तेजसि सादयामि वर्चोदां त्वा वर्चसि सादयामि पयोदां त्वा पयसि सादयामि यशोदां त्वा यशसि सादयामि द्रविणोदां त्वा द्रविणे सादयामि पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा द्रविणे सादयामि दिवस्त्वा द्रविणे सादयामि दिशां त्वा द्रविणे सादयामि द्रविणोदां त्वा द्रविणे सादयाम्यप्सुषदसि वयस्सदसि श्येनसदसि गृध्रसदसि सुपर्णसदसि ॥ ४७

या देव्यसीष्टक आयुर्दा उपशीवरी । सा मामुपशेष्व जायेव पतिमित् सदा ॥ ४८

या देव्यसीष्टके प्राणदा व्यानदा अपानदाश्चक्षुर्दाश्श्रोत्रदा वाग्दा आत्मदाः पृथिविदा अन्तरिक्ष-दा द्यौर्दास्स्वर्दाः कुमारीदाः प्रफर्वीदाः प्रथमौपशदा युवतिदा उपशीवरी ॥ सा मामुपशेष्व जायेव पतिमित् सदा ॥९॥ ४९-५०

इयमेव सा या प्रथमा व्यौच्छत् सावास्वन्तश्चरति प्रविष्टा ।
वधूर्मिमाय नवगज्जनित्री त्रय एनां महिमानस्सचन्ते ॥ ५१

---

[अस्मिन् ब्रह्मण्य०... । अथर्व. ५,२४,१—१७ ]

[८] तै. ब्रा. १,५,७ ।

[९] मै. २.१३,१६; १८ (९९,१०१)। वा. १३,५३ । काण्व. १४,५५ । तै. सं. ४,४,७; ६ । मा. श्रौ. ६,२,३ ।

[१०] मै. २,१३,१० (७१-८५)। तै. सं. ४,३,११। [इयमेव सा या प्रथमा०। अथर्व. ८,९,११; तै. सं. ४,३,११,१]

छन्दस्वती उषसौ पेपिशाने समानं योनिमनुसंचरेते ।
सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे भूरिरेतसा ॥ ५२
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु रेतसागुः ।
प्रजामेका रक्षत्यूर्जमेका क्षत्रमेका रक्षति देवयूनाम् ॥ ५३
चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षा ऋषयो भवन्ती ।
गायत्री त्रिष्टुब्जगती विराडर्कं युञ्जानास्स्वराभरन्निदम् ॥ ५४
पञ्चभिर्धाता विदधा इदं यत् तासाँ स्वसॄरजनन् पञ्च पञ्च ।
तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि ऋतवो वसानाः ॥ ५५
पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।
पञ्च दिशः पञ्चदशेन क्लृप्तास्समानमूर्ध्नीरभि लोकमेकम् ॥ ५६
ज्योतिष्मती प्रतिमुञ्चते नभ उषा देवी सूर्यस्य व्रतेन ।
विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे ॥ ५७
त्रिँशत् स्वसार उपयन्ति निष्कृतँ समानं केतुं प्रतिमुञ्चमानाः ।
ऋतूँस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परियन्ति भास्वतीः ॥ ५८
शुक्रर्षभा नभसा ज्योतिषागाद्विश्वरूपा शबल्यग्निकेतुः ।
समानमर्थँ स्वपस्यमाना बिभ्रती जरामजर उष आगाः ॥ ५९
ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम् ।
एका सती बहुधोषो व्युच्छाजीर्णा त्वं जरय सर्वमन्यत् ॥ ६०
ऋतस्य धाम प्रथमा व्युषुष्यपामेका महिमानं बिभर्ति ।
सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैकां नियच्छते ॥ ६१
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन दस्यून् व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः ॥ ६२

---

[छन्दस्वती (छन्दः पक्षे) उषसौ (उषसा)०। अथर्व. ८,९,१२; तै. सं. ४,३,११,१। ऋतस्य पन्थामनु०। अथर्व. ८,९,१३; तै. सं. ४,३,११,१। चतुष्टोम० (अग्नीषोमा०)। अथर्व. ८,९,१४; तै. सं. ४,३,११,१। पञ्चभिर्धाता विदधा० । तै. सं. ४,३,११,२ । पञ्च व्युष्टीरनु० । अथर्व ८,९,१५; तै. सं. ४,३,११,४; काठ. २६,११,३६ । ज्योतिष्मती प्रतिमुञ्चते० । तै. सं. ४,३,११,३ । त्रिंशत् स्वसार उपयन्ति० । तै. सं. ४,३,११,३ । शुक्रर्षभा नभसा० । तै. सं. ४.३,११,५ । ऋतूनां पत्नी प्रथमे० । तै. सं. ४,३,११,५ । ऋतस्य धाम० । तै. सं. ४,३,११,५ । एकाष्टका तपसा० । तै. सं. ४,३,११,३ ]

अनानुजामनुजां मामकर्त सत्यं वदन्त्यनुयच्छ एतत् ।
भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त ॥ ६३
अभून्नु नस्सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदन्नु गाधम् ।
भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त ॥ ६४
प्रथमा ह व्युवास सा धेनुरभवद्यमे । सा नः पयस्वती दुहामुत्तरामुत्तराँ समाम् ॥१०॥ ६५

अभिनर्ताषाट् क्रत्वा शचीपतिस्सौहार्द्येन स्वर्गो यज्ञेन मघवान्मन्युना वृत्रहा वृषभेन त्वष्टा वषट्-
कारेणार्धभाक् पृथिव्या स्तृणीकोऽश्मेन गयस्साम्ना तनूमानृग्भिरन्नादस्तपसानाधृष्टस्सूर्येण त्रिराडृ-
तुभिः प्राभवत् संवत्सरेण पर्यभवदभीषाट् चाभीषाह्यश्चाभिवयाश्चोर्ध्ववयाश्च सवयाश्च बृहद्वयाश्च
सासह्वाँश्च सहीयाँश्च सहमानश्च सहस्वाँश्चाभि त्वा शूर नोनुमस्त्वामिद्धि हवामहे ॥११॥ ६६

कया नश्चित्र आभुवदूती सदावृधस्सखा । कया शचिष्ठया वृता ॥ ६७
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥ ६८
अभी षु णस्सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ६९
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥ ७०
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । अविन्दच्छर्यणावति ॥ ७१
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥ ७२
तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥ ७३
इन्द्रस्स दामने कृत ओजिष्ठस्स बले वृधी । द्युम्नी शुक्ली स सोम्यः ॥ ७४

---

। अनानुजामनुजां०। तै. सं. ४,२,११,३ । अभून्नु नस्सुमतौ०। तै. सं. ४,३,११,४ । प्रथमा ह व्युवास०। अथर्व. ३,१०,१; तै. सं. ४,३,११,५ ]

[११] वा. २७,३५,३७ । काण्व. २९,४०,४२ । तै. सं. ४,४,८ । [ अभि त्वा शूर नोनुमः० । ऋ ७ ३२,२२; सा. २३३,६८०; अथर्व. २०,१२१,१; तै. सं २,४,१४,२ । त्वामिद्धि हवामहे० । ऋ. ६,४६,१; सा. २३४,८०९; अथर्व. २०,९८,१; तै. सं. २,४.१४,३ ]

[१२] मै. २, १३,६, ९ (२२—३१: ६२—७०) । वा. २७,३५—४२,४४; ३६ ४—६ । काण्व. २९ ४०—४८; ३६ ४-६ । [ कया नश्चित्र०। ऋ. ४,३१,१; सा. १६९; ६८२; अथर्व २०,१२४.१; तै. सं ४,२,११,२; तै. आ. ४,४२,२ । कस्त्वा सत्यो मदानां० । ऋ. ४,३१,२; सा. ६८३: अथर्व. २० १२४.२; तै. आ. ४,४२,३ । अभी षु णस्सखीना० । ऋ. ४,३१.३; सा. ६८४; अथर्व. २०.१२४,३; तै. आ. ४,४२,३ । इन्द्रो दधीचो अस्थभिः० । ऋ. १,८४,१३; सा. १७९; ९१३; अथर्व. २०.४१,१; तै. ब्रा. १,५,८,१। इच्छन्नश्वस्य यच्छिरः० । ऋ. १,८४,१४; सा. ९१४; अथर्व. २०,४१,२; तै. ब्रा. १,५,८,१ । अत्राह गोरमन्वत० । ऋ. १, ८४,१५; सा. १४७; ९१५; अथर्व. २०,४१,३; तै. ब्रा. १,५,८,१, नि. ४,२५ । तमिन्द्रं वाजयामसि० । ऋ. ८,९३,७; सा. ११९; १२२१; अथर्व. २०,४७,१; १३७,१२; तै. ब्रा. १,५,८,३; २,४,१,३ । इन्द्रस्स दामने कृत० । ऋ. ८,९३,८; सा. १२२३; अथर्व. २०,४७,२; १३७,१३; तै ब्रा. १,५,८,३ ]

गिरा वज्रो न संभृतस्सबलो अनपच्युतः । ववक्ष उग्रो अस्तृतः ॥ ७५
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥ ७६
इन्द्र इद्धर्योस्सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥ ७७
इन्द्र वाजेषु नो वह सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥ ७८
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्र तस्थुषः । ईशानमिन्द्र तस्थुषः ॥ ७९
न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ८०
त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः । त्वां काष्ठास्वर्वतः ॥ ८१
स त्वं नश्चित्र वज्रहस्त धृष्णुया महस्स्तवानो अद्रिवः ।
महस्स्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे ॥ ८२
यज्ञा यज्ञा वो अग्नये गिरा गिरा च चक्षसे ।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शँसिषम् ।
प्रियं मित्रं न शँसिषम् ॥ ८३
ऊर्जो नपातँ स हिनायमस्मयुर्दाशेम हव्यदातये दाशेम हव्यदातये ।
भुवद्वाजेष्ववितां भुवद्वृध उत त्राता तनूनाम् ॥१२॥ ८४

अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ ८५

---

[ गिरा वज्रो न संभृत० । ऋ. ८,९३,९; सा. १२२४; अथर्व. २०,४७,३; १३७,१४; तै. ब्रा. १,५,८,३ । इन्द्रमिद्गाथिनो० । ऋ १,७,१, सा. १९८, ७९६; अथर्व. २०,३८,४; ४७,४, ७०,७; तै. सं. १,६,१२,१; तै. ब्रा. १,५,८,१; नि. ७,२ । इन्द्र इद्धर्योस्सचा० । ऋ १,७,२; सा. ५९७; ६९७; अथर्व. २०,३८,५; ४७,५, ७०,८, तै. ब्रा. १,५,८,२ । इन्द्र वाजेषु नो० । ऋ. १,७,४, सा. ५९८; ७९८; अथर्व. २०,७०,१०; तै. ब्रा १,५,८,२ । अभि त्वा शूर नोनुमः० । (एकादशानुवाके द्रष्टव्यम्) । न त्वावाँ अन्यो दिव्यो० । ऋ. ७,३२,२३· सा. ६८१, अथर्व. २०,१२१,२ । त्वामिद्धि हवामहे० । (एकदशानुवाके द्रष्टव्यम्) । स त्वं नश्चित्र वज्रहस्त० । ऋ. ६,४६,२; सा. ८१०, अथर्व. २०,९८,२ । यज्ञा यज्ञा वो० । ऋ. ६,४८,१; सा. ३५; ७०३ । ऊर्जो नपातँ स० । ऋ ६,४८,२; सा. ७०४ ]

[ १३ ] मै. २,१३,५; २० (१९,१०३) । वा. १३,३९; १२,५३; १३,१९,२४; १४,६,१२,१४; १५ ५७-५८, ६४ । काण्व १४.४१; १३,५४; १४,१९,२५; १५,५,१५—१६; १६,७९,८४ । तै. ब्रा. ३,११,६,३-४ । मा. श्रौ. ६,२,३ । [ अग्ने देवाँ इहावह जज्ञानः० । ऋ. १,१२,३; सा. ७९२, अथर्व. २०,१०१,३; तै. ब्रा. ३,११, ६,२ ]

अगन्म महो नमसा यविष्ठं यो दीदाय समिद्धस्स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ ८६
मेधाकारं विदथस्य प्रसाधनमग्निँ होतारं परिभूतमं मतिम् ।
त्वामर्भस्य हविषस्समानमित्त्वां महो वृणते नान्यं त्वत् ॥ ८७
मनुष्वत् त्वा निधीमहि मनुष्वत् समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान् देवयते यज ॥ ८८
अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवँ स प्रीतो याति वार्यमिषँ स्तोतृभ्य आभर ॥ ८९

अग्निर्देवता कृत्तिका नक्षत्रं प्रजापतिर्देवता रोहिणी नक्षत्रं मरुतो देवतेन्वका नक्षत्रं रुद्रो दवता बाहुर्नक्षत्रमदितिर्देवता पुनर्वसुर्नक्षत्रं बृहस्पतिर्देवता तिष्यो नक्षत्रँ सर्पा देवताश्लेषा नक्षत्रं पितरो देवता मघा नक्षत्रं भगो देवता फल्गुनीर्नक्षत्रमर्यमा देवतोत्तराः फल्गुनीर्नक्षत्रँ सविता देवता हस्तो नक्षत्रं त्वष्टा देवता चित्रा नक्षत्रं वायुर्देवता निष्ट्या नक्षत्रमिन्द्राग्नी देवता विशाखे नक्षत्रं मित्रो देवतानूराधा नक्षत्रमिन्द्रो देवता ज्येष्ठा नक्षत्रं निर्ऋतिर्देवता मूलं नक्षत्रमापो देवताषाढा नक्षत्रं विश्वे देवा देवतोत्तरा अषाढा नक्षत्रं विष्णुर्देवताश्वत्थो नक्षत्रं वसवो देवता श्रविष्ठा नक्षत्रं वरुणो देवता शतभिषङ् नक्षत्रमज एकपाद्देवता प्रोष्ठपदा नक्षत्रमहिर्बुध्न्यो देवतोत्तरे प्रोष्ठपदा नक्षत्रं पूषा देवता रेवती नक्षत्रमश्विनौ देवताश्वयुजौ नक्षत्रं यमो देवतापभरणीर्नक्षत्रमग्ने रुचस्स्थ प्रजापतेस्सोमस्य धातुर्भूयासं प्रजनिषीय तेन ब्रह्मणा तेन च्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवास्सीदत ॥१३॥ ९०

अग्निर्मूर्धायमग्निस्त्वामग्ने पुष्करादधि ॥ ९१
हुवे वस्सुद्योत्मानँ सुवृक्तिं विशामग्निमतिथिँ सुप्रयसम् ।
मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥ ९२

---

[अगन्म महो (महा) नमसा०। ऋ. ७,१२,१; सा १३०४; तै. ब्रा. ३.११,६,२ । मेधाकारं विदथस्य०। ऋ. १०,९१,८; सा. ९८४; तै. ब्रा. ३,११,६,३ । मनुष्वत् त्वा निधीमहि० । ऋ ५,२१,१; तै ब्रा ३,११,६,३ । अग्निर्हि वाजिनं विशे० । ऋ. ५,६,३; सा. १७३८. तै. ब्रा. ३,११,६,४ ]

[१४] मै. २,१३,७ (३३,३७—३८,४२—४४) । वा. ३,१२,४०; ११,३२; १३,१४, १५,२०—२२,२७—२८,३१, ४१; २६,१२ । काण्व. ३,१८; १२,३२; १४,१४; १६,४१—४३,४८—४९,५२—५३,६३ । तै. सं ४,४,४ । [अग्निर्मूर्धा दिवः० । ऋ. ८,४४,१६; सा. २७; १५३२; तै. सं १,५,५,१; ४,४,१,१; तै. ब्रा. ३,५,७,१ । अयमग्निः० । ऋ. ८,७५,४; ३,१६,१; सा. ६०; तै सं. २,६,११,१, ४,४,४,१ । त्वामग्ने पुष्करादधि० । ऋ. ६,१६,१३; सा. ९; तै. सं. ३,५,११,३; ४,१,३,२ ४,४,१ । हुवे वस्सुद्योत्मानँ० । ऋ. २,४.१ ]

पुरो वो मन्द्रं दिव्यँ सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिस्स हि नो विभावा स्वध्वरा करति जातवेदाः ॥ ९३
का त आकूतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥ ९४
जनस्य गोपा अजनिष्ट जागृविरग्निस्सुदक्षस्सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यश्शुचिः ॥ ९५
त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वने वने ।
स जायसे मथ्यमानस्सहो महत्त्वामाहुस्सहसस्पुत्रमङ्गिरः ॥ ९६
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इन्द्रेण देवैस्सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥ ९७
त्वामग्ने हविष्मन्तो देवं मर्तास ईडते । मन्ये त्वा जातवेदसँ स हव्या वक्ष्यानुषक् ॥ ९८
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ॥ ९९
यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ १००
आ ते अग्न इधीमहि ॥ १०१
आ ते अग्न ऋचा हविश्शुक्रस्य शोचिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यँ हूयत इषँ स्तोतृभ्य आभर ॥ १०२
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषँ स्तोतृभ्य आभर ॥१४॥ १०३

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥ १०४

---

[पुरो वो मन्द्रं दिव्यँ० । ऋ. ६,१०,१। का त आकूति (उपेति) मनसो० । ऋ. १,७६,१ । जनस्य गोपा अजनिष्ट० । ऋ. ५,११,१, सा. ९०७, तै. सं. ४,४,४,१ । त्वामग्ने अङ्गिरसो गुहा० । ऋ. ५,११,६; सा. ९०८; तै. सं. ४,४,४,२ । यज्ञस्य केतुं प्रथमं० । ऋ. ५,११,२; सा. ९०९; तै. सं. ४,४,४,३ । त्वामग्ने हविष्मन्तो० । ऋ. ५,९,१; तै ब्रा. २,४,१,४ । त्वां चित्रश्रवस्तम० । ऋ. १,४५,६. तै. सं. ४,४,४,३। यद्वाहिष्ठं तदग्नये० । ऋ. ५ २५,७, सा. ८६; तै. सं. १,१,१४,४ । आ ते अग्न इधीमहि० । ऋ. ५,६,४. सा. ४१९; १०२२; अथर्व. १८,४,८८; तै सं. ४,४ ४,६ । आ ते अग्न ऋचा० । ऋ. ५,६,५; सा. १०२३; तै.सं. ४,४,४,६ । अग्निं तं मन्ये० । ऋ. ५,६,१, सा. ४२५; १७३७]

[१५] मै. २,१०,६; १३,८; ४,१०,१; १२,५ (६६; ४६,४९-५१,५५; २३; १२१-१२४) । वा. १५,३१,३५-३८, ४७; १७,७६ । काण्व. १६,५४,५७—६०,६९; १८,७६ । तै. सं. ४,४,४ । [अग्निं नरो दीधितिभिः० । ऋ. ७,१,१; सा. ७२,१३७२; नि. ५,१० ]

तमग्निमस्ते वसवो न्यृण्वन् सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥ १०५
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वाँ शश्वन्त उपयन्ति वाजाः॥ १०६
एना वो अग्निं नमसोर्जो नपातमाहुवे ।
प्रियं चेतिष्ठमरतिँ स्वध्वरं विश्वस्य दूतममृतम् ॥ १०७
अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १०८
उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः ।
उद्धूमासो अरुषासो दिविस्पृशस्समग्निमिन्धते नरः ॥ १०९
अग्ने वाजस्य गोमत ईशानस्सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः॥ ११०
स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ १११
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥ ११२
भद्रो नो अग्निराहुतो भद्रा रातिस्सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥ ११३
यस्समिधा य आहुत्या यो वेदेन ददाश मर्तो अग्नये । यो नमसा स्वध्वरः ॥ ११४
तदग्ने द्युम्नमाभर यत् सासाहत् सदने कंचिदत्रिणम् । मन्युं जनस्य दूढ्यः ॥ ११५
अग्निँ होतारं मन्ये दास्वन्तं वसुँ सूनुँ सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनुवष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ ११६
यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिश्शुक्र मन्मभिः ।
परिज्मानमिव द्याँ होतारं चर्षणीनाम् ।
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ ११७

---

[ **तमग्निमस्ते वसवो०।** ऋ. ७,१,२, सा. १३७४ । **प्रेद्धो अग्ने दीदिहि०।** ऋ. ७,१,३; सा. १३७५; तै.सं. ४,६,५,४ । **एना वो अग्निं०।** ऋ ७,१६,१; सा. ४५;७४९; तै. सं. ४,४.४ ४, नि.३,२१। **अग्न आयाह्यग्नि-भिः०** । ऋ. ८,६०,१; सा. १५५२; अथर्व. २०,१०३,२ । **उदस्य शोचिरस्थाद्०** । ऋ. ७,१६,३; तै. सं. ४, ४,४,५ । **अग्ने वाजस्य गोमतः०** । ऋ. १.७९,४; सा. ९९; १५६१; तै सं. ४,४,४.५ । **स इधानो वसु-ष्कविः०** । ऋ. १,७९,५; सा. १५६२; तै. सं. ४ ४,४,५ । **क्षपो राजन्नुत०।** ऋ. १,७९,६; सा. १५६३; तै.सं. ४,४,४,५ । **भद्रो नो अग्निराहुतो०** । ऋ. ८,१९,१९, सा. १११; १५५९ । **यस्समिधा य आहुत्या०।** ऋ. ८,१९.५ । **तदग्ने द्युम्नमाभर०** । ऋ. ८,१९,१५; सा. ११३ । **अग्निं होतारं मन्ये०** । ऋ. १,१२७,१; सा. ४६५; १८१३; अथर्व. २०,६७,३; तै. सं. ४,४,४,८; नि. ६,८ । **यजिष्ठं त्वा यजमाना०** । ऋ. १,१२७,२; सा. १८१४ ]

एवेन सद्यः पर्येषि पार्थिवं मुहुर्गीरितो वृषभः कनिक्रदद् दधद्रेतः कनिक्रदत् ।
शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः ।
सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु ॥ ११८
अचेत्यग्निश्चिकितिर्हव्यवाट् स सुमद्रथः ।
अग्निश्शुक्रेण शोचिषा बृहत् सूर्यो अरोचत ॥ ११९
घ्नन् मृध्राण्यप द्विषो दहन् रक्षाँसि विश्वहा ।
अग्निर्विश्वस्य राजति । अग्निर्विश्वं विराजति । अग्निस्सर्वं विराजति ॥१५॥ १२०
[२६६४]

॥ इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां यद्क्रन्दो नामैकोनचत्वारिंशं स्थानकं संपूर्णम् ॥३९॥

अथ चत्वारिंशं स्थानकम् ।

## हिरण्यगर्भः ।

हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १
यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ २
य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ३
येन द्यौरुग्रा पृथिवी च दृढा येन स्वस्स्तभितं येन नाकम् ।
यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा विधेम ॥ ४

---

[ एवेन सद्यः पर्येति० । ऋ. १,१२८,३ । अचेत्यग्निश्चिकितिः (०तु )० । ऋ. ८,५६,५; सा. ४४७। घ्नन्मृध्राण्यप द्विषो० । ऋ. ८,४३,२६ ]

[ १ ] मै. २,१३,२३ (११०—११७) । वा. १२,१०२; १३.४; २३,१-३; २५,१०-१३, २७,२५—२६; २९,३४; ३२,३,६—७ । काण्व १३,१०१; १४,४; २५,१-३; २७,१४—१७; २९,३३—३५; ३१,४६ । तै. सं. ४,१, ८,३ । मा. श्रौ. ६,२,३ । [ हिरण्यगर्भस्समवर्तताग्रे० । ऋ. १०,१२१,१; अथर्व. ४,२,७; ११,५,१; तै. सं. ४,१,८,३; २,८,२; ताण्ड्य ब्रा. ९.९,१२; नि. १०,२३ । यः प्राणतो निमिषतश्च० । ऋ. १०,१२१,३; अथर्व. ४,२,२; तै. सं.४,१ ८,४; ७,५,१६,१ । य ओजोदा (आत्मदा)० । ऋ. १०,१२१,२, अथर्व. ४,२.१; १३,३,२४; तै. सं. ४,१,८,४; ७,५,१७,१ । येन द्यौरुग्रा० । ऋ. १०,१२१,५; ऋ. परि. ३३,११; अथर्व. ४,२,४; तै. सं. ४,१,८,५ ]

यं इमे द्यावापृथिवी तस्तभाने अधारयद् रोदसी रेजमाने ।
यस्मिन्नधि विततस्सूर एति कस्मै देवाय हविषा विधेम ॥ ५
यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः ।
दिशो यस्य प्रदिशः पञ्च देवीः कस्मै देवाय हविषा विधेम ॥ ६
आपो ह यन्महतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७
आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः ।
संवत्सरं ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥१॥ ८

प्राणापानाभ्यां त्वा सयुजा युजा युनज्म्याधाराभ्यां त्वा सयुजा युजा युनज्मीन्द्राग्निभ्यां
त्वा सयुजा युजा युनज्मि च्छन्दोभिस्त्वा स्तोमेभिस्त्वोक्थेभिस्त्वा तेजसे त्वा वर्चसे त्वा रय्यै त्वा
पोषाय त्वा सजातानां मध्यमेष्ठेयाय मया त्वा सयुजा युजा युनज्मि ॥ ९

त्वामग्ने वृषभश्चेकितानं पुनर्युवानं जनयन्नुपागाम् ।
अस्थूरि णौ गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सँशिशाधि ॥ १०
संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते ।
तेषामायुष्मतीं प्रजां रायस्पोषेण सँसृज ॥ २ ॥ ११

यो अप्स्वन्तरग्निर्यो वृत्रे यः पुरुषे यो अश्मनि ।
य आविवेश भुवनानि विश्वा तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ १२
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा स रिषः पातु नक्तम् ॥ १३

---

[य इमे द्यावापृथिवी० । ऋ. १०,१२१,६; अथर्व. ४,२,३; तै ब्रा. ३,६,३,४; नि. ८,१४। यस्येमे विश्वे गिरयो (हिमवन्तो)० । ऋ. १०,१२१.४; अथर्व. ४,२,५; तै. सं. ४,१,८ ४ । आपो ह यन्महतीः० । ऋ. १०,१२१,७; अथर्व. ४,२,६; तै. सं. २,२,१२,१; ४,१,८,५, तै. आ. १,२३,८ । कस्मै देवाय०-विधेम । ऋ. १०,१२१,१—९, अथर्व. ४.२.१—८ । आ नः प्रजां जनयतु० । ऋ. १०,८५,४३; अथर्व. १४,२,४० ]

[ १ ] वा. २,२७; १४,११—१२; १५,८; १९,६ । काण्व २,५०; १५,२३—२४, १६,१३; २१.५ । [ अस्थूरि णौ (नो गार्हपत्यानि० । ऋ. ६,१५ १९ (उत्तरार्धः), तै. ब्रा. ३,५,१२,१ । संवत्सरस्य प्रतिमां० । अथर्व. ३,१०,३; तै. सं. ५,७,२,१ ]

[ ३ ] मै. २ १३,११.१३ (८६; ९०—९३,९५) । वा. ८,३६; १२,५३; १३.१९; १४,६,१२,१४; १५,५८,६४; १८.७३ । काण्व. ८,१७, १३ ५४, १४,१९; १५,५,१५—१६, १६,७९,८४; २०,४२ । तै सं ४ ४,५; ५.५,९,१। [ यो अप्स्वन्तरग्निर्यो (ये अग्नयो०)० । अथर्व. ३.२१.१ । पृष्टो दिवि पृष्टो० । ऋ. १,९८,२; तै. सं. १, ५,११,१; तै. ब्रा. ३,११,६,४; काठ. ४,१६,१३८ ]

यस्सोमे अन्तर्यो गोष्वन्तर्वयाँसि य आविवेश यो मृगेषु ।
य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ १४

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमन्तरिक्षं यच्छान्तरिक्षं दृँहान्तरिक्षं मा
हिँसीर्विश्वस्मै प्राणाय व्यानायापानायोदानाय प्रतिष्ठायै चरित्राय वायुष्ट्वाभिपातु मह्या स्वस्त्या
छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद् ध्रुवा सीदान्तरिक्षमधिद्यौर्ब्रह्मणा निष्टं रुद्रा रक्षितारो वायुरधि-
पतिस्ते अस्यां तां त्वा प्रपद्ये सा मे शर्म च वर्म च भव तया देवतयाङ्गिरस्वद् ध्रुवा सीद तेजो-
ऽसि तेजो मे यच्छान्तरिक्षं दृँहान्तरिक्षं मा पाहि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ १५

हुतादमग्निं यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः ।
यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ १६

येनेन्द्रस्य रथँ संबभूवुर्वैश्वानर उत विश्वदाव्यः ।
धीरो यश्शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ १७

वेदिरसि सुधां मे धेहि वरुणस्य कुक्षी स्थो मा मा संताप्तं तार्क्ष्यारिष्टनेमेऽभि मा सच स्वस्त्या
छर्दिषा शंतमेन नमोऽग्नेर्वैश्वानरस्य हरसे नमश्शरवे त्रायमाण त्रायस्व नो हन्तरधि नो ब्रूहि ॥ १८

वर्च आधायि मे तनूस्सह ओजो महद्बलम् । त्रयस्त्रिंशद्वीर्याणि तान्यग्निः प्रददातु मे ॥ १९

आ मा वर्चोऽग्निना दत्तमेतु महि राधस्सह ओजो महद्बलम् ।
दीर्घायुत्वाय शतशारदाय प्रतिगृह्णामि महत इन्द्रियाय ॥ २०

अग्ने दुध्राग्ने कह्याग्ने किंशिलाग्ने वन्याग्ने कक्ष्य या त इषुर्युवा नाम तस्यै ते विधेम तया नः
पाहि तस्यै ते स्वाहा ॥३॥ २१

रोहितेषु त्वा जीमूतेषु सादयाम्यरुणेषु त्वा जीमूतेषु सादयामि कृष्णेषु त्वा नीलेषु त्वासितेषु
त्वा जीमूतेषु सादयाम्यम्बा नामासि दुला नामासि नितत्नी नामासि चुपुणीका नामास्यभ्रयन्ती
नामासि मेघयन्ती नामासि वर्षयन्ती नामासि ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि

---

[यस्सोमे (यः सोमे)अन्तर्यो०। अथर्व. ३,२१,२। हुतामग्निं यमु० (यो देवो विश्वाद्यमु)। अथर्व.३,२१,४ (पूर्वार्धः)। यं जोहवीमि०...तत्। अथर्व. ३,२१,३ (उत्तरार्धः)। येनेन्द्रस्य रथँ (य इन्द्रेण सरथं)०। अथर्व. ३,२१,३ (पूर्वार्धः)। धीरो यश्शक्रः (यो धीरः शक्रः)०। अथर्व. ३,२१,४ (उत्तरार्धः)। तेभ्यो अग्निभ्यो हुतमस्त्वेतत्। अथर्व. ३,२१,१—७। वर्च आधायि (आ धेहि) मे०। अथर्व. १९,३७,२ (पूर्वार्धः)। त्रयस्त्रिंशद्वीर्याणि (०शद्यानि)०। अथर्व. १९,३१,१ (उत्तरार्धः)। आ मा (इदं) वर्चोऽग्निना०। अथर्व. १९,३७,१ (पूर्वार्धः)। सह ओजो महद् (वयो) बलम्। अथर्व. १९,३७,१-२ (द्वि.च.)। दीर्घायुत्वाय (इन्द्रियाय)०। १९,३७,२ (उत्तरार्धः)। अग्ने दुध्राग्ने कह्याग्ने०। तै. सं. ५,५,९,१]

[४] मै. २,१३,१९ (१०२)। तै. सं. १,४,३४; ४,४,५,१। तै. आ. ३,१९।

ज्योतिर्विदं त्वा सादयामि ज्वलन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि मल्मलाभवन्तीं
त्वा सादयामि रोचमानां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि भास्वतीं त्वा सादयामि
बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयाम्यजस्रां त्वा सादयामि प्रसवाय त्वोपयामाय त्वा
काटाक्षाय त्वार्णवाय त्वा सिन्धवे त्वा समुद्राय त्वा सरसे त्वा विश्वव्यचसे त्वा धर्णसाय त्वा
द्रविणाय त्वा सुभूताय त्वान्तरिक्षाय त्वा ॥४॥ २२

द्यौरपराजितामृतेन नष्टादित्या रक्षितारस्सूर्योऽधिवियत्तो अस्यां तां त्वा प्रपद्ये सा मे शर्म च
वर्म च भव तया देवतयाङ्गिरस्वद् ध्रुवा सीद स्वरसि स्वर्मे यच्छ दिवं दृँह दिवो मा पाहि तया
देवतयाङ्गिरस्वद् ध्रुवा सीद परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं व्यचस्वतीं प्रथस्वतीं
भास्वतीं रश्मिवतीमा या द्यां भास्या पृथिवीमुर्वन्तरिक्षं दिवं यच्छ दिवं दृँह दिवं मा हिँसीर्विश्वस्मै
प्राणाय व्यानायापानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा
शंतमेन तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २३

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत्॥२४

प्राणोऽसि व्यानोऽस्यपानोऽसि श्रोत्रमसि चक्षुर्नाम तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ २५

यत् तेऽचितं यदु चितं ते अग्ने यदूनं यद्वात्रातिरिक्तम् ।
विश्वे देवा अङ्गिरसश्विनवन्नादित्यास्ते चितिमापूरयन्तु ॥ २६

यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः ।
ये ते अग्ने मेडवो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन् ॥ २७

चित्तिमचित्तिं चिनवो विविद्वान् पृष्ठेव वीता वृजिना च मर्तान् ।
राये च नस्स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥ २८

वयमग्ने धनवन्तस्स्यामालं यज्ञायोत दक्षिणायै ।
ग्रावा वदेदभि सोमस्याँशुमिन्द्रँ शिक्षेमेन्दुना सुतेन ॥ २९

रायस्पोषं नो धेहि जातवेद ऊर्जो भागं मधुमत् सूनृतावत् ।
दधाम यज्ञँ सुनवाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र ॥ ३०

ईशानं त्वा शुश्रुमा वयं धनानां धनपते ।
गोमदग्ने अश्ववद्भूरि पुष्टँ हिरण्यवदन्नवद्धेहि मह्यम् ॥ ३१

[५] मै. २,१३,१३ (९५)। वा. १२,५३; १३,१९; १४,६,१२,१४; १५,५८,६४। काण्व. १३,५४, १४,१९, १५, ५,१५—१६; १६,७९,८४। तै. सं. ४,४,५-६। [उक्षान्नाय वशान्नाय० । ऋ ८,४३,११; अथर्व. ३,२१, ६; २०,१,३; तै. सं. १,३,१४,७। यत् तेऽचितं यदु० । तै. ब्रा. ३,११,६,१। यास्ते अग्ने समिधो० । तै. सं. ५,५,४,४। चित्तिमचित्तिं चिनवो० । ऋ. ४,२,११; तै. सं. ५,५,४,४]

दुहां ते द्यौः पृथिवी पयो जगरस्त्वा सौदको विसर्पतु ।
प्रजापतिनात्मानमाप्रीणेऽरिक्तो म आत्मा ॥ ३२
यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु ।
यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु देवाः ॥५॥ ३३

पिता मातरिश्वाच्छिद्रा पदा धादच्छिद्रोशिजः कवयः पदानुतक्षिषुस्सोमो विश्वविन्नेता नेषद्बृह-
स्पतिरुक्थामदानि शँसिषत् ॥ ३४
यदक्रन्दः ॥ ३५
यमेन दत्तं त्रित एनमायुनगिन्द्र एनं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट ॥ ३६
असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥ ३७
त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तस्समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥ ३८
इमा ते वाजिन्नवमार्जनानीमा शफानाँ सवितुर्निधाना ।
अत्रा ते भद्रा वृषभा अगृभ्णामृतस्य या अभिरक्षन्ति गोपाः ॥ ३९
संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽस्यनुवत्सरोऽस्युद्वत्सरोऽसि देवस्य त्वा सवितुः प्रसवे-
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रवन्तं त्वा सादयामि धामच्छदसि स्वे योनौ सीद स्वे
पृथिव्या योनौ सीदर्तवस्ते कल्पन्तां मासास्ते कल्पन्तामर्धमासास्ते कल्पन्तामहोरात्राणि ते कल्प-
न्तामङ्गानि ते कल्पन्तां परूँषि ते कल्पन्ताँ शरीराणि ते कल्पन्तामेत्या प्रेत्या सं चा च प्र च
सारयाग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रस्सूर्यो ज्योतिर्ज्योतिस्सूर्यः ॥ ४०
इमँ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये ।
उत्सं जुषस्व मधुमन्तमूर्मिँ समुद्रियँ सदनमाविशस्व ॥६॥ ४१

[६] मै १,६,१७,५१; ८,२,२०; ४,९,२१६ । वा. ३,९; १७,८७; २७,४५; २९,१२—१६ । काण्व. ३,९-१०, १९, १; २९,४९; ३१,२४--२८ । तै सं. ५,६,८,६; ४,६,७; ५,५,१०,६ । [यदक्रन्दः प्रथमं० । ऋ. १,१६३,१; तै सं ४,२,८,१; ६,७,१ । यमेन दत्तं त्रित० । ऋ. १,१६३,२, तै. सं. ४,६,७,१; नि. ४,१३ । असि यमो अस्यादित्य० । १,१६३,३, तै. सं ४,६,७,१ । त्रीणि त आहुर्दिवि० । ऋ. १,१६३,४; तै. सं. ४,६,७,२ । इमा ते वाजिन्नव० । ऋ. १,१६३,५; तै. सं. ४,६,७,२ । संवत्सरोऽसि परिवत्सरोऽसि० । अथर्व. ६, ५५,३ । इमँ स्तनमूर्जस्वन्तं० । तै. सं. ५,५,१०,६ ]

समुद्रादूर्मिर्मधुमाँ उदारदुपाँशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ ४२
वयं नाम प्रब्रवाम घृतस्यास्मिन् यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोऽवमीद्गौर एतत् ॥ ४३
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥ ४४
त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकँ सूर एकं जजान वेनादेकँ स्वधया निष्टतक्षुः ॥ ४५
एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ ४६
सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥ ४७
सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ४८
अभि प्रवन्त समनेव योषाः कल्याण्यस्स्मयमानासो अग्निम् ।
घृतस्य धारास्समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ ४९
कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि ।
यत्र सोमस्सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते ॥ ५०
अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते ॥ ५१
धामन्ते विश्वं भुवनमधिश्रितमन्तस्समुद्रे हृद्यन्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥७॥ ५२

---

[७] मै. १,६,२६—२८; २,७,२३७। वा. १३,३८. १७,८९—९९ । काण्व. १४,४०; १९,२—१२ । समुद्रादूर्मिर्मधुमाँ० । ऋ. ४,५८,१; तै. आ. १०,१०,२ । वयं नाम प्रब्रवाम० । ऋ. ४,५८,२ तै आ १०,१०,२ । चत्वारि शृङ्गा त्रयो० । ऋ. ४,५८,३; तै. आ. १०,१०,२, नि १३,८ । त्रिधा हितं पणिभि० । ऋ ४, ५८,४; तै. आ. १०,१०,२ । एता अर्षन्ति हृद्यात्० । ऋ ४,५८,५; वा. १३,३८ ( उत्तरार्धः ) । सम्यक् स्रवन्ति० । ऋ ४ ५८,६, वा. १३,३८ (पूर्वार्धः); तै. आ. ४,२,९,६ । सिन्धोरिव प्राध्वने० । ऋ. ४,५८,७। अभि प्रवन्त समनेव० । ऋ. ४,५८,८; नि. ७,१७ । कन्या इव वहतु० । ऋ. ४,५८,९ । अभ्यर्षत सुष्टुतिं० । ऋ. ४,५८,१०; अथर्व. ७,८२,१ । धामन्ते विश्वं० । ४,५८,११ ]

पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ ५३
स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥ ५४
उप नः पितवाचर शिवश्शिवाभिरूतिभिः । मयोभूरद्विषेण्यस्सखा सुशेवो अद्वयाः ॥ ५५
तव त्ये पितो रसा रजाँस्यनु विष्ठिताः । दिवि वाता इव श्रिताः ॥ ५६
तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो । प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥ ५७
त्वे पितो महानां देवानां मनो हितम् । अकारि चारु केतुना तवाहिमवसावधीत् ॥ ५८
यददः पितो अजगन् विवस्व पर्वतानाम् । अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥५९
यदपामोषधीनां परिंशमारिशामहे । वातापे पीव इद्भव ॥ ६०
यत् ते सोम गवाशिरो यवाशिरो भजामहे । वातापे पीव इद्भव ॥ ६१
करम्भ ओषधे भव पीवो वृक्क उदारथिः । वातापे पीव इद्भव ॥ ६२
तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।
देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥८॥ ६३

मह्यमापो मधुमदेरयन्त मह्यं ज्योतिरभरत् सूर्यस्तत् ।
मां देवा अनु विश्वे तपोजा मह्यं देवस्सविता व्यचो धात् ॥ ६४
अहमस्तभ्नां पृथिवीमुत द्यामहमृतूँरजनँ सप्त साकम् ।
अहं वाचं परि सर्वां बभूव य इन्द्राग्नी असनँ सखायौ ॥ ६५
अहं द्यावापृथिवी आबभूवाहं विश्वा ओषधीस्सप्त सिन्धून् ।
मह्यं विशस्समनमन्त देवीरहमुग्रश्शतहव्यो बभूव ॥ ६६
राये जातस्सहसे वृद्धः क्षत्राणां क्षत्रभृत्तमो वयोधाः ।
महान् महित्वा सँस्तम्भे क्षत्रे राष्ट्रे च जागृहि ॥ ६७

---

[८] वा. ३४,७ । काण्व. ३३,२ । [पितुं नु स्तोषं० । ऋ. १,१८७,१, नि. ९,२५ । स्वादो पितो मधो० । ऋ. १, १८७,२ । उप नः पितवाचर० । ऋ १,१८७,३ । तव त्ये पितो रसा० । ऋ १,१८७,४ । तव त्ये पितो ददतः० । ऋ १,१८७,५ । त्वे पितो महानां० । ऋ. १,१८७,६ । यददः (०दो) पितो० । ऋ १,१८७,७। यदपामोषधीनां०। ऋ. १,१८७,८ । यत् ते सोम गवाशिरो० । ऋ १,१८७,९ । करम्भ ओषधे भव०। ऋ १,१८७,१० । तं त्वा वयं पितो० । १,१८७,११ ]

[९] मै २,१२,२५; ३,४,६ । वा. ९,४०, १०,१८; १८,३७ । काण्व ११,१०,२६; २०,७ । [मह्यमापो मधु० । अथर्व. ३,६१,१ । अहमस्तभ्नां (अहं विवेच) पृथिवीमुत० । अथर्व. ६,६१,२ । अहं द्यावापृथिवी० (जजान पृथिवी०) । अथर्व. ६,६१,३ ]

नव कृत्व इन्द्रो राजा सविता त्वाभिषिञ्चतु ।
मित्रो वायुर्बृहस्पतिर्धाता क्षत्रं दधातु ते ॥ ६८

अदितिस्त्वा सुष्वतु राजन् महते क्षत्राय महते ज्यैष्ठ्याय महते राज्याय महते जानराज्याय
महते विश्वस्य भुवनस्याधिपत्याय समास्त्वाग्ने देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्याँ सरस्वत्या वाचा यन्तुर्यन्त्रेणेममममुमामुष्यायणममुष्याः पुत्रमग्नेस्साम्राज्येनाभिषिञ्चामीन्द्रस्य
साम्राज्येनाभिषिञ्चामि ॥९॥ ६९

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ ७०
मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवते कामे अस्मिन् ॥ ७१
मयि देवा द्रविणमायजन्तां ममाशीरस्तु मम देवहूतिः ।
दैव्या होतारो वनिषन्न एतदरिष्टास्स्याम तन्वा सुवीराः ॥ ७२
मह्यं यजन्तां मम यानीष्टाकूतिस्सत्या मनसो मे अस्तु ।
एनो मा निगां कतमच्चनाहं विश्वे देवा अनुतिष्ठन्तु मेह ॥ ७३
अग्निर्मन्युं प्रतिनुदन् पुरस्तादद‍ब्धो गोपः परिपातु विश्वतः ।
अपाञ्चो यन्तु निर्ऋथं पुनस्तेऽमैषां चित्तं प्रबुधा विनश्यतु ॥ ७४
धाता धातॄणां भुवनस्य यस्पतिर्देवँ सवितारमभिमातिषाहम् ।
इमं यज्ञं बृहस्पतेऽश्विनोभेन्द्रावत काव्यैर्दँसनाभिः ॥ ७५
त्रयीष्षड्‍र्वीरुरु णस्कृणोत विश्वे देवा इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ७६

[ देवस्य त्वा सवितुः० । अथर्व १९,५१,२; ऐ. ब्रा. ८,७ ]

[१०] मै. १,४,१ । वा. ३४,४६ । काण्व. ३३,३४ । तै. सं. ४,७,१४ । [ **ममाग्ने वर्चो०** । ऋ. १०,१२८,१. अथर्व. ५,३,१. तै.सं. ४,७,१४,१ ; **मम देवा विहवे०।** ऋ. १०,१२८,२; अथर्व. ५,३,३; तै. सं. ४,७,१४,१। **मयि देवा द्रविणम्०** । ऋ १०,१२८,३; अथर्व. ५,३,५; तै. सं. ४,७,१४,१ । **मह्यं यजन्ता (०न्तु) मम०** । ऋ. १०,१२८,४; अथर्व. ५,३,४; तै सं. ४,७,१४,२ । **अग्नि(अग्ने म०)र्मन्युं प्रतिनुदन्** । ऋ. १०,१२८,६; अथर्व. ५,३,२; तै. सं ४,७,१४,२ । **धाता धातॄणां भुवनस्य०** । ऋ १०,१२८,७; अथर्व. ५,३,९; तै. सं. ४,७,१४,३ । **त्रयी (देवीः) ष्षड्(ळु)र्वीरुरु ण (न.) स्कृणोत०** । ऋ. १०,१२८,५; अथर्व. ५,३,६; तै. सं. ४,७,१४,२ ]

उरुव्यचा नो महिषश्शर्म यँसदास्मिन् हवे पुरुहूतः पुरुक्षुः ।
स नः प्रजायै हर्यश्व मृडेन्द्र मा नो रीरधो मा परा दाः ॥ ७७
तिस्रो देवीर्महि नश्शर्म यच्छत प्रजायै नस्तन्वे यच्च पुष्टम् ।
मा नो वधीदभिभा मो अशस्तिर्मा नो वृधद्वृजना द्वेष्या या ॥ ७८
ये नस्सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामवबाधामहे तान् ।
आदित्या रुद्रा उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ ७९
अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः ।
इमं नो यज्ञं विहवे जुषस्वेह कृण्मो हरिवो मेदिनं त्वा ॥१०॥ ८०
तव श्रिये व्युजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः ।
इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥ ८१
बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ८२
बृहस्पतिस्समजयद्वसूनि महो व्रजान् गोमतो देव एषः ।
अपस्सिषासन् स्वुरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ ८३
यमो दाधार पृथिवीं यमो द्यामुत सूर्यम् ।
यमाय सर्वमित् तस्थे यत् प्राणद्वायुरक्षितम् ॥ ८४
यथा पञ्च यथा षड् यथा पञ्चदशर्षयः । यमं यो विद्यात् स ब्रूयाद्यथैकर्षिर्विजानते ॥ ८५
त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् ।
गायत्री त्रिष्टुप् छन्दाँसि सर्वा ता यम आहिता ॥ ८६
मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ ८७

[ **उरुव्यचा नो महिषः०** । ऋ. १०,१२८,८, अथर्व. ५,३,८; तै. सं. ४,७,१४,३ । **तिस्रो देवीर्महि०** । अथर्व. ५,३,७ । **ये नस्सपत्ना अप ते०** । ऋ १०,१२८,९; अथर्व. ५,३,१०; तै. सं. ४,७,१४,४ । **अर्वाञ्चमिन्द्रममुतो०** ऋ. परि. २८,१; अथर्व. ५,३,११; तै सं. ४,७,१४,४ ]

[११] मै. १,१,११८; २,७,१०२; ३,४,१६; ४,१०,४९,१०४,१०६; १४,५०,२५२—२५४ । वा. १२,१२; १८,४९; २१,१-२; २६,३ । काण्व. १३,१३; २०,१९; २३,१-२; २८,४ । तै. आ. ६,५,२ । [ **तव श्रिये व्यजिहीत०** । ऋ. २,२३,१८ । **बृहस्पते अति यदर्यो०** । ऋ २,२३,१५; तै. सं. १,८,२२,२ । **बृहस्पतिस्समजयद्वसूनि०** । ऋ. ६,७३,३; अथर्व. २०,९०,३; तै. ब्रा. २,८,२,८ । **यमो दाधार पृथिवीं०** । तै. आ. ६,५,२ । **यथा पञ्च यथा०** । तै. आ. ६,५,२ । **त्रिकद्रुकेभिः पतति०** । ऋ. १०,१४,१६; अथर्व. १८,२,६; तै. आ. ६,५,३ । **मृडा** (०ळा) **नो रुद्रोत०** । ऋ. १,११४,२; तै. सं. ४,५,१०,२ ]

अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः ।
सुम्नायन्निद्विशो अस्माकमाचरारिष्टवीरा जुहवाम ते हविः ॥ ८८
त्वेषं वयं रुद्रं यज्ञसाधमङ्कुं कविमवसे निह्वयामहे ।
आरे अस्मद्दैव्यँ हेडो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥ ८९
अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाँसि शिश्रथः कृतानि ॥ ९०
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ९१
इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥ ९२
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशँस मा न आयुः प्रमोषीः ॥११॥ ९३

हव्यं प्रीणीहि हव्यँ श्रीणीहि हव्यँ श्रपय ॥ हव्यं पच हव्यमसि हव्याय त्वा हव्यवाडसि हव्ये सीद ॥ ९४-९५

स्वयं कृण्वाणस्सुगमप्रयावं तिग्मशृङ्गो वृषभश्शोशुचानः ।
प्रत्नँ सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं ततान ॥ ९६
त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः ।
त्वयाग्ने पृष्ठं वयमारुहेमाथा देवैस्सधमादं मदेम ॥ ९७
अतिसर्गं ददतो मानवाय स्वर्गं पन्थामनुपश्यमानाः ।
अजुषन्त मरुतो यज्ञमेतं वृष्टिद्यावानममृतँ स्वर्विदम् ॥ ९८
आवर्तमानो भुवनस्य मध्ये प्रजा विकृण्वञ्जनयन् विरूपम् ।
संवत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः परस्मात् ॥ ९९
प्रजां पिपर्तु परिवत्सरो नो धाता दधातु सुमनस्यमानः ।
बह्वीस्साकं बहुधा विश्वरूपा एकव्रता मामभिसंविशन्तु ॥१२॥ १००

---

[अश्याम ते सुमतिं० । ऋ. १,११४,३ । त्वेषं वयं रुद्रं०। ऋ. १,११४,४ । अव ते हेडो(०ळो) वरुण० । ऋ. १,२४,१४; तै. सं. १,५,११,३ । उदुत्तमं वरुण पाश० । ऋ. १,२४,१५; सा. ५८९; अथर्व. ७,८३,३; १८,४,६९; तै. सं. १,५,११,३; ४,२,१,३; नि. २,१३ । इमं मे वरुण श्रुधी० । ऋ. १,२५,१९; सा. १५८५; तै. सं. २,१,११,६ । तत्त्वा यामि ब्रह्मणा० । ऋ. १,२४,११, तै. सं. २,१,११,६ ]

[१२] मै. २,१३,२२ (१०५—१०९) । तै. ब्रा. २,४,२,५—६ । मा. श्रौ. ६,२,६ । [धाता दधातु सुमनस्यमानः। अथर्व. ७,१९,१ (द्वि. च.); १३,१,३५ (च. च.)]

यदाकूतात् समसुस्रोद्धृदो वा मनसस्संभृतं चक्षुषो वा ।
तमनुप्रेहि सुकृतस्य लोकं यत्रर्षयो जग्मुः प्रथमाः पुराणाः ॥ १०१
एतँ सधस्थाः परि वो ददामि यमावहाच्छेवधिं जातवेदाः ।
अन्वागन्ता यजमानस्स्वस्ति तँ स्म जानीत परमे व्योमन् ॥ १०२
एतं जानीत परमे व्योमन्नग्ने सधस्था विद लोकमस्य ।
यदागच्छात् पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै ॥ १०३
इमँ स्तनमिष्टो यज्ञः ॥ १०४
येन सहस्रं वहसि येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥ १०५
येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः । तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ १०६
येनाग्ने दक्षिणावन्तं यज्ञं वहन्त्यृत्विजः । तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥ १०७
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥ १०८
यत्र धारा मधुमतीस्सदा स्यन्दन्ते अक्षिताः । तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत् ॥ १०९
अपूपकूला नद्यस्सदा स्यन्दन्ते अक्षिताः । तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत् ॥ ११०
उपक्षरन्ति मधुनो घृतस्य कुल्याः पूर्णास्सदमक्षीयमाणाः ।
तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत् ॥ १११
यास्ते अग्ने या वो देवाः ॥ ११२
रोचय मा ब्राह्मणेष्वथो राजसु रोचय ।
रोचय मा विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥ ११३
स्वर्णघर्मस्स्वाहा स्वर्णशुक्रस्स्वाहा स्वर्णसूर्यस्स्वाहा स्वर्णार्कस्स्वाहा स्वर्णाग्निस्स्वाहा ॥१३॥ ११४

ईडे अग्निं विपश्चितं गिरा यज्ञस्य साधनम् । श्रुष्टीवानं धितावानम् ॥ ११५
अग्ने शकेम ते वयं यमं देवस्य वाजिनः । अति द्वेषाँसि तरेम ॥ ११६

---

[१३] मै. १,४,१०; २,७,२१६—२१७; १२,१५,१३ । वा. १३,२२--२३; १७,८७; १८,४६--४८,५०,५६,५८--६०, ६१—६५ । काण्व. १४,२२—२३; १९,१; २०,१६—१८,२०,२६,२८ – ३०,३२—३५ । तै. सं. ५,७,७ । [ यदाकूतात् सम० । तै. सं ५,७,७,१ । एतँ सधस्थाः० । अथर्व. ६,१२३,१; तै. सं. ५,७,७,१ । एतं जानीत (जानीत स्मैनं) परमे० । अथर्व. ६,१२३,२ ]

[१४] मै. १,५,२,१३—१४; ४,१०,३,६—७,६०; ११,३५—३९,६७—६९; १२,११५ । वा. ३,११; १३,१४; १५,२० । काण्व. ३,१८;१४,१४; १६,४१ । [ईडे(ळे) अग्निं विपश्चितं० । ऋ. ३,२७,२; तै. ब्रा. १,४,१,४ । अग्ने शकेम ते वयं० । ऋ. ३,२७,३; तै. ब्रा. १,४,१,५]

पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः।
अग्निर्यज्ञस्य हव्यवाट्॥ ११७
तँ सबाधो यतस्रुच इत्था धिया यज्ञवन्तः।
आचक्रुरग्निमूतये॥ ११८
नवं नु स्तोममग्नये दिवश्श्येनाय जीजनम्।
वस्वः कुविद्वनाति नः॥ ११९
स्पार्हा यस्य श्रियो दृशे रयिर्वीरवतो यथा।
अग्ने यज्ञस्य चेततः॥ १२०
उप त्वा रण्वसंदृशं प्रयस्वन्तस्सहस्कृत।
अग्ने ससृज्महे गिरः॥ १२१
उप छायामिव घृणेरगन्म शर्म ते वयम्।
अग्ने हिरण्यसंदृशः॥ १२२
अग्ने मृड महाँ असि य ईमा देवयुं जनम्।
इयेथ बर्हिरासदम्॥ १२३
स मानुषीषु दूडभो विक्षु प्रावीरमर्त्यः।
दूतो विश्वेषां भुवद्॥ १२४
और्वभृगुवच्छुचिमप्नवानवदाहुवे।
अग्निँ समुद्रवाससम्॥ १२५
आ सवँ सवितुर्यथा भगस्येव भुजिँ हुवे।
अग्निँ समुद्रवाससम्॥ १२६
हुवे वातस्वनं कविं पर्जन्यक्रन्द्यँ सहः।
अग्निँ समुद्रवाससम्॥ १२७

---

[पृथुपाजा अमर्त्यो०। ऋ. ३,२७,५, तै. ब्रा. ३,६,१,३। तँ सबाधो यतस्रुच०। ऋ. ३,२७,६; तै. ब्रा. ३,६,१,३। नवं नु स्तोममग्नये०। ऋ. ७,१५,४; तै. ब्रा. २,४,८,१। स्पार्हा यस्य श्रियो०। ऋ. ७,१५,५; तै. ब्रा. २,४,८,१। उप त्वा रण्वसंदृशं०। ६,१६,३७; सा १७०'१। उप छाया (च्छाया०) मिव घृणेः०। ऋ. ६,१६,३८, तै. ब्रा. २,४,४,६। अग्ने मृड(०ळ) महाँ०। ऋ. ४,९,१; सा. २३। स मानुषीषु दूड(ळ) भो०। ऋ ४,९,२। और्वभृगुवच्छुचिम०। ऋ. ८,१०२,४, सा. १८; तै. सं. ३,१,११,८। आ सवँ सवितुः। ऋ. ८,१०२,६; तै. सं. ३,१,११,८। हुवे वातस्वनं०। ऋ. ८,१०२,५; तै. सं. ३,१,११,८]

उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
वायोरनीके अस्थिरन् ॥ १२८
यस्य त्रिधात्ववृतं बर्हिस्तस्थावसंदिनम् ।
आपश्चिन्निदधा पदम् ॥ १२९
अग्निर्मूर्धा ॥ १३०
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
तव ज्योतींष्यर्चयः ॥ १३१
ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः ।
स्तोता स्यां तव शर्मणि ॥ १३२
त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः ।
त्वां वर्धन्तु नो गिरः ॥ १३३
अदब्धस्य स्वधावतो दूतस्य रेभतस्सदा ।
अग्नेस्सख्यं वृणीमहे ॥ १३४
अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शुचिष्कविः ।
शुची रोचत आहुतः ॥१४॥ १३५
[२७९९]

॥ इत्येकोत्तरशतशाखाध्वर्युप्रभेदभिन्ने श्रीयजुषि काठके चरकशाखायामोरिमिकायां हिरण्यगर्भं नाम चत्वारिंशं स्थानकं संपूर्णम् ॥४०॥

॥ श्रीग्रन्थत्रये मध्यपठिताश्च याज्यानुवाक्याः संपूर्णाः ॥

॥ अस्मिन् ग्रन्थत्रयाभ्यन्तरे याज्यानुवाक्या नाम चतुर्थो ग्रन्थः ॥

॥ संपूर्णा चेयमोरिमिका ॥



[ उप त्वा जामयो गिरो० । ऋ ८,१०२,१३; सा. १३,१५७०; तै. ब्रा. १,८,८,१ । **यस्य त्रिधात्ववृतं०**। ऋ. ८,१०२,१४, सा १५७१ । **अग्निर्मूर्धा दिवः०** । ऋ. ८,४४,१६; सा. २७; १५३१; तै. सं. १,५,५,१; ४,४,१,१; तै. ब्रा. ३,५,७,१ । **उदग्ने शुचयस्तव०** । ऋ. ८,४४,१७, सा. १५३४; तै. सं. १,३,१४,८; ५,५,३; २,४,१४,४ । **ईशिषे वार्यस्य हि०** । ऋ. ८,४४,१८; सा. १५३३ । **त्वामग्ने मनीषिणस्त्वाँ०** । ऋ. ८,४४,१९ । **अदब्धस्य स्वधावतो०** । ऋ. ८,४४,२० । **अग्निश्शुचिव्रततम०** । ऋ. ८,४४,२१; तै. सं. १,३,१४,८; ५,५,३ ]

# अथाश्वमेधः ।

## ( पञ्चमो ग्रन्थः । )

अथ प्रथमं वचनम् ।

### पन्थानुवचनम् ।

ये ते पन्थानस्सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिस्सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ १
नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते
लोकमस्मै यजमानाय देहि नम आदित्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि
॥१॥ २

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ ३
इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।
तया देवास्सुतमाबभूवुर्ऋतस्य सामन् सरमारपन्ती ॥ ४
अभिधा असि भुवनमासि ॥ यन्तासि धर्तासि सोऽग्निं वैश्वानरँ सप्रथसं गच्छ स्वाहाकृतः
पृथिव्याँ स्वगा त्वा देवेभ्यस्स्वाहा त्वा प्रजापतये यन्ता राड्यन्तासि यमनो धर्तासि धरुणः
कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते
त्वाद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः ॥२॥ ५-६

विभूर्मात्रा प्रभुः पित्राश्वोऽसि हयोऽसि मयोऽस्यत्योऽसि नरोऽस्यर्वासि सप्तिरसि वाज्यसि
वृषासि नृमणा असि ययुर्नामास्यादित्यानां पत्वान्वेह्यग्नये स्वाहा स्वाहेन्द्राग्निभ्याँ स्वाहा विश्वेभ्यो
देवेभ्यस्स्वाहा प्रजापतये स्वाहा सर्वाभ्यो देवताभ्य इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह
रमतिस्स्वाहा भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्यो देवा आशापाला
एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायत ॥३॥ ७

---

[१] तै. सं. ७,५,२४ । वा. ३४,२७ । काण्व. ३३ २१ । [ ये ते पन्थान (पन्थाः) स्सवितः० । ऋ. १,३५ ११; तै. सं. ७,५,२४,१ ]

[२] मै. ३,१२,१ (१—२) । वा. २२,२—५ । काण्व. २४,२—५ । तै. सं. ७,१,११ । देवस्य त्वा सवितुः० । काठ. १,२,५; अथर्व. १९,५१,२; ऐ. ब्रा. ८,७ ]

[३] मै. ३,१२,४ (६) । वा. २२,१९ । काण्व. २४,२४—२५ । तै. सं. ७,१,१२,१ ।

आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा पलायिताय स्वाहापलायिताय स्वाहा वल्गते स्वाहा परावल्गते स्वाहा यते स्वाहा प्रयते स्वाहा ॥४॥ ८

अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहापां मोदाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥५॥ ९

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहा दिग्भ्यस्स्वाहावान्तरदिशाभ्यस्स्वाहा समाभ्यस्स्वाहा शरद्भ्यस्स्वाहाहोरात्रेभ्यस्स्वाहार्धमासेभ्यस्स्वाहा मासेभ्यस्स्वाहर्तुभ्यस्स्वाहा संवत्सराय स्वाहा सर्वस्मै स्वाहा ॥६॥ १०

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहापां मोदाय स्वाहा वायवे स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥७॥ ११

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहाग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहाह्ने स्वाहा रात्र्यै स्वाहर्जवे स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहाशितिम्ने स्वाहा रोचाय स्वाहा हिमाय स्वाहा शीताय स्वाहातपाय स्वाहारण्याय स्वाहा स्वर्गाय स्वाहा लोकाय स्वाहा वृत्ताय स्वाहा सर्वस्मै स्वाहा ॥८॥ १२

भुवो देवानां कर्मणापसर्तस्य पथ्यासि वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन त्वर्तूनाँ हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यासि रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन

[४] मै. ३,१२,३ (५)। वा. २२,७—८। काण्व. २४,९—१०। तै. सं. ७,१,१३।

[५] मै. ३,१२,२ (४)। वा. १०,५, २२,६,२७; ३९,१। काण्व. ११,१२, २४,६,३७; ३९,१। तै. सं. ७,१,१४। [**अग्नये स्वाहा**। अथर्व. १९,४३,१। **सोमाय स्वाहा**। अथर्व. १९,४३,५। **वायवे स्वाहा**। अथर्व. १९,४३,२]

[६] मै. ३,१२,७—८,१० (३-१०,१२)। वा. २२,६,२४,२७—२९; १०,५; ३९,१—२। काण्व. २४,६,३४, ३७-४१,४३; ११,१२; ३९,१। तै. सं. ७,१,१५। [**पृथिव्यै स्वाहा**। अथर्व ५,९,२; ६। **अन्तरिक्षाय स्वाहा**। अथर्व. ५,९,३—४। **दिवे स्वाहा**। अथर्व. ५,९,१, ५। **सूर्याय स्वाहा**। अथर्व. १९,४३,३। **चन्द्रमसे स्वाहा**। अथर्व. १९,४३,४]

[७] मै ३,१२,२; ५ (४,७)। वा. १०,५; २२,६,२०,२७; ३९,१। काण्व ११,१२, २४,६,२५-२८,३७, ३९,१। तै. सं. ७,१,१६। मा. श्रौ. ९,२,२। [**अग्नये स्वाहा**। (पञ्चमानुवाके द्रष्टव्यम्)]

[८] मै. ३,१२,७; १० (९,१२)। तै. सं. ७,१,१७। [**पृथिव्यै स्वाहा**। (षष्ठानुवाके द्रष्टव्यम्)]

[९] मै. ४,१०,३३—३४। वा. २१,५-६। काण्व. २३,५-६। तै. सं ७,१,१८]

त्वा छन्दसा युनज्मि ग्रीष्मेन त्वर्तूनाँ हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यास्या-
दित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि वर्षाभिस्त्वर्तूनाँ हविषा दीक्षयामि भुवो
देवानां कर्मणापसर्तस्य पथ्यासि विश्वेभिर्देवेभिर्देवतयानुष्टुभेन त्वा छन्दसा युनज्मि शरदा त्वर्तूनाँ
हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यास्यङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा
युनज्मि हेमन्तशिशिराभ्यां त्वर्तूनाँ हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यास्याहं
दीक्षामरुहमृतस्य पत्नीं गायत्रेण च्छन्दसा ब्रह्मणा चर्तँ सत्येऽधाँ सत्यमृतेऽधाँ सुत्रामाणं महीमू
षु ॥९॥ १३

इंकाराय स्वाहेंकृताय स्वाहा क्रन्दते स्वाहावक्रन्दते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा गन्धाय
स्वाहा घ्राताय स्वाहा प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा संदीयमानाय स्वाहा संदिताय
स्वाहा विचृत्यमानाय स्वाहा विचृत्ताय स्वाहा पलायिष्यते स्वाहा पलायिताय स्वाहोपरँस्यते
स्वाहोपरताय स्वाहा निवेक्ष्यते स्वाहा निविशमानाय स्वाहा निविष्टाय स्वाहा निषत्स्यते स्वाहा
निषीदते स्वाहा निषण्णाय स्वाहासिष्यते स्वाहासीनाय स्वाहासिताय स्वाहा निपत्स्यते स्वाहा निपद्य-
मानाय स्वाहा निपन्नाय स्वाहा शयिष्यते स्वाहा शयानाय स्वाहा शयिताय स्वाहा संमीलिष्यते
स्वाहा संमीलते स्वाहा संमीलिताय स्वाहा स्वप्स्यते स्वाहा स्वपते स्वाहा सुप्ताय स्वाहा प्रभोत्स्यते
स्वाहा प्रबुध्यमानाय स्वाहा प्रबुद्धाय स्वाहा जागरिष्यते स्वाहा जाग्रते स्वाहा जागृताय स्वाहा
शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा श्रुताय स्वाहा वीक्षिष्यते स्वाहा वीक्षमाणाय स्वाहा वीक्षिताय
स्वाहा सँहास्यते स्वाहा संजिहानाय स्वाहोज्जिहानाय स्वाहा विवर्त्स्यते स्वाहा विवर्तमानाय
स्वाहा विवृत्ताय स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वाहोत्थिताय स्वाहा विधविष्यते स्वाहा विधून्वानाय
स्वाहा विधूताय स्वाहोत्क्रँस्यते स्वाहोत्क्रामते स्वाहोत्क्रान्ताय स्वाहा चंक्रमिष्यते स्वाहा
चंक्रम्यमाणाय स्वाहा चंक्रमिताय स्वाहा कण्डूयिष्यते स्वाहा कण्डूयमानाय स्वाहा कण्डूयिताय
स्वाहा निकषिष्यते स्वाहा निकषमाणाय स्वाहा निकषिताय स्वाहा यदत्ति तस्मै स्वाहा यत् पिबति
तस्मै स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत् करोति तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा
प्रजननाय स्वाहा ॥१०॥ १४

अग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहर्तमस्यृतस्यर्तमसि सत्यमसि सत्यस्य सत्यमस्यृतस्य
पन्था असि देवानां छायामृतस्य नाम तत् सत्यं यत् त्वं प्रजापतिरसि ॥ १५

[ सुत्रामाणं पृथिवीं० । ऋ. १०,६३,१०; अथर्व. ७,६,३, तै. सं १,५,११,५; तै. आ. १,१३,२ । महीमू षु० । तै. सं. १,५,११,५; ७,१,१८,२; तै. ब्रा. ३,१,३,३; तै. आ. १,१३,२; मा श्रौ. ७,२,६; कपि. ४६,७]
[१०] मै. ३,१२,३ (५) । वा. २२,७—८ । काण्व. २४,७—१२ । तै. सं. ७,१,१३; १९ ।
[११] तै. सं. ७,१,२० ]

अधि यदस्मिन् वाजिनीव शुभस्स्पर्धन्ते दिवस्सूर्येण विशः ।
अपो वृणानः पवते कवीयन् पशून्न गोपा इर्यः परिज्मा ॥११॥ १६
[१८१५]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनाम्नि पञ्चमे ग्रन्थे पन्थानुवचनं नाम प्रथमं वचनं संपूर्णम् ॥१॥

अथ द्वितीयं वचनम् ।

## गणानुवचनम् ।

एकस्मै स्वाहा द्वाभ्याँ स्वाहा त्रिभ्यस्स्वाहा चतुर्भ्यस्स्वाहा पञ्चभ्यस्स्वाहा षड्भ्यस्स्वाहा सप्तभ्यस्स्वाहाष्टाभ्यस्स्वाहा नवभ्यस्स्वाहा दशभ्यस्स्वाहैकान्नविँशत्यै स्वाहा विँशत्यै स्वाहा नवविँशत्यै स्वाहा त्रिँशते स्वाहैकान्नचत्वारिँशते स्वाहा चत्वारिँशते स्वाहा नवचत्वारिँशते स्वाहा पञ्चाशते स्वाहैकान्नषष्ट्यै स्वाहा नवषष्ट्यै स्वाहा सप्तत्यै स्वाहैकान्नाशीत्यै स्वाहाशीत्यै स्वाहा नवाशीत्यै स्वाहा नवत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा द्वाभ्याँ शताभ्याँ स्वाहा सर्वस्मै स्वाहा ॥१॥ १

एकस्मै स्वाहा त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा सप्तभ्यस्स्वाहा नवभ्यस्स्वाहैकादशभ्यस्स्वाहैकान्नविँशत्यै स्वाहैकविँशत्यै स्वाहा नवविँशत्यै स्वाहैकत्रिँशते स्वाहैकान्नचत्वारिँशते स्वाहैकचत्वारिँशते स्वाहा नवचत्वारिँशते स्वाहैकपञ्चाशते स्वाहैकान्नषष्ट्यै स्वाहैकषष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकसप्तत्यै स्वाहैकान्नाशीत्यै स्वाहैकाशीत्यै स्वाहा नवाशीत्यै स्वाहैकनवत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥२॥ २

द्वाभ्याँ स्वाहा चतुर्भ्यस्स्वाहा षड्भ्यस्स्वाहाष्टाभ्यस्स्वाहा दशभ्यस्स्वाहाष्टादशभ्यस्स्वाहा विँशत्यै स्वाहा त्रिँशते स्वाहाष्टात्रिँशते स्वाहा चत्वारिँशते स्वाहाष्टाचत्वारिँशते स्वाहा पञ्चाशते स्वाहाष्टापञ्चाशते स्वाहा षष्ट्यै स्वाहाष्टाषष्ट्यै स्वाहा सप्तत्यै स्वाहाष्टासप्तत्यै स्वाहाशीत्यै स्वाहाष्टाशीत्यै स्वाहा नवत्यै स्वाहाष्टानवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥३॥ ३

त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा यथा द्वितीय एवं चतुर्थोऽन्यत् प्रभृतेः ॥४॥ ४

चतुर्भ्यस्स्वाहाष्टाभ्यस्स्वाहा द्वादशभ्यस्स्वाहा षोडशभ्यस्स्वाहा विँशत्यै स्वाहा चतुर्विँशत्यै

---

[अधि यदस्मिन् वाजिनीव० । ऋ. ९,९४,१; सा. ५३९; तै. सं. ७,१,२०,१]
[१] मै. ३,१२,१५ (१७) । वा. २३,३४ । काण्व. २४,४७ । तै. सं. ७,२,११ ।
[२] तै. सं. ७,२,१२ । [३] तै. सं. ७,२,१३ । [४] तै. सं. ७,२,१४ । [५] तै. सं. ७,२,१५ ।

स्वाहाष्टाविँशत्यै स्वाहा द्वात्रिँशते स्वाहा षट्त्रिँशते स्वाहा चत्वारिँशते स्वाहाष्टाचत्वारिँशते स्वाहा द्वापञ्चाशते स्वाहा षट्पञ्चाशते स्वाहा षष्ट्यै स्वाहा चतुष्षष्ट्यै स्वाहाष्टाषष्ट्यै स्वाहा द्वासप्तत्यै स्वाहा षट्सप्तत्यै स्वाहाशीत्यै स्वाहा चतुरशीत्यै स्वाहाष्टाशीत्यै स्वाहा द्वानवत्यै स्वाहा षण्णवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥५॥ ५

पञ्चभ्यस्स्वाहा दशभ्यस्स्वाहा पञ्चदशभ्यस्स्वाहा विंशत्यै स्वाहा पञ्चविंशत्यै स्वाहा त्रिँशते स्वाहा पञ्चत्रिँशते स्वाहा चत्वारिँशते स्वाहा पञ्चचत्वारिँशते स्वाहा पञ्चाशते स्वाहा पञ्चपञ्चाशते स्वाहा षष्ट्यै स्वाहा पञ्चषष्ट्यै स्वाहा सप्तत्यै स्वाहाशीत्यै स्वाहा पञ्चाशीत्यै स्वाहा नवत्यै स्वाहा पञ्चनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥६॥ ६

दशभ्यस्स्वाहा विँशत्यै स्वाहा त्रिँशते स्वाहा चत्वारिँशते स्वाहा पञ्चाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहाशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥७॥ ७

विँशत्यै स्वाहा चत्वारिँशते स्वाहा षष्ट्यै स्वाहाशीत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥८॥ ८

पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्याँ शताभ्याँ स्वाहा त्रिभ्यश्चतुर्भ्यः पञ्चभ्यष्षड्भ्यस्सप्तभ्योऽष्टाभ्यो नवभ्यश्शतेभ्यस्स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा ॥९॥ ९

शताय स्वाहा सहस्राय स्वाहायुताय स्वाहा प्रयुताय स्वाहा नियुताय स्वाहार्बुदाय स्वाहा न्यर्बुदाय स्वाहा बद्वाय स्वाहा समुद्राय स्वाहा मध्याय स्वाहान्ताय स्वाहा परार्धाय स्वाहाषसे स्वाहा व्युष्टयै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा स्वर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥१०॥ १०

[२८४५]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे गणानुवचनं नाम द्वितीयं वचनं संपूर्णम् ॥२॥



[६] तै. सं. ७,२,१६। [७] तै. सं. ७,२,१७। [८] तै. सं. ७,२,१८। [९] तै. सं. ७,२,१९। [१०] वा. २२,३४। काण्व. २४,४७। तै. सं. ७,२,२०।

अथ तृतीयं वचनम् ।

## अनुवचनम् ।

अर्वाङ् यज्ञस्संक्रामत्वमुष्मादधि मामभि । ऋषीणां यः पुरोहितः ॥ १
निर्देवं निर्वीर्यं कृत्वा विष्कन्धं तस्मिन् हीयतां योऽस्मान् द्वेष्टि ।
शरीरं यज्ञशमलं कुसीदं तस्मिन् सीदतु योऽस्मान् द्वेष्टि ॥ २
यज्ञ यज्ञस्य यत् तेजस्तेन संक्राम मामभि ।
ब्राह्मणानृत्विजो देवान् यज्ञस्य तपसा तेऽसा अहमाहुवे ॥ ३
इष्टेन पक्कमुप ते हुवेऽसा अहम् । सं ते वृञ्जे सुकृतँ सं प्रजां पशून् ॥ ४
प्रैषान् सामिधेनीराघारा आज्यभागा आश्रुतं प्रत्याश्रुतमाशृणामि ते ।
प्रयाजानुयाजान् स्विष्टकृतमिडामाशिष आवृञ्जे स्वः ॥ ५
अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः ।
याज्यानुवाक्याभ्यामुप ते हुवेऽसा अहं यज्ञमाददे ते वषट् कृतम् ॥ ६
स्तुतँ शस्त्रं प्रतिगरं ग्रहमिडामाशिष आवृञ्जे स्वः ।
पत्नीसंयाजानुप ते हुवेऽसा अहँ समिष्टयजुराददे तव ॥ ७
पशून् सुतं पुरोडाशान् सवनान्योत यज्ञम् ।
देवान् सेन्द्रानुप ते हुवेऽसा अहमग्निमुखान् सोमवतो ये च विश्वे ॥१॥ ८

भूतं भव्यं भविष्यद्वषट् स्वाहा नम ऋक्साम यजुर्वषट् स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्
स्वाहा नमः पृथिव्युन्तरिक्षं द्यौर्वषट् स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः पिता पुत्रः पौत्रो
वषट् स्वाहा नमः प्राणो व्यानोऽपानो वषट् स्वाहा नमो भूर्भुवस्स्वुर्वषट् स्वाहा नमः ॥२॥ ९

आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान् ।
आपो देवीर्यज्ञिया माविशन्तु सहस्रस्य मा भूमा मा प्रहासीत् ॥ १०

---

[ १ ] तै. सं. ७,३,११ । वा. १,२५-२६; २,१५ । काण्व. १,४२-४३; २,३० । [ **अर्वाङ् यज्ञस्संक्रामतु०** । तै. सं. ७,३,११,१ । **निर्देवं निर्वीर्यं कृत्वा०** । तै. सं. ७,३,११,१ । **यज्ञ यज्ञस्य यत्०** । तै. सं. ७,३,११,१। **इष्टेन पक्वमुप०** । तै. सं ७,३,११,२ । **प्रैषान् सामिधेनी०** । तै. सं. ७,३,११,२ । **अग्निनेन्द्रेण सोमेन०** । तै. सं. ७,३,११,२ । **स्तुतँ शस्त्रं प्रतिगरं०** । तै. सं. ७,३,११,३ । **पशून् सुतं पुरोडाशान्०** । तै. सं. ७,३,११,३ ]

[ २ ] तै. सं. ७,३,१२ । [ ३ ] तै. सं. ७,३,१३ ।

आ मे ग्रहा भवन्त्वा पुरोरुक् स्तुतशस्त्रे माविशतां समीची ।
आदित्या रुद्रा वसवो मे सदस्यास्सहस्रस्य मा भूमा मा प्रहासीत् ॥ ११
आ माग्निष्टोमो विशतूक्थ्यश्चातिरात्रो मा विशत्वापिशर्वरः ॥
तिरोअह्नया मा सुहुता आविशन्तु सहस्रस्य मा भूमा मा प्रहासीत् ॥३॥ १२

अग्निना तपोऽन्वाभवद्वाचा ब्रह्म मणिना रूपाणि हिरण्येन वर्चोऽद्भिः पृथिवीं वायुनान्तरिक्षँ सूर्येण दिवं चन्द्रमसा नक्षत्राणि यमेन पितॄन् राज्ञा मनुष्यान् फलेन नाद्यानजगरेण सर्पान् व्याघ्रेणारण्यान् पशूञ्छ्येनेन पतत्रिणो व्रीहिनान्नानि यवेनौषधीरुदुम्बरेणोर्जं न्यग्रोधेन वनस्पतीन् वृष्णाश्वान् वृषभेण गा वृष्णिनावीर्बस्तेनाजा गायत्र्या छन्दाँसि त्रिवृता स्तोमान् रथन्तरेण सामानि ब्राह्मणेन वाचम् ॥४॥ १३

स्वाहाधिमाधीताय स्वाहा स्वाहाधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहादित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहा विश्वो देवस्य नेतुः ॥५॥ १४

दद्भ्यस्स्वाहा हनुभ्याँ स्वाहोष्ठाभ्याँ स्वाहा नासिकाभ्याँ स्वाहा मुखाय स्वाहा चक्षुर्भ्याँ स्वाहा श्रोत्राभ्याँ स्वाहा पार इक्षवोऽवारीयेभ्यः पक्ष्मभ्यस्स्वाहावार इक्षवः पारीयेभ्यः पक्ष्मभ्यस्स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याँ स्वाहा ललाटाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यस्स्वाहा वहाय स्वाहा ग्रीवाभ्यस्स्वाहा स्कन्धेभ्यस्स्वाहा कीकसाभ्यस्स्वाहा पृष्टिभ्यस्स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याँ स्वाहाँसाभ्याँ स्वाहा दोषभ्याँ स्वाहा बाहुभ्याँ स्वाहा जङ्घाभ्याँ स्वाहा श्रोणिभ्याँ स्वाहोरुभ्याँ स्वाहाष्ठीवद्भ्याँ स्वाहा जङ्घाभ्याँ स्वाहा भसदे स्वाहा शिखण्डेभ्यस्स्वाहा वालधानाय स्वाहाण्डाभ्याँ स्वाहा शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा प्रजननाय स्वाहा पद्भ्यस्स्वाहा शफेभ्यस्स्वाहा लोमभ्यस्स्वाहा त्वचे स्वाहा लोहिताय स्वाहा माँसाय स्वाहा स्नावभ्यस्स्वाहास्थिभ्यस्स्वाहा मज्जभ्यस्स्वाहाङ्गेभ्यस्स्वाहात्मने स्वाहा सर्वस्मै स्वाहा ॥६॥ १५

अञ्ज्येताय स्वाहाञ्जिसक्थाय स्वाहा शितिपदे स्वाहा शितिककुदे स्वाहा शितिरन्ध्राय स्वाहा

---

[४] तै. सं. ७,३,१४ ।

[५] मै. १,२,१३; २,७,७६ । वा. ४,८; ११,६७; २२,२०-२१ । काण्व. ४,९; १२,६८; २४,२६-२९ । तै. सं. ७,३,१५ [ विश्वो देवस्य नेतु:० । ऋ. ५,५०,१; तै. सं. १,२,२,१; ४,१,९,१ ]

[६] वा. ३९,१० । काण्व. ३९,९ । तै. सं. ७,३,१६ ।     [७] तै. सं. ७,३,१७ ।

शितिपृष्ठाय स्वाहा शित्यँसाय स्वाहा पुष्पकर्णाय स्वाहा शित्योष्ठाय स्वाहा शितिभ्रवे स्वाहा शितिभसदे स्वाहा श्वेतानूकाशाय स्वाहाञ्जये स्वाहा ललामाय स्वाहासितज्ञवे स्वाहा कृष्णैताय स्वाहा रोहितैताय स्वाहारुणैताय स्वाहेदृशाय स्वाहा कीदृशाय स्वाहा तादृशाय स्वाहा सदृशाय स्वाहा विसदृशाय स्वाहा सुसदृशाय स्वाहा रूपाय स्वाहा सर्वस्मै स्वाहा ॥७॥ १६

कृष्णाय स्वाहा श्वेताय स्वाहा पिशङ्गाय स्वाहा सारङ्गाय स्वाहारुणाय स्वाहा गौराय स्वाहा बभ्रवे स्वाहा नकुलाय स्वाहा शोणाय स्वाहा रोहिताय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा पालवाय स्वाहा सुरूपाय स्वाहा सरूपाय स्वाहा विरूपाय स्वाहानुरूपाय स्वाहा प्रतिरूपाय स्वाहा शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा पृश्निसक्थाय स्वाहा सर्वस्मै स्वाहा ॥८॥ १७

ओषधीभ्यस्स्वाहा मूलेभ्यस्स्वाहा तूलेभ्यस्स्वाहा पर्वभ्यस्स्वाहा वल्शेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहागृहीतेभ्यस्स्वाहावपन्नेभ्यस्स्वाहा शयानेभ्यस्स्वाहा सर्वस्मै स्वाहा ॥९॥ १८

वनस्पतिभ्यस्स्वाहा मूलेभ्यस्स्वाहा तूलेभ्यस्स्वाहा स्कन्धेभ्यस्स्वाहा शाखाभ्यस्स्वाहा पर्णेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहागृहीतेभ्यस्स्वाहावपन्नेभ्यस्स्वाहा शयानेभ्यस्स्वाहा शिष्टाय स्वाहा परिशिष्टाय स्वाहातिशिष्टाय स्वाहा सँशिष्टाय स्वाहोच्छिष्टाय स्वाहा रिक्ताय स्वाहारिक्ताय स्वाहा प्ररिक्ताय स्वाहा संरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा ॥१०॥ १९

[१८४४]

॥इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थेऽनुवचनं नाम तृतीयं वचनं संपूर्णम्॥३॥

---

अथ चतुर्थं वचनम्।

## मेषानुवचनम्।

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैश्शल्मलिर्ऋद्ध्या पर्णो ब्रह्मणा प्लक्षो मेधेन न्यग्रोधश्चमसैरुदुम्बर ऊर्जा गायत्री छन्दोभिस्त्रिवृत्स्तोमैरवन्तीस्स्थावन्तीस्त्वावन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां गणानां त्वा गणपतिँ हवामहे वसो मम प्रियाणां त्वा प्रियपतिँ हवामहे वसो मम निधीनां त्वा निधिपतिँ हवामहे वसो मम ॥१॥ १

---

[८] तै. सं. ७,३,१८। वा. २५,१। काण्व. २७,२। [९] तै. सं. ७,३,१९। वा. २२,२८-२९। काण्व. २४,४०-४१।
[१०] तै. सं. ७,३,२०। वा. २२,२८—२९। काण्व. २४,४०—४१।
[१] मै. ३,१२,२१। वा. २३,१९। काण्व. २५,२१। तै. सं. ७,४,१२। [**गणानां त्वा गणपतिँ हवामहे।** ऋ. २,२३,१]

कूप्याभ्यस्स्वाहा कुल्याभ्यस्स्वाहा स्थाल्याभ्यस्स्वाहावट्याभ्यस्स्वाहा खल्याभ्यस्स्वाहा ह्रद्याभ्य-
स्स्वाहा सूद्याभ्यस्स्वाहा पल्वल्याभ्यस्स्वाहा वैशन्तीभ्यस्स्वाहा सरस्याभ्यस्स्वाहा वर्ष्याभ्यस्स्वाहा-
वर्ष्याभ्यस्स्वाहा प्रुष्टाभ्यस्स्वाहा ह्रादुनिभ्यस्स्वाहा स्थावराभ्यस्स्वाहा स्यन्दमानाभ्यस्स्वाहा नादेयी-
भ्यस्स्वाहा सैन्धवीभ्यस्स्वाहा समुद्रियाभ्यस्स्वाहा सर्वाभ्यस्स्वाहा ॥२॥ २

अद्भ्यस्स्वाहा वहन्तीभ्यस्स्वाहा समुद्रं वहन्तीभ्यस्स्वाहा समन्तं वहन्तीभ्यस्स्वाहोग्रं वहन्तीभ्य-
स्स्वाहा भीमं वहन्तीभ्यस्स्वाहा शीभं वहन्तीभ्यस्स्वाहा शीघ्रं वहन्तीभ्यस्स्वाहाम्भोभ्यस्स्वाहा
नभोभ्यस्स्वाहा महोभ्यस्स्वाहा ॥३॥ ३

योअर्वन्तं जिघाँसति तमभ्यमीति वरुणः। परो मर्तः परश्श्वा ॥ ४
अहं च त्वं च वृत्रहन् सँसनुयाव वरीष्वा।
अरातीवा चिदद्रिवोऽनु नौ शूर मँसते भद्रा इन्द्रस्य रातयः ॥ ५
अभि क्रत्वेन्द्र भूरथ ज्मन्न ते विव्यङ् महिमानं रजाँसि।
स्वेना हि वृत्रँ शवसा जगन्थ न शत्रुरन्तं विविदद्युधा ते ॥४॥ ६

नमो राज्ञे नमो वरुणाय नमोऽश्वाय नमः प्रजापतये नमोऽधिपतयेऽधिपतिरस्यधिपतिं मा
कुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेह्युपाकृताय स्वाहालब्धाय स्वाहा हुताय स्वाहा
॥५॥ ७

मयोभूर्वातो अभिवात्वुस्रा ऊर्जस्वतीरोषधीराविशन्ताम्।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र नो मृड ॥ ८
यास्सरूपा विरूपा एकरूपा यासामग्निर्निष्टया नामानि वेद।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ ९
या देवेषु तन्वमैरयन्त यासाँ सोमो विश्वा रूपाणि वेद।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ १०

---

[२] तै. सं. ७,४,१३।
[३] वा. २२,२५,२९; ३९,२। काण्व. २४,३५,४१; ३९,१। तै. सं. ७,४,१४।
[४] मै. ३,१२,३। वा. २२,५। काण्व. २४,५। तै. सं. ७,४,१५। [अहं च त्वं च वृत्रहन्०। ऋ. ८,६२,११; तै. सं. ७,४,१५,१; नि. १,४। अभि क्रत्वेन्द्र भूरथ(०ध)०। ऋ. ७,२१,६; तै. सं. ७,४,१५,१]
[५] तै. सं. ७,४,१६।
[६] मै. ४,१०,३३—३४। वा. २१,५—६। काण्व. २३,५—६। तै. सं. ७,४,१७। [मयोभूर्वातो अभि०। ऋ. १०,१६९,१; तै. सं. ७,४,१७,१; नि. १,१७। यास्सरूपा विरूप०। ऋ. १०,१६९,२; तै. सं. ७,४,१७,१। या देवेषु तन्वम्०। ऋ. १०,१६९,३; तै. सं. ७,४,१७,१]

प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैर्यज्ञियैस्संविदानः ।
बह्वीर्भवन्तीरुप नो गोष्ठमाशुस्तासां वयं प्रजया सँसदेम ॥ ११
इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा महीमू षु सुत्रामाणम् ॥६॥ १२

कस्स्विदेकाकी चरति क उ स्विज्जायते पुनः ।
किँ स्विद्धिमस्य भेषजं किँ स्वदावपनं महत् ॥ १३
सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ १४
का स्विदासीत् पूर्वचित्तिः किँ स्विदासीद्बृहद्वयः ।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पिशङ्गिला ॥ १५
द्यौरासीत् पूर्वचित्तिरश्व आसीद्बृहद्वयः ।
अविरासीत् पिलिप्पिला रात्रिरासीन् पिशङ्गिला ॥ १६
पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥ १७
वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् ।
सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम ॥७॥ १८

अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वकस्सुभगे काम्पीलवासिनि ॥ १९
स्वर्गे लोके संप्रोर्णुवाथामाहमजामि गर्भधमा त्वमजासि गर्भधं तौ सह चतुरः पदस्संप्रसारया-
वहै वृषा वां रेतोधा रेतो दधातूत्सक्थ्योर्गृदं धेह्यञ्जिमुदञ्जिमन्वज ॥ २०
यस्स्त्रीणां जीवभोजनो य आसां बिलधावनः ।
प्रियस्स्त्रीणामपीच्यो य आसां कृष्णे लक्ष्माणि सर्दिगृर्दिं परावधीत् ॥ २१
अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वकः ॥ २२

---

[ प्रजापतिर्मह्यमेता० । ऋ. १०,१६९,४; तै. सं. ७,४,१७,२। महीमू षु०। तै. सं. १,५,११,५; ७,१,१८,२; तै. ब्रा. ३,१३,३; तै. आ. १,१३,२; मा. श्रौ. ७,२,६, कपि. ४६,७ । सुत्रामाणम् । ऋ. १०,६३,१०; अथर्व. ७,६,३; तै. सं. १,५,११,५; तै. आ. १,१३,२; काठ. २,३,११ ]

[७] मै. ३,१२,१९ (२५—२८)। वा २३,९—१२,४५--४७,५३--५४,६१--६२ । काण्व २५,१०--१३,४७--४९, ५५--५६,६३--६४ । तै. सं. ७,४,१८ । [कस्स्विदेकाकी चरति० । आ. सू. १०,९। सूर्य एकाकी चरति० । आ. सू. १०,९ । पृच्छामि त्वा परमन्तं० । ऋ. १,१६४,३४; अथर्व. ९,१०,१३ । वेदिमाहुः(इयं वेदिः)०। ऋ. १,१६४,३५; अथर्व. ९,१०,१४ ]

[८] मै. १,५,३; १२,२०; १३,१ (३०--३२; १--५) । वा. ११,५०-५२; २३,१८--२७,३०--३२; ३६,१४--१६ । काण्व. १२,५१--५३; ३६,१४--१६; २५,२०--२९,३२--३४,४० । तै. सं. ७,४,१९ ।

ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिरा इव । अथास्या मध्यमेधतां शीते वाते पुनन्निव ॥ २३
अम्ब इत्युक्तम् ॥ २४
यद्धरिणी यवमत्ति न पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति ॥ २५
अम्ब इत्युक्तम् ॥ २६
इयं यका शकुन्तिकाहलमिति वञ्चति । आहतं गभे पसो निजल्गलीति धानिका ॥ २७
अम्ब इत्युक्तम् ॥ २८
माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ।
प्रसुलामीति ते पिता गभे मुष्टिमतँसयत् ॥ २९
दधिक्राव्णो अकारिषमापो हि ष्ठेति तिस्रः ॥८॥ ३०

भूर्भुवस्स्वर्वसवस्त्वाञ्जन्तु गायत्रेण च्छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन च्छन्दसादित्यास्त्वाञ्जन्तु जागतेन च्छन्दसा ॥ ३१
यद्वातो अपो अगमदिन्द्रस्य तन्वं प्रियाम् ।
एतँ स्तोतरेतेन पथा पुनरश्वमावर्तयासि नः ॥ ३२
लाजी३ञ्छाची३न्यशो ममा३ यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते ॥ ३३
युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ ३४
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ ३५
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥९॥ ३६

प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा स्नावभ्यस्स्वाहा संतानेभ्यस्स्वाहा परिसंतानेभ्य-

---

[ दधिक्राव्णो अकारिषं० । ऋ. ४,३९,६; १०,१८६,१; सा. ३५८। अथर्व ४,१०,६; २०,१३७,३। आपो हि ष्ठा मयो० । ऋ १०,९,१; सा. १८३७; अथर्व. १,५,१; तै. सं. ४,१,५,१, ५,६,१,४; ७,४,१९,४; तै. आ. ४,४२,४; १०,१,११; नि. ९,२७ । यो वः शिवतमो० । ऋ. १०,९,२, सा. १८३८; अथर्व. १,५,२; तै. सं. ४,१,५,१; ५,६,१,४; ७,४,१९,४; तै. आ. ४,४२,४,१०,१,११ । तस्मा अरं गमाम वो० । ऋ. १०, ९,३; सा, १८३९; अथर्व. १,५,३, तै. सं ४,१,५,१; ५,६,१,४: ७,४,१९,४; तै. आ. ४,४२,४; १०,१,११ ]

[९] मै. ३,१२,१८—१९; १६,३ (२२—२४; २९—३०) वा. २३,५—८, २९,३७। काण्व. २५,५--९; ३१,१२। तै. सं. ७,४,२० । [ युञ्जन्ति ब्रध्नमरुषं० । ऋ. १,६,१; सा. १४६८. अथर्व. २०,२६,४; ४७,१०; ६९,९; तै. सं. ७,४,२०,१ । युञ्जन्त्यस्य काम्या०। ऋ. १,६,२; सा. १४६९; अथर्व. २०,२६,५, ४७,११; ६९,१०; तै. सं. ७,४,२०,१ । केतुं कृण्वन्नकेतवे० । ऋ. १,६,३; सा. १४७०, अथर्व. २०,२६,६; ४७,१२, ६९,११; तै. सं. ७,४,२०,१; तै. ब्रा. ३,९,४,३ ]

[१०] मै. ३,१२,२१ । वा. २२,२३,३४; २३,१८; ३९,३ । काण्व. २४,३३,४७; २५,२०; ३९,२; तै. सं. ७,४,२१ ।

स्स्वाहा पर्वभ्यस्स्वाहा संधानेभ्यस्स्वाहा शरीरेभ्यस्स्वाहा यज्ञाय स्वाहा दक्षिणायै स्वाहा स्वर्गाय
स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥१०॥ ३७
[१८८१]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे मेषानुवचनं नाम चतुर्थं वचनं संपूर्णम् ॥४॥

अथ पञ्चमं वचनम्।

## मितानुवचनम्।

सिताय स्वाहासिताय स्वाहाभिहिताय स्वाहानभिहिताय स्वाहा युक्ताय स्वाहायुक्ताय स्वाहा-
युक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा
संवञ्चते स्वाहानुवञ्चते स्वाहोद्वञ्चते स्वाहा यते स्वाहा धावते स्वाहा तिष्ठते स्वाहोपरताय स्वाहा
सर्वस्मै स्वाहा ॥१॥ १

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा संप्लोष्यते स्वाहा संप्लवमानाय स्वाहा संप्लुताय
स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघायिताय स्वाहा मेघिताय स्वाहा मेघाय स्वाहा
नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै स्वाहा विद्योतिष्यते
स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रँ
स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते स्वाहा-
नुवर्षते स्वाहा प्रोषिष्यते स्वाहा प्रुष्णते स्वाहा परिप्रुष्णते स्वाहा शीकायिष्यते स्वाहा शीकायते
स्वाहा शीतिकाय स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय
स्वाहा विप्लुताय स्वाहातप्स्यते स्वाहातपते स्वाहोग्रमातपते स्वाहर्ग्भ्यस्स्वाहा यजुर्भ्यस्स्वाहा
सामभ्यस्स्वाहाङ्गिरोभ्यस्स्वाहा वेदेभ्यस्स्वाहा गाथाभ्यस्स्वाहा नाराशँसीभ्यस्स्वाहा रैभीभ्यस्स्वाहा
सर्वस्मै स्वाहा ॥२॥ २

दत्वते स्वाहादन्तकाय स्वाहा प्राणिने स्वाहाप्राणकाय स्वाहा नासिकावते स्वाहानासिकाय
स्वाहा मुखवते स्वाहामुखकाय स्वाहाक्षण्वते स्वाहानक्षकाय स्वाहा कर्णवते स्वाहाकर्णकाय स्वाहा

---

[१] तै. सं. ७,४,२२।

[२] मै. ३,१२,१२। वा. २२,२६--२७,२९; ३९,१। काण्व. २४,३६--३७ ४१; ३९,१। तै. सं. ७,५,११। [पृथिव्यै स्वाहा। अथर्व. ५,९,२; ६। अन्तरिक्षाय स्वाहा। अथर्व. ५,९,३--४। दिवे स्वाहा। अथर्व. ५,९,१;५]

[३] वा. ३९,१०। काण्व. ३९,९। तै. सं. ७,५,१२।

शीर्षण्वते स्वाहाशीर्षकाय स्वाहा पादवते स्वाहापादकाय स्वाहा प्राणते स्वाहाप्राणते स्वाहा वदते स्वाहावदते स्वाहा पश्यते स्वाहापश्यते स्वाहा शृण्वते स्वाहाशृण्वते स्वाहा मनस्विने स्वाहामनस्काय स्वाहा रेतस्विने स्वाहारेतस्काय स्वाहा प्रजाभ्यस्स्वाहाप्रजननाय स्वाहा लोमवते स्वाहालोमकाय स्वाहा त्वचे स्वाहात्वक्काय स्वाहा चर्मवते स्वाहाचर्मकाय स्वाहा लोहितवते स्वाहालोहिताय स्वाहा माँसन्वते स्वाहामाँसकाय स्वाहा स्नावभ्यस्स्वाहास्नावकाय स्वाहास्थन्वते स्वाहानस्थकाय स्वाहा मज्जन्वते स्वाहामज्जकाय स्वाहाङ्गन्वते स्वाहानङ्गकाय स्वाहात्मन्वते स्वाहानात्मकाय स्वाहा सर्वस्मै स्वाहा ॥३॥ ३

अग्निः पशुरासीत् तेनायजत स एतं लोकमजयद्यस्मिन्नग्निस्स ते लोकस्तं जेष्यस्यथावजिघ्र वायुः पशुरासीत् तेनायजत स एतं लोकमजयद्यस्मिन् वायुस्स ते लोकस्तं जेष्यस्यथावजिघ्रादित्यः पशुरासीत् तेनायजत स एतं लोकमजयद्यस्मिन्नादित्यस्स ते लोकस्तं जेष्यस्यथावजिघ्र ॥४॥ ४

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षँ समुद्रो योनिस्सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमाश्श्रोत्रं दिशः पादा अवान्तरदिशाः पशवो नक्षत्राणि रूपं मासाश्चार्धमासाश्च परूँष्यृतवोऽङ्गानि संवत्सरो महिमा ॥५॥ ५

आयासाय स्वाहावयासाय स्वाहा वियासाय स्वाहा प्रयासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहा शोकाय स्वाहा शुचे स्वाहा शुचये स्वाहा तपसे स्वाहा तप्यत्यै स्वाहा क्षुधे स्वाहा भ्रूणहत्यायै स्वाहा सर्वस्मै स्वाहा ॥६॥ ६

जुम्बकाय स्वाहावभृथाय स्वाहा सर्वस्मै स्वाहा ॥७॥ ७

मृत्यवे स्वाहावभृथाय स्वाहा सर्वस्मै स्वाहा ॥८॥ ८

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्यँ संनत्या अमुष्मै कामायायुषे त्वा प्राणाय त्वा व्यानाय त्वापानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा घोषाय त्वाराद्घोषाय त्वा प्रच्युत्यै त्वा कस्त्वा विमुञ्चति स त्वा विमुञ्चतु विष्णुस्त्वा विमुञ्चत्वस्य यज्ञस्यर्द्ध्यै मह्यँ संनत्या अमुष्मै कामायायुषे त्वा प्राणाय त्वा व्यानाय त्वापानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा घोषाय त्वाराद्घोषाय त्वा प्रतिष्ठित्यै त्वा ॥९॥ ९

---

[४] वा. २३,१७ ; काण्व. २५,१९ । तै. सं. ५,७,२६ ।

[५] वा. ११,२० । काण्व. १२,२० । तै. सं. ५,७,२५ ।

[६] वा. ३९,११--१२ । काण्व. ३९,१०--११ । तै. सं. १,४,३५ ।

[७] वा. २५,९ । काण्व. २७,१३ । [८] वा. ३९,१३ । काण्व. ३९,१२ ।

[९] वा. १,६,२०; २,२३; ७,३; १४,२१--२२ । काण्व. १,९,३४; २,४१; ७,३; १५,२३--२४ । तै. सं. ७,५,१३ ।

अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्याँ शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय हैमन्तिकाय चरुस्सवित्र आतिच्छन्दसाय त्रयस्त्रिंशाय रैवताय शैशिराय द्वादशकपालोऽदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्यै चरुः काय एककपालः ॥१०॥ १०

हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ११

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ॥११॥ १२

अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रँ स्वा यत् तनू तन्वमैरयत ॥ १३

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य तेऽन्तरिक्षं महिमापो वयाँसि रूपं वायुष्टे तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ॥१२॥ १४

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १५

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ॥१३॥ १६

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन् राष्ट्रे राजन्य इषव्यश्शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुस्सप्तिर्जिष्णू रथेष्ठाः पुरंधिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां

[१०] मै. ३,१५,१० । वा. २९,६० । काण्व. ३१,४९ । तै. ७,५,१४ ।

[११] मै. ३,१२,१६ (१८-१९) । वा. २३,१—२,४, १३,४; २५,१० । काण्व २५,१—२,४; १४,४; २७,१४ । तै. सं. ७,५,१६ । [ **हिरण्यगर्भस्समवर्तताग्रे०** । ऋ. १०,१२१,१; अथर्व. ४,२,७; तै. सं. ४,१,८,३; २,८,१; ताण्ड्य ब्रा. ९,९,१२; नि. १०,२३ ।

[१२] मै. १,१०,३; ३,१२,१६-१७ (१६; १९; २१) । वा. २३,१—२,४ । काण्व. २५,१-२,४ । तै. सं. १,७,१२, २ । [ **अया विष्ठा जनयन्०** । अथर्व. ७,३,१ ]

[१३] मै. ३,१२,१७ (२०—२१) । वा. २३,३-४; २५,११ । काण्व. २५,३—४; २७,१५ । तै. सं. ७,५,१६-१७ । [ **यः प्राणतो निमिषतो०** । ऋ. १०,१२१,३; अथर्व. ४,२,१—२ ]

[१४] मै. ३,१२,६ (८) । वा. २२,२२ । काण्व. २४,३०-३२ । तै. सं. ७,५,१८ ।

निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥१४॥
१७

आक्रान् वाजी पृथिवीमग्निं युजमकृत वाज्यर्वाक्रान् वाज्यन्तरिक्षं वायुं युजमकृत वाज्यर्वा द्यां
वाज्याक्रँस्त सूर्यं युजमकृत वाज्यर्वाग्निष्टे वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारय वायुष्टे वाजि-
न्युङ्क्तु त्वारभे स्वस्ति मा संपारयादित्यस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारय प्राणधृगसि
प्राणं मे दृँह व्यानधृगसि व्यानं मे दृँहापानधृगस्यपानं मे दृँह चक्षुरसि चक्षुर्मे धेहि श्रोत्रमसि श्रोत्रं
मयि धेह्यायुरस्यायुर्मे धेहि सर्वमायुर्गेषम् ॥१५॥　१८

क्रमैरभ्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैस्संविदानस्स नो नय सुकृतस्य लोकं तस्य ते वयँ स्वधया
मदेम ॥१६॥　१९

जज्ञि बीजं वर्ष्टा पर्जन्यः पन्था सस्यँ सुपिप्पला ओषधयस्स्वधिचरणेयँ सूपसदनोऽग्निस्स्वध्यक्ष-
मन्तरिक्षँ सूपवाः पवमानस्सूपस्थाना द्यौश्शिवमसौ तपन् यथापूर्वमहोरात्रे पञ्चदशिनोऽर्धमासा-
स्त्रिँशिनो मासाः क्लृप्ता ऋतवश्शान्तस्संवत्सरः ॥१७॥　२०

आग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावित्रोऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरू रौद्रो गावीधुकश्चरुरग्नये
वैश्वानराय द्वादशकपालो मृगाखरे यदि नागच्छेदग्नयेऽँहोमुचेऽष्टाकपालस्सौर्यं पयो वायव्य आज्य-
भागः ॥१८॥　२१

अग्नयेऽँहोमुचेऽष्टाकपाल इन्द्रायाँहोमुच एकादशकपालो वायासावित्र आगोमुग्भ्यां चरुर्मित्रा-
वरुणाभ्यामागोमुग्भ्यां पयस्याश्विभ्यामागोमुग्भ्यां धाना मरुद्भ्य एनोमुग्भ्यस्सप्तकपालो विश्वेभ्यो
देवेभ्य एनोमुग्भ्यो द्वादशकपालोऽनुमत्यै चरुरग्नये वैश्वानराय द्वादशकपालो द्यावापृथिवीभ्यामँहो-
मुग्भ्यां द्विकपालः ॥१९॥　२२

अग्नये संमनमत् पृथिव्यै संमनमद्यथाग्निः पृथिव्या समनमदेवं मह्यं भद्रास्सँनतयस्सँनमन्तु
वायवे संमनमदन्तरिक्षाय संमनमद्यथा वायुरन्तरिक्षेण समनमदेवं मह्यं भद्रास्सँनतयस्सँनमन्तु सूर्याय
संमनमद्दिवे संमनमद्यथा सूर्यो दिवा समनमदेवं मह्यं भद्रास्सँनतयस्सँनमन्तु वरुणाय संमनमदद्भ्य-

[१५] मै. २,७,२१। वा. ४,३; ११,१९। काण्व. ४,४; १२,१९। तै. सं. ७,५,१९।
[१६] तै. सं. ५,७,२४।　[१७] तै. सं. ७,५,२०।
[१८] मै. १,१०,१; २,६,९। वा. २९,६०। काण्व. ३१,४९। तै. सं. ७,५,२१।
[१९] मै. ३,१५,११ (११)। तै. सं. ७,५,२२।

स्संमनमद्यथा वरुणोऽद्भिस्समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु साम्ने संमनमदृचे संमनमद्यथा सामर्चा समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु ब्रह्मणे संमनमत् क्षत्राय संमनमद्यथा ब्रह्म क्षत्रेण समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु राज्ञे संमनमद्विशे संमनमद्यथा राजा विशा समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु रथाय संमनमदश्वेभ्यस्संमनमद्यथा रथोऽश्वैस्समनमदेवं मह्यं भद्रास्संनतय-स्संनमन्तु ॥२०॥ २३

समिद्दिशां कया नः ॥ २४

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॥२१॥ २५

[२९०६]

इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे मितानुवचनं नाम पञ्चमं वचनं संपूर्णम् ॥५

---

अथ षष्ठं वचनम् ।

## जीमूतानुवचनम् ।

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वँ स त्वा वर्मणो महिमा पिपर्तु ॥ १
धन्वना गा धन्वनाजिं जयेम धन्वना तीव्रास्समदो जयेम ।
धनुश्शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ २
वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियँ सखायं परिषस्वजाना ।
योषेव शिङ्क्ते विततावि धन्वञ्ज्या इयँ समने पारयन्ती ॥ ३
ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून् विध्यताँ संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान् ॥ ४
बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य ।
इषुधिस्सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥ ५

---

[२१] मै. ३,१६,४ (६९) । तै सं. ४,२,११,३ । [ **को अद्य युङ्क्ते धुरि गा०** । ऋ. १,८४,१६; सा. ३४१; अथर्व. १८,१,६, तै. सं. ४,२,११,३, नि. १४,२५ ]

[१] मै ३,१६,३ (३१ ४९) । वा. २९,३८—५७ । काण्व. ३१,१३—२३ । तै. सं. ४,६,६ । [ **जीमूतस्येव भवति०** । ऋ ६,२५,१; तै. स. ४,६,६,१ । **धन्वना गा०** । ऋ. ६ ७५,२; तै. सं. ४,६,६,१; नि. ९,१७ । **वक्ष्यन्तीवेदागनीगन्ति०** । ऋ. ६,७५,३; तै. सं. ४,६,६,१; नि. ९,१८ । **ते आचरन्ती०** । ऋ. ६,७५,४; तै. सं. ४,६,६,२; नि. ९,४० । **बह्वीनां पिता०** । ऋ. ६,७५,५; तै. सं. ४,६,६,२; नि. ९,१४ ]

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत मनः पश्चादनुयच्छन्ति रश्मयः ॥ ६
तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिस्सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँरनपव्ययन्तः ॥ ७
रथवाहनँ हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मँ सदेम विश्वाहा वयँ सुमनस्यमानाः ॥ ८
स्वादुषँसदः पितरो वयोधाः कृच्छ्रेश्रितश्शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्रास्सतोवीरा उरवो व्रातसाहाः ॥ ९
ब्राह्मणासः पितरस्सोम्यासश्शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशँस ईशत ॥ १०
सुपर्णं वस्ते मृगो अस्या दन्तो गोभिस्संनद्धा पतति प्रसूता ।
यत्रा नरस्सं च वि च द्रवन्ति तत्रास्मभ्यमिषवश्शर्म यँसन् ॥ ११
वृजीते परिवृङ्धि नोऽश्मा भवतु नस्तनूः । सोमो अधिब्रवीतु नोऽदितिश्शर्म यच्छतु ॥
१२
अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमाँसं परिपातु विश्वतः ॥ १३
आजङ्घन्ति सान्वेषां जघनाँ उपजिघ्नते । अश्वाजनि प्रचेतसोऽश्वान् समत्सु चोदय ॥ १४
वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणस्सुवीरः ।
गोभिस्संनद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि ॥ १५
दिवः पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतँ सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रँ हविषा रथं यज ॥ १६

[ रथे तिष्ठन्नयति० । ऋ. ६ ७५.६; तै. सं ४.६,६.२, नि. ९,१६ । तीव्रान् घोषान्० । ऋ. ६,७५,७, तै. सं. ४,६,६.३ । रथवाहनं हविरस्य० । ऋ. ६,७५,८; तै. स. ४,६,६,३ । स्वादुषंसद पितरो० । ऋ. ६,७५,९; तै. सं. ४,६,६.३ । ब्राह्मणास पितरः० । ऋ. ६,७५,१०; तै सं. ४,६ ६,३ । सुपर्ण वस्ते मृगो० । ऋ. ६ ७५,११; तै सं. ४,६,६,४; नि. २,५; ९.१९ । वृ (ऋ)जीते परिवृङ्धि० । ऋ. ६,७५,१२; तै. सं. ४,६.६,४ । अहिरिव भोगै० । ऋ. ६,७५,१४ तै स. ४,६,६,५. नि. ९,१५ । आजङ्घन्ति सान्वेषां० । ऋ. ६,७५,१३; तै. सं. ४,६,६,५; नि. ९,२० । वनस्पते वीड्वङ्गो० । ऋ. ६,४७,२६; अथर्व. ६.१२५,१; तै. सं. ४,६,६ ५; नि. २,५; ९,१२ । दिवः पृथिव्याः० । ऋ ६,४७ २७; अथर्व. ६,१२५,२; तै. सं. ४,६,६,५ ]

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥ १७
उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून् ॥ १८
आक्रन्दय बलमोजो न आधा निष्टनिहि दुरिता बाधमानः ।
अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥ १९
आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥१॥ २०

समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः ।
वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥ २१
घृतेनाञ्जन् सं पथो देवयानान् प्रजानन् वाज्यप्येतु देवान् ।
अनु त्वा सप्ते प्रदिशस्सचन्तां स्वधामस्मै यजमानाय धेहि ॥ २२
ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते ।
अग्निष्ट्वा देवैर्वसुभिस्सजोषाः प्रीतं वह्निं वहतु जातवेदाः ॥ २३
स्तीर्णं बर्हिस्सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् ।
देवेभिरक्तमदितिस्सजोषास्योनं कृण्वाना सुविते दधातु ॥ २४
एता उ वस्सुभगा विश्ववारा वि पक्षोभिश्श्रयमाणा उदातैः ।
ऋष्वास्सतीः कवयश्शुम्भमाना द्वारो देवीस्सुप्रयाणा भवन्तु ॥ २५
अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभिसंविदाने ।
उषासा वाँ सुहिरण्ये सुशिल्पे ऋतस्य योना इह सादयामि ॥ २६
प्रथमा वाँ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥ २७

---

[इन्द्रस्य वज्रो०। ऋ. ६,४७,२८; अथर्व. ६,१२५,३; तै. सं. ४,६,६,६ । उपश्वासय पृथिवी०। ऋ. ६,४७, २९. अथर्व. ६,१२६,१; तै. सं. ४,६,६,६; नि. ९,१३ । आक्रन्दय बलमोजो० । ऋ. ६,४७,३०; अथर्व. ६, १२६,२; तै. सं. ४,६,७,७ । आमूरज प्रत्यावर्तय० । ऋ. ६,४७,३१; अथर्व. ६,१२६,३; तै. सं. ४,६,६,७ ]

[ २ ] मै. ३,१६,२ (१७—२७) । वा. २९,१—११ । काण्व. ३१,१—११ । तै. सं. ५,१,११ । मा. श्रौ. ९,२,५ । [ घृतेनाञ्जन् सं पथो० । तै. सं. ५,१,११,१ । ईड्यश्चासि वन्द्यश्च० । तै. सं. ५,१,११,१ । स्तीर्णं बर्हिस्सुष्टरीमा० । तै. सं. ५,१,११,२। एता उ वस्सुभगा०। तै. सं. ५,१,११,२ । अन्तरा मित्रावरुणा०। तै. सं. ५,१,११,३ । प्रथमा वाँ सरथिना० । तै. सं. ५,१,११,३ ]

आदित्यैर्नो भारती वष्टु यज्ञँ सरस्वती सह रुद्रैर्न आवीत् ।
इडोपहूता वसुभिस्सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥ २८
त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः ।
त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः ॥ २९
अश्वो घृतेन त्मन्या समक्त उप देवाँ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥ ३०
प्रजापतेस्तपसा वावृधानस्सद्यो जातो ममिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा याहि सख्या हविरदन्तु देवाः ॥२॥ ३१

यदक्रन्दः ॥ ३२
आत्मानं ते मनसारादजानामवो दिवा पतयन्तं पतङ्गम् ।
शिरो अपश्यं पथिभिस्सुगेभिररेणुभिर्जेहमानं पतत्रि ॥ ३३
अत्रा ते रूपमुत्तमपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः ॥ ३४
अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥ ३५
हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।
देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥ ३६
ईर्मान्तासस्सिलिकमध्यमासस्सँ शूरणासो दिव्यासो अत्याः ।
हँसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥ ३७
तव शरीरं पतयिष्ण्वर्वन् तव चित्तं वात इव ध्रजीमान् ।
तव शृङ्गानि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति ॥ ३८

---

[आदित्यैर्नो भारती० । तै. सं. ५,१,११,३ । अश्वो घृतेन त्मन्या० । तै सं ५,१,११,४ । प्रजापते स्तपसा वावृधानः० । तै. सं. ५,१,११,४ ]

[ ३ ] वा. २९,१२,१७—२४ । काण्व. ३१,२४,२९,—३६ । तै. सं ४,६,७ । [यदक्रन्दः प्रथमं । ऋ. १,१६३,१; तै. सं. ४,१,८,१; ६,७,१ । आत्मानं ते मनसा० । १.१६३,६; तै. सं ४,६,७,२ । अत्रा ते रूपमुत्तमं० । ऋ. १,१६३,७; तै. सं. ४,६,७.३; नि. ६,८ । अनु त्वा रथो अनु० । ऋ. १,१६३,८; तै. सं. ४,६,७,३ । हिरण्यशृङ्गोऽयो० । ऋ. १,१६३,९, तै. सं. ४,६,७,४ । ईर्मान्तासस्सिलिक० । ऋ. १,१६३,१०; तै. सं. ४,६,७,४; नि. ४,१३ । तव शरीरं पतयिष्ण्वर्वन्० । ऋ. १,१६३,११; तै. सं. ४,६,७,४ ]

उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चाद् कवयो यन्ति रेभाः ॥ ३९
उप प्रागात् परमं यत् सधस्थमर्वाँ अच्छा पितरं मातरं च ।
अद्या देवाञ्जुष्टतमो हि गम्या अथाशास्ते दाशुषे वार्याणि ॥३॥ ४०

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वार्याणि ॥ ४१
यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।
सुप्राङजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येतु पाथः ॥ ४२
एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेवः ।
अभिप्रियं यत् पुरोडाशमर्वता त्वष्टेदेनँ सौश्रवसाय जिन्वन्ति ॥ ४३
यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।
तत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः परिवेदयन्नजः ॥ ४४
होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शँस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आपृणध्वम् ॥ ४५
यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।
ये चार्वते पचनँ संभरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ४६
उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्तु देवानां पुष्टे चकृमा सुबन्धुम् ॥ ४७
यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमास्ये तृणँ सर्वा ता ते अपि देवेष्वस्तु ॥ ४८

---

[ उप प्रागाच्छसनं० । ऋ. १,१६३,१२; तै. सं. ४,६,७,४ । उप प्रागात् परमं० । ऋ. १,१६३,१३; तै. सं. ४,६,७,५ ]

[४] मै. ३,१६,१ (१—१०,१३) । वा. २५,२४—३३,३६ । काण्व. २७,२८—३७,४० । तै. सं. ४,६,८—९ । [ मा नो मित्रो वरुणो० । ऋ. १,१६२,१; तै. सं. ४,६,८,१; नि ९,३ । यन्निर्णिजा रेक्णसा० । ऋ. १,१६२,२; तै. सं. ४,६,८,१ । एष च्छागः पुरो० । ऋ. १,१६२,३; तै. सं. ४,६,८,१ । यद्धविष्यमृतुशो० । ऋ. १,१६२,४; तै. सं. ४,६,८,२ । होताध्वर्युरावया० । ऋ. १,१६२,५; तै. सं. ४,६,८,१ । यूपव्रस्का उत ये० । ऋ. १,१६२,६; तै. सं. ४,६,८,२ । उप प्रागात् सुमन्मे० । ऋ. १,१६२,८; तै. सं. ४,६,८,३; नि. ६,२२ । यद्वाजिनो दाम० । ऋ. १,१६२,८; तै. सं. ४,६,८,३ ]

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोश्शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥ ४९
यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधँ भृतपाकं पचन्तु ॥ ५०
यन्नीक्षणं माँस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्कास्सूनाः परिभूषन्त्यश्वम् ॥४॥ ५१

यत् ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।
मा तद्भूम्यामाश्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥ ५२
ये वाजिनं परिपश्यन्ति पक्कं य ईमाहुस्सुरभिर्निर्हरेति ।
ये चार्वतो माँसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥ ५३
मा त्वाग्निर्ध्वनयेद्धूमगन्धिर्मोखा भ्राजन्त्यभिविक्त जघ्रिः ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् ॥ ५४
निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः ।
यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥ ५५
यत् ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद ।
स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥ ५६
यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।
संदानमर्वन्तं पड्बीशं प्रिया देवेष्वायामयन्ति ॥ ५७
चतुस्त्रिँशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेति ।
अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त ॥ ५८
एकस्त्वष्टुरश्वस्य विशस्ता द्वा यन्तारा भवतस्तथर्तुः ।
या ते गात्राणामृतुथा कृणोमि ता ता पिण्डानां प्रजुहोम्यग्नौ ॥ ५९

---

[ यदश्वस्य क्रविषो० । ऋ. १,१६२,९; तै. सं. ४,६,८,३ । यदूवध्यमुदरस्य० । ऋ. १,१६२,१०; तै, सं. ४,६,८,४ । यन्नीक्षणं माँस्पचन्या० । ऋ. १,१६२,१३; तै. सं. ४.६,९,१ ]

[ ५ ] मै. १,२,१५; ३,१६,१ (१०६; ११—१२,१४—१६) । वा. २५,३४—३५,३७ –४५ । काण्व. २७,३८–३९, ४१—४३ । तै. सं. ४,६,८,४; ४,६,९,१ । [ यत् ते गात्रादग्निना० । ऋ. १,१६२,११; तै. सं. ४,६,८,४ । ये वाजिनं परि० । ऋ. १,१६२,१२; तै. सं. ४,६,९,१ । मा त्वाग्निर्ध्वनये० । ऋ. १,१६२,१५; तै. सं. ४,६,९,२ । निक्रमणं निषदनं० । ऋ. १,१६२,१४, तै. सं. ४,६,९,१ । यत् ते सादे महसा० । ऋ. १, १६२,१७; तै. सं. ४,६,९,२ । यदश्वाय वास० । ऋ. १,१६२,१६; तै. सं. ४,६,९,२ । चतुस्त्रिँशद्वाजिनो देव० । ऋ. १,१६२,१८; तै. सं. ४,६,९,३ । एकस्त्वष्टुरश्वस्य० । ऋ. १,१६२,१९; तै. सं. ४,६,९,३ ]

मा त्वा तपत् प्रिय आत्मापियन्तं मा स्वधितिस्तन्व आतिष्ठिपत् ते ।
मा ते गृध्नुरविशस्तातिहाय च्छिद्रा गात्राण्यसिना मिथू कः ॥ ६०
न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिस्सुगेभिः ।
हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य ॥ ६१
सुगव्यं नो वाजी स्वश्व्यं पुँसः पुत्राँ उत विश्वपुषं रयिम् ।
अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान् ॥५॥ ६२

[१९१८]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे जीमूतानुवचनं नाम षष्ठं वचनं संपूर्णम् ॥६॥

अथ सप्तमं वचनम् ।

## इन्द्रानुवचनम् ।

इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णो यमाय राज्ञ ऋश्य ऋषभाय राज्ञे गवयश्शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्य वर्तिका नीलङ्गोः कृमिस्सोमाय राज्ञे कुलुङ्गस्सिन्धोश्शिशुमारो हिमवतो हस्ती ॥१॥ १

मयुः प्राजापत्य उलो हलिक्ष्णो वृषदँशस्ते धातुस्सरस्वत्यै शारिश्श्येता पुरुषवाक् सरस्वते शुकश्श्येतः पुरुषवागारण्योऽजो नकुलश्शका ते पौष्णा वाचे क्रौञ्चः ॥२॥ २

अपां नप्त्रे झषो नाक्रो मकरः पुलीरयस्ते कूवरस्य वाचे पैङ्गराजो भगाय कुषीतक आती वाहसो दर्विदा ते वायव्या दिग्भ्यश्चक्रवाकः ॥३॥ ३

बलायाजगर आखुस्सृजया शयाण्डकस्ते मैत्रा मृत्यवेऽसितो मन्यवे स्वजः कौम्भीनसः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः ॥४॥ ४

[मा त्वा तपत् प्रिय० । ऋ. १,१६२,२०; तै. सं. ४,६,९३, । न वा उ एतन्म्रियसे० । ऋ. १,१६२,२१; तै. सं. ४,६,९,४; तै. आ. ३,७,७,१४ । सुगव्यं नो वाजी० । ऋ. १,१६२,२२; तै. सं. ४,६,९,४ ]

[ १ ] मै. ३,१४,११ (११) । वा. २४,३० । काण्व. २६,३४ । तै. सं. ५,५,११ ।

[ २ ] मै. ३,१४,१२-१४ (१२—१४) । वा. २४,३१—३३ । काण्व. २६,३५—३७ । तै. सं. ५,५,१२ ।

[ ३ ] मै. ३,१४,२—३,१५—१६ (२—३,१५ - १६) । वा. २४,२१—२२, ३४—३५ । काण्व. २६,२५—२६, ३८—३९ । तै. सं. ५,५,१३ ।

[ ४ ] मै. ३,१४,१४ (१४) । वा. २४,३३ । काण्व. २६,३७ । तै. सं. ५,५,१४ ।

पुरुषमृगश्चन्द्रमसे गोधा कालका दार्वाघाटस्ते वनस्पतीनामेण्यह्वे कृष्णो रात्र्यै पिगः क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णो धातुः कक्कटः ॥५॥ ५

सौरी बलाकश्र्यो मयूरश्श्येनस्ते गन्धर्वाणां वसूनां कपिञ्जलो रुद्राणां तित्तिरी रोहित्कुण्डृणाची गोलत्तिका ता अप्सरसामरण्याय सृमरः ॥६॥ ६

पृषतो वैश्वदेवो बिद्रो न्यङ्कुः कशस्तेऽनुमत्या अन्यवापोऽर्धमासानां मासां कश्यपः कुवयिः कुटरुर्दात्यौहस्ते सिनीवाल्यै बृहस्पतये शिम्युटः ॥७॥ ७

शका भौमी पाङ्क्तः कशो मन्थीलवस्ते पितृणामृतूनां जहका संवत्सराय लोपा कपोत उलूकश्शशस्ते नैर्ऋताः कृकवाकुस्सावित्रः ॥८॥ ८

रुरू रौद्रः कृकिलासश्शकुनिः पिप्पका ते शरव्यायै हरिणो मारुतो ब्रह्मणे शार्गस्तरक्षः कृष्णश्श्वा चतुरक्षो गर्दभस्त इतरजनानामग्नये धूङ्क्षा ॥९॥ ९

अलज आन्तरिक्ष उद्रो मद्गुः प्लवस्तेऽपामदित्यै हँससाचिरिन्द्राण्यै कीर्षा गृध्रश्शितिकक्षी वार्ध्रीणसस्तेऽदित्या द्यावापृथिव्या श्वावित् ॥१०॥ १०

सुपर्णः पार्जन्यो हँसो वृको वृषदँशस्त ऐन्द्रा अपामुद्रोऽर्यम्णा लोपाशस्सिँहो नकुलो व्याघ्रस्ते महेन्द्राय कामाय परस्वान् ॥११॥ ११

[२९७९]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे इन्द्रानुवचनं नाम सप्तमं वचनं संपूर्णम् ॥७॥

---

[५] मै. ३,१४,१६-१७ (१६-१७)। वा. २४,३५-३६। काण्व. २६,३९-४०। तै. सं. ५,५,१५।
[६] मै. ३,१४,१८ (१८)। वा. २४,३७। काण्व. २६,४१। तै. सं ५,५,१६।
[७] मै. ३,१४,२० (२०)। वा. २४,३९। काण्व. २६,४३। तै सं. ५,५,१७।
[८] मै. ३,१४,१९ (१९)। वा. २४,३८। काण्व. २६,४२। तै. सं. ५,५,१८।
[९] मै. ३,१४,२०-२१ (२०-२१)। वा. २४,३९—४०। काण्व. २६,४३-४४। तै. सं. ५,५,१९।
[१०] मै. ३,१४,१६; २० (१६; २०)। वा. २४,३४,३९। काण्व २६,३९,४३। तै. सं. ५,५,२०।
[११] मै. ३,१४,१५; १७--१८ (१५; १७--१८)। वा. २४,३४--३७। काण्व. २६,३८--४१। तै. सं. ५,५,२१।

अथाष्टमं वचनम् ।

## पेत्वानुवचनम् ।

आग्नेयः कृष्णग्रीवस्सारस्वती मेषी बभ्रुस्सौम्यः पौष्णश्श्यामश्शितिपृष्ठो बार्हस्पत्यश्शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नस्सँहितोऽधोरामस्सावित्रो वारुणः पेत्वः ॥१॥ १

अश्वस्तूपरो गोमृगस्ते प्राजापत्या आग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरस्सौर्यो बलक्षः पेत्वः ॥२॥ २

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजस्सारस्वती मेषी वारुणः कृष्ण एकशितिपात् पेत्वः ॥३॥ ३

[२९८२]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे पेत्वानुवचनं नामाष्टमं वचनं संपूर्णम् ॥८॥

---

अथ नवमं वचनम् ।

## रोहितानुवचनम् ।

रोहितो धूम्रलोहितः कर्कन्धुरोहितस्ते प्राजापत्या बभ्रुररुणबभ्रुश्शुकबभ्रुस्ते रौद्राश्श्येतश्श्येताक्षश्श्येतग्रीवस्ते पितृदेवत्यास्तिस्रः कृष्णा वशा वारुण्यस्तिस्रश्श्वेता वशास्सौर्यो मैत्राबार्हस्पत्या धूम्रललामास्तूपराः ॥१॥ १

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गुर्लोहितोर्णी बलक्षी तास्सारस्वत्यः पृषती क्षुद्रपृषती स्थूलपृषती ता वैश्वदेव्यस्तिस्रश्श्यामा वशाः पौष्ण्यस्तिस्रो रोहिण्यो वशा मैत्र्य ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः ॥२॥ २

शितिबाहुरन्यतश्शितिबाहुस्समन्तशितिबाहुस्त ऐन्द्रवायवाश्शितिरन्ध्रोऽन्यतश्शितिरन्ध्रस्समन्तशितिरन्ध्रस्ते मैत्रावरुणाश्शुद्धवालस्सर्वशुद्धवालो मणिवालस्त आश्विनास्तिस्रश्शिल्पा वशा वैश्वदेव्यस्तिस्रश्श्येनीः परमेष्ठिने सौमापौष्णाश्श्यामललामास्तूपराः ॥३॥ ३

---

[१] मै. ३,१३,२ (६) । वा. २९,५८ । काण्व. ३१,५० । तै. सं. ५,५,२२ ।
[२] मै. ३,१३,२ (६) । वा. २४,१ । काण्व. २६,१--३ । तै. सं. ५,५,२३ ।
[३] मै. ३,१३,१२; १४ (१६,१८) । वा. २९,५९ । काण्व. ३१,५१ । तै. सं. ५,५,२४ ।
[१] मै. ३,१३,३ (७) । वा. २४,२ । काण्व. २६ ३--४ । तै. सं. ५,६,११ । मा. श्रौ. ९,२,४ ।
[२] मै. ३,१३,३,५ (७; ९) । वा. २४,२,४ । काण्व. २६,३--४,६--८ । तै. सं. ५,६,१२ ।
[३] मै. ३,१३,३--४,६ (७--८,१०) । वा. २४,२--३,५ । काण्व. २६,४--५,९ । तै. सं. ५,६,१३ ।

उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाश्शितिककुच्छितिपृष्ठश्शितिभसत् त ऐन्द्राबार्हस्पत्याश्शिति- पाच्छित्योष्ठश्शितिभ्रूस्त ऐन्द्रावैष्णवास्तिस्रस्सिध्मा वशा वैश्वकर्मण्यस्तिस्रो धात्रे पृषोदराः पौष्णा- श्श्येतललामास्तूपराः ॥४॥ ४

कर्णास्त्रयो यामास्सौम्यास्त्रयश्शितिङ्गा अग्नये यविष्ठाय त्रयो नकुलास्तिस्रो रोहिण्यस्त्रियव्यस्ता वसूनां तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणाँ सौमेन्द्रा बभ्रुललामास्तूपराः ॥५॥ ५

शुण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय लप्सुदिनस्त्रयो विष्णव उरुगायाय पञ्चाव्यस्तिस्र आदित्यानां त्रिवत्सास्तिस्रोऽङ्गिरसामाग्नेन्द्राः कृष्णललामास्तूपराः ॥६॥ ६

इन्द्राय राज्ञे त्रयश्शितिपृष्ठा इन्द्रायाधिराजाय त्रयश्शितिककुद इन्द्राय स्वराजे त्रयश्शितिभस- दस्तिस्रस्तुर्यौह्यस्साध्यानां तिस्रः पष्ठौह्यो विश्वेषां देवानामैन्द्रावैष्णवा गौरललामास्तूपराः॥७॥ ७

अदित्यै त्रयो रोहितैता इन्द्राण्यै त्रयः कृष्णैताः कुह्वै त्रयोऽरुणैतास्तिस्रो धेनवो राकायै त्रयो- ऽनड्वाहस्सिनीवाल्या आग्नावैष्णवा रोहितललामास्तूपराः ॥८॥ ८

सौम्यास्त्रयः पिशङ्गास्सोमाय राज्ञे त्रयस्सारङ्गाः पार्जन्या नभोरूपास्तिस्रोऽजा मल्हा इन्द्राण्यै तिस्रो मेष्य आदित्या द्यावापृथिव्या मालङ्गास्तूपराः ॥९॥ ९

वारुणास्त्रयः कृष्णललामा वरुणाय राज्ञे त्रयो लोहितललामा वरुणाय रिशादसे त्रयोऽरुणललामा- श्शिल्पास्त्रयो वैश्वदेवास्त्रयः पृश्नयस्सर्वदेवत्या ऐन्द्रासौराश्श्यामललामास्तूपराः ॥१०॥ १०

[२९९२]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे रोहितानुवचनं नाम नवमं वचनं संपूर्णम् ॥९॥



[४] मै. ३,१३,७—८ (११—१२)। वा. २४,६—७। काण्व. २६,१०—११। तै. सं. ५,६,१४।
[५] तै. सं. ५,६,१५। [६] तै. सं. ५,६,१६। [७] तै. सं. ५,६,१७। [८] तै. सं. ५,६,१८।
[९] तै. सं. ५,६,१९। [१०] तै. सं. ५,६,२०।

अथ दशमं वचनम्।

## सोमानुवचनम् ।

सोमाय स्वराजेऽनोवाहा अनड्वाहा इन्द्राग्निभ्यामोजोदाभ्यामोष्टारा इन्द्राग्निभ्यां बलादाभ्याँ सीरवाहा अवी द्वे धेनू भौमी दिग्भ्यो वडवे द्वे धेनू भौमी वैराजे पुरुषी द्वे धेनू भौमी वायव आरोहणवाहा अनड्वाहौ वारुणी कृष्णे वशे आराड्यौ दिव्या ऋषभौ परिमरौ ॥१॥ १

एकादश प्रातर्गव्याः पशव आलभ्यन्ते छगलः कल्माषः किकिदिवीर्विदीगयस्तौ त्वाष्ट्रौ सौरी-नव श्वेता वशा अनूबन्ध्या भवन्त्याग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आलभ्यन्ते ॥२॥ २

पिशङ्गास्त्रयो वासन्तास्सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयश्शारदाः पृश्निसक्था-स्त्रयो हैमन्तिका अवलिप्तास्त्रयश्शैशिरास्संवत्सराय निवक्षसः ॥३॥ ३

वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरीञ्छरदे वर्तिका हेमन्ताय ककराञ्छिशिराय विकरान् ॥४॥ ४

गायत्रीं त्रिष्टुब्जगत्यनुष्टुप् पङ्क्त्या सह । बृहत्युष्णिहा ककुप् सूचीभिश्शिम्यन्तु त्वा ॥ ५
द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा ।
सच्छन्दा या च विच्छन्दास्सूचीभिश्शिम्यन्तु त्वा ॥ ६
महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः ।
मेघ्या विद्युतो वाचस्सूचीभिश्शिम्यन्तु त्वा ॥ ७
रजता हरिणीस्सीसा युजो युज्यन्ते कर्मभिः ।
अश्वस्य वाजिनस्त्वचि सूचीभिश्शिम्यन्तु त्वा ॥ ८
नारीस्ते पत्नयो लोम विचिन्वन्तु मनीषया ।
देवानां पत्नीर्विशस्सूचीभिश्शिम्यन्तु त्वा ॥ ९

कुविदङ्ग ॥५॥ १०

---

[१] तै. सं. ५,६,२१ । [२] तै सं ५,६,२२ । [३] तै. सं. ५,६,२३ ।
[४] मै. ३,१४,१ (१) । वा. २४,२० । काण्व २६,२४ । तै. सं. ५,५,११—२४ । मा. श्रौ. ९,२,४ ।
[५] मै ३,१२,२१ (३३--३८) । वा. २३,३३--३८. १०,३२; १९,६ । काण्व. २५,३५--४०; ११,४५; २१,५ । तै. सं. ५,२,११ । [ कुविदङ्ग० । ऋ. १०,१३१,२; अथर्व. २०,१२५,२; तै. सं. १,८,२१,१; ५,२,११,२; तै. ब्रा. २,६,१,३ ]

कस्त्वा छ्यति कस्त्वा विशास्ति कस्ते गात्राणि शिम्यति ।
क उ ते शमिता कविः ॥ ११
ऋतवस्त ऋतुथा परुश्शमितारो विशासतु ।
संवत्सरस्य धायसा शिमिभिश्शिम्यन्तु त्वा ॥ १२
दैव्या अध्वर्यवस्त्वा छ्यन्तु वि च शासतु ।
गात्राणि पर्वशश्शिमाः कृण्वन्तु शिम्यन्तः ॥ १३
अर्धमासाः परूंषि ते मासाश्छ्यन्तु शिम्यन्तः ।
अहोरात्राणि मरुतो विलिष्टँ सूदयन्तु ते ॥ १४
पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु ।
द्यौस्ते नक्षत्रैस्सह रूपं कृणोतु साध्या ॥ १५
शं ते परेभ्यो गात्रेभ्यश्शमस्त्ववरेभ्यः ।
शमस्थभ्यो मज्जभ्यश्शमु ते तन्वे भुवत् ॥६॥ १६
[३००८]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे सोमानुवचनं नाम दशमं वचनं संपूर्णम् ॥१०॥

अथैकादशं वचनम् ।

## नमस्कारवचनम् ।

अग्नये नमो गायत्र्यै नमस्त्रिवृते नमो रथन्तराय नमो वसन्ताय नमः प्राच्यै दिशे नमः
प्राणाय नमो वसुभ्यो नमः ॥१॥ १

इन्द्राय नमस्त्रिष्टुभे नमः पञ्चदशाय नमो बृहते नमो ग्रीष्माय नमो दक्षिणायै दिशे नमो
व्यानाय नमो रुद्रेभ्यो नमः ॥२॥ २

मरुद्भ्यो नमो जगत्यै नमस्सप्तदशाय नमो वैरूपाय नमो वर्षाभ्यो नमः प्रतीच्यै दिशे नमो-
ऽपानाय नम आदित्येभ्यो नमः ॥३॥ ३

विश्वेभ्यो देवेभ्यो नमोऽनुष्टुभे नम एकविंशाय नमो वैराजाय नमश्शरदे नम उदीच्यै दिशे
नमस्समानाय नमश्चन्द्रमसे नमः ॥४॥ ४

[६] वा. २३.३९-४४ । काण्व. २५,४९-४६ । तै. सं. ५,२,१२ ।

मित्रावरुणाभ्यां नमः पङ्क्त्यै नमस्त्रिणवत्रयस्त्रिँशाभ्यो नमश्शाक्वररैवताभ्यां नमो हेमन्तशिशि-
राभ्यां नम ऊर्ध्वायै दिशे नम उदानाय नमो विष्णवे नमः ॥५॥ ५

पृथिव्यै नमोऽग्नये नमो भूताय नमश्चक्षुषे नमोऽन्तरिक्षाय नमो वायवे नमो भव्याय नम-
श्श्रोत्राय नमो दिवे नमस्सूर्याय नमो भविष्यते नमो मनसे नमः ॥६॥ ६

[३०१४]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे नमस्कारवचनं नामैकादशं वचनं संपूर्णम् ॥११॥

अथ द्वादशं वचनम् ।

## अलिवन्दानुवचनम् ।

अलिवन्दाय स्वाहा बलिवन्दाय स्वाहा सर्वस्मै स्वाहा ॥१॥ १

[३०१५]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे अलिवन्दानुवचनं नाम द्वादशं वचनं संपूर्णम् ॥१२॥

अथ त्रयोदशं वचनम् ।

## शादानुवचनम् ।

शादं दद्भिरवकान् दन्तमूलैस्तेगान् दँष्ट्राभ्यां मण्डूकाञ्जम्भैरादकां खादेनोर्जँ सँसीदेनारण्यं जाम्बी-
लेन मृदं बर्स्वैश्शर्कराभिरवकामवक्राभिश्शर्करामुत्सादेन जिह्वामवक्रन्देन तालुँ सरस्वतीं जिह्वाग्रेण
॥१॥ १

वाजँ हनुभ्यामप आस्येनादित्याञ्छ्मश्रुभिरुपयाममधरोष्ठेन सदुत्तरेणान्तरेणानूकाशं प्रकाशं
प्रकाशेन बाह्यँ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतं कनीनिकाभ्यामशनिं मस्तिष्केण बलं
मज्जभिः ॥२॥ २

कूर्माञ्छफैरञ्छराभिः कपिञ्जलान् साम कुष्ठिकाभिर्जवं जङ्घाभिरगदं जानुभ्यां वीर्यं गुहाभ्यां
भयं प्रचलाभ्यां गुहोपपक्षाभ्यामश्विना अँसाभ्यामदितिँ शीर्ष्णा निरृतिं निर्जाल्माकशीर्ष्णा॥३॥ ३

[१] मै. ३,१५.१ (१)। वा. २५,१। काण्व २७.१। तै. सं. ५,७,११। मा. श्रौ. ९,२,५।
[२] मै. ३,१५,१--२ (१--२)। वा २५,१--२। काण्व २७,१-३। तै. सं. ५,७,१२।
[३] मै. ३,१५,३ (३)। वा. २५,३। काण्व. २७,५--६। तै. सं. ५,७,१३।

योक्त्रं गृध्राभिर्युगमानतेन चित्तं मन्याभिस्संघोपान् प्राणैः प्रकाशेन त्वचं पराकाशेनान्तरां मशकान् केशैरिन्द्रँ स्वपसा वहेन बृहस्पतिँ शकुनिसादेन रथमुष्णिहाभिः ॥४॥ ४

मित्रावरुणौ श्रोणिभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीवद्भ्याँ सवितारं पुच्छेन गन्धर्वाञ्छेपेनाप्सरसो मुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामाक्रमणँ स्थूराभ्यां प्रतिक्रमणं गृष्ठाभ्याम् ॥५॥ ५

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवो जीमूतान् हृदयौपशाभ्यामन्तरिक्षं पुलितता नभ उदर्येणेन्द्राणीं प्लीह्ना वल्मीकान् क्लोम्ना गिरीन् प्लाशिभिस्समुद्रमुदरेण वैश्वानरं भसना ॥६॥ ६

पूष्णो वनिष्ठुरान्धाहेस्स्थूरगुदा सर्पान् गुदाभिर्ऋतून् पृष्टिभिर्दिवं पृष्ठेन वसूनां प्रथमा कीकसा रुद्राणां द्वितीयादित्यानां तृतीयाङ्गिरसां चतुर्थी साध्यानां पञ्चमी विश्वेषां देवानाँ षष्ठी ॥७॥ ७

ओजो ग्रीवाभिर्निर्ऋतिमस्थभिरिन्द्रँ स्वपसा वहेन रुद्रस्य विचलस्स्कन्धोऽहोरात्रयोर्द्वितीयोऽर्धमासानां तृतीयो मासश्चतुर्थ ऋतूनां पञ्चमस्संवत्सरस्य षष्ठः ॥८॥ ८

आनन्दनन्दथुभ्यां कामं प्रत्यासाभ्यां भयँ शितीमद्भ्यां प्रशिषं प्रशासाभ्याँ सूर्याचन्द्रमसौ वृक्काभ्याँ श्यामशबलौ मतस्नाभ्यां व्युष्टिं रूपेण निम्रुक्तिमरूपेण ॥९॥ ९

अहर्माँसेन रात्रीं पीवसापो यूषेण घृतं रसेन श्यां वसया दूषीकाभिर्ह्रदुनिमश्रुभिः प्रुष्वां दिवं रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीं चर्मणा कर्वीं छव्योपाकृताय स्वाहालब्धाय स्वाहा हुताय स्वाहा ॥१०॥ १०

अग्नेः पक्षतिस्सरस्वत्या निपक्षतिस्सोमस्य तृतीयापां चतुर्थ्योषधीनां पञ्चमी रुद्रस्य षष्ठी मरुताँ सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमीन्द्रस्यैकादशी विश्वेषां देवानां द्वादशी द्यावापृथिव्योः पार्श्वं यमस्य पाटोरः ॥११॥ ११

वायोः पक्षतिस्सरस्वतो निपक्षतिश्चन्द्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुः पञ्चमी संवत्सरस्य

---

[४] मै. ३,१५,३ (३)। वा. २५,३। काण्व. २७,५। तै. सं ५,७,१४।
[५] मै. ३,१५,६ (६)। वा. २५,६। काण्व. २७,९। तै. सं. ५,७,१५।
[६] मै. ३,१५,७ (७)। वा. २५,८। काण्व. २७,११--१२। तै. सं. ५,७,१६।
[७] मै. ३,१५,९ (९)। वा. २५,७। काण्व. २७,१०। तै. सं. ५,७,१७।
[८] तै. सं. ५,७,१८। [९] तै. सं. ५,७,१९। [१०] तै. सं. ५,७,२०।
[११] मै. ३,१५,४ (४)। वा. २५,४। काण्व. २७,७। तै. सं. ५,७,२१।
[१२] मै. ३,१५,५ (५)। वा. २५,५। काण्व. २७,८। तै. सं. ५,७,२२।

षष्ठी सर्पाणाँ सप्तम्यर्यम्णोऽष्टमी धातुर्नवमी त्वष्टुर्दशमीन्द्राण्या एकादश्यदित्या द्वादशी द्यावा-पृथिव्योः पार्श्वं यम्याः पाटोरः ॥१२॥ १२

पन्थामनुवृग्भ्याँ संततिँ स्नावन्याभ्याँ शुकान् पित्तेन हरिमाणं यक्ना हलिक्ष्णान् पापवातेन कूश्माञ्छकभिश्शवर्तानूवध्येन शुनो विशसनेन सर्पाँल्लोहितगन्धेन वयाँसि पक्वगन्धेन पिपीलिकाः प्रशादेन ॥१३॥ १३

[३०२८]

॥ इति श्रीयजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे शादानुवचनं नाम त्रयोदशं वचनं संपूर्णम् ॥१३॥

॥ इत्येकोत्तरशताध्वर्युशाखाप्रभेदभिन्ने श्रीयजुषि काठके चरकशाखायामश्वमेधो नाम पञ्चमो ग्रन्थः संपूर्णः ॥५॥

॥ संपूर्णा च चरकशाखा ॥

इति काठक-संहिता समाप्ता ।

[१३] तै. सं. ५,७,१३ ।

काठक-संहिता-मन्त्राणां

# वर्णानुक्रम-सूची ।




अँशुश्च मे रश्मिश्च मे १८, ६१
अँहोमुचे प्रभरेमा ८, ४८
अक्रन् कर्म कर्मकृत. ९, १२
अक्रन्ददग्निस्स्तनयन्निव द्यौः १६,८७. १०२. ११२
अक्षन्नमीमदन्त ह्यव ९, १२
अगन्म महो नमसा यविष्ठं ३९, ८६
अग्न आयाहि वीतये २०, ३४
अग्न आयाह्यग्निभिः ३९, १०८
अग्न आयूँषि पवसे ४, ६३; ११, ५२; ३४, ५; ३८, १६
अग्न आयूँष्यग्ने पवस्व १९, ३१
अग्नये गृहपतये स्वाहा १५, २४
अग्नये त्वा प्रवृहामि ३०, २५
अग्नयेऽनीकवते प्रातः ९, १३
अग्नये पथिकृतेऽष्टाकपालं १०, ७
अग्नये यविष्ठायाष्टाकपालं १०, १०
अग्नये वैश्वानराय द्वादशकपालं १०, ४-५
अग्ना अग्निश्चरति प्रविष्ट ३, २०
अग्ना यो मर्त्यो दुवो धियं २०, ३९
अग्नाविष्णू अग्नाविष्णू ११, ५०
अग्नाविष्णू महि तद्वां ४, ११२
अग्नाविष्णू महि धाम ४, ११३
अग्निं युनज्मि शवसा घृतेन १८, ७६
अग्निं वः पूर्व्यं गिरा ११, ३८
अग्निं वै सृष्टमग्नि० ८, २०
अग्निं वो देवमग्निभिस्सजोषा ३५, ७
अग्निं सुदीतिं सुदृशं गृणन्तो १८, १३४
अग्निं स्तोमेन बोधय १९, ३७
अग्निं होतारं मन्ये दास्वन्तं २६, ३८
अग्निः प्रत्नेन मन्मना स्तम्भानः २, ७९
अग्निः प्रथमो वसुभिर्नो अव्यात १०, ३६
अग्निः प्रातस्सवने पात्वस्मान् ३०, २६
अग्निः प्राश्नातु प्रथमस्स हि १३, ७३
अग्निनरोषाट् कृत्वा शचीपतिः ३९, ६६
अग्निनाग्निस्समिध्यते कविः १५, ६१; ३४, २१
अग्निना तपोऽन्वाभवत् ३५, ७९
अग्निना वै देवास्स्वर्गं २२, २०
अग्निं तं मन्ये यो वसुरस्तं ३९, १०३
अग्निं दूतं पुरो दधे २, ११६; १९, ३५
अग्निं दूतं वृणीमहे २०, ३५
अग्निं नरो दीधितिभिररण्योः ३४, ३०; ३९, १०४
अग्निमीडे पुरोहितं २, ८८
अग्निं पुरीष्यमङ्गिरस्वत् १६, १२
अग्निरग्ने वरुण्यस्याग्नि ७, ९५
अग्निरुक्थे पुरोहितो १०, ४६
अग्निरेकाक्षरामश्विनौ त्र्यक्षरा १४, २४
अग्निर्ददाति सत्पतिं २, ९५
अग्निर्देवता कृत्तिका नक्षत्रं ३९, ९०
अग्निर्मन्युं प्रतिनुदन् ४०, ७४
अग्निर्मुखं प्रथमो देवतानां ४, ११४
अग्निर्मूर्धा दिवः ककुत्पतिः ६, २०; १२, ४३; ४० १३०
अग्निर्मूर्धायमग्नि. ३९, ९१
अग्निर्यजुर्भिस्सविता स्तोमैः ९, ३८
अग्निर्वा इमं लोकं नोपाकामयत ८, १७
अग्निर्वा उत्सीदन ९, १
अग्निर्वृत्राणि जङ्घनद्द्रविणस्युः २०, ३६
अग्निर्वृत्राणि जङ्घनद् द्रविणस्यु २, ६६
अग्निर्वै जातो न व्यरोचत १३, ४३
अग्निर्वै देवेभ्योऽपाकामत् १९, २
अग्निर्वै प्राङुदेतुं नाकामयत ८, १०
अग्निर्हि वाजिनं विशे ३९, ८९
अग्निर्होता नो अध्वरे १६, २४०; ३८, १३७
अग्निर्होता न्यसीदद्यजीयान् २, ११५
अग्निर्होता पुरोहितोऽध्वरस्य २, ११७
अग्निर्होता साध्वीमकरग्न ७, ८८

अग्निर्होतोप त हुवे देवान् ४, ९१
अग्निश्चापश्चेलेषा वा अन्नस्य २१, ३९
अग्निश्चास्या मनश्च वायुश्च ३७, ३६
अग्निश्शुचिव्रततम उदग्ने १९, ३३
अग्निश्शुचिव्रततमश्शुचिः ४०, १३५
अग्निष्वात्ता ऋतावृधः २१, ६७
अग्निष्वात्ता पितर एह २१, ६६
अग्निष्वात्तानृतुमतो हवामहे २१, ६८
अग्निस्तिग्मेन शोचिषा १८, १
अग्निस्तुविश्रवस्तमं २, ९४
अग्निहोत्रे वै जायम्पती ६, ७
अग्निहोत्रे स्तोमो योक्तव्यो ७, २७
अग्नी रक्षांसि सेधति २, ८३
अग्नीषोमा इम सु मे ४, १३०
अग्नीषोमाभ्या यज्ञः ५, १; ३२, १
अग्नीषोमा सवेदसा ४, १३१
अग्नीषोमीयया पूर्वपक्ष ७, २९
अग्ने अङ्गिरश्शत ते १६, ८९
अग्ने अच्छा वदेह न १४, १०
अग्ने गृहपत उप मा ह्वयस्व १, ३२
अग्ने गृहपतेऽहे बुध्न्य ७, ६१
अग्ने जातान् प्रणुदा नः १७, १५; २१, ४
अग्ने तव श्रवो वयो महि १६, १७४
अग्ने त्री ते वाजिना त्री षधस्था ९, ८०
अग्ने त्वं सु जागृहि २, १६
अग्ने त्वं नो अन्तम ७, ६
अग्ने त्वं पुरीष्यो १६, १३५
अग्नेऽदब्धायोऽशीततनः १, ५०, ३१, ३०
अग्ने दा दाशुषे रयिं ६, ३५
अग्ने दिवो अर्णमच्छा १६, १२७
अग्ने दुध्राग्ने कव्याग्ने ४०, २१
अग्ने देवाँ इहावह ३९, ८५
अग्ने नक्षत्रमग्ने ९,७२
अग्ने नक्षत्रमजरमा १, ७७
अग्ने नय मयोभो सुशेव ७, ६९
अग्ने नय सुपथा राये ३,४; ६, ३०
अग्ने पवस्व स्वपा ७, ८९
अग्नेः पाथ उपेहीन्द्रस्य १, ४८
अग्ने पावक रोचिषा १७, ७६
अग्ने पुरीषमस्यासो नाम १७, ४
अग्ने प्रेहि प्रथमो देवायतां १८, ३७
अग्ने बाधस्व वि मृधो वि १, १०८
अग्नेऽभ्यावर्तिन्नभि नो १६, ८८
अग्ने मृड महाँ असि ४०, १२३
अग्ने यं यज्ञमध्वरं २, ६८
अग्ने यत् ते दिवि वर्चः १६, ११८
अग्ने यत् ते शुक्रं यच्चन्द्रं १६, १७१
अग्ने युक्ष्वा हि ये तव १२, ११
अग्ने रक्षा णो अंहसः २, ७६
अग्नेरनीकमप आविवेश ४, ८०
अग्नेरायुरसि तस्य ते ११, १३
अग्नेर्भागोऽसि दीक्षाया २१, १
अग्नेर्मन्वे प्रथमस्य प्रचेतसो १२, ५१
अग्नेर्यान्यस्यग्नेरग्नियान्यसि २१, १३
अग्नेर्वै भागः पुनराधेयं ८, ३४
अग्नेर्वोऽपन्नगृहस्य सदसि ३, ३१
अग्ने वाजस्य गोमत ३९, ११०
अग्ने वाजस्याग्ने त्री ते १२, ४५
अग्ने विधेम ते परमे जन्मन् १८, ४२
अग्ने विश्वेभिस्स्वनीक देवैः १५, ४७
अग्ने व्रतपते व्रतमचारिषं ५, ३६
अग्ने व्रतपते व्रतमालभे ४, ९०
अग्ने शकेम ते वयं ४०, ११६
अग्ने शर्ध महते सौभगाय २, ९१
अग्ने संराडजैकपादाहवनीय ७, ७३
अग्ने सहस्राक्ष शतमूर्धन् ७, १३; १८, ३९
अग्नेस्तनूरसि विष्णवे त्वा २, ४५
अग्नेस्स्तोमं मनामहे २०, ४०
अग्नेस्त्वा तेजसा सादयामि १६, १९४
अग्ने स्वाहा कृणुहि १८, १०३
अग्ने बृहन्नुषसामूर्ध्वो १६, ९४
अङ्गान्यात्मन् भिषजा तदश्विना ३८, ४०
अङ्गिरसां त्वा देवानां व्रतेन ८, ८
अङ्गिरसो मास्य यज्ञस्य ४, ९३
अङ्गिरसो वै स्वर्गं लोकं १३, ९
अच्छेत्यग्निश्चिकितिः ३९, ११९
अच्छिन्नो दैव्यस्तन्तुर्मा ७, १७
अजस्रमिन्द्रमरुषं भुरण्युं १६, २०९
अजासि रयिष्ठाः पृथिव्यां १३, ३७
अजीजनन्नमृतं मर्त्यासो ३८, १४४

अजीजपत वनस्पतय इन्द्रं १४, ३१
अजैदग्निरसनद्वाजं नि देवो १६, १४३
अजो देयस्सयोनिन्वायं वासो ८, १६
अजो ग्नग्नेरजनिष्ट शोकात् १६, १२२
अञ्जन्ति त्वामध्वरे देवयन्तो १५, ५०
अतारिष्म तमसस्पारमस्य १७, ९०
अति निहो अति स्रिधो १८, ८६
अतिरात्र· परमो यज्ञक्रतूनाम् ३३, २
अतिविद्धा विथुरेणा चिदस्त्रा ९, ८३
अति विश्वाः परिष्ठाः १६, १६०
अतिसर्गं ददतो मानवाय ४०, ९८
अतीतपद्यज्ञे यज्ञमयाड् ५, ३
अतो वयमन्तमेभिर्युजानाः ९, ५७
अत्यासो न मरुतस्स्वञ्चो २१, ५५
अत्राह गोरमन्वत ३९, ७१
अथर्वा त्वा प्रथमो १६, २७
अथैतदप्रतिरथमेतेन वै देवाः २१, ३५
अथैतद्वात्सप्रमेतेन वै वत्सप्रीः १९, २८
अथैता आश्विनीरुत्पन्नयज्ञो २०, ११
अथैतानि स्पराणि स्परैर्वै देवाः ३३, ११
अथैता नैर्ऋतीस्तिस्रः २०, १
अथैतास्सर्पराज्या ऋच इयं ८, १३
अथैतेऽग्निभ्यः कामेभ्य· पशव १९, २०
अथैतेऽतिग्राह्या यदेव परमन्ना० १४, ३४
अथैतेऽतिग्राह्या यदेव परमोजो २९, १५
अथैते परसामानस्तेषा ३३, १७
अथैते स्तोमभागा बृहस्पतिर्वा ११, ६
अदब्धस्य स्वधावतो ४०, १३४
अदब्धेभिस्सवितः पायुभिष्ट्वं ४, ६०
अदितिः पाशान् प्रमुमोक्त्वेतान्नमः ३०, ४५
अदितिर्वै प्रजाकामौदनमपचत् ७, ८५
अदितिस्त्वा देवी विश्वदेव्यावती १६,६०; १९, १६
अदितिस्त्वा सुष्वतु राजन् ४०, ६९
अदित्या रास्नासाग्द्राण्या १, ८
अदित्यास्त्वगस्यदिताः २, ३५
अदित्यास्त्वा पृष्ठे सादयामि १७, ५
अदेवेन मनसा यो रिषण्यति ४, १२३
अद्भ्यः क्षार व्यापबत् ३८, ३
अद्भ्यस्संभृत पृथिव्या रसो ३९, २१
अदृशन्नस्य केतवो वि ४, ६७
अध स्मा ते चर्षणयो १७, १००
अध ह्यग्ने क्रतोर्भद्रस्य २०, ३८
अधा होता न्यसीदो यजीयान् १८, ११५
अधिपत्नी भुवनानाम् १७, ६
अध्यवोचदधिवक्ता १७, ३७
अध्वर्योऽयं यज्ञो अस्तु देवाः ३५, ४६
अनमित्रं नो अधराग् ३७, ३०
अनमित्रैरहोभिस्सचीमहि ३७, ३१
अनवस्ते रथमश्वाय तक्षन् ८, ५०
अनाधृष्यो जातवेदा अनिष्टृता १८, ८७
अनानुजामनुजां मामकर्त ३०, ६३
अनाप्ता या व प्रथमा ३८, १५८
अनिमृष्टमसि वाचो बन्धुस्तपोजाः १५, ११
अनु ते दायि मह इन्द्रियाय ८, ३९
अनुत्तमा ते मघवन्नकिर्नु ९, ६१
अनु त्वा मित्रावरुणा इह ३७, २३
अनु त्वाहिघ्ने अध देवदेवा ८, ५२
अनु त्वेन्द्रो मदत्वनु ३७, २५
अनु द्यावापृथिवी तत न ८, ५३
अनुमतेऽनुमन्यस्व न ३८ ३५, ६७
अनुमत्या अष्टाकपालो १५, १
अनुमत्यै वरु राकायै चरुः १५, ५
अनेकवन्तमृतयेऽग्नि २१, ४८
अन्तरग्ने रुचा त्वमुखायो १६, ९७
अन्तर्गच्छ मघवन् पाहि ४, ३
अन्तर्यामपात्रेण सावित्रं २८, १९
अन्त्राणि स्थाली मधु पिन्वमाना ३८, ३३
अन्नं वै चतुर्होतारोऽभवान ९, ४९
अन्नपतेऽन्नस्य नो देहि १६, ११२
अन्नं मे पुरीष्य पाहि ७, २२
अन्नात् परिस्रुतो रसं ३८, ४
अन्या वो अन्यामवतु १६, १६५
अन्वग्निरुषसामग्रमख्यद् १६, १०. १९, ५
अन्विदनुमते त्वं मन्यासै १३, ८५
अन्विदनुमते त्वं यन् ते २२, ६६
अपक्रामं स्यन्दमाना ३९, ११
अपनुत्ता शण्डामर्को सह तेन ४, १८
अपः प्रणयत्यापो वै यज्ञो ३१, ७
अपां यो द्रवणे रसस्तमहम् ३६, १८
अपां यो द्रवणे रसस्तेनाहम् ३६, ४४

अपां रसमुदयसँ सूर्ये १४, १८
अपां गम्भीरं गच्छ मा त्वा ३९, ३१
अपां त्वेमन् सादयामि १६. २२५
अपां नपादाशुहेमन्य ऊर्मिः १३, ४८
अपां नप्त्रे स्वाहोर्जो नप्त्रे १५, २९
अपामिदं न्ययनँ १७, ७५
अपां पृष्ठमसि योनिरग्नेः १६, २३. १८२
अपास्मदेतु निर्ऋतिः ३८, १४६
अपास्य नैर्ऋतान् पाशान् ३८, १४७
अपि पन्थामगन्महि २, ३४
अपूपकूला नद्यस्सदा ४०, ११०
अपेत वीत वि च सर्पतातः १६, १२४, २०, १
अपो अद्यान्वचारिषं ४, ८७; ३८, ६८
अपो देवीरुपसृज मधुमतीः १६, ३५; १९, ९
अपो देवीर्मधुमतीरगृभ्णाम् १५, ९
अप्नु मे सोमो अब्रवीद् २, ८२
अप्स्वग्ने सधिष्टव २, ८१, १६, ११७, ३५, ७२
अप्स्वन्तरमृतमप्सु १३, ४६
अभिक्रन्द स्तनय गर्भमाधा ११, ५८
अभि गोत्राणि सहसा १८, ५१
अभि त्यं देवँ सवितारम् २, २७
अभि त्वा देव सवितः १५, ५६
अभि त्वा वर्चसासिचं ३६, ४२, ३७, २०
अभि त्वा शूर नोनुमः १२, ५६, ३९, ७९
अभि प्रभर धृषता ८, ५४
अभि प्रवन्त समनेव योषाः ४०, ४९
अभि प्रेहि वीरयस्व ३७, २२
अभी षु णस्सखीनाम् ३९, ६९
अभूद्देवस्सविता वन्द्यो ३४, २८
अभून्नु नस्सुमतौ विश्ववेदा ३९, ६४
अभ्यर्षत सुष्टुतिं गव्यमाजिम् ४०, ५१
अभ्यस्थाद्विश्वाः पृतना अरातीः ३९, २
अभ्यावर्तस्व पृथिवि १६, १७१
अमन्दन्मा मरुतस्स्तोमो अत्र ९, ६३
अमीमदन्त पितरः ९, २०
अमुत्रभूयादध यद्यमस्य १८, ८८
अम्भस्स्थाम्भो वो भक्षीय ७, १
अम्भस्स्थेयम्भो व्येता महस्स्थ ७, ३२
अयं यज्ञो वर्धतां गोभिः ३५, २२
अयं योऽसि यस्य त इदं ३८, १३२
अयं वां मित्रावरुणा ४, १०
अयं वेदः पृथिवी ३१, ३९
अयं वेनश्चोदयत् पृश्निगर्भा ४, १४
अयँ सो अग्निर्यस्मिन् १६, १२६
अयक्ष्मा वः प्रजया सँसृजामि १, ११
अयं ते योनिर्ऋत्वियो २, २०; ६, २३; १६, १३१; १८, १११
अयं नो अग्निर्वरिवः कृणोति ४, ४९; ६, ४१
अयमग्निरुरुष्यति १५, ४५
अयमग्निर्वीरतमो वयोधाः १८, १०७
अयमग्निश्श्रेष्ठतमो ७, ८२
अयमग्निस्सहस्रिणः ७, १०९, १६, १९५
अयमिह प्रथमो धायि धातृभिः ६, २२
अयमु ष्य प्र देवयुः १५, ४४
अयं पुरो भुवस्तस्य प्राणो १६, २२६
अयं पुरो हरिकेशस्सूर्यरश्मिः १७, २२
अयं पूषा रयिर्भगः ९, ७५
अया ते अग्ने समिधा विधेम ६, ५५
अया विष्ठा जनयन् कर्वराणि ९, ११; १४, २०
अयाश्चाग्नेऽस्यनभिशस्तिश्च ५, ११; ३४, ३७
अयुक्त सप्त शुन्ध्युवः ९, ७३
अरिष्टया अव्यथ्ये संवेशाय ३५, ६१
अर्चामि ते सुमतिं घोष्यर्वाक् ६, ४८
अर्थेतस्स्थान्वगतोऽग्नेर्वः ३९, ८
अर्धवशां च सुरोपयामाँश्च १४, ३३
अर्धं वा एतस्य यज्ञस्य मीयते ३५, ८६
अर्धं वेद्या यूपावटस्य कुर्याद् २६, १६
अर्वाञ्चमिन्द्रममुतो हवामहे ४०, ८०
अवतत्य धनुस्त्वँ सहस्राक्ष १७, ४६
अव ते हेडो वरुण नमोभिः ४०, ९०
अव द्रप्सो अँशुमतीमतिष्ठद् २८, १३
अवधूतं रक्षोऽवधूतारातिः १, ११; ३१, १२
अवपतन्तीरवदन् दिवो १६, १६६
अवाम्ब रुद्रमदिमह्यव ९, ३०
अवाहं बाध उपभृता द्विषन्तं ३१, ३५
अविर्न मेषो नसि वीर्याय ३८, ३७
अव्यथमाना पृथिव्यां १६, ६३
अश्मन्नूर्जं पर्वते शिश्रियाणां १७, ७१; २१, २३
अश्मा च मे मृत्तिका च मे १८, ६०
अश्याम ते सुमतिं देवयज्यया ४०, ८८

अश्वं हि भूरिदावत्तरा वां ४, १०१
अश्वत्थे वो निषदनं १६, १५६
अश्वावतीं सोमावतीं १६, १५७
अश्विना गोभिरिन्द्रियं ३८, १०४
अश्विना नमुचेस्सुतं ३८, ९१
अश्विना भेषजं मधु ३८, ९७
अश्विना हविरिन्द्रियं ३८, ९८
अश्विनोः प्राणस्तौ ते प्राणं ११, १७
अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां ३८, ३६
अश्वो न प्रतिगृह्य उभयादन्वा १९, १५
अष्टासु प्रक्रमेषु ब्राह्मणेन ८, ६
असंख्याता सहस्राणि १७, ६०
असदत्र सुवीर्यमुत ११, ३७
असवे स्वाहा वसवे स्वाहा ३५। ५०, ६०
असा अमुष्य पुत्रो १५, १८
असि यमो अस्यादित्यो ४०, ३७
असुन्वन्तमयजमानमिच्छ १६, १३९
असुर्यं वा एतस्माद्वर्णं ३४, ४
असौ यस्ताम्रो अरुण १७, ३८
असौ योऽवसर्पति १७, ३९
अस्तभ्नाद् द्यामृषभो विश्ववेदा २, ३६
अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्याः १७, १०६
अस्मा इदु प्रभरा तूतुजानो ८, ५५
अस्मा उ ते महि महे विधेम १८, १२३
अस्माकमग्ने मघवत्सु धारय ४, १३९
अस्माकमिन्द्रस्समृतेषु ध्वजेषु १८, ५४
अस्मास्विन्द्र इन्द्रियं दधातु ५, ५
अस्मिन् मे यज्ञ उप भूयो ३१, ४१
अस्मे इन्द्राबृहस्पती १०, ५०
अस्मै ते प्रतिहर्यते १०, २०
अस्मै ब्रह्मणेऽस्मै क्षत्राय १८, ७४
अस्य प्रत्नामनु द्युतं ६, १९
अस्य प्राणादपानति ७, ६८
अस्येदेव प्ररिरिचे महित्वं ८, ६७
अस्वप्नजस्तरणयस्सुशेवा ६, ५२
अहं द्यावापृथिवी आबभूव ४०, ६६
अहमस्तभ्नां पृथिवीमुत द्याम् ४०, ६५
अहर्वावासीन्न रात्री सा यमीः ७, ३८
अहर्वै देवानामासीद्रात्र्यसुराणां ७, ३०
अहाव्यग्ने हविरास्ये ते ३८, ११०
अहीनः प्राणश्चक्षुष्मा १, ४६
अहुतादो वा एतस्य ८, २४
आकूतिमग्निं प्रयुजं स्वाहा १६, ६५
आकूत्यै त्वा कामाय त्वा १३, ३५
आकूत्यै प्रयुजे अग्नये स्वाहा २, ५
आक्रम्य वाजिन् पृथिवी १६, १२
आगत्य वाज्यध्वानं १६, ११
आगन्म मित्रावरुणा वरेण्यं ५, ३१
आग्नावैष्णवमेकादशकपालं १०, १; ११, १८; १९, २१
आग्निरगामि भारतो २०, ३१
आग्निवारुणीमनड्वाहीम् १३, १३
आग्नेयं सारस्वतं सौम्यं २९, २५
आग्नेयमजमालभेत सौम्यम् १३, ११
आग्नेयमष्टाकपालं निर्वपेत् ११, २
आग्नेयसौम्यो बार्हस्पत्यस्ते २९, १९
आग्नेयोऽष्टाकपालः पौष्णः ३७, ४
आग्नेयोऽष्टाकपालस्सौम्यः ९, ८; १५, २, ३७, ३
आ घा ये अग्निमिन्धते १३, ६०
आ चर्षणिप्रा वृषभो जनानां ३८, ८२
आ जातं जातवेदसि १५, ६०
आजुह्वान ईड्यो वन्द्यश्चा १६, २३१
आजुह्वानस्सुप्रतीकः पुरस्ताद् १८, ४०
आजुह्वाना सरस्वतीन्द्राय ३८, ९१
आ तं भज सौश्रवसेष्वग्न १६, १०७
आतिष्ठन्तं परि विश्वे अभूष० ३७, २४
आतिष्ठ वृत्रहन् रथं ३७, २३
आ तू न इन्द्र वृत्रहन् ६, ३१
आ तू भर माकिरेतन ६, ३८
आ ते अग्न इधीमहि ९, २७; ३९, १०१
आ ते अग्न ऋचा हविः ३९, १०२
आ ते मह इन्द्रोत्युग्र ८, ४३
आ ते शुष्मो वृषभ एतु ९, ६९
आ ते सुपर्णा अमिनन्तं एवैः ११, ५९
आत्मन्नुपस्थे न वृकस्य ३८, ३९
आत्मन्वन्नभो दुह्यते घृतं पयः ३५, ३८
आत्मा यज्ञस्य रंह्या ३५, ३६
आत्मा वा आहवनीयो भ्रातृव्यो २१, १२
आ त्वा जिघर्मि वचसा १६, १७
आ त्वाहार्षमन्तरभूः १६, ९२; ३५, ४३
आदित् पश्याम्युत वा शृणोम्या ३५, ६५

आदित् प्रत्नस्य रेतसो २, ७८
आदित्यं गर्भं पयसा समञ्जन् १६, २०७
आदित्या वा असुरान् हत्वा २८, १७
आदित्यासो अदितयस्स्याम ११, ४८
आदित्येभ्यो धारयद्द्रुयः ११, ११
आ देवानामपि पन्थामगन्म २, १११
आ देवानामिडामग्ने १८, १३३
आ देवो यातु सविता सुरत्नो १७, १०५
आ धेयोऽग्नीर्नाधेया इति ८, १२
आ न एतु मनः पुनः ९, २५
आ नः प्रजां जनयतु प्रजापतिः १३, ७२; ४०, ८
आ नः प्रजामा देवानां ३५, ५७
आनुष्टुभेन च्छन्दसा १६, ३
आ नो अग्ने रयिं भर १०, २८
आ नो अग्ने सुचेतुना २, ७२
आ नो दिवो बृहतः पर्वतादा ४, १११
आ नो भद्राः क्रतवो यन्तु २६, ३३
आ नो मित्रावरुणा ४, ११६; १२, ३७; २६, ३४
आ नो यज्ञं भारती १६, २३६
आ नो विश्वाभिरूतिभिस्सजोषाः ८, ७५
आन्यं दिवो मातरिश्वा जभार ४, १३३
आपः पृणीत भेषजं १२, ६५
आपो अस्मान् मातरस्सूदयन्तु २, ३
आपो देवीः प्रतिगृह्णीत भस्मै १६, ११६
आपो देवीर्घृतमिदाप आसन् ३५, १४; ३९, १३
आपो रेवतीः क्षयथा हि १२, ६४, ३९, ७
आपो वा इदमासन् सलिलमेव २२, २५
आपो ह यन्महतीर्विश्वमायन् ४०, ७
आपो हि ष्ठा मयोभुवः १६, ४९; ३५, १७
आप्यायतां ध्रुवा घृतेन ३१, ४५
आप्यायध्वमघ्न्या देवभागं १, २
आप्यायस्व मदिन्तम ३५, ७१
आप्यायस्व सं ते पयांसि ३५, ७०
आप्यायस्व समेतु ते १६, १८०
आमपेषा भवन्ति सर्वस्यौंहसो ३६, ११
आ मा वर्चोऽग्निना दत्तमेतु ४०, २०
आ मा वाजस्य प्रसवो १४, २
आ मा वाजस्य वाजस्य नु १८, ६६
आ माशिषो दोहकामा ५, ११
आ यँ हस्ते न खादिनँ १५, ५८
आयं गौः पृश्निरक्रमीद् ७, ६१
आ यद्दुवस्याद्दुवसे न कारुः ९, ६६
आ यं नरस्सुदानवो ११, २५
आयं भातु शवसा पञ्च कृष्टीः ३७, १६
आयवे स्वाहायुष्कृते स्वाहा ३९, २०
आ यस्ततन्थ रोदसी वि १८, ११४
आ यस्मिन् सप्त वासवा ८, ३७
आयुर्दा देव जरसं वृणानो ११, ५३
आयुर्धा अग्नेऽस्यायुर्मे धेहि ६, २७
आयुर्वै ध्रुव उत्तमो गृह्यते २८, १
आयुषः प्राणँ संतनु प्राणाद ३९, ४६
आयुष्मदस्तु मे मुखं पयस्व० ३६, ३७
आयुस्संधत्तं प्राणं संधत्तम् २७, २०
आयोस्त्वा सदने सादयामि १७, २३, २१, -
आरोह पथो जुहु देवयानान ३१, ३४
आर्द्रदानवस्स्थ जीवदानवस्स्थ २, १
आर्यमा यातु वृषभस्तुविष्मान् १०, ४८
आवर्तमानो भुवनस्य मध्ये ४०, ९९
आवर्तय निवर्तया वर्तन १३, २३
आ वाचो मध्यमरुहद्भुरण्य. १८, १०६
आ वायो भूष शुचिपा उप नः ४, ५; १३, ३४
आ विबाध्या परिरापस्तमाँसि २६, ३५
आ वृत्रहणा वृत्रहभिश्शुष्मैः ४, १०३
आ वो राजानमध्वरस्य रुद्रँ ७, ८६
आशामाना सौमनसं प्रजां १, ३१
आशीर्म ऊर्जमुत सुप्रजास्त्वं ५, ६
आशुश्शिशानो वृषभो न युध्मो १८, ४५
आशुस्त्रिवृदिति पुरस्ताद् २०, २५
आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा १७, १३
आश्विनमजमालभेत सारस्वतीं १२, १३
आ सर्वँ सवितुर्यथा ४०, १२६
आसन्दीमारुह्योद्गाता महाव्रतेन ३४, ९
आ सीमुग्रा अचुच्यवुर्दिवो ३०, ३०
आ सुष्वयन्ती यजते उपाके १६, २३४
आस्थादुदस्थादजनिष्ट विप्रो ३९, ३
आहं पितॄन् सुविदत्राँ अवित्सि २१, ६४
इच्छन्नश्वस्य यच्छिरः ३९, ७१
इडाभिरग्निरीड्यस्सोमो ३८, ११३
इडामग्ने पुरुदँसँ सनिं गो. १६, १३०
इडायास्त्वा पदे वयं १५, ४६

इडावती धेनुमती हि भूतँ २, ५४
इडेव पूर्वोपहूया यज्ञस्य १७, १५
इत एव प्रथमं जज्ञे अग्निः ७, ५९
इति कामानेवास्मिन् दधाति ३५, ८३
इति घृतेनाक्त्वा समिधमा० ११, १९
इति ता अवित्तामिन्द्रो वा इति ३०, ३
इति ब्रह्मणैवैनँ प्रहरति ३५, ८८
इति ब्रह्मणैवैनँ संभरति ३५, ८५
इति मैत्र्यर्चा समिधमाधाय ३५, ९३
इति मृत्योर्वै क्षेत्राण्यरणानि ३०, ७
इति वानस्पत्यर्चा समिध० ३५, ९६
इति सा सालावृकी संभूय २८, १४
इति सौम्यमेवेक्षेत यद्वा इह २९, ५
इति स्वमग्निं चितमुपतिष्ठेत ११, ३१
इत्यभिमन्त्रयेतापो वै सर्वा ३४, २९
इत्यमुत आयतौ षण्मासो ३३, १६
इत्यर्ध एवैनामाभजति ३५, ९०
इत्येतया पुरोरुचाग्रायणं २७, २७
इत्येता वै देवताः पुरुषस्य १३, ६
इदं वचः पर्जन्याय स्वराजे १०, ४४
इदं विष्णुर्वि चक्रमे २, ५३
इदँ हविः प्रजननं मे अस्तु ३८, २६
इदं त एकं पर ऊ त एकं ३५, ८४
इदं तृतीयसवनं कवीनाम् ३०, २८
इध्माबर्हिषी प्रोक्षति शुष्काणि २५, ११
इध्मो वा एषोऽग्निहोत्रस्य ६, ९
इदमहं गायत्रेण च्छन्दसा ३६, ३८
इदमहं रक्षोऽभिसमूहाम्यग्ने १५, ४
इन्दवो वामुशन्ति हि ४, ८
इन्दुर्दक्षश्श्येन ऋतावा १८, ७८
इन्द्र इद्धर्योस्सचा ३९, ७७
इन्द्र एषां नेता बृहस्पतिः १८, ५२
इन्द्रं वयं धनपतिँ २१, ७७
इन्द्रं वयँ शुनासीरम् ११, ७६
इन्द्रं विश्वा अवीवृधन् १८, १९; ३६, ४३; ३७, २१
इन्द्रं वो विश्वतस्परि ८, ७४
इन्द्र क्रतुं न आभर ३३, १५
इन्द्र क्षत्रमभि वाममोजो ८, ५८
इन्द्रघोषास्त्वा वसवः पुरस्तात् २, ४९
इन्द्र त्रिधातु शरणं ९, ८१
इन्द्रं दुरः कवष्यो धावमाना ३८, ७५
इन्द्र मरुत्व इह पाहि सोमं ४, ३६
इन्द्रमिद्गाथिनो बृहदिन्द्रम् ८, ४०; ३९, ७६
इन्द्रमिद्धरी वहतो ४, ६१
इन्द्र वाजेषु नो वह ३९, ७८
इन्द्रवान् बृहद्भास्स्वाहा १, ४०
इन्द्रवायू इमे सुता ४, ७
इन्द्रवायू सुसंदृशा १०, ३५; १४, ११
इन्द्रस्य त्वा भागं सोमेन १, १४, ३१, ६
इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो २१, ५४
इन्द्रस्य रूपमृषभो बलाय ३८, ३८
इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं १५, १९
इन्द्रस्य वृष्णो वरुणस्य राज्ञ १८, ५३
इन्द्रस्य वै वृत्रं जघ्नुष इन्द्रियं ३६, १
इन्द्रस्य दामने कृत ३९, ७४
इन्द्रस्सुत्रामा तस्य वयम् १७, ९७
इन्द्रस्सुत्रामा स्ववाँ अवोभिः ८, ४६
इन्द्रस्सुत्रामा हृदयेन सत्यं ३८, ३१
इन्द्राग्नी अव्यथमानामिष्टकां १७, ११, २०, २४
इन्द्राग्नी आगतँ सुतं ४, ३०
इन्द्राग्नी नवतिं पुरो ४, १०१
इन्द्राग्नी परिधी मम वाता देव ३५, ६१
इन्द्राग्नी मैतं निर्द्धेथा १७, ११३
इन्द्राग्नी रोचना दिवः ४, ९६
इन्द्राग्नी श्नथद्वृत्रमा तू न ११, ५६
इन्द्राग्नी श्नथद्वृत्रमिन्द्रा० २३, २४
इन्द्राणी पत्या सुजितं ८, ६१
इन्द्राणीमासु नारिषु ८, ६४
इन्द्रा नु पूषणा वयँ २३, २७
इन्द्रापर्वता बृहता रथेन २३, २९
इन्द्राय घर्मवत एकादश० १०, ११
इन्द्राय मन्युमते ललाममृषभं १३, ९
इन्द्राय वाचं वदतेन्द्राय वाचं १४, १
इन्द्राय सुत्राम्ण एकादशकपालं १०, १३
इन्द्रायेन्दुँ सरस्वती नराशँसेन ३८, ९०
इन्द्रावरुणयोरहँ सम्राजो० ११, ३८
इन्द्रासोमा तपतं रक्ष उब्जतं २३, २५
इन्द्रासोमा समघशँसमभ्यघं २३, २६
इन्द्रियाणि शतक्रतो ८, ३८
इन्द्रेण मन्युना युजा ४, १९

इन्द्रेमं प्रतरं कृधि १८, १९
इन्द्रो दधीचो अस्थभिः ३९, ७०
इन्द्रो वै वृत्रमहँस्तँ हतः २१, २७
इन्द्रो वै वृत्रमहँस्तस्य १८, ११
इन्द्रो वै वृत्राय वज्रम् १२, ८; २७, ३०
इन्धानास्त्वा शतँ ६, २६
इमं यज्ञमिदं वचो २, ८५
इमँ साहस्रं शतधारमुत्सं १६, ११६
इमँ स्तनमिष्टो यज्ञ. ४०, १०४
इमँ स्तनमूर्जस्वन्तं धयापां ४०, ४१
इमँ स्वस्मै हृद आ सुतष्टं १२, ६३
इमं नो यज्ञममृतेषु धेहि १६, १४६
इममग्न आयुषे वर्चसे कृधि ११, १६; ३६, ३९
इममिन्द्रो अदीधरद् ३५, ४८
इममूर्णायुं वरुणस्य नाभि १६, ११९
इमं मा हिँसीरेकशफं पशूनां १६, ११४
इमं मा हिँसीर्द्विपादं पशूनाँ १६, ११२
इमं मे देव सवितर्यज्ञं १५, ४१
इमं मे वरुण श्रुधी ४, १४०; ४०, ९१
इमं मे वरुणास्तभ्नाद् ११, ४९
इमाँ सु नावमारुहम् २, १०
इमा गिर आदित्येभ्यो घृतस्नूः ११, ४७
इमा जुह्वाना युष्मदा नमोभिः ४, ११०; १७, ९५
इमा ते वाजिन्नवमार्जनानीमा ४०, ३९
इमां देवा अजुषन्त विश्वे १, २७
इमां धियँ शिक्षमानस्य देव २, ९
इमां नरः कृणुत वो देवेभ्यो १, २६
इमान् मे मित्रावरुणौ ७, ११
इमा ब्रह्म ब्रह्मवाहः २६, १९
इमा रुद्राय तवसे कपर्दिने १७, ५४
इमे चत्वारो रजसो विमाना १३, ६८
इमे वै सहास्तां ते वायुर्व्यवात् १३, ४०
इमो अग्ने वीततमानि हव्य ३५, ९
इमौ ते पक्षा अजरौ पतत्रिणो १८, ७७
इमौ देवौ जायमानौ जुषन्त ८, ७१
इयं वामस्य मन्मनः १३, ६१; २१, ४४
इयँ शुष्मेभिर्बिसखा इवारुजत् ४, ११६
इयँ स्वस्तिस्संवत्सरीया १३, ७१
इयत्यग्र आसीरदो देवि ७, ५३
इयं ते शुक्र तनूरिदं वर्चः २, ११; २४, ११
इयमददाद्रभसमृणच्युतं ४, ११५
इयमेव सा या प्रथमा ३९, ५१
इरज्यन्नग्ने प्रथयस्व जन्तुभिः १६, १७७
इषं दुहन् सुदुघां विश्वधायसं ११, ४८
इषमूर्जमहमित आदृतस्य १६, १७३
इषिरेण ते मनसा सुतस्य १७, ११०
इषुं वा एता देवास्समस्कुर्वन् २५, १
इषे त्वोपावीरस्युप देवान् ३, १८
इषे त्वोर्जे त्वा वायवस्थ १, १
इष्टो यज्ञो भृगुभिर्द्रविणोदा ५, १६; १८, ११२; ३२, ८
इह गावः प्रजायध्वम् ३५, २१
इह गावोऽयं यज्ञः ३५, २५
इह त्वा भूर्याचरेदुप त्मन् ६, ४९
इहेह वस्स्वतवसो मरुतः २०, ४७
इहैवाग्ने अधिधारया रयिं मा १८, ८४
इहैवैधि मापच्योष्ठाः ३५, ४७

ईडाना वह्निं नमसाग्निं १८, ९५
ईडितो देवैर्हरिवाँ अभिष्टिः ३८, ७३
ईडे अग्निं विपश्चितं गिरा ४०, ११५
ईशानं त्वा शुश्रुमा वयं ४०, ३१
ईशिषे वार्यस्य हि ४०, १३१

उक्षान्नाय वशान्नाय ७, ९३; ४०, २४
उक्षा समुद्रे अरुणस्सुपर्णः १८, १८
उखा करोतु शक्त्या १६, ५६
उग्रा दिशामभिभूतिर्वयोधाः ११, ३८
उग्रा विघनिना मृध ४, १०४
उग्रो जज्ञे वीर्याय स्वधावान् १७, ९९
उच्छुष्मा ओषधीनां १६, १५९
उच्छ्रयस्व वनस्पते १५, ५१
उत नो देव देवाँ अच्छा ७, १०७
उत नो ब्रह्मन्नविष २, ९७
उत ब्रुवन्तु जन्तव ८, ५६
उत स्मास्य द्रवतस्तुरण्यतः १३, ५५
उत्क्राम महते सौभगाय १६, ३४
उत्क्रामोदक्रमीदित्यनुरूपाभ्यां १९, ६
उत्तिष्ठ ब्रह्मणस्पते १०, ४७
उत् समुद्रान्मधुमाँ ऊर्मिः ७, ५१
उत्सृज्यान्नोत्सृज्यामिति ३३, ११
उदक्रमीद् द्रविणोदा १६, १५

